अथोक्तानां चतुर्णामपि सामान्यविधीनां यथायथमपवादा उच्यन्ते—

५०। एत्येधत्यूठ्सु। (६-१-८९)

यथा अकारः, ककारः इत्यादिवद्वर्णाः 'कार'-प्रत्ययेन निर्दिश्यन्ते, तथा भवतिः, एधतिरित्येवं तिप्प्रत्ययेन धातवो[1] निर्दिश्यन्ते। अतः सूत्रे एत्येधतिभ्याम् 'इ' 'एध' इत्येतौ धातू ग्राह्यौ। 'वृद्धिरेचि' इति पूर्वसूत्रं समग्रमनुवर्तते। 'आत्' इति च 'आद् गुणः' इत्यतोऽनुषज्यते। एचीत्येतत् 'एत्येधत्यूठ्सु' इत्यस्य विशेषणं सत् 'एजादौ' इत्यर्थं बोधयति। तत्र 'ऊठ्' इत्यस्यासंभवात् एजादित्व-विशेषणं न संबध्यते। एच्प्रत्याहारेऽपि एकार एव संभवति। एवं च अवर्णादेकाराद्योः 'इ'-'एध'-धात्वोः परयोः ऊठि वा परे वृद्धिरेकादेश इति सूत्रार्थः। एत्येधत्योः पूर्वसूत्रेणैव सिद्धे 'एङि पररूपम्' इति वक्ष्यमाणमपवादं बाधितुमिदं वृद्धिविधानम्। ऊठस्तु आद्गुणं बाधितुम्। ऊठः स्वरूपं तद्विधौ स्पष्टीभविष्यति। अथोदाह्रियते—

उप + एति = उपैति। उप + एधते = उपैधते।

प्रत्युदाहरणम्—एकारादिर्न चेत्, उप + इतः = उपेतः।

५१। उपसर्गादृति धातौ। (६-१-९१)

अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः। आद्गुणस्यायमपवादः। यथा—

प्र + ऋच्छति = प्रार्च्छति। अ + ऋ इत्यस्य 'आर्' वृद्धिः।

५२। एङि पररूपम्। (६-१-९४)

अवर्णान्तादुपसर्गात् एङादौ धातौ परे परस्य रूपं (प्रकृते एङ्) एकादेशः स्यात्। पूर्वस्य लोप इति फलितम्। यथा—

प्र + एजते = प्रेजते। प्र + ओषति = प्रोषति।

'वृद्धिरेचि' इत्यस्यायमपवादः। अस्यापवादः 'एत्येधत्यूठ्सु' इति। अपवादस्यापवदनात् प्रत्यावृत्त उत्सर्गः प्रतिप्रसव इत्युच्यते। तस्मात् उपैतीत्यादौ वृद्धेः प्रतिप्रसवः। अत्र वार्त्तिकम्—

---

१. धातुलक्षणम् (१२५) सूत्रे दृश्यताम्। २. उपसर्गः (१३३) सूत्रे लक्षितः।

॥ * ॥ ओत्वोष्ठयोः समासे वा ॥

अवर्णादोत्वोष्ठयोः एङि परे पररूपं विकल्पेन स्यात् । तच्च समास एव । यथा—

स्थूल + ओतुः = स्थूलोतुः, स्थूलौतुः । बिम्ब + ओष्ठः = बिम्बोष्ठः, बिम्बौष्ठः ।

प्रत्युदाहरणम्—(समासाभावे तु) तव + ओष्ठः = तवौष्ठः ।

५३ । ओमाङोश्च । (६-१-९५)

अवर्णात् ओमिति प्रणवे आङ् इत्युपसर्गे च परे पररूपमेकादेशः स्यात् । आङो ङकार इत् । यथा—

शिवाय + ओं नमः = शिवायों नमः ।

अद्य + ओढा (आ + ऊढा = ओढा) अद्योढा । 'वृद्धिरेचि' इत्यस्यापवादः ।

शिव + एहि (आ + इहि = एहि) शिवेहि । 'एत्येधत्यूठ्सु' इत्यस्यापवादः ।

५४ । अकः सवर्णे दीर्घः । (६-१-९६)

अकः सवर्णेऽचि परे दीर्घ इति यण्गुणयोरपवादः । अतः 'इको यणचि' 'आद्गुणः' इत्युभयोरपि सूत्रयोः असवर्णोऽजेव विषयः । अकः सवर्णोऽच् अगेव ह्रस्वदीर्घादिभेदभिन्नः । अकोऽकि परे स्ववर्णदीर्घ इति फलितम् । अथोदाह्रियते—

मुर + अरिः = मुरारिः । अधि + ईशः = अधीशः ।
गुण + आढ्यः = गुणाढ्यः । यदु + उद्वहः = यदूद्वहः ।
दया + अब्धिः = दयाब्धिः । पातृ + ऋषभः = पातॄषभः ।
रमा + आलिङ्गितः = रमालिङ्गितः ।

५५ । एङः पदान्तादति (पूर्वः) । (६-१-१०९)

पूर्वः पूर्वरूपम् । पदान्तादेङः अति (ह्रस्वे अकारे) परे पूर्वरूपं (=एङ्) एकादेशः स्यात् । अयमेकः पदान्तसंधिः । अन्ये तु विशेषकथनाभावादुभयसंधयः । यथा—

हरे + अव = हरेव । विष्णो + अव = विष्णोव । अत्र स्थितः अकारः पूर्वरूपेण लुप्त इति द्योतयितुं ऽ इति प्रश्लेषाख्यं चिह्नं निवेश्यते । यथा—हरेऽव, विष्णोऽव । इदं सूत्रम् 'एचोऽयवायावः' इत्यस्यापवादः ।

अथ संधिनिषेधः—योऽयं प्रकृतिभाव इति व्यपदिश्यते; संधौ ह्यकृते पदं प्रकृत्या (यथास्थितरूपेण) एवावतिष्ठते ॥

## ५६ । प्लुतप्रगृह्या अचि नित्यम् (प्रकृत्या) । (६-१-१२५)

प्लुताश्च प्रगृह्यसंज्ञाश्च अचि परे प्रकृत्या स्युः । संधिं न लभेरन्नित्यर्थः । विकल्पानुवृत्तिनिवृत्त्यर्थं नित्यमिति । प्लुतस्तावद्दूराद्धाना-दौ भवति । स लौकिकसंस्कृते नातीवोपयुज्यत इति तद्विधिर्नात्र व्याख्यायते । प्रगृह्यसंज्ञा परं विव्रियते—सा च प्रथमाध्यायप्रथमपादे विहिता ॥

## ५७ । ईदूदेद्द्विवचनं प्रगृह्यम् । (१-१-११)

ईदन्तम्, ऊदन्तम्, एदन्तं च द्विवचनं प्रगृह्यसंज्ञं स्यात् ।

अथोदाहरणम्—प्रथमं प्लुतस्य—

एहि कृष्ण३ अत्र गौश्चरति । कृष्णात्रेति दीर्घो न । अनन्तरं प्रगृह्यस्य—

कवी एतौ—कव्येतौ इति यण् न । पटू इमौ—पट्विमौ इति यण् न ।

द्वे अङ्गे—द्वेऽङ्गे इति पूर्वरूपं न । आसाते इमौ—आसातयिमौ इति अयादेशो न ।

## ५८ । अदसो मात् । (१-१-१२)

अदसशब्दस्य मकारात् परौ ईदूतौ प्रगृह्यौ स्तः । असंभवादेदित्यंशो न संबध्यते । अद्विवचनार्थम् अनीदूदेदन्तार्थं च वचनम् । अमू (पुंसि) आसाते । मुत्वस्यासिद्धत्वेनाप्राप्तावारम्भः । असिद्धत्वमुपरिष्टात् स्पष्टीभविष्यति । यथा—

अमी ईशाः—अमीशा इति सवर्णदीर्घो न ।

## ५९ । ओत् (निपातः) । (१-१-१५)

ओदन्तो निपातः प्रगृह्यं स्यात् । यथा—

अहो आश्चर्यं—अहवाश्चर्यमिति अवादेशो न । अथो आरभ्यते—अथवारभ्यत इति न ।

अन्यत्रापि प्रगृह्यसंज्ञोक्ता नातीवोपयुज्यते । प्रसङ्गवशात् प्रगृह्यसंज्ञाविध्यर्थं प्रथमाध्यायसूत्राणि व्याख्याय प्रकृतः षष्ठाध्यायप्रथमपाद एवानुबध्यते—

६० । ऋत्यकः (प्रकृत्या वा पदान्ते) । (६-१-१२८)

ह्रस्वे ऋकारे परे पदान्तस्थः अक् प्रकृत्या वा स्यात् । यथा—

देव + ऋषिः = देवऋषिः, देवर्षिः । दधि + ऋते = दधिऋते, दध्यृते ।

विधिस्तावत्त्रिविधः नित्यो वैकल्पिको बहुलश्चेति । अवश्यं कर्तव्यो नित्यः ; इच्छया कर्तुमकर्तुं वा शक्यो वैकल्पिकः ;

'क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव'

इत्यव्यवस्थितो बहुलः । वा, विभाषा, अन्यतरस्याम् इत्यव्ययत्रयं विकल्पं द्योतयति । ऋषीणां नामग्रहणेऽपि विकल्पः पर्यवस्यति । तेषां हि तुल्यं प्रामाण्यम् ; तत्रैकस्य मतेऽस्ति, अन्येषां मते नास्तीति च स्थितिर्विकल्प एव किल । विषयैकदेशे प्रवृत्तिरेकदेशेऽप्रवृत्तिरिति स्थितिश्च विकल्पस्यैव कोऽपि भेदः । सेयं व्यवस्थितविभाषेत्युच्यते ॥

---

हल्संधिः ।

हल्संधिस्तावदसिद्धकाण्डे वर्तते । असिद्धकाण्डो नामाष्टाध्यायाश्चरमा त्रिपादी (अष्टमस्याध्यायस्य द्वितीयतृतीयचतुर्थाः पादाः) । सपादैः सप्तभिरध्यायैरुक्तेषु विधिषु कर्तव्येषु उत्तरा त्रिपादी असिद्धा (अविद्यमानप्राया) । त्रिपाद्यामपि पूर्वंपूर्वं विधिमपेक्ष्य परःपरो विधिरसिद्धः । सपादसप्ताध्याय्या कृत्स्नापि रूपनिष्पत्तिप्रक्रिया प्रतिपादिता ; त्रिपाद्यां तु यदुच्यते तत्केवलं निष्पन्नस्य पदस्य उच्चारणसंस्करणम् । अतस्त्रिपादीचोदितो विधिरन्त एव प्रवर्तते । कृतेऽस्मिन् पुनः सपादसप्ताध्यायीविहितस्य विधेर्न प्रवृत्त्यवकाशः । सपादसप्ताध्यायी सिद्धा (= सर्वसंप्रतिपन्ना), त्रिपादी तु असिद्धा (= असंप्रतिपन्ना सपादसप्ताध्याय्या) । प्रथमः सिद्धकाण्डः ; उत्तरोऽसिद्धकाण्डः । असिद्धकाण्ड-

कार्यलक्षणं निमित्तमाश्रित्य सिद्धकाण्डगतो विधिर्न प्रवर्तयितव्य इति संकेतस्य तत्त्वम् । असिद्धकाण्डस्तावन्न केवलं सिद्धकाण्डं प्रत्यसिद्धः, किं तु तत्रापि पूर्वपूर्वं प्रति परंपरं सूत्रमसिद्धमिति संकेतः । एवं च त्रिपाद्यां यत्र कुत्रापि स्थितं सूत्रं सपादसप्ताध्यायीं, त्रिपाद्यामेव स्वपूर्वसूत्राणि च प्रत्यसिद्धम्; स्वोत्तरसूत्राणि तु प्रति सिद्धम् । अनया च रीत्या त्रिपाद्यां यथायथोपचीयते सूत्रसंख्या तथा तथापचीयते सिद्धत्वम्, एवमन्तिमं सूत्रं सर्वमेव सूत्रान्तरं प्रत्यसिद्धं भवति । व्याख्यातं चैतत् सूत्रम्—'अ अ' (६) इति । अत एव विवृतस्य संवृतं केवलमुच्चारणमात्रकार्यमित्युक्तम् । तदेतदसिद्धत्वविधायकं सूत्रं व्याख्यायते—

६१ । **पूर्वत्रासिद्धम्** । (८-२-१)

इतः परं यदुच्यते तत् पूर्वोक्तं प्रत्यसिद्धम् । अष्टमाध्यायद्वितीयपादस्य प्रथममिदं सूत्रमिति सपादसप्ताध्यायीं प्रति उत्तरा त्रिपाद्यसिद्धा ; अधिकारसूत्रमिदमिति त्रिपाद्यामपि पूर्वं प्रति परं सूत्रमसिद्धम् ॥

असिद्धकाण्डे तावद्व्यञ्जनविकारा एवोच्यन्त इति विषयपर्यालोचनेन यद्यपि सिद्धकाण्डादस्य व्यावर्तनं सुकरम्, तथाप्यसिद्धकाण्ड एवान्तरालिकस्यासिद्धत्वस्य विवेचने सूत्रानुक्रम एव यतः शरणीकरणीयो वर्तते, ततो लाघवार्थमसिद्धकाण्डगता विधय उद्देशानुक्रमेण पञ्चभिः कारिकाभिरत्र परिगणिताः—

नलोपोऽन्ते, मतोर्वत्वं, रो लः, संयोगतक्षणम्, ।
चोः कु,-र्होढः, छशोःषत्वं, भष्भावोऽथ, पदान्तजश् ॥ १ ॥
षढोः को, नश्च निष्ठायाः, किन्कु,-र्नो मान्तधातुषु, ।
रुत्वं, वसुस्रंस्वादीनां दत्वं, र्वोपधदीर्घता, ॥ २ ॥
मुत्वं, प्लुत,-श्छान्दसरु, ढ्लोपो, रविसर्गता, ।
रोर्यः, शाकल्यलोपश्च, मो बिन्दु,-स्थुट् तुकौ, ङमुट् ॥ ३ ॥

सत्वषत्वे विसर्गस्य, मूर्धन्यो, णत्वकीर्तनम्, ।
श्चुत्वष्टुत्वे, पञ्चमत्वं, वर्णद्वित्वं च, जश्चरौ, ॥ ४ ॥
विन्दुत्वोः परसावर्ण्यं, हो घोषः, शश्छ इत्यमी ।
हल्विकारास्त्रिपाद्युक्ता असिद्धाः स्युरनुक्रमात् ॥ ५ ॥

स्वरव्यञ्जनसंध्योः सिद्धासिद्धत्वकृतादन्योऽप्यस्ति भेदः । स्वरसंधिमेव पाणिनिः संधित्वेन गणयति, यतः स एव '**संहितायाम्**' (६-१-७२) इत्यधिकृत्य विहितः ।[1]व्यञ्जनसंधिस्तु '**पदस्य**' (८-१-१६) इत्यधिकृत्यारब्धो झलि परेऽपि क्वचित् क्वचिद्विधीयत इत्येव । अतः पदान्ते झलि परे वा विहितानि, वर्णानां योगमात्रे चोदितानि च कार्याण्यस्मिन् प्रकरणे यावच्छक्यं सूत्रानुक्रमेण कथ्यन्ते ॥

६२ । **चोः कुः** (झलि पदान्ते च) । (८-२-३०)

चवर्गस्य कवर्ग आदेशः स्यात् झलि परे पदान्ते च । यथा—

| पदान्ते | झलि परे |
|---|---|
| वाच् = वाक् । | सिच् + तं = सिक्तम् । |
| प्राच् = प्राक् । | मुच् + तं = मुक्तम् । |
| स्रज् = स्रग् । | भज् + तं = भक्तम् । |
| भिषज् = भिषग् । | तिज् + तं = तिक्तम् । |

---

१. अष्टमे २-३-४ पादेषु व्यञ्जनकार्याणि प्लुतश्च विधीयन्ते । तत्र २-यपादे पदान्ते, झलि परे च कार्याणि प्लुतश्च संहिताधिकारं विनैवानुशिष्यन्ते । ३-य ४-र्थ पादयोः 'तयोर्य्वावचि **संहितायाम्**' इत्यधिकरोत्याचार्यः । ततश्च द्वितीयपादकार्याणां नित्यत्वम्, अन्तिमपादयोस्तु कार्याणां संहिताविवक्षाविवक्षाभ्यामैच्छिकत्वं च फलति । त्रिपादीप्रथमपादविहितानां हल्कार्याणां निर्णये, पदान्ते झलि च हलामल्पानामेव संभव इति ज्ञानं सुलभम् । तेन च संधिकार्याणि मुष्टिग्राह्याणि भवन्ति । यथा—

पदान्ते—(१) हस्य ढः, (२) मध्यमेषु यवलान्ता अप्रसिद्धाः, (३) चोः कुः, (४) झयां षस्य च जश्, (५) शस्य षः, (६) सस्य रुः । एवं व्यपकलिते र, ग, ङ, ड, ण, द, न, ब, म इति नवैव । एवमन्यदप्यूह्यम् ।

### ६३ । हो ढः । (८-२-३१)

झलि परे पदान्ते च हस्य ढ आदेशः स्यात् । यथा—

| पदान्ते | झलि परे |
|---|---|
| लिह् = लिढ् (= लिड्) । | लिह् + तं = लिढ् तं (= लीढम्) । |
| वाह् = वाढ् (= वाड्) । | वह् + तं = वढ् तं (= ऊढम्) । |

पदान्ते झशि परे च खरातिखरघोषाणां मृदुरादेशोऽनुपदमेव विधास्यते । अतो लिढ् = लिड् ; लिढ्भिः = लिड्भिः । अन्येष्वप्युदाहरणेषु मृद्वादेशोऽयं द्रष्टव्यः ॥

### ६४ । दादेर्धातोर्घः । (८-२-३२)

दकारादेस्तु धातोर्हकारस्य झलि परे पदान्ते च ढस्यापवादो घः । यथा—

दह् = दघ् (= धग्) । दह् + भिः = दघ् + भिः (= धग्भिः) ।
'धग्' इति रूपनिष्पत्तिरनुपदं वक्ष्यते ।

### ६५ । वा द्रुहमुहष्णुहष्णिहाम् । (८-२-३३)

द्रुहादीनां धातूनां हकारस्य वा घः, पक्षे ढः । यथा—

| पदान्ते | झलि परे |
|---|---|
| द्रुह् = द्रुघ्, द्रुढ् (= ध्रुक्, ध्रुट्) | मुह् + तः = मुघ् तः (= मुग्धः), मुढ् तः (= मूढः) । |

### ६६ । नहो धः । (८-२-३४)

नहधातोर्हकारस्य तूक्ते निमित्ते धकार इति विशेषविधिः । यथा—

| पदान्ते | झलि परे |
|---|---|
| उपानह् = उपानध् (= उपानद्) । | उपानह् + तं = उपानध् + तं (= उपानद्धम्) । |

### ६७ । व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः । (८-२-३६)

'हो ढः' इतिवत् छशोः षः इति नवो विधिः । 'नहो धः' इतिवत् व्रश्चादिसप्तकस्य चवर्गान्तत्वेऽपि न कुः, अपि तु ष इति 'चोः

कुः' (६२) इत्यस्यापवादोऽपि सूत्रेऽस्मिन् मिश्रीकृत्योच्यते। (१) 'छशोः षः' (२) 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजां च' इति यद्याचार्यो विभज्य सूत्रमकरिष्यत्तर्हि स्पष्टतरमभविष्यत्। झलि पदान्ते च छकारशकारयोः ष आदेशः, व्रश्चादीनां च कुत्वापवादः षः इत्यर्थः। यथा—

| पदान्ते | झलि परे |
|---|---|
| छान्तस्य – प्राच् = प्राष् (= प्राड्) | प्रछ् + तम् = प्रष् तं (पृष्टम्)। |
| शान्तस्य – नश् = नष् (= नड्) | नश् + तम् = नष् तं (नष्टम्)। |
| व्रश्चादेः – सृज् = सृष् (= सृड्) | सृज् + तम् = सृष् तं (सृष्टम्)। |

## ६८। एकाचो बशो भष् झषन्तस्य स्ध्वोः। (८-२-३७)

धातोरित्यनुवर्तते; एकः अच् यस्मिन् स वर्णराशिरेकाच् इति, सूत्रेषु प्राय एकाच्शब्दो बहुव्रीहिः। धातोरवयवभूतस्य झषन्तस्य च एकाचो वर्णराशेः संबन्धी यो बश् तस्य भष् आदेशः पदान्ते, सकार-ध्वप्रत्यययोश्च परयोः। झष इति घोषाणां प्रत्याहारः; भष् इति बश इति च चवर्गवर्जं घोषमृद्वोः। यथा—

**पदान्ते**—दह् (६४) = दघ् = धघ् (= धग्)
गोदुह् (,,) = गोदुघ् = गोधुघ् (= गोधुग्)
मित्रद्रुह् (,,) = मित्रद्रुघ् = मित्रध्रुघ् (= मित्रध्रुग्)
,, (६५) = मित्रद्रुढ् = मित्रध्रुढ् (= मित्रध्रुड्)
**सकारे**—दह् + स्यति = धक्ष्यति।
**ध्वप्रत्यये**—अबुध् + ध्वम् = अभुद्ध्वम्।

## ६९। झलां जशोऽन्ते। (८-२-३९)

पदान्ते झलां जश आदेशाः स्युः। झलिति पञ्चमवर्जं वर्ग्याणां ऊष्मणां च प्रत्याहारः। जशिति मृदूनां (वर्गतृतीयानां)। तत्रान्तरतम्य-परीक्षायां वर्गान्तानां स्वस्ववर्गीयो मृदुरादेशः। ऊष्मणां तु मध्ये '... छशां षः' (६७), 'हो ढः' (६३), 'ससजुषो रुः' (७०) इति

शह्सानां तत्तद्विशेषविधानात् षकार एक एवावशिष्यते । तस्य 'ऋटु-रषाणां मूर्धा' इति मूर्धस्थानसाम्यात् टवर्गमृदुः डकार आदेशो भवति। यथा—

| | |
|---|---|
| वाक् = वाग् | चित् = चिद्। |
| गोधुघ् = गोधुग् | ककुभ् = ककुब्। |
| मित्रध्रुढ् = मित्रध्रुड् | द्विष् = द्विड्। |

अवसाने झलां विकल्पेन चर्त्वं (मृदूनां खरादेशं) वक्ष्यति; अतः गोधुक्, ककुप् इत्यादिरूपाण्यपि भवन्ति। वाक्यमध्ये तु गोधुगयम्, ककुब्विभाग इत्यादि जश्त्वमेव ॥

## ७०। ससजुषो रुः। (८-२-६६)

पदान्तस्य सकारस्य सजुष् इति शब्दस्य च रुः स्यात्। 'अलोऽन्त्य'-परिभाषया (३१) सजुष्शब्दान्त्यवर्णस्य षकारस्यादेशः। अयं शब्दः छन्दस्येव बहुशो दृश्यते। 'रु' इत्यादेशे उकारस्यानुनासिकत्वप्रतिज्ञानादित्संज्ञायां लोपे 'र्' इत्येवादेशस्वरूपम्। रेफस्यास्य पुनरपि उत्वयत्वयोरादेशान्तरयोर्विधानार्थं उकारानुबन्धयोजनम्। उत्वयत्वे सकारादेशभूतस्य रेफस्यैव विवक्षिते; तथा च नैसर्गिकरेफात् सकारादेशरेफस्य भेदप्रदर्शनाय पूर्वो र इति, उत्तरो रुः इति च व्यपदिश्यते। यथा—

| | |
|---|---|
| ज्योतिस् + इदं = ज्योतिरिदम्। | दोस् + दण्डः = दोर्दण्डः। |
| धनुस् + आनय = धनुरानय। | उच्चैस् + वृक्षः = उच्चैर्वृक्षः। |

अवसाने रेफस्य विसर्गविधानात् (८२) ज्योतिः, धनुः, दोः, उच्चैः इति रूपाणि स्युः। रोर्निमित्तभेदेन यकार उकारश्चादेशौ वक्ष्येते ॥

## ७१। अहन्। (८-२-६८)

## ७२। रोऽसुपि। (८-२-६९)

'अहन्' इत्यस्य पदस्य रुः स्यात्; सुप्प्रत्ययभिन्ने तु परे रोरपवादो रः। तथा च 'अहन्' इति पदस्य सुपि परे रुः; अन्यत्र र इति फलितम्। सुप् इति

२१ विभक्तिप्रत्ययानां (प्रथमादीनां) प्रत्याहारः। तेषां मध्ये हलादिषु प्रत्ययेषु परेषु पूर्वस्याः प्रकृतेः प्रत्ययान्तस्य च पदसंज्ञा वक्ष्यते। यथा—

अहन् + भिः = अहर् भिः (अहोभिः)—रुः।

अहन् + गणः = अहर्गणः—रः।

रुरेफस्य उत्वविधानात् (९०) अहोभिरिति रूपम्; रस्य तदभावाद् अहर्गण इति रेफस्यैव श्रवणम्। अत एव रोरपवादो रो विधीयते॥

॥ * ॥ अहन्नित्यस्य रेफे परेऽपि रुः॥ यथा—

अहन् + रम्यं = अहर् रम्यं (अहो रम्यम्)।

## ७३। वसुस्रंसुध्वंस्वनडुहां दः। (८-२-७२)

वस् प्रत्ययः; स्रंस्, ध्वंस् इति धातू; (एषु उकार इत्) अनडुह् इति नामशब्दः। पदस्येत्यनुवर्तते। एषां पदान्ते दः स्यात् इत्यर्थः। विद्वस्, निषेदिवस्, उपेयिवस् इत्यादयो वस्प्रत्ययान्ताः। यथा—

विद्वस् + भिः = विद्वद्भिः। स्रस् = स्रद्।

अनडुह् + भिः = अनडुद्भिः। ध्वस् = ध्वद्।

अथ 'तिप्यनस्तेः' (८-२-७३) इत्यादिभिः त्रिभिः सूत्रैः तिङ्प्रत्ययेष्वपि दरू विधीयेते। प्रक्रियाबाहुल्यात् तानि नात्र व्याख्यायन्ते। ततः 'र्वोरुपधाया...' (८-२-७६) इत्यादिदीर्घविधिनिषेधौ, अदसो मुत्वविधिश्च हल्संधावप्रकृतत्वात् प्रकरणान्तरेषु व्याख्यास्यन्ते। पश्चात् प्लुतविधिर्भाषायामनुपयुक्त इत्युपेक्ष्यते॥

'ससजुषो रुः' (७०) इति रुविधिरुक्तः; अन्यदप्यस्ति रुविधानम्—'मतुवसो रु संबुद्धौ छन्दसि' (८-३-१) इति। तत्र प्रथमो रुः इति पुल्लिङ्गः, छान्दसलौकिकभाषासाधारणश्च; द्वितीयो रु इति नपुंसकं लौकिकभाषायां विरलप्रयोगं च इति भेदः। एवं च पदान्तरेफास्त्रिविधाः—रुः, रु, र इति। तत्र वक्ष्यमाणयोः उत्वयत्वयोः स्थानिनौ रु, रुश्च; पूर्वस्वरस्यानुनासिकत्वं अनुस्वारासज्जनं वा कर्तुं निमित्तभूतं रु एव; रस्तु रेफसामान्यं न कस्यापि विशेषविधेर्विषयः॥

### ७४। मतुवसो रु संबुद्धौ छन्दसि। (८-३-१)

अथ रुणः संनियोगेन (साहचर्येण) विशेषकार्यमुपदिशति।

### ७५। अत्रानुनासिकः पूर्वस्य तु वा। (८-३-२)

तुकारो भिन्नक्रमः अनुनासिकस्तु वा इति। रु नित्यं भवति ; अनुनासिकस्तु पूर्वस्य वैकल्पिक इति तुकारो भेदं द्योतयति। रुप्रकरणेऽत्र रुणः पूर्वस्य स्वरस्य विकल्पेनानुनासिकत्वं कार्यमित्यर्थः। अनुनासिको वेत्युक्तम् ; तदभावे किं कर्तव्यमित्याह—

### ७६। अनुनासिकात् परोऽनुस्वारः। (८-३-४)

अनुनासिकात् इत्यस्य अनुनासिकस्थानिन इत्यर्थः। अनुनासिकस्थानिनः स्वरात् परमनुस्वारासञ्जनं कार्यम्। अनुनासिकः पूर्वस्वरस्योक्तः ; अतो रुणः पूर्वस्य स्वरस्य पश्चादनुनासिकत्वाभावे अनुस्वारो योजनीय इति फलितम्। एवं च रुणि कृते पूर्वस्वरोऽनुनासिकोऽनुस्वारपरो वा कार्यः। द्वित्रा एवात्र भाषोपयुक्ता विधयः ; तत्राप्येक एव सामान्यविधिः॥

### ७७। पुमः खय्यम्परे। (८-३-६)

अम् परो यस्मात् इति बहुव्रीहिः ; अम् खय् इत्युभौ प्रत्याहारौ। पदान्ते पुंशब्दस्य रु अन्तादेशः खयि परे ; खयश्च अम् परोऽस्ति चेत्। 'समः स् सुटि' (८-३-५) इति पूर्वसूत्रात् (प्रश्लिष्टं) सकारमनुवर्त्य रुणः सकारादेशोऽप्यनेन विधीयते। रुश्रवणं तु 'हरिवो मेदिनं त्वा' इत्यादिषु च्छान्दसप्रयोगेष्वेव। अथोदाहरणम्—

पुम् + कोकिलः = पुर् कोकिलः = पुस्कोकिलः ;
(अनुनासिकानुस्वारविकल्पात्) = पुँस्कोकिलः, पुंस्कोकिलः।

पुम् + खरः = पुँस्खरः, पुंस्खरः।
पुम् + पुत्रः = पुँस्पुत्रः, पुंस्पुत्रः।
पुम् + फलं = पुँस्फलं, पुंस्फलम्।
पुम् + चली = पुँस्चली (= पुँश्चली), पुंस्चली (= पुंश्चली)।

प्रत्युदाहरणम्—खय् परो न चेत्—पुं + गवः = पुङ्गवः।
(खयोऽम् न परश्चेत्) पुं + प्रतिभा = पुंप्रतिभा।

संयोगान्तलोपाभावो रुविधानद्वारा विधीयते इति फलति। पुंस् इति सान्तो हि पुंशब्दः। संयोगान्तलोपः २५९ तमसूत्रेण विधीयते॥

७८ । नश्छव्यप्रशान् । (८-३-७)

अम्परे छवि परे पदान्तस्य नस्य रु स्यात्, न तु प्रशान्शब्दनकारस्य । अत्रापि रुणः सादेशः । यथा—

महान् + तरुः = महास्तरुः, = महांस्तरुः, महाँस्तरुः ।

छान्दसेऽस्मिन् रुप्रकरणे बाला मा क्लिश्यन्त्विति भाषोपयुक्तयोः सूत्रयोर्विषयः कारिकया संगृह्यते ॥

चटताच्छठथाच्च प्रागन्त्यो नो बिन्दुपूर्वसः ।
अम्परादेव, पुंसश्च खरातिखरवर्णतः ॥

च ट त छ ठ थ एभ्यो वर्णेभ्यः पूर्वं स्थितस्य पदान्तनकारस्य अनुस्वारपूर्वकः सकार आदेशः; च-ट-तादिभ्यो वर्णेभ्यः अम्प्रत्याहारः परो भवितुमर्हति । एवं पुंशब्दमकारस्याप्यनुस्वारपूर्वकः सकारः[१], किं त्वत्र परे वर्णा न केवलं चटतछठथा अपि तु सर्वे खरातिखराः । यथा

महान् + तरुः = महांस्तरुः ।
कस्मिन् + चित् = कस्मिंस् चित् (=कस्मिंश्चित्) ।
तस्मिन् + टीका = तस्मिंस् टीका (=तस्मिंष्टीका) ।
वृक्षान् + छिनत्ति = वृक्षांस्छिनत्ति (=वृक्षांश्छिनत्ति) ।

पुम् + कोकिलः = पुंस्कोकिलः । | पुम् + पुत्रः = पुंस्पुत्रः ।
पुम् + चली = पुंस्चली (=पुंश्चली) । | पुम् + खरः = पुंस्खरः ।

---

१. (१) समः सुटि, (२) पुमः खय्यम्परे, (३) नश्छव्यप्रशान्, (४) उभयथर्क्षु, (५) दीर्घादटि समानपादे, (६) नॄन् पे, (७) स्वतवान् पायौ, (८) कानाम्रेडिते। इत्यष्टसूत्रीविषयेऽनुनासिकानुस्वारौ विधीयेते। तत्रानुनासिको लौकिकभाषायां परिलुप्तः। रु विधाय तस्य सकारकरणापेक्षया साक्षात्सकारविधाने प्रक्रियालाघवं भवति । ५ ६-७ सूत्रे रुविधान एवेष्टसिद्धिरिति रुप्रकरणमिदमिति प्राचीनानां व्याख्या । तन्मते 'सकारं प्रश्लिष्य रुणः सविधानं' क-ख-प-फेषु विसर्गादिबाधनार्थमावश्यकमेव । एवं सति समः स् सुटि इति द्विसकारं पठित्वा इदं सप्रकरणमित्येवास्तु । दीर्घादटीत्यस्य च्छान्दसत्वादसिद्धत्वाभावकल्पनया सकारस्य ससजुषोरिति रुरस्तु । ६-७ सूत्रयोः ससजुषोरित्यनन्तरं पाठः क्रियताम् । एवं चेदनुस्वारासिद्धिरिति तु नापाद्यम् । विसर्गोपध्मानीययोः प्रागनुस्वारस्य दुरुच्चरत्वात् इति स्वतन्त्रं प्रस्थानमाश्रीयते ।

### ७९। ढो ढे लोपः। (८-३-१३)

ढस्य ढे परे लोपः स्यात्। ढान्तस्य पदस्याभावात् पदमध्य एवायं भवति। अत इदमुपरिष्टादुदाहरिष्यामः॥

### ८०। रो रि। (८-३-१४)

रेफस्य रेफे परे लोपः स्यात्। ढरेफयोर्लोपे कार्यान्तरं षष्ठाध्याये विधीयते—

### ८१। ढ्रलोपे पूर्वस्य दीर्घोऽणः। (६-३-१११)

ढकाररेफयोर्लोपे लुप्ताभ्यां ताभ्यां पूर्वस्य अणो दीर्घः स्यात्। यथा—

स्वर् + राज्यं = (८०) स्व राज्यम्, (८१) स्वाराज्यम्।
निर् + रागः = (८०) नि रागः, (८१) नीरागः।
दुर् + रक्तं = (८०) दु रक्तम्, (८१) दूरक्तम्।
वपुस् + रम्यं = (७०) वपुर् रम्यम्, (८०) वपु रम्यम्, (८१) वपूरम्यम्।

### ८२। खरवसानयोर्विसर्जनीयः (रः)। (८-३-१५)

खरि परे अवसाने च रेफस्य विसर्गः स्यात्। यथा—

| अवसाने | खरि |
|---|---|
| पुनर् = पुनः। | पुनर् + करोति = पुनःकरोति। |
| पितुर् = पितुः। | पितुर् + प्रेम = पितुःप्रेम। |
| दोस् = (७०) दोर् = दोः। | दोर् + फलं = दोःफलम्। |
| उच्चैस् = (७०) उच्चैर् = उच्चैः। | उच्चैर् + खण्डः = उच्चैःखण्डः। |
| अन्तर् = अन्तः। | अन्तः + सारम् = अन्तःसारम्। |

यद्यपि खर्प्रत्याहारे सर्वेऽपि खरातिखरा अन्तर्भूतास्तथापि 'विसर्जनीयस्य सः' (९४) इत्यादेशान्तरविधानात् कपवर्गीयाणामेवायं विधिः फलति॥

'रो रि' 'खरवसानयोर्विसर्जनीयः' इत्येताभ्यां सूत्राभ्यां रेफसामान्यस्य कार्यमुक्तम्; अथ 'रु' इति कृत्रिमस्य रेफस्य कार्याण्याह—

## ८३ । रोः सुपि । (८-३-१६)

सुप् सप्तमीबहुवचनप्रत्ययः । तस्मिन् परे रोरेव विसर्गो न तु नैसर्गिकरेफस्य । 'खरव...' (८२) इति रेफसामान्यस्य प्राप्तो विसर्ग एव नियम्यते । यथा—

पयस् + सु = पयर् सु = पयःसु । | दोस् + सु = दोर् सु = दोःसु ।

विसर्गस्य पुनर्विकल्पेन सत्वं विधास्यते; अतः 'पयस्सु' 'दोस्सु' इत्यपि रूपं साधु । प्रत्युदाहरणम्—

(नैसर्गिकरेफस्य तु) गीर् + सु = गीर्सु (= गीर्षु) ।

## ८४ । भोभगोअघोअपूर्वस्य योऽशि । (८-३-१७)

भोस्, भगोस्, अघोस् इति सकारान्ता निपाताः; अः = अवर्णः । एतत्पूर्वकस्य (एभ्यः परस्य) रोर्यकार आदेशः स्यात् अशि परे । अत्र 'अ-पूर्वस्य' इत्यंशः सामान्यविधिः; भोस्प्रभृतीनां विशेषविधिरिति विषयविवेको बोद्धव्यः । यथा—

| | | | | |
|---|---|---|---|---|
| यशस् + उज्ज्वलम् | = | (७०) | यशर् + उज्ज्वलम् | = यशय् उज्ज्वलम् । |
| वेधास् + इह | = | ,, | वेधार् + इह | = वेधाय् इह । |
| वेधास् + वन्द्यः | = | ,, | वेधार् + वन्द्यः | = वेधाय् वन्द्यः । |
| भोस् + एहि | = | ,, | भोर् + एहि | = भोय् एहि । |
| भोस् + गच्छ | = | ,, | भोर् + गच्छ | = भोय् गच्छ । |

यत्वयकारस्योच्चारणे पक्षभेदाः सन्ति; तानाह—

## ८५ । व्योर्लघुप्रयत्नतरः शाकटायनस्य । (८-३-१८)

---

१. सुप् इति सकारस्य खरि अन्तर्भूतत्वात् 'खरवसानयोः' इत्येव सिद्धे नवं विधिमारभमाण आचार्यः पिष्टमेव पिनष्टि । तच्च तस्मिन् न संभाव्यते । अतः कल्प्यते नियमार्थो विधिरिति । नियमस्वरूपं च सुप्सकारे भवति चेत् रोरेवेति । एवमन्यत्रापि सिद्धे पुनरारम्भो नियमे पर्यवस्यतीति बोध्यम् । मात्रालाभव्यसनात् 'रोरेव सुपि' इति न सूत्रितमाचार्येण ।

## ७९ । ढो ढे लोपः । (८-३-१३)

ढस्य ढे परे लोपः स्यात् । ढान्तस्य पदस्याभावात् पदमध्य एवायं भवति । अत इदमुपरिष्टादुदाहरिष्यामः ॥

## ८० । रो रि । (८-३-१४)

रेफस्य रेफे परे लोपः स्यात्। ढरेफयोर्लोपे कार्यान्तरं षष्ठाध्याये विधीयते—

## ८१ । ढ्रलोपे पूर्वस्य दीर्घोऽणः । (६-३-१११)

ढकाररेफयोर्लोपे लुप्ताभ्यां ताभ्यां पूर्वस्य अणो दीर्घः स्यात् । यथा—

स्वर् + राज्यं = (८०) स्व राज्यम्, (८१) स्वाराज्यम् ।
निर् + रागः = (८०) नि रागः, (८१) नीरागः ।
दुर् + रक्तं = (८०) दु रक्तम्, (८१) दूरक्तम् ।
वपुस् + रम्यं = (७०) वपुर् रम्यम्, (८०) वपु रम्यम्, (८१) वपूरम्यम् ।

## ८२ । खरवसानयोर्विसर्जनीयः (रः) । (८-३-१५)

खरि परे अवसाने च रेफस्य विसर्गः स्यात् । यथा—

| अवसाने | खरि |
|---|---|
| पुनर् = पुनः । | पुनर् + करोति = पुनःकरोति । |
| पितुर् = पितुः । | पितुर् + प्रेम = पितुःप्रेम । |
| दोस् = (७०) दोर् = दोः । | दोर् + फलं = दोःफलम् । |
| उच्चैस् = (७०) उच्चैर् = उच्चैः । | उच्चैर् + खण्डः = उच्चैःखण्डः । |
| अन्तर् = अन्तः । | अन्तः + सारम् = अन्तःसारम् । |

यद्यपि खर्प्रत्याहारे सर्वेऽपि खरातिखरा अन्तर्भूतास्तथापि 'विसर्जनीयस्य सः' (९४) इत्यादेशान्तरविधानात् कपवर्गीयाणामेवायं विधिः फलति ॥

'रो रि' 'खरवसानयोर्विसर्जनीयः' इत्येताभ्यां सूत्राभ्यां रेफसामान्यस्य कार्यमुक्तम् ; अथ 'रु' इति कृत्रिमस्य रेफस्य कार्याण्याह—

## ८३। रोः सुपि। (८-३-१६)

सुप् सप्तमीबहुवचनप्रत्ययः। तस्मिन् परे रोरेव विसर्गो न तु नैसर्गिकरेफस्य। 'खरव...' (८२) इति रेफसामान्यस्य प्राप्तो विसर्ग एव नियम्यते। यथा—

पयस् + सु = पयर् सु = पयःसु। | दोस् + सु = दोर् सु = दोःसु।

विसर्गस्य पुनर्विकल्पेन सत्वं विधास्यते; अतः 'पयस्सु' 'दोस्सु' इत्यपि रूपं साधु। प्रत्युदाहरणम्—

(नैसर्गिकरेफस्य तु) गीर् + सु = गीर्सु (= गीर्षु)।

## ८४। भोभगोअघोअपूर्वस्य योऽशि। (८-३-१७)

भोस्, भगोस्, अघोस् इति सकारान्ता निपाताः; अः = अवर्णः। एतत्पूर्वकस्य (एभ्यः परस्य) रोर्यकार आदेशः स्यात् अशि परे। अत्र 'अ-पूर्वस्य' इत्यंशः सामान्यविधिः; भोस्प्रभृतीनां विशेषविधिरिति विषयविवेको बोद्धव्यः। यथा—

यशस् + उज्ज्वलम् = (७०) यशर् + उज्ज्वलम् = यशय् उज्ज्वलम्।
वेधास् + इह = ,, वेधार् + इह = वेधाय् इह।
वेधास् + वन्द्यः = ,, वेधार् + वन्द्यः = वेधाय् वन्द्यः।
भोस् + एहि = ,, भोर् + एहि = भोय् एहि।
भोस् + गच्छ = ,, भोर् + गच्छ = भोय् गच्छ।

यत्वयकारस्योच्चारणे पक्षभेदाः सन्ति; तानाह—

## ८५। व्योर्लघुप्रयत्नतरः शाकटायनस्य। (८-३-१८)

---

१. सुप् इति सकारस्य खरि अन्तर्भूतत्वात् 'खरवसानयोः' इत्येव सिद्धे नवं विधिमारभमाण आचार्यः पिष्टमेव पिनष्टि। तच्च तस्मिन् न संभाव्यते। अतः कल्प्यते नियमार्थो विधिरिति। नियमस्वरूपं च सुप्सकारे भवति चेत् रोरेवेति। एवमन्यत्रापि सिद्धे पुनरारम्भो नियमे पर्यवस्यतीति बोध्यम्। मात्रालाभव्यसनात् 'रोरेव सुपि' इति न सूत्रितमाचार्येण।

व्योरिति वकारयकारयोः षष्ठीद्विवचनम् । 'भो...अपूर्वस्य' इत्यनुवर्तते । 'पदस्य' इत्यधिकारोऽप्यस्ति । भोभगोअघोपूर्वयोरवर्णपूर्वयोर्वा पदान्तयकारवकारयोर्लघुप्रयत्नतरौ यकारवकारौ स्यातामशि परे । इदं च शाकटायनस्याचार्यस्य मतम् । उक्तविधौ यकारवकारौ यत्नं लघूकृत्य ध्वनिशैथिल्येनोच्चार्यावित्यर्थः ॥

८६ । लोपः शाकल्यस्य । (८-३-१९)

उक्तविधयोर्यवयोः श्रवणमेव मास्त्विति शाकल्य आचार्यो मन्यते ॥

८७ । ओतो गार्ग्यस्य । (८-३-२०)

ओकारात् परयोरेव यवयोरुक्तनिमित्ते लोपमिच्छति गार्ग्य आचार्यः ॥

८८ । हलि सर्वेषाम् । (८-३-२२)

अचि परे एव पक्षभेदाः, हलि परे तु यवयोर्लोप एव सर्वाचार्यसंमतः । एतेन अचि परे यशयुज्ज्वलम्, यशयुँज्ज्वलम्, यश उज्ज्वलम् इति त्रीणि रूपाणि । हलि (हशेव संभवति) तु—वेधा वन्द्यः, भो गच्छ—इति लुप्तयकारमेव रूपम् ॥

अत्रायमाचारः कविसंप्रदायात्—अवर्णपूर्वयोः पदान्तयोर्यवयोर्लघुप्रयत्नतरौ लोपो वा विधीयते; अवर्णपूर्वौ यवौ च अय्, अव्, आय्, आव् इत्येवंरूपौ । चत्वार्यप्येतानि 'एचोऽयवायावः' (४४) इत्यनेन विधीयन्ते; अय्, आय् इति यान्ते द्वे 'भोभ...अपूर्वस्य' (८४) इत्यनेन च। तत्र रोर्यत्वेन (८४) निष्पन्नो यकारः सर्वत्र लुप्यते, एच आदेशैः (४४) निष्पन्नेष्वपि एङादेशयोः अयवोर्यवौ लुप्येते, ऐजादेशयोरायावोस्तु अलघुनैव प्रयत्नेन उच्चार्येते इति । तथा हि—

| | |
|---|---|
| देवस् + इह = देव इह ८६ लोपः । | गुरो + इह = गुर इह ८६ लोपः । |
| देवास् + इह = देवा इह ,, ,, | तस्मै + इह = तस्मायिह ,, उच्चारणम् |
| देवे + इह = देव इह ,, ,, | देवौ + इह = देवाविह ,, ,, |

रोर्यत्वं पदान्त एव; एजादेशस्तु पदान्ते पदमध्ये च । तत्र पदमध्ये लोपस्य प्रसक्तिरेव नास्ति । अतः हरये, गुरवे, नायकः, पावकः इत्येव रूपाणि । यवयोर्लोपस्य षष्ठाध्यायविहितं स्वरसंधिं प्रत्यसिद्धत्वात् 'देव इह' इत्यादौ 'देवेह' इति आद्गुणादयो न भवन्तीति स्पष्टम् । स्वरसंधिविधायकानां षाष्ठाध्यायिकानां सूत्राणां दृष्ट्या नास्त्येव हि शाकललोपोऽसौ । अथ रोः 'उ' इति षष्ठाध्यायेऽपि कश्चिदादेशो विधीयते । यथा—

## ८९ । अतो रोरप्लुतादप्लुते (अति उत्) । (६-१-११३)

अप्रसिद्ध्या प्लुतस्यास्माभिरुपेक्षितत्वात् 'अप्लुतादप्लुते'[1] इति पदद्वयं विहायैव सूत्रार्थो व्याख्यायते । तथा च 'अतो रोरत्युत्' इत्येवानुवृत्त्युपस्कृतं सूत्रम् । अतः (ह्रस्वात्) अकारात् परस्य रोः उत् स्यात् अति परे । 'उत्' इत्यत्र तकार इत्संज्ञो लुप्यते । 'अतः' 'अति' इत्यनयोस्तु दीर्घनिवृत्त्यर्थं तपरकरणम् । यथा—

यशस् + अस्य = यशर् + अस्य = यश उ + अस्य = (आद्गुणेन)
यशो अस्य = (एङः पदान्तादतीति पूर्वरूपेण) यशोऽस्य[2] ।

---

१. अप्लुतादतः परस्य रोः अप्लुते अति परे उः इत्यन्वयः । तपरकरणेनैव दीर्घवत् प्लुतस्यापि निवारणे सिद्धे अप्लुतविशेषणमुभयत्रापि किमर्थमिति चेत्, प्लुतविधिस्त्रिपादीगतः षाष्ठाध्यायिकस्य उत्वविधेरस्य दृष्ट्या असिद्ध इति निलीय स्थितस्यापि प्लुतस्य वारणार्थम् ।

२. अत्र पूर्वपक्षी प्रत्यवतिष्ठते—"ननु उकारस्य पूर्वेण अता प्रथमं गुणं कृत्वा ततः पूर्वरूपेण 'यशोऽस्य' इति रूपमुक्तम्; (उकारस्य) परेण अता प्रथमं यणादेशं कृत्वा 'यशवस्य' इति रूपं कुतो नापद्यते ?" इति । शब्दानां क्रमेणोच्चारणप्रसङ्ग एव कार्यसंभवेन पूर्वकार्यस्य ('अ + उ' इत्यस्य) निमित्तं प्रथममुपतिष्ठते । ततः परकार्यस्य ('उ + अ' इत्यस्य) । ततश्च पूर्वकार्यं संजातनिमित्तकमादौ प्रवर्तते । स्वप्रवृत्त्या चापहरत्येव परकार्यस्य निमित्तम् । एवमनिष्टरूपापत्तेरत्रावकाश एव नास्ति । इति युक्त्या प्रत्यवस्थाता प्रतिक्षेप्यः ।

उत्वस्य सिद्धत्वात् गुणपूर्वरूपे भवतः । असिद्धकाण्डगतस्य रोर्वचनसामर्थ्यात् उत्वविधिमात्रे सिद्धत्वम् । प्रत्युदाहरणम्—

(अतः परो न चेत्) वेधास् + असौ = वेधा असौ ।
(अत् परो न चेत्) यशस् + आर्जय = यश आर्जय ।
(रेफान्तं चेत्) प्रातर् + अत्र = प्रातरत्र ।

## ९० । हशि च । (६-१-११४)

हशि परे च अतः परस्य रोः उः । यथा—

मनस् + हरम् = मनर् + हरम् = मन + उ हरम् = मनोहरम् ।
देवस् + वन्द्यः = देवर् + वन्द्यः = देव + उ वन्द्यः = देवो वन्द्यः ।
देवस् + नम्यः = देवर् + नम्यः = देव + उ नम्यः = देवो नम्यः ।

उत्वविधिरयम् '.... अपूर्वस्य योऽशि' (८४) इति यत्वस्यापवादः । तेन आतः परस्यैव रोः समग्रे अशि परे यत्वम्; अतः परस्य तु अति हशि च परे उत्वम्, आति इचि चैव परे यत्वमिति विषयविवेकः । [अश्–(अत् + हश्) = आत् + इच्]

अथ प्रकृतोऽष्टमाध्याय एव व्याख्यायते—

## ९१ । मोऽनुस्वारः[1] । (८-३-२३)

पूर्वसूत्रात् 'हलि' इत्यनुवर्तते । पदान्तस्य मकारस्य हलि परेऽनुस्वारः । यथा—

| | |
|---|---|
| इदम् + वनम् = इदं वनम् । | किम् + हसति = किं हसति । |
| सायम् + संध्या = सायं संध्या । | सम् + रक्तम् = संरक्तम् । |

प्रत्यु०—(अचि तु परे) इदम् + अरण्यम् = इदमरण्यम् ।

---

१. अस्यापवादः—१ । **मो राजि समः क्वौ** । (८-३-२५) । क्विप्रत्ययान्ते राजतौ परे 'सम्' इत्युपसर्गमकारस्य म एव न त्वनुस्वारः । 'क्वि' इति सर्वलोपी प्रत्ययः । तेन 'राज्' इत्येव क्विप्रत्ययान्तो राज्धातुः । उदा० सम् + राज् = सम्राज् = (६७) 'सम्राड्' । एकशब्दनिष्पत्त्यर्थकमिदं सूत्रमिति ग्रन्थशरीरे नोपात्तम् । अनन्तराश्च 'हे मपरे वा' इत्यादयो विधयो लौकिकसंस्कृतेऽनुपयुक्ता इत्युपेक्षिताः ।

## ९२। नश्चापदान्तस्य झलि। (८-३-२४)

**अपदान्तस्य नस्य मस्य च झलि परेऽनुस्वारः। यथा—**

पयान् + सि = पयांसि।
धनून् + षि = धनूंषि।
आक्रम् + स्यते = आक्रंस्यते।
अधिजिगाम् + सति = अधिजिगांसति।

प्रत्यु०—(पदान्तस्य तु) राजन् भुङ्क्ष्व। (झलोऽन्यस्मिन् परे) गम्यते, तन्यते।

## ९३। ङमो ह्रस्वादचि ङमुण्नित्यम्। (८-३-३२)

**ङम् इति प्रत्याहारः, उट् इत्यागमचिह्नम्। द्वन्द्वान्ते श्रूयमाणं पदं यथा प्रत्येकमन्वेति तथा प्रत्याहारान्ते प्रयुक्तमागमचिह्नमपि एकैकेन वर्णेनान्वेति; तथा च ङुट्, णुट्, नुट् इत्यागमाः। ह्रस्वात् परो यो ङम्, तदन्तात् पदात् परस्य अचो ङमुडागमः स्यात्। ङान्तात् ङुट्, णान्तात् णुट्, नान्तात् नुट् इति यथासंख्यमागमाः। आगमेषूकार इत् इति पूर्वमेवोक्तम्। टित्त्वादागम आदौ योजनीयः। (२५)। यथा—**

प्रत्यङ् + आत्मा = प्रत्यङ् ङात्मा = प्रत्यङ्ङात्मा।
सुगण् + ईशः = सुगण् णीशः = सुगण्णीशः।
लिखन् + आस्ते = लिखन् नास्ते = लिखन्नास्ते।
प्रत्यु०—'ह्रस्वात्' किं?[1] प्राङ् + आस्ते = प्राङास्ते।
भवान् + आस्ते = भवानास्ते।

## ९४। विसर्जनीयस्य सः। (८-३-३४)

**इह हि 'संहितायाम्' इत्यधिक्रियते। संहिता च विसर्जनीयस्य परेण वर्णेन संभवतीति नावसानेऽस्य प्रवृत्तिः। विसर्जनीयश्च खरवसानयोर्विहितः। इत्थं च खरीत्यर्थात् सिध्यति। अपवादाभावे विसर्गस्य सकार आदेशः स्यात् खरि। अपवादा उत्तरसूत्रेषु वक्ष्यन्ते।**

---

१. 'ह्रस्वात्' इति पदं किमर्थम्? तस्य किं प्रयोजनमिति प्रश्नः। एवमग्रेऽपि प्रत्युदाहरणेषु 'किम्' इत्यस्य किं प्रयोजनकमित्यर्थो बोध्यः।

यथा—

पुनर् + तत्र = पुनः + तत्र = पुनस्तत्र ।
यशस् + तस्य = यशर् + तस्य = यशः + तस्य = यशस्तस्य ।
पुनर् + च = पुनः + च = पुनस् + च = (पुनश्च) ।
पुनर् + टीकते = पुनः + टीकते = पुनस् + टीकते = (पुनष्टीकते) ।

## ९५ । शर्परे विसर्जनीयः । (८-३-३५)

खरीत्यर्थात् सिध्यतीत्युक्तम् । शर् परो यस्मात् तादृशे खरि परे विसर्गस्य विसर्ग एव, न कोऽपि विकारो भवतीत्यर्थः । अत उत्तरसूत्रे वक्ष्यमाणो जिह्वामूलीयोपध्मानीयविकल्पोऽपि न भवति । यथा—

शितः + क्षुरः = शितः क्षुरः । दृढः + त्सरुः = दृढः त्सरुः ।
मृगः + प्साति = मृगः प्साति ।

## ९६ । वा शरि । (८-३-६३)

शरि परे विसर्गस्य विसर्ग एव वा स्यात् । यथा—

यशस् + शुभ्रं = यशर् + शुभ्रं = यशः शुभ्रं, यशस् शुभ्रं (= यशश्शुभ्रम्) ।
यशस् + सितं = यशर् + सितं = यशः सितं, यशस्सितम् ।
यशस् + षण्डः = यशर् + षण्डः = यशः षण्डः, यशस् षण्डः (= यशष्षण्डः) ।

## ९७ । कुप्वोः ≍क ≍पौ च । (८-३-३७)

कवर्गपवर्गयोः परयोर्विसर्गस्य क्रमात् जिह्वामूलीयोपध्मानीयौ स्याताम्; चकारग्रहणात् विसर्गश्च । ≍क इति जिह्वामूलीयस्य, ≍प इत्युपध्मानीयस्य च संकेतः ॥

कस् + करोति = कर् + करोति = क≍करोति, कः करोति ।
कस् + खनति = कर् + खनति = क≍खनति, कः खनति ।
कस् + पचति = कर् + पचति = क≍पचति, कः पचति ।
कस् + फलति = कर् + फलति = क≍फलति, कः फलति ।

खरि पर एव विसर्गो विहितः; खर् च खरातिखरान् प्रत्या-

हरति; अतः 'कुप्वोः' इत्युक्तेऽपि कवर्गपवर्गान्तर्गतानां खरातिखरा-णामेव ग्रहणं संभवतीति बोध्यम्।

**९८। इसुसोः सामर्थ्ये** (विसर्जनीयस्य वा षः कुप्वोः)। (८-३-४४)

सामर्थ्यम् एकवाक्यान्वयः। इस् उस् इत्येतयोर्विसर्गस्य कुप्वोः परयोर्वा षकार आदेश एकवाक्यतायाम्। यथा—

सर्पिः + करोति = सर्पिष्करोति, सर्पिःकरोति।
धनुः + प्राप्नोति = धनुष्प्राप्नोति, धनुःप्राप्नोति।

प्रत्यु०—(सामर्थ्याभावे) तिष्ठतु सर्पिः, पिब त्वमुदकम्।

**९९। नित्यं समासेऽनुत्तरपदस्थस्य**। (८-३-४५)

समासविषयेऽनुत्तरपदस्थस्य इस्, उस् इत्याभ्यां निष्पन्नस्य विसर्गस्य कुप्वोः परयोः ष आदेशः। जिह्वामूलीयोपध्मानीययोरपवादोऽयं षः। यथा—

सर्पिः + कुण्डिका = सर्पिष्कुण्डिका—इस्।
धनुः + कपालं = धनुष्कपालं —उस्।
आयुः + फलं = आयुष्फलं —उस्।
ज्योतिः+खण्डः = ज्योतिष्खण्डः—इस्।

**१००। अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य**। (८-३-४६)

अतः परस्य अनव्ययविसर्गस्य समासेऽनुत्तरपदस्थस्य नित्यं सकारादेशः कृकमि इति धात्वोः कंसादिशब्देषु च परेषु। यथा—

अयः + कारः = अयस्कारः। यशः + कामः = यशस्कामः। पयः + कुम्भः = पयस्कुम्भः—इत्यादि।

**१०१। कस्कादिषु च**। (८-३-४८)

कस्कादिगणपठितेपु शब्देषु च इणः परस्य विसर्गस्य षः, अन्यस्य तु सः। यथा—

सर्पिस् + कुण्डिका = सर्पिर् + कुण्डिका = सर्पिष्कुण्डिका।
कः + कः = कस्कः। कौतः + कुतः कौतस्कुतः।

विसर्गस्य षसावादेशौ येष्वपेक्ष्येते ते शब्दाः कस्कादिषु पठिता बोध्याः। ईदृशो गण 'आकृतिगण' इत्युच्यते। इत ऊर्ध्वं सूत्रक्रमे मूर्धन्यादेशविधिः [1]विनामविधिश्च वर्तते। प्रकरणद्वयं तत्, तयोः प्रसङ्गे व्याख्यास्यामः।

## १०२। स्तोः श्चुना श्चुः। (८-४-४०)

सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गावादेशौ स्याताम्। अत्रोत्तरसूत्रे च स्थान्यादेशयोरेव यथासंख्यं विवक्षितम्, न तु योगस्य। तेन आदेशाः—सकारस्य शकारः, तकारस्य चकारः, दकारस्य जकारः, नकारस्य ञकारः इत्याद्येव। योगस्तु यथासम्भवं सर्वोऽपि। यथा—

| | |
|---|---|
| पयस् + शीतं = पयश्शीतम्। | राजन् + जय = राजञ्जय। |
| तपस् + चिनोति = तपश्चिनोति। | वृक्षस् + छिद्यते = वृक्षश्छिद्यते। |
| सत् + चित् = सच्चित्। | तद् + ज्ञानं = तज्ज्ञानम्। |
| परिषद् + जनः = परिषज्जनः। | यज् + नः = यज्ञः। |

## १०३। ष्टुना ष्टुः। (८-४-४१)

सकारतवर्गयोः षकारटवर्गाभ्यां योगे षकारटवर्गावादेशौ स्याताम्। यथा—

| | |
|---|---|
| महस् + षण्डः = महष्षण्डः। | महान् + ढौकते = महाण्ढौकते। |
| रामस् + टीकते = रामष्टीकते। | पिष् + तं = पिष्टम्। |
| उत् + टङ्कनं = उट्टङ्कनम्। | तद् + डिण्डिमं = तड्डिण्डिमम्। |

अत्र श्चुत्वष्टुत्वयोः 'पयश्शीतं' 'महष्षण्डं' इत्यादिषु पदान्तसकारोदाहरणेषु प्रथमं 'ससजुषो रुः' (७०) इति रुत्वं, ततो रोः 'खरवसानयो........' (८२) इति विसर्गः, अनन्तरं विसर्गस्य 'विसर्जनीयस्य सः (९४) इति पुनस्सकारः। तस्यैव श्चुत्वष्टुत्वे भवत इति प्रक्रियाक्रमो ज्ञेयः। तत्तन्न्यायसञ्चारणार्थकश्चायमायासः।

---

1. विनामो नाम नकारस्य णकारादेशः, णत्वमिति पाणिनीयैर्व्यवहृतः।

अथ श्चुत्वष्टुत्वे निषेधति—

## १०४। न पदान्ताट्टोरनाम्। (८-४-४२)

पदान्तात् टवर्गात् परस्य स्तोः ष्टुत्वं न स्यात्, 'नाम्' इति षष्ठीबहुवचनं वर्जयित्वा। यथा—

(षष् + सन्तः) = षट् + सन्तः = षट्सन्तः। षट् + तरवः = षट्तरवः

सम्राड् + दयते = सम्राड्दयते

प्रत्यु०—(पदान्तात् किम्?) ईड् + ते = ईट्टे।

॥ * ॥ अनाम्नवतिनगरीणामिति वक्तव्यम् ॥

'नाम्' एक एव सूत्रकारेण वर्जितः। नवतिनगरीशब्दावपि वर्ज्यावित्याह वार्त्तिककारः। षष् इति षान्तः शब्दो (६९) जश्त्वेन षड् इति डान्तो भवति। तथा स्थिते प्रकृतसूत्रस्य प्रवृत्तिः। यथा—

षड् + नां (६९) = षड् + णां (=षण्णाम्)। (१०७)

षड् + नवतिः = षड् + णवतिः (= षण्णवतिः)। „

षड् + नगरी = षड् + णगरी (= षण्णगरी)। „

## १०५। तोः षि। (१-४-४३)

तवर्गस्य षकारे परे ष्टुत्वं न भवति। यथा—

सत् + षण्डः = सत्षण्डः | महान् + षण्डः = महान् षण्डः।

## १०६। शात्। (८-४-४४)

शकारात् परस्य तवर्गस्य प्राप्तं कार्यं (श्चुत्वं) न स्यात्। यथा—

विश् + नः = विश्नः।

शकारात् परस्तवर्गः पदमध्य एव भवति। 'न पदान्ताट्टोः' इति पदान्ते ष्टुत्वं च निषिद्धम्। अतो ज्ञापकादेव श्चुत्वष्टुत्वे पदमध्येऽपि भवतः।

## १०७। यरोऽनुनासिकेऽनुनासिको वा। (८-४-४५)

पदान्तस्य यरः अनुनासिके परे अनुनासिकादेशो वा स्यात्। यरप्रत्याहारो हकारभिन्नानि व्यञ्जनानि क्रोडीकरोति। तत्र वर्ग्याणां

स्वस्वपञ्चम एवानुनासिकः । यवलानां स्वं स्वम् अनुनासिकरूपम् । रेफस्य परमनुनासिकादेशो न भवत्येव । यथा—

वाग् + माधुर्यं = वाङ्माधुर्यं, वाग्माधुर्यम् ।
चित् + मयं = चिन्मयम् । | अप् + मयं = अम्मयम् ।

॥ * ॥ प्रत्यये भाषायां नित्यम् ॥

वैकल्पिकोऽयमनुनासिकादेशः प्रत्ययस्थेऽनुनासिके परे भाषायां नित्यं भवति । अत एव 'चिन्मयम्' 'अम्मयम्' इत्युदाहरणयोर्विकल्पो न दर्शितः । हलादौ विभक्तिप्रत्यये तद्धिते च परे प्रकृतेरपि पदसंज्ञास्तीति पूर्वमेवोक्तम्, अतोऽस्त्येव पदान्तत्वमपि ।

## १०८ । अचो रहाभ्यां द्वे । (८-४-४६)

यर इत्यनुवर्तते; अचः परौ यौ रेफहकारौ ताभ्यां परस्य यरो द्वे स्याताम् । द्वे द्विरुच्चारणं (द्वित्वं) । यथा—

अर्कः = अर्क्कः, ब्रह्मा = ब्रह्म्मा ।

## १०९ । अनचि च । (८-४-४७)

अचः परस्य यरो द्वे स्याताम्, न त्वचि । यथा—

सुध्युक्तः = सुध्ध्युक्तः = (सुद्ध्युक्तः) । | पित्रुक्तः = पित्त्रुक्तः ।
मध्वरिः = मध्ध्वरिः = (मद्ध्वरिः) । | गम्लाह = गम्म्लाह ।

भस्स्म, पक्क्ष्म, अस्स्त्रं, पक्कं, उष्ष्णं, निष्ष्ठा, निष्ष्ठ्यूतं, लक्क्ष्म्या, पुरन्न्ध्रया इत्यादि ।

सूत्रेणानेन अचः परस्य यरोऽच्परत्वाभावे द्वित्वं विधीयते । एवं च अवाक्यादौ[1] संयोगे प्रथमवर्णस्य द्वित्वमिति फलितम् । संयोगः पुनर्यदि रेफादिर्हकारादिर्वा भवति तर्हि द्वितीयवर्णस्य द्वित्वमिति पूर्वसूत्रेण विहितम् । एवं सर्वथापि संयोगेषु वर्णद्वित्वमवश्यं कार्यम् ।

---

१. वाक्ययोरपि संहितायां पूर्ववाक्यान्त्यस्वरमादाय उत्तरवाक्याद्यसंयोगस्य द्वित्वं भवत्येव । 'शोण + ह्रदा'दौ रेफस्य हकारात् परस्य, 'वर्षति' अर्शसौ इत्यादौ रेफात् शषयोश्च द्वित्वं सर्वथापि न भवति च ।

सार्वत्रिकोऽयं विधिरिति कृत्वा वाचयितारः स्वयमेव वाचयिष्यन्तीति बुद्ध्वा लिपिकारा द्विरुक्त्यर्हे वर्णं द्विर्न लिखन्तीति संप्रदायः । अतः 'सुध्यर्च्यः', 'मध्वरिः', 'क्षत्रियस्त्री' इति लिखितान्यपि पदानि 'सुद्ध्यर्च्च्यः', 'मद्ध्वरिः', 'क्षत्त्रियस्त्त्री' इत्येव वाचनीयानि । शाकल्यादीनां मते द्वित्वस्यास्य प्रतिषेधाः 'त्रिप्रभृतिषु शाकटायनस्य' इत्यादिभिरुत्तरसूत्रैः पाणिनिनैव दर्शिताः, तथापि संयोगद्वित्वाभाव आर्षेष्वेव प्रयोगेषूपलभ्यते । काव्येषु तु 'प्रह्वे वा' इति पिङ्गलसूत्रस्य उदाहरणभूताः

'झटिति प्रविश गेहं मा बहिस्तिष्ठ बाले'
'द्वितीयं हेमप्राकारं कुर्वद्भिरिव वानरैः'

इत्यादयो द्वित्रा एव प्रयोगा दृश्यन्ते ।

## ११० । झलां जश् झशि । (८-४-५३)

झशि परे झलां जशादेशः स्यात् । 'झलां जशोऽन्ते' (६९) इति पदान्ते पूर्वमेव जश्त्वविधानात् अपदान्तार्थोऽयमारम्भः । यथा—

| | |
|---|---|
| सुध् + ध्यर्च्च्यः = सुद्ध्यर्च्च्यः । | दुघ् + धं = दुग्धम् । |
| लभ् + धं = लब्धम् । | इध् + ध = इद्धम् । |

## १११ । अभ्यासे चर्च । (८-४-५४)

षष्ठाध्यायोक्ते अक्षरद्वित्वे द्विरुक्तपूर्वभागस्य 'अभ्यासः' इति संज्ञा । अभ्यासे स्थितानां झलां जशश्चरश्च स्युः । तत्रान्तरतम्यात् झशां जशः, खरां चर इति विवेकः । अतिखराणां खराः, घोषाणां मृदवश्च आदेशाः स्युः इति तात्पर्यम् । यथा—

| | | |
|---|---|---|
| भभूव = बभूव । | झघान = जघान । | थस्थौ = तस्थौ । |
| धधौ = दधौ । | छिच्छेद = चिच्छेद । | फफाल = पफाल ।] |

## ११२ । खरि च । (८-४-५५)

खरि परे झलां चर आदेशाः स्युः । इदं पदान्ते अपदान्ते च

भवति । अतो 'झलां जशोऽन्ते' (६९) इति विहितं जश्त्वं खरि परे न भवति । तत्र प्रकृतसूत्रेण चर्त्वमेव । यथा—

**पदान्ते—**

| | |
|---|---|
| सम्पद् + कामः = सम्पत्कामः । | तद् + टीका = तड्टीका । |
| विराड् + पुरुषः = विराट्पुरुषः । | (१०३) = तट्टीका । |
| तद् + चित्रं = तज् + चित्रं । | ककुभ् + कोणः = ककुप्कोणः । |
| (१०२) = तच्चित्रम् । | भिषग् + सङ्गः = भिषक्सङ्गः । |

**अपदान्ते—**

भेद् + तुं = भेत्तुम् । | लभ् + स्यते = लप्स्यते ।

धघ् + ष्यति = धक्ष्यति ।

## ११३ । वावसने । (८-४-५६)

**अवसाने झलां चरादेशो वा स्यात् । यथा—**

वाक्, वाग् । त्रिष्टुप्, त्रिष्टुब् । सम्राट्, सम्राड् । द्विष्—द्विट्, द्विड् । चित्, चिद् । भिषक्, भिषग् ।

## ११४ । अणोऽप्रगृह्यस्यानुनासिकः । (८-४-५७)

**अप्रगृह्यस्य अणः अवसाने अनुनासिको वा । यथा—**

| | |
|---|---|
| कर्मँ, कर्म । | बालिकाँ, बालिका । |
| दधिँ, दधि । | कुमारीँ, कुमारी । |

मधुँ, मधु ।

## ११५ । अनुस्वारस्य ययि परसवर्णः । (८-४-५८)

**अनुस्वारस्य ययि परे परस्य सवर्ण आदेशः स्यात् । यथा—**

मुन्चति = मुंचति = मुञ्चति । शन्कते = शंकते = शङ्कते । शम्युः = शंयुः = शय्युँः ।

## ११६ । वा पदान्तस्य । (८-४-५९)

**यथा**—त्वं करोषि = त्वङ्करोषि, त्वं करोषि ।

| | |
|---|---|
| त्वं पचसि = त्वम्पचसि, त्वं पचसि । | सं वत्सरः = सव्वँत्सरः, संवत्सरः । |
| त्वं याचसे = त्वय्याँचसे, त्वं याचसे । | पुं लिङ्गः = पुंल्लिँङ्गः, पुंल्लिङ्गः ।[1] |

---

१. 'रेफेऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेधः' इति वार्त्तिकेन 'स्वर् नय' 'शोणह्रदः' 'कुण्ढं रथेन' इत्यादौ 'यरोऽनुनासिकेऽनुनासिको वा' 'अचो रहाभ्यां द्वे' 'वा पदान्तस्य' इति विधयो न प्रवर्तन्ते ।

## ११७ । तोर्लि । (८-४-६०)

तवर्गस्य लकारे परे परसवर्णः स्यात् । आन्तरतम्याल्लकार एव परसवर्णः । यथा—

तद् + लक्ष्यं = तल्लक्ष्यम् ।

चित् + लयः = चिल्लयः । | तस्मिन् + लयः = तस्मिँल्लयः ।

## ११८ । उदः स्थास्तम्भोः पूर्वस्य । (८-४-६१)

उद् इत्युपसर्गात् परयोः स्थास्तम्भधात्वोः पूर्वसवर्ण आदेशः स्यात् । 'आदेः परस्य' (३३) इति परिभाषया 'स्था' 'स्तम्भ्' इत्यनयोरादिवर्णस्य सकारस्यादेशः । आन्तरतम्यपरीक्षायां सकारस्य थकार आदेशो युज्यते । यथा—

उद् + स्थानं = उत् + स्थानं = उत् + थ्थानं = उत्थानम् ।

उद् + स्तम्भनं = उत् + स्तम्भनं = उत् + त्तम्भनं = उत्तम्भनम् ।

## ११९ । झयो होऽन्यतरस्याम् । (८-४-६२)

झयः परस्य हस्य पूर्वसवर्णो वा स्यात् । हकारस्यान्तरतमो घोषः । यथा—

सम्यग् + हितं = सम्यग्घितं, सम्यग्हितम् ।

सम्राड् + हरति = सम्राड्ढरति, सम्राड् हरति ।

तद् + हितं = तद्धितं, तद्हितम् । ककुभ् + हि = ककुब्भि, ककुब्हि ।

## १२० । शश्छोऽटि । (८-४-६३)

झयः परस्य शस्य छो वा अटि परे । यथा—

प्राक् + शेते = प्राक्छेते, प्राक् शेते ।

कश्चित् + शेते = कश्चित्छेते, कश्चिच्छेते, (१०२) कश्चिच्शेते ।

अप् + शब्दः = अप् छब्दः, अप्शब्दः । द्विट् + शस्त्रं = द्विट्छस्त्रं, द्विट्शस्त्रम ।

॥ * ॥ छत्वममीति वक्तव्यम् ॥

अटीति न पर्याप्तं, शश्छोऽमीति सूत्रयितव्यम् । यथा—

तद् + श्लोकः = तच्छ्लोकः, तच्श्लोकः । | तद् + श्मश्रु = तच्छ्मश्रु, तच्श्मश्रु ।

अत्र प्रकरणपूर्त्यर्थं तुक्संधिरित्युक्तो भागो वक्तव्योऽस्ति, यमेव पाणिनिः 'संहितायाम्' (६-१-७२) इत्यधिकृत्य 'छे च' (ह्रस्वस्य तुक्) (६-१-७३), 'आङ्माङोश्च' (६-१-७४), 'दीर्घात्' (६-१-७५), 'पदान्ताद्वा' (६-१-७६) इति चतुर्भिः सूत्रैः संहिताकार्येषु प्रथमत्वेन निर्दिशति। अवाक्यादौ स्थितस्य छकारस्य द्वित्वं कार्यमिति प्रकरणस्यास्य फलितोऽर्थः। छकारस्य द्वित्वे कृते 'खरि च' (११२) इति पूर्वस्य चकारो[1] भवति। यथा—

| | |
|---|---|
| परि + छिन्नः = परिच्छिन्नः। | आ + छादनं = आच्छादनम्। |
| तरु + छाया = तरुच्छाया। | वि + छेदः = विच्छेदः। |

प्रत्यु०—वाक्यादौ तु—'छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रैः'—[मेघ]

एवं च वाक्यादावेव केवलश्छकारो भवति। अन्यत्र सर्वत्रापि द्विरुक्त इति पर्यवसितम्॥

हल्संधिप्रकरणेऽत्र बहवो विधय उक्ताः। तेषां हृदयोपस्थितिकरणे लाघवाय तत्र मुख्याः सिंहावलोकितकेन कारिकाभिः संगृह्यन्ते—

अन्ते झलि च चोः कुत्वं, हस्य ढ,-श्छशयोश्च षः।
झलां जशोऽन्ते झशि च, खर्येषां सर्वदा चरः, ॥ १ ॥
स्तोः श्चुना श्चुः, ष्टुना ष्टुश्च द्वयमप्यन्तमध्ययोः।
झयि पूर्वे तस्य घोषो, झयः शोऽमि च्छतां व्रजेत्॥ २ ॥
तोर्लि लो, हलि मो बिन्दुः, पञ्चमे पञ्चमो यरः,।
झल्यनन्त्ये नमोर्बिन्दु,-र्बिन्दोर्यय्यनुनासिकः, ॥ ३ ॥

---

१. अत्र पाणिनेः प्रक्रिया—ह्रस्वस्य छे परे तुगागमः। कित्त्वादयमन्त्यावयवः तथा च—परि + छिन्नः = परित् छिन्नः = परिच्छिन्नः (१०२)। दीर्घस्यापि तुकं विधाय पदान्तदीर्घस्य तुग्विकल्प्यते। वल्ली + छाया = वल्लीच्छाया = वल्लीछाया इति। किंतु पदान्तदीर्घेऽपि तुङ्नित्य एवोपयुज्यत इति संप्रदायः। लाघवार्थमत्र फलितार्थ एव ग्रन्थे निर्दिष्टः।

**विसर्गो रस्यावसाने, झलां चर्त्वं च वा तथा ।**
**पदान्ते सस्य रुत्वं स्यादिसादावशि तच्छ्रुतिः ॥ ४ ॥**

[इस्, ईस्, उस्, ऊस् इत्यादिवदिकारादिस्वरपूर्वकस्य सकारस्य अशि पर एव रुरेफस्य श्रवणं भवति । हविस् + अत्र = हविरत्र । धनुस् + अत्र = धनुरत्र ।]

**असि रोरति हश्युत्वम्,**

[अस् इति ह्रस्वाकारपूर्वस्य सस्य रुत्वे कृते तस्य अति हशि च परे उत्वम् । यशस् + अत्र = यशोऽत्र । यशस् + हरः = यशोहरः ।]

**असासोराति चेचि यः ।**

[अस्, आस् इत्यवर्णपूर्वस्य सस्य यो रुस्तस्य आकारे, इकारादिस्वरे वा परे यकार आदेशः । देवास् + अत्र = देवा अत्र । देवास् + आयान्ति = देवा आयान्ति । देवस् + इह = देव इह । देवास् + इह = देवा इह ।]

**लघुप्रयत्नो वा योऽयम्,**

[अस्य यकारस्य लघुप्रयत्नो लोपो वा भवति ।]

**आसि लोपोऽति हश्यपि ॥ ५ ॥**

[देवास् + अत्र = देवा अत्र । अत्र लघुप्रयत्नोऽपि स्यादेव । देवास् + हरन्ति = देवा हरन्ति ।]

**रो रि लोपे पूर्वदीर्घो, रो विसर्गः कपोः खफोः ।**
**तत्र ᳵक ᳵपौ च वा स्यातां, शर्विसर्गौ तथा शरि ॥ ६ ॥**
**विसर्गस्य सकारः स्यात् कुपुभिन्ने परे खरि ।**
**श्चुष्टू चास्य श्चुष्टुयोगे, तस्मात् स्तावेव सश्रुतिः ॥ ७ ॥**
**अवाक्यादिस्थसंयोगे द्विर्वाच्यो वर्ण आदिमः ।**
**रहादौ तु परद्वित्वं द्विर्वाच्यश्छोऽप्यनादिमः ॥ ८ ॥**

इति हल्संधिप्रकरणम् ।

---

## अथ शब्दविभागः ॥

वर्णैरक्षराण्यारभ्यन्ते; अक्षरैः प्रकृतयः; प्रकृतिभिः पदानि; पदैर्वाक्यानि; वाक्यैर्भाषा इति हि क्रमः। तत्र वर्णा व्याख्याता विभक्ताश्च। अक्षराणां विभागश्छन्दःशास्त्रविषयोऽपि व्याकरणेऽपि क्वचिदुपयुज्यत इति सोऽपि प्रदर्श्यते—

१२१। ह्रस्वं लघु। (१-४-१०)

१२२। संयोगे गुरु। (१-४-११)

संयोगे तु परे ह्रस्वं गुरुसंज्ञं स्यात्।

१२३। दीर्घं च। (१-४-१२)

दीर्घमपि गुरुसंज्ञं स्यात्। एवं च दीर्घम्, संयोगात् पूर्वं च ह्रस्वमक्षरं गुरु; असंयोगात् पूर्वं ह्रस्वं लघु इत्यक्षरं द्विविधम् ॥

अथ प्रकृतेर्विभागः—

१२४। अर्थवदधातुरप्रत्ययः प्रातिपदिकम्। (१-२-४५)

अर्थवच्छब्दरूपं (अक्षरसमुदायः) प्रातिपदिकसंज्ञमिति विधिः; धातुः प्रत्ययान्तश्चार्थवन्तावपि न प्रातिपदिकसंज्ञाविति निषेधः। को नाम धातुरित्यन्यत्रोक्तम्। यथा—

१२५। भूवादयो धातवः। (१-३-१)

भू, एध, अद, हु इत्यादयो दशभिर्गणैः पठिताः क्रियावाचिकाः प्रकृतयो धातुसंज्ञाः। एवं च, प्रकृतिस्तावद् द्विविधा—क्रियावाचकाः दशगणीपरिगणिताः 'भू सत्तायाम्' इत्यादयो धातवः, द्रव्यगुणसंबन्धबोधिकाः शेषाः सर्वा अपि प्रकृतयः प्रातिपदिकानीति। 'अप्रत्ययः' इति निषिद्धां प्रातिपदिकसंज्ञां पुनः क्वचिद्विदधाति—

१२६। कृत्तद्धितसमासाश्च। (१-२-४६)

कृत्प्रत्ययान्तास्तद्धितप्रत्ययान्ताः समासाश्च प्रातिपदिकसंज्ञाः स्युः । अष्टाध्याय्यास्तृतीयचतुर्थपञ्चमैरध्यायैः प्रत्यया विधीयन्ते । तत्र तृतीयाध्यायगतानां धातवः प्रकृतयः; तेषु धातुप्रकृतिकेषु प्रत्ययेषु लकारसनादिभिन्नाः सार्थकाः कृत्प्रत्यया इत्युच्यन्ते । चतुर्थपञ्चमयोरध्याययोर्विहिताः प्रत्ययाः प्रातिपदिकेभ्यो भवन्ति; तेषु प्रातिपदिकप्रकृतिकेषु प्रत्ययेषु विभक्तिस्त्रीप्रत्ययभिन्नाः तद्धितप्रत्यया इत्युच्यन्ते । अन्योन्यान्वितानां पदानामेकीकरणं समासः । तथा च द्विविधं प्रातिपदिकम्—व्युत्पन्नमव्युत्पन्नं चेति । कृदन्तस्तद्धितान्तः समासश्चेति व्युत्पन्नं त्रिविधम् । सखण्डं व्युत्पन्नम्, अखण्डमव्युत्पन्नम् । अव्युत्पन्नमपि वाचकम्, द्योतकमिति द्विविधम् । तत्र कस्यचित् सत्त्वस्य साक्षात् बोधकं वाचकम्; कस्यचित् संबन्धस्य प्रतीतिकरं द्योतकम् । द्योतकानां प्रातिपदिकानां 'निपातः' इति संज्ञा कृता । उक्तो विभागः पट्टिकया प्रदर्श्यते—

| | | | |
|---|---|---|---|
| प्रातिपदिकम् | व्युत्पन्नम् | कृत् — | कर्ता, भासुरः । |
| | | तद्धितः — | बुद्धिमान्, घटत्वम् । |
| | | समासः — | राजपुरुषः, मातापितरौ । |
| | अव्युत्पन्नम् | वाचकं — | गौः, पटः, तण्डुलः, पुण्डरीकम् । |
| | | द्योतकं, यद्वा, निपातः | केवलः—च, तु, एव, न । |
| | | | उपसर्गः—प्रादि । |

व्युत्पन्नोऽव्युत्पन्न इति विभागो धातूनामप्यस्ति । यथा—

## १२७ । सनाद्यन्ता धातवः । (३-१-३२)

सनादयः प्रत्यया येषामन्ते तेऽपि धातुसंज्ञाः स्युः ॥

सन्[१], क्यच्, काम्यच्, क्यङ्, क्यष्, णिङ्, णिच्, यङ्,

---

१. संश्च क्यच्-क्यङ्-क्यषः काम्यच् णिङ्णिचौ यङ्यकौ तथा ।
आय ईयङिति प्रोक्ता एकादश सनादयः ॥

यक्, आयः, ईयङ् इत्येते सनादयः प्रत्ययाः धातुभ्यो विहिताः। केवला उक्तप्रत्ययान्ताश्च धातवो भवन्ति। अत्रापि पट्टिका—

| | | | | |
|---|---|---|---|---|
| धातुः | व्युत्पन्नः | १. सन्नन्तः | स्वार्थिकः | मीमांस |
| | | | इच्छार्थकः | बुभूष |
| | | २. णिजन्तः | स्वार्थिकः | चोरि |
| | | | प्रयोजकः | दर्शि |
| | | ३. यङन्तः | | बोभूय |
| | | ४. आयान्तः | | गोपाय |
| | | ५. ईयङन्तः | | ऋतीय |
| | | ६. यगन्तः | | कण्डूय |
| | | ७. क्यजन्तः | | पुत्रीय |
| | | ८. काम्यजन्तः | | पुत्रकाम्य |
| | | ९. क्यङन्तः | | विमनाय |
| | | १०. क्यषन्तः | | लोहिताय |
| | | ११. णिङन्तः | | पुच्छय |

| | | | |
|---|---|---|---|
| धातुः | अव्युत्पन्नः | १. भूवादिः | भू |
| | | २. अदादिः | अद |
| | | ३. जुहोत्यादिः | हु |
| | | ४. दिवादिः | दिव् |
| | | ५. स्वादिः | सु |
| | | ६. तुदादिः | तुद |
| | | ७. रुधादिः | रुध |
| | | ८. तनादिः | तन |
| | | ९. क्र्यादिः | क्री |
| | | १०. चुरादिः | चुर। |

उक्तयोः पट्टिकयोर्मेलने प्रकृतिविभागः पूर्णो भवेत्—

- प्रकृतिः
  - धातुः
    - अव्युत्पन्नः = केवलः — दशगणाः
    - व्युत्पन्नः = सनाद्यन्तः
      - धातुजाः सनादयः
      - नामजाः णिङादयः
  - प्रातिपदिकं
    - अव्युत्पन्नं —
      - रूढशब्दाः (वाचकाः)
      - निपाताः (द्योतकाः)
    - व्युत्पन्नं
      - कृत्
      - तद्धितः
      - समासः

अथ पदस्य विभागः—पदं द्विविधम् । तथा च सूत्रम्—

**२२८ । सुप्तिङन्तं पदम् । (१-४-१४)**

सुबन्तं तिङन्तं च पदसंज्ञं स्यात् । सुप् इति २१ विभक्तिप्रत्ययानां प्रत्याहारः; तिङ् इति १८ पुरुषप्रत्ययानाम् । सुबन्तं पदं नामेत्युच्यते, तिङन्तम् आख्यातमिति । प्रातिपदिकं सुब्योगेन पदं भवति, धातुस्तिङ्योगेन । प्रकृतेरुक्ता विभागाः पदस्यापि संभवन्ति; अन्योऽपि तस्य विभागः पट्टिकायां द्रष्टव्यः—

- पदं
  - सुबन्तं नाम Substantive
    - सत्ववाचि
      - भेद्यं
        - एकनाम
          - संज्ञा Proper noun.
          - सामान्यं Common noun.
        - सर्वनाम Pronoun.
      - भेदकं
        - नामविशेषणं Adjective.
        - क्रिया „ Adverb.
        - गुणः „ Adverb.
    - असत्ववाचि = निपातः
      - कर्मप्रवचनीयः Preposition.
      - उपसर्गः Prefix.
      - केवलः Conjunction & Interjection.
  - तिङन्तं आख्यातं Finite Verb
    - कर्तरि लकारः Active.
    - कर्मणि „ Passive.
    - भावे „ Impersonal.

भाषान्तरेषु बहुधा विभक्तान्यपि पदानि संस्कृते द्विविधान्येवेति पङ्क्तिकैषा प्रदर्शयति । अत्र असत्ववाचिनां निपातानां नामस्वन्तर्भावनं पाणिनेर्बलात्कार एव । ते हि प्रकृत्या विभक्तियोगानर्हाः कथं सुबन्ता भवितुमर्हन्ति ? संकटेऽस्मिन्नाचार्यः 'सुप्तिङन्तं पदम्' (१२८) इति स्वप्रतिज्ञां सत्यापयितुं निपातेष्वपि सुप्प्रत्ययमुत्पाद्य लोपयति । प्रथमा-विभक्तिर्नपुंसकलिङ्गमेकवचनं च सामान्यमिति कृत्वा लुप्तप्रथमैक-वचनान्ता निपाता इति कल्पयत्याचार्यः । तथा च तेन सूत्रितम्—

### १२९ । अव्ययादाप्सुपः । (२-४-८२)

अव्ययात् परस्य आपः सुपश्च लुक् (=लोपः) स्यात् । आप इति स्त्रीलिङ्गप्रत्ययस्योपलक्षणम् । तथा चाव्ययानां लिङ्गविभक्तिवचन-भेदो नास्तीति फलितम् ।

'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥'

इत्यन्वर्था चाव्ययसंज्ञा । न, व्येति विकारं प्राप्नोतीत्यव्ययम् । निपाता-नां चाव्ययत्वमुक्तम्—

### १३० । स्वरादिनिपातमव्ययम् । (१-१-३७)

स्वरादिगणपठिताः शब्दाः, निपाताश्चाव्ययसंज्ञाः स्युः इति । एवं च 'न केवलः प्रत्ययः प्रकृतिर्वा प्रयोक्तव्यः' इति वैयाकरणानां सिद्धान्तः । यत्र सुप्तिङोर्योगो दुर्घटो भवति तत्रापि प्रथमैकवचनं लुप्त-मस्तीति प्रतिज्ञायते । निपाताः परिमिता इति ते गणेन परिगणिताः; तथा हि—

### १३१ । चादयोऽसत्वे (निपाताः) । (१-४-५७)

सत्वं = द्रव्यम् । अद्रव्यार्थे वर्तमानाः (संबन्धादिद्योतकाः) चा-दिगणपठिता निपाताः स्युः । च, व, ह, एव, एवं, नूनं शश्वत्, युग-पत्, चेत्, कच्चित्, हन्त, माकिं, नकिं, माङ्, नञ्, यावत्, तावत्,

वषट्, वौषट्, स्वाहा, स्वधा, ओम्, किल, तथा, अथ, सु, स्म, अस्मि, तत्, किं, पुरा, धिक्, हा, हे, अहो, उताहो, आम्, अथो, हि इत्यादि ।

## १३२ । प्रादयः । (१-४-५८)

प्रादयोऽप्यसत्ववाचिनो निपातसंज्ञाः स्युः । प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप एते प्रादयः । प्रादीनां बहुत्रोपयोगात्ते कारिकया परिगण्यन्ते—

प्रविपरापसमन्ववनिर्निसो दुरति दुष्प्रति सूदधि पर्यपि ।
(तदनु) चाङभिनी उप, विंशतिर्द्विसहितेत्युपसर्गसमाह्वयाः ॥

आङ् इत्यत्र ङकार इत् 'आ' इति निपातान्तरव्यावर्तनार्थकः ।

## १३३ । उपसर्गाः क्रियायोगे । (१-४-५९)

क्रियावाचकशब्दयोगे प्रादय उपसर्गसंज्ञाः स्युः ।

## १३४ । गतिश्च । (१-४-६०)

प्रादयः क्रियायोगे गतिसंज्ञाश्च स्युः । उभयसंज्ञाप्रयुक्तानामपि कार्याणां संग्रहाय उभयसंज्ञाकरणम् । प्रादयो धातुयोगे गत्युपसर्गसंज्ञाः, प्रातिपदिकयोगे केवलावस्थायां च निपातमात्रमिति विवेकः । एष्वेव केषांचिदर्थविशेषे कर्मप्रवचनीयसंज्ञा विधास्यते ।

एवं पट्टिकायां दर्शिता निपातविभागा लक्षिताः । यास्कादयस्तु प्राचीना उक्तं हठात्कारं विना 'नामाख्याते चोपसर्गनिपाताश्च' इति चतुर्धैव पदं विभक्तवन्तः ॥

॥ इति शब्दविभागः शिक्षाकाण्डश्च ॥



# ॥ परिनिष्ठाकाण्डः ॥



परिनिष्ठाकाण्डेऽत्र पदानां रूपनिष्पत्तिः कथ्यते । तत्र सुप्तिङ-न्तयोः प्रथमं सुबन्तस्य प्रक्रिया । प्रातिपदिकेभ्यः किल सुप उत्पद्यन्ते; प्रातिपदिकानां च लिङ्गभेदोऽस्तीति लिङ्गव्यवस्था क्रियते ।

## लिङ्गप्रकरणम् ।

पुमान्, स्त्री, नपुंसकमिति लिङ्गं त्रिविधम् । लोके प्राणिनां स्त्रीपुरुषविभागः प्रसिद्धः; तद्भेदहीना जडपदार्था नपुंसकानि । वाच्यानां पदार्थानां स्त्रीपुन्नपुंसकभेद एव पदेष्वप्यारोप्यत इति देश्यभाषाणां संप्रदायः । संस्कृते तु कृत्रिमाप्यस्ति लिङ्गव्यवस्था । शिला, नगरी, भाषा, सृष्टिरित्यादयो जडा अपि स्त्रीलिङ्गाः; तथा आश्रमः, आहारः, उपल इत्यादयः पुल्लिङ्गाः । भार्यावाचकोऽपि दारशब्दः पुल्लिङ्गः, कलत्रं नपुंसकम् इत्यादि । किं च विशेष्यगता लिङ्गवचनविभक्तयो विशेषणेऽप्यारोप्यन्ते । यथा—

| | | | |
|---|---|---|---|
| निपुणः पुमान्; | निपुणा स्त्री; | निपुणं सैन्यं— | लिङ्गम् । |
| निपुणाः पुमांसः; | निपुणाः स्त्रियः; | निपुणानि सैन्यानि— | वचनम् । |
| निपुणस्य पुंसः; | निपुणायाः स्त्रियाः; | निपुणस्य सैन्यस्य— | विभक्तिः । |

नाम्नां लिङ्गव्यवस्था नामलिङ्गानुशासनेभ्यो ज्ञातव्या । भूमि-विद्युद्-रात्रि-लता-सरितां पर्यायाः स्त्रियः; पर्वत-वृक्ष-समुद्राणां पर्यायाः पुमांसः, मुख-जल-कमलपर्याया नपुंसकाः । घञ्प्रत्ययान्ताः पुल्लिङ्गाः; क्तिन्प्रत्ययान्ताः स्त्रीलिङ्गाः; ल्युट्प्रत्ययान्ता नपुंसकलिङ्गा इत्यादयः काञ्चन

व्यवस्थाश्च सन्त्येव। सर्वथापि तु प्राणिजातिवाचकशब्देषु पुरुषवाचकः पुल्लिङ्गः, स्त्रीवाचकः स्त्रीलिङ्ग इति क्वचिदंशे देश्यभाषासाम्यमप्यस्ति॥

लिङ्गकृतो भेदः पुल्लिङ्गशब्दानां स्त्रीलिङ्गरूपनिष्पादन एवास्ति; तत्रापि बाहुल्येन अदन्ताः (ह्रस्व अकारान्ताः) एव शब्दा लिङ्गभेदेन विक्रियन्ते। अदन्तपुल्लिङ्गाः स्त्रियामादन्ता ईदन्ता वा संपद्यन्ते। एवं च अदन्तस्त्रीलिङ्गशब्दो नास्त्येव। नित्यस्त्रीलिङ्गा अपि शब्दाः प्रक्रियार्थं स्त्रीप्रत्ययान्ता इति कल्प्यन्ते। तत्र आ-प्रत्यय—ई-प्रत्यययोर्विषयविवेक एव स्त्रीप्रत्ययाधिकारे प्रतिपाद्यते। अनुबन्धयोगेन आ-प्रत्ययं टाप्, डाप्, चाप् इति त्रिविधम्, ई-प्रत्ययं च ङीप्, ङीष्, ङीन् इति त्रिविधं करोत्याचार्यः। तत्र आप् इति साधारणो भागः टाप्—चाप्—डापां, ङी इति साधारणो भागः ङीप्—ङीष्—ङीनां च संग्रहणाय प्रयुज्यते। इद्भेदेन स्वर एव भेदः; ततश्च लौकिकभाषायामेकविधाभ्यामेव प्रत्ययाभ्यां प्रयोजनम्। स्त्रियामदन्तशब्दा न सन्तीत्युक्तम्; ऋदन्तेषु, नान्तेषु, सान्तेषु, तान्तेषु च भूयांसः स्त्रियां भिन्नरूपाः; अन्यवर्णान्तानामुत्सर्गतो न कोऽप्यस्ति लिङ्गकृतो भेदः॥

अथ स्त्रीप्रत्यया विधीयन्ते—

१३५। प्रत्ययः। (३-१-१)

१३६। परश्च। (३-१-२)

१३७। ङ्याप्प्रातिपदिकात्। (४-१-१)

इत्यधिकारेषु पूर्वमेव वर्तमानेषु

१३८। स्त्रियाम्। (४-१-३)

इत्यधिकृत्य

१३९। अजाद्यतष्टाप्। (४-१-४)

ङ्याब्विधिप्रस्तावेऽस्मिन् 'ङ्याप्प्रातिपदिकात्' इत्यधिकारसूत्रे ङ्याबिति भागो योग्यताविरहादुपेक्ष्यते । अजादिगणपठितेभ्यः प्रातिपदिकेभ्यः, अदन्ताच्च प्रातिपदिकात् स्त्रियां द्योत्यायां टाप् इति प्रत्ययः परः स्यात् । 'चुटू' (१५) इति टकारस्य, 'हलन्त्यम्' (११) इति पकारस्य च इत्संज्ञायां लोपे 'आ' इत्येव प्रत्ययस्वरूपम् । यथा—अतः—

| विशेष्यनिघ्नाः | | नियतलिङ्गाः । | |
|---|---|---|---|
| समर्थ—समर्था | वृद्ध —वृद्धा | खट्व—खट्वा | लत —लता |
| विरूप—विरूपा | कुपित—कुपिता | माल —माला | भिक्ष—भिक्षा |

खट्वालतादयो नित्यस्त्रीलिङ्गा अपि शब्दाः स्वभावाददन्ता एव, पश्चात् स्त्रीत्वविवक्षायां टाप्प्रत्ययेन आदन्ताः संपद्यन्ते इति सिद्धान्तः । प्रक्रियार्थश्चायमायासः । अजादेः—

| | | | | | | |
|---|---|---|---|---|---|---|
| **जातौ** —अजा | एडका | चटका | अश्वा | मूषिका | शूद्रा |
| **वयसि**—बाला | होढा | पाका | वत्सा | मन्दा | वियाता |
| **पुंयोगे** —ज्येष्ठा | कनिष्ठा | मध्यमा | ... | ... | ... |

जातौ वयसि पुंयोगे च वक्ष्यमाणं ङीप्रत्ययं बाधितुं अदन्ता एव शब्दा गणेऽस्मिन् पठिताः ।

## १४० । ऋन्नेभ्यो ङीप् । (४-१-५)

ऋकारान्तेभ्यो नकारान्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीप्प्रत्ययः स्यात् । 'लशक्वतद्धिते' (१६) इति ङकार इत् । यथा—

कर्तृ—कर्त्री, होतृ—होत्री, छत्रिन्—छत्रिणी, दण्डिन्—दाण्डिनी ।

## १४१ । उगितश्च । (४-१-६)

उक् इति उ, ऋ, ऌ एषां प्रत्याहारः; एते इतो येषां ते उगितः । उगिद्भ्यः उगित्प्रत्ययान्तेभ्यो वा प्रातिपदिकेभ्यो ङीप् स्यात् । यथा—

| | | |
|---|---|---|
| भवत् —भवती | —'भवतु' इति सर्वादौ उगित् पठितः । | |
| महत् —महती | —'महत्' इति ऋदिदिति अतिदिश्यते । | |
| बुद्धिमत् —बुद्धिमती | —'मतुप्' प्रत्ययान्तत्वादुदित् । | |
| कृतवत् —कृतवती | —'क्तवतु' | ,, |
| तावत् —तावती | —'वतु' | ,, |
| विद्वस —विदुषी | —'क्वसु' | ,, |
| महीयस् —महीयसी | —'ईयसुन्' | ,, |
| कुर्वत् —कुर्वती | —'शतृ' | ,, इदित् । |

१. तदस्यास्तीत्यर्थे सर्वप्रातिपदिकेभ्योऽपि मतुप् तद्धितप्रत्ययः;
२. भूते कर्तरि निष्ठा (Past Active Participle) क्तवतुः कृत्प्रत्ययः;
३. भूते कर्तरि लिडादेशः (Past Perfect Participle) क्वसुप्रत्ययः;
४. तोलनतद्धितः (Comparative Suffix) ईयसुन्प्रत्ययः;
५. लड्—लृटोरादेशः (Present & Future Participle) शतृप्रत्ययः ।

एते पञ्चैव प्राधान्येन उगितः प्रत्ययाः ।

## १४२ न षट्स्वस्रादिभ्यः । (४-१-१०)

'ऋन्नेभ्यः' (१४०) इति विहितो ङीप् न स्यात् । पञ्चन्, सप्तन्, अष्टन्, नवन्, दशन् इति षट्संज्ञा नकारान्ताः;

'स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ।
याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥'

इति स्वस्रादय ऋदन्ताः । यथा—

पञ्च स्त्रियः, सप्त, अष्ट, नव, दश वा । स्वसा, ननान्दा, माता, दुहिता, याता, तिस्रः, चतस्रः ।

## १४३ । मनः । (४-१-११)

मन्नन्तादपि प्रातिपदिकात् नान्तलक्षणो ङीप् न स्यात् ।

| | |
|---|---|
| दामन्—दामा दामानौ । | पामन् —पामा पामानौ [नौ |
| सीमन्—सीमा सीमानौ । | अतिमहिमन्—अतिमहिमा अतिमहिमा- |

## १४४ । अनो बहुव्रीहेः । (४-१-१२)

अन्नन्तात् बहुव्रीहेर्न ङीप् ।

सुपर्वन्—सुपर्वा सुपर्वाणौ । | सुशर्मन्—सुशर्मा सुशर्माणौ ।

## १४५ । डाबुभाभ्यामन्यतरस्याम् । (४-१-१३)

मन्नन्तात् प्रातिपदिकात्, अन्नन्तात् बहुव्रीहेश्च डाप् वा स्यात् । डित्प्रत्यये परे प्रकृतेष्टिलोपं वक्ष्यति । अतो डापि परे प्रकृतेष्टिर्लुप्यते । अत्र च 'अन्' इति टिः (२१) । यथा—

पामन् + आ—टिलोपे पाम् + आ ।

| | | | | | |
|---|---|---|---|---|---|
| पामा | पामे | पामाः । | सुपर्वा | सुपर्वे | सुपर्वाः । |
| सीमा | सीमे | सीमाः । | सुशर्मा | सुशर्मे | सुशर्माः । |

विकल्पात् पामानौ, पामानः; सुशर्माणौ, सुशर्माणः इत्याद्यपि ।

## १४६ । अनुपसर्जनात् । (४-१-१४)

अधिकारोऽयम्; इत ऊर्ध्वं विधीयमानाः स्त्रीप्रत्यया अनुपसर्जनादेव प्रातिपदिकात् भवेयुः । लिङ्गं हि द्विविधं संभवति— विशेष्याणां प्रतिनियतं स्वं स्वं लिङ्गं प्रधानम्, विशेषणानां विशेष्यानुरोधेन भिद्यमानमप्रधानम्; तत्राप्रधानं लिङ्गमुपसर्जनमित्युच्यते । वृक्षशब्दो विशेष्यो नियतपुल्लिङ्गः; बहुवृक्षा पुष्पवाटी, बहुवृक्षमुद्यानम् इति विशेषणावस्थायां विशेष्यनिघ्नं लिङ्गम् । अत एव ज्ञापकात् पूर्वोक्ता विधयस्तदन्तेष्वपि भवन्ति । बहवः शाखिनो यत्र सा बहुशाखिनी अटवी इति नान्तलक्षणो ङीप् । वक्ष्यमाणास्तु स्त्रीप्रत्ययाः प्राधान्य एव स्युः ॥

## १४७ । टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्-ठक्ठञ्कञ्क्वरपः । (४-१-१५)

टिड्भ्यो ढादिप्रत्ययान्तेभ्यश्चादन्तेभ्यः प्रातिपदिकेभ्यः अनुपसर्जने स्त्रीत्वे ङीप् स्यात्; 'अत....' (१३९) इति टापोऽपवादः । यथा—

| | | | |
|---|---|---|---|
| टित् | —कुरुचरी[1] | —'चरेष्टः' | —चर । |
| ,, | —दृष्टचरी | —'भूतपूर्वे चरट्' | —दृष्टचर । |
| ढ (एय) | —सौरभेयी | —'स्त्रीभ्यो ढक्' | —सौरभेय । |
| अण् | —कुम्भकारी | —'कर्मण्यण्' | —कुम्भकार । |
| ,, | —हैमी | —'तस्य विकारः' इत्यण् | —हैम । |
| अञ् | —औत्सी | —'उत्सादिभ्योऽञ्' | —औत्स । |
| द्वयसच् | —ऊरुद्वयसी | —'प्रमाणे द्वयसच्' | —ऊरुद्वयस । |
| दघ्नच् | —ऊरुदघ्नी | — ,, दघ्नच् | —ऊरुदघ्न । |
| मात्रच् | —ऊरुमात्री | — ,, मात्रच् | —ऊरुमात्र । |
| तयप् | —पञ्चतयी | — अवयवे तयप् | —पञ्चतय । |
| ठक् (इक) | —आक्षिकी | तेन निर्वृत्तं (ठक्) | —आक्षिक । |
| ठञ् (इक) | —वार्षिकी | — कालाट् ठञ् | —वार्षिक । |
| कञ् | —तादृशी | —'दृशोऽनालोचने कञ्च' | —तादृश । |
| क्वरप् | —गत्वरी | —'गत्वरश्च' इति क्वरप् | —गत्वर । |

एते प्रत्यया यथाप्रदेशं कृत्तद्धितयोर्विधास्यन्ते ।

**॥ * ॥ नञ्स्नञीकक्ख्युन्तरुणतलुनानामुपसंख्यानम् ॥**

नञ्—स्त्रैणी——'स्त्रीपुंसाभ्यां नञ्स्नञौ' — स्त्रैण

स्नञ्—पौंस्नी—— ,, ,, — पौंस्न

ईकक्—शाक्तीकी —'शक्तियष्ट्योरीकक्' — शाक्तीक

ख्युन् (अन)—सुभगङ्करणी—'आढ्यसुभग...' — करण

तरुण—तरुणी

तलुन—तलुनी

## १४८ । वयसि प्रथमे । (४-१-२०) [अचरम इति वाच्यम्]

**अचरमवयोवाचिनोऽदन्तात् प्रातिपदिकात् स्त्रियां ङीप् ।**

कुमार—कुमारी; किशोर—किशोरी; वधूट—वधूटी; चिरण्ट—चिरण्टी ।

---

१. कुरुचर + ई इति स्थिते 'यस्येति च' इति वक्ष्यमाणेन सूत्रेण प्रकृत्यन्तगतस्य अकारस्य लोपः । कुरुचर् + ई = कुरुचरी । एवमुत्तरत्रापि ङीविधौ द्रष्टव्यम् ।

प्रत्यु०—(चरमे तु) वृद्धा, स्थविरा।
('अतः' किम्?) शिशुः।

बाला, वत्सा, कन्या इत्यादयस्तु अजादिपाठाट्टाबन्ताः।

## १४९। द्विगोः। (४-१-२१)

अदन्ताद्द्विगुसमासात् ङीप्। यथा—

त्रिलोकी, पञ्चवटी; त्रिफला तु अजादिपाठात्।

## १५०। वर्णादनुदात्तात्तोपधात्तो नः (वा)। (४-१-२१)

वर्णवाचिनोऽदन्तादनुदात्तान्तात् तकारोपधात् वा ङीप् स्यात्। तत्संनियोगेन उपधाभूतस्य तकारस्य नकारादेशश्च। यथा—

लोहित—लोहिनी; हरित—हरिणी; एत—एनी; श्येत—श्येनी।

## १५१। अन्यतो ङीष्। (४-१-४०)

तोपधभिन्नात्तु वर्णवाचिनोऽदन्तात् ङीष् स्यात्। ङीप्ङीषोः स्वरे भेदः। यथा—पिशङ्ग—पिशङ्गी; कल्माष—कल्माषी; शबल—शबली।

उदात्तानुदात्तत्वे लोके न प्रसिद्धे। यत्र ङीष् दृश्यते तदनुदात्तमिति कल्पनीयम्।

## १५२। षिद्गौरादिभ्यश्च (४-१-४१)

षिद्भ्यो गौरादिभ्यश्च ङीष् स्यात्।

नर्तक—नर्तकी—ष्वुन्प्रत्ययान्तः। | वैदुष्य—वैदुषी—ष्यञ्प्रत्ययान्तः।
गौरी, मत्सी, मानुषी इत्यादिः गौरादिः।

## १५३। वोतो गुणवचनात्। (४-१-४४)

वा उत इति च्छेदः। गुणवाचिन उदन्तात् स्त्रियां वा ङीष् स्यात्। यथा—

पटु—पट्वी, पटुः। मृदु—मृद्वी, मृदुः। पृथु—पृथ्वी, पृथुः।

## १५४। बह्वादिभ्यश्च। (४-१-४५)

वा ङीष्। बह्वी—बहुः इत्यादि। अत्र गणसूत्रम्—

'**कृदिकारादक्तिनः**' । क्तिन्प्रत्ययान्तवर्जं सर्वेभ्योऽपि कृदिकारान्तेभ्यो वा ङीष् स्यात् । यथा—

रजनिः, रजनी ; रात्रिः, रात्री ; भूमिः, भूमी ;
श्रेणिः, श्रेणी ; अवनिः, अवनी ; कोटिः, कोटी ।

## १५५ । पुंयोगादाख्यायाम् (नित्यं) । (४-१-४८)

**यः पुंलिङ्गशब्दो दाम्पत्यसंबन्धेन स्त्रियां वर्तते तस्माददन्तात् ङीष् स्यात् । यथा—**

| | | | | | |
|---|---|---|---|---|---|
| गणकस्य | स्त्री | गणकी | नारायणस्य | स्त्री | नारायणी |
| महामात्रस्य | स्त्री | महामात्री | शंकरस्य | स्त्री | शंकरी |

शूद्रस्य स्त्री शूद्री ।

## १५६ । इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् । (४-१-४९)

**इन्द्रादिभ्यः पुंयोगे ङीष्, आनुगागमश्च तत्संनियोगेन । कित्त्वात् प्रकृतेरन्तावयव आगमः ॥**

इन्द्रस्य स्त्री = इन्द्रानी, = इन्द्राणी [रेफसांनिध्यान्नस्य णः]
वरुणस्य स्त्री = वरुणानी ; मृडस्य स्त्री = मृडानी ।
भवस्य स्त्री = भवानी ; शर्वस्य स्त्री = शर्वाणी ; रुद्रस्य स्त्री = रुद्राणी ।

**अन्येषामर्थविशेषमाह वार्त्तिककारः—**

1. **हिमारण्ययोर्महत्त्वे** । महद्धिमं = हिमानी ; महदरण्यं = अरण्यानी ।
2. **यवाद्दोषे** । दुष्टो यवो = यवानी ।
3. **यवनाल्लिप्याम** । यवनानां लिपिः = यवनानी ।
4. **उपाध्यायमातुलाभ्यां वा** । उपाध्यायस्य स्त्री=उपाध्यायानी, उपाध्यायी वा । मातुलस्य स्त्री = मातुलानी, मातुली वा ।
5. **आचार्यादणत्वं च** । आचार्यस्य स्त्री = आचार्यानी । अत्र णत्वाभावोऽपि ।
6. **आर्यक्षत्रियाभ्यां वा जातौ** । आर्यजातिः स्त्री = आर्याणी, आर्या वा । क्षत्रियजातिः स्त्री = क्षत्रियाणी, क्षत्रिया वा । (पुंयोगे तु) आर्यी, क्षत्रियी इति ङीषेव ।

---

* णत्वनिमित्तानि तत्प्रकरणे वक्ष्यन्ते ।

मध्ये उपेक्षितानि सूत्राणि टिप्पणे दृश्यन्ताम् ।

---

१. (A) **क्रीतात्करणपूर्वात्** । (४-१-५०)

**करणतृतीयान्तपूर्वपदात् क्रीतोत्तरपदात् समासात् स्त्रियां ङीष् स्यात् ।** **यथा**—यवैः क्रीयते = यवक्रीती । वस्त्रेण क्रीयते = वस्त्रक्रीती ।

(B) **क्तादल्पाख्यायाम्** । (४-१-५१)

**करणपूर्वपदात् क्तप्रत्ययान्तोत्तरपदात् ङीष् अल्पत्वे द्योत्ये । यथा**—
अभ्रेण ईषत् लिप्यते—अभ्रलिप्ती द्यौः | सूपेन ईषत् लिप्यते—सूपालिप्ती पात्री।
प्रत्यु०—('अल्पाख्यायां' किम्?) चन्दनलिप्ता युवतिः ।

(C) **बहुव्रीहेश्चान्तोदात्तात्** । (४-१-५२)

**क्तादित्येव । यथा**—
केशा लूना यस्याः सा—केशलूनी ।
ऊरू भिन्नौ ,, ,,—ऊरुभिन्नी ।
पाणिर्गृहीतः ,, ,,—पाणिगृहीती । (भार्येत्यर्थ एव)

॥ * ॥ **अ-बहु-नञ्-सु-काल-सुखादिपूर्वादिति वक्तव्यम्** ॥

बहुकृता, अकृता, सुदृष्टा, वर्षजाता, मासजाता इत्यादि ।

(D) **अस्वाङ्गपूर्वपदाद्वा** । (४-१-५३)

**स्वाङ्गं निर्वक्ष्यते । तद्भिन्नपूर्वपदात् क्तान्तोत्तरपदाद्वा ङीष् इत्यर्थः । यथा**—
पलाण्डुर्भक्षिता यया सा = पलाण्डुभक्षिती, —ता वा ।
सुरा पीता यया सा = सुरापीती, —ता वा ।

(E) **सहनञ्विद्यमानपूर्वाच्च** । (४-१-५७)

**सह (=स) नञ् (=अ), विद्यमान—एतत्पूर्वपदात् स्वाङ्गादुक्तो ङीष् न स्यात् । यथा**—सकेशा; अकेशा; विद्यमानकेशा ।

(F) **सख्यशिश्वीति भाषायाम्** । (४-१-६२)

सखि—सखी; अशिशु—अशिश्वी ।

(G) **इतो मनुष्यजातेः** । (४-१-६५)

**मनुष्यजातिवाचिन इदन्तात् स्त्रियां ङीप् स्यात् । यथा**—
कुन्ति—कुन्ती; अवन्ति—अवन्ती; दाक्षि—दाक्षी; प्लाक्षि—प्लाक्षी ।

**१५७। स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्। (४-१-५४)**

उपसर्जनभूतादसंयोगोपधाददन्तात् स्वाङ्गवाचिनः प्रातिपदिकात् स्त्रियां ङीष् स्याद्वा। यथा—

चन्द्रमुख—चन्द्रमुखी, चन्द्रमुखा। | सुकेश—सुकेशी, सुकेशा।

प्रत्यु०—('असंयोगोपधात्' किम्?) गूढगुल्फा, सुपार्श्वा।
('स्वाङ्गात्' किम?) बहुस्वेदा।
('अदन्तात्' किम्?) सुदृक्, रम्भोरूः।

स्वाङ्गं प्राण्यवयवः। तच्चैवं निरुक्तम्—

'अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्।
अतत्स्थं तत्र दृष्टं च, तेन चेत्तत्तथायुतम्॥'

द्रवत्वात् स्वेदो न स्वाङ्गम्; अमूर्तत्वात् ज्ञानं न स्वाङ्गम्; 'सुमुखा, शाला' इत्यादौ अप्राणिस्थत्वात् मुखं न स्वाङ्गम्; शोफो विकारजत्वात् न स्वाङ्गम्। 'कीर्णकेशी रथ्या' इत्यादिसिद्ध्यर्थम् 'अतत्स्थं तत्र दृष्टं च' इति। 'तेन चेत्तथा युतम्' इत्युक्तेः 'सुस्तनी प्रतिमा' इत्यादि सिध्यति॥

---

**(H) ऊङुतः। (४-१-६६)**

उकारान्तान्मनुष्यजातिवाचिन ऊङ् प्रत्ययः। यथा—

कुरु—कुरूः। ब्रह्मबन्धु—ब्रह्मबन्धूः।

**(I) ऊरूत्तरपदादौपम्ये। (४ १-६९)**

यथा—रम्भेव ऊरू यस्याः सा रम्भोरूः।

**(J) संहितशफलक्षणवामादेश्च। (४-१-७०)**

एतत्पूर्वपदादूरूत्तरपदादनौपम्येऽपि ऊङ्। यथा—

वामे (=सुन्दरे) ऊरू यस्याः सा वामोरूः।

**(K) यूनस्तिः। (४-१-७७)**

युवन्शब्दात् स्त्रियां तिप्रत्ययः स च तद्धितेष्वन्तर्भूतः 'नलोपः प्रातिपदिकान्तस्य' (२५२) इति नलोपः। युवन् + ति = युवति—युवतिः।

## १५८ । नासिकोदरोष्ठजङ्घादन्तकर्णशृङ्गाच्च । (४-१-५५)

आद्ययोर्बह्वच्त्वादन्येषां संयोगोपधत्वाच्चाप्राप्ते विधिरयम्। यथा—

तुङ्गनासिकी,—का; कृशोदरी,—रा; बिम्बोष्ठी,—ष्ठा इत्यादि ।

**अङ्गगात्रकण्ठेभ्यो वा वक्तव्यम् ।** (वृत्तिदृष्टं वार्त्तिकमिदम्) यथा—

स्वङ्गी,—स्वङ्गा; सुगात्री,—त्रा; कम्बुकण्ठी,—ण्ठा ।

## १५९ । न क्रोडादिबह्वचः । (४-१-५६)

क्रोडाद्यन्तात् बह्वजन्ताच्च नायं विकल्पः स्यात् । यथा—

सुक्रोडा, सुशफा, सुनखा इत्यादि । पृथुजघना, महाललाटा ।

## १६० । जातेरस्त्रीविषयादयोपधात् । (४-१-६३)

अनियतस्त्रीलिङ्गात्, अयकारोपधात्, जातिवाचिनोऽदन्तात् स्त्रियां ङीष् स्यात् । जातिर्नाम—

"(१) **आकृतिग्रहणा जातिः**

अनुगतेनावयवसंस्थानेन ज्ञातुं शक्येत्यर्थः । तर्कशास्त्रप्रसिद्धा जातिरियम् ॥

(२) **लिङ्गानां च न सर्वभाक्**
**सकृदाख्यातनिर्ग्राह्या**

असर्वलिङ्गत्वे सति एकस्यां व्यक्तौ कथनात् व्यक्त्यन्तरे कथनं विनापि सुग्रहा जातिः इति द्वितीयं लक्षणम् । स्मृतिप्रसिद्धा जातिरियम् ॥

(३) **गोत्रं च चरणैः सह"**

गोत्र-(अपत्य)-प्रत्ययान्ताश्चरणप्रत्ययान्ताश्च (एते तद्धितेषु वक्ष्यन्ते) जातितुल्याः स्युरित्यतिदेशः । यथा—

(१) कुक्कुटी, सूकरी, शुकी, मृगी । | (२) ब्राह्मणी, वृषली ।

(३) नाडायनी, कठी, बह्वृची ।

प्रत्यु०—('जातेः' किम?) मुण्डा, पलिता ।

('अस्त्रीविषयात्' किम्?) वलाका, मक्षिका ।

('अयोपधात्' किम्?) क्षत्रिया, वैश्या ।

॥ * ॥ योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः ॥

यथा—हयी, गवयी, मनुषी, मत्सी इत्यादि । अन्त्ययोः '**सूर्यतिष्यागस्त्यमनुष्यमत्स्यानां य उपधायाः**' (६-४-१४९) इति यलोपः ।

**अथ स्त्रीप्रत्ययोगे कार्याः प्रक्रियाः कथ्यन्ते—**

## १६१ । प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः । (७-३-४४)

**प्रत्ययस्थात् ककारात् पूर्वस्य अकारस्य इकारादेशः स्यात् आपि परे, स चेदाप् सुपः परो न भवति । आपः सुपः परत्वं समासे संभवति । यथा—**

मुण्डशब्दात् कप्रत्यये तद्धिते 'मुण्डक' इति प्रातिपदिकम्; 'दुष'-धातोः 'अक' इति कृत्प्रत्यये 'दूषक' इति प्रातिपदिकम्; आभ्याम् अदन्तत्वात् स्त्रियां टाप्—मुण्डक + आ; दूषक + आ इति स्थिते कात्पूर्वस्यात इत्—मुण्डिका, दूषिका । एवं चूर्णक—चूर्णिका; मोदक—मोदिका इत्यादि ।

**प्रत्यु०**—('अतः' किं?) नौका, शिशुका । ('प्रत्ययस्थात्' किं?) चटका । ('असुपः' किं?) बहुपरिव्राजका नगरी । अत्र बहवः परिव्राजका यस्यामिति बहुव्रीहौ परिव्राजकशब्दात् प्रथमाबहुवचनं समासे लुप्तम् ।

## १६२ । उदीचामातः स्थाने यकपूर्वायाः । (७-३-४६)

**यकपूर्वाया इति आतः स्त्रीलिङ्गविशेषणेन आकारः स्त्रीप्रत्ययरूपो ग्राह्यः । यकारककाराभ्यां परस्य स्त्रीप्रत्ययाकारस्य स्थाने ह्रस्वादेशेन योऽकारः तस्य कात्पूर्वस्य इत्वम् उदीचामाचार्याणां मते । यथा—**

क्षत्रियाशब्दात् चटकाशब्दाच्च अज्ञाताद्यर्थे कप्रत्ययेन तद्धितेन 'क्षत्रियाक' 'चटकाक' इति प्रातिपदिके; अत्र तद्धितकप्रत्यये परतः पूर्वस्याण्प्रत्याहारस्य ह्रस्वविधायकेन '**केऽणः**' (७-४-१३) इति सूत्रेण 'क्षत्रियक' 'चटकक' इति रूपे निष्पद्येते । आभ्यां स्त्रीप्रत्यये टापि—क्षत्रियिका, क्षत्रियका; चटकिका, चटकका इति सिध्यति ।

## १६३ । अभाषितपुंस्काच्च । (७-३-४८)

अयकपूर्वाया अपि इत्वविकल्पार्थोऽयं योगः । नित्यस्त्रीलिङ्गाद्विहितस्याप: स्थाने जातस्य कात्पूर्वस्यातः इत्वं वा आपि । यथा—

खट्विका, खट्वाका ; । मालिका, मालाका ।

१३४ । आदाचार्याणाम् । (७-३-४९)

पूर्वसूत्रविषये इत्वापवाद आत्वमाचार्याणां मते । यथा—

खटवका—खट्वाका ; मालका—मालाका ।

इति स्त्रीप्रत्ययाः ।

---

## सुबन्तप्रक्रिया ।

अथ लिङ्गविशिष्टेभ्यः प्रातिपदिकेभ्य उत्पन्नाया विभक्तेः प्रक्रियोच्यते—

१६५ । स्वौजस,—मौट् छष्, टा भ्यां भिस्, ङे भ्यां भ्यस्,—ङसि भ्यां भ्यस्, ङसोसाम्, ङ्योस्सुप् । (४-१-२)

ङ्याप्प्रातिपदिकात् इत्यधिकृतम् ; ङ्याबिति स्त्रीप्रत्ययोपलक्षणम् । लिङ्गविशिष्टात् प्रातिपदिकात् स्वौजसादयः प्रत्ययाः स्युः । एषामर्थो यथास्थानं वक्ष्यते । अथैषां प्रत्ययानां विभागः कथ्यते— 'त्रीणि त्रीणि एकवचनद्विवचनबहुवचनान्येकशः' इत्यंशेऽनुवर्तमाने—

१६६ । सुपः । (१-४-१०३)

सुबिति स्वौजसादीनां प्रत्याहारः 'स्वौ' इति सुकारादारभ्य 'सुप्' इति पकारेण । स्वादीनां एकैकं त्रिकं एकवचन-द्विवचन-बहुवचनसंज्ञं स्यात् । तथा च—स्वादिषु सप्तानां त्रिकाणां प्रथममेकवचनम्, द्वितीयं द्विवचनम्, तृतीयं बहुवचनम् । एषां विनियोगोऽन्यत्रोक्तः—

१६७ । बहुषु बहुवचनम् । (१-४-२१)

१६८ । द्व्येकयोर्द्विवचनैकवचने । (१-४-२२)

प्रकृतिवाच्यस्य वस्तुन एकत्वे एकवचनम् ; द्वित्वे द्विवचनम् ; तदधिकत्वे बहुवचनं च प्रयोज्यम् ॥

## १६९ । विभक्तिश्च (सुप्तिङः) । (१-४-१०४)

सुप्प्रत्ययास्तिङ्प्रत्ययाः (तिप् तस् झि......महिङ्) च विभक्तिसंज्ञाः स्युः । एकैकस्य त्रिकस्य एकवचनादयः संज्ञा उक्ताः ; आहत्य सप्त त्रिकाणि च सन्ति ; तेषां प्रथमा द्वितीया...इत्यादि संख्याक्रमेण व्यवहारः सुगम इति सूत्रकारेण विशिष्य नोक्तः । उक्ताः प्रत्यया विभज्यन्ते—

| | सानुबन्धाः | | | निरनुबन्धाः | | |
|---|---|---|---|---|---|---|
| | एक | द्वि | बहु | एक | द्वि | बहु |
| प्रथमा | सु | औ | जस् | स् | औ | अस् |
| द्वितीया | अम् | औट् | शस् | अम् | औ | अस् |
| तृतीया | टा | भ्यां | भिस् | आ | भ्यां | भिस् |
| चतुर्थी | ङे | भ्यां | भ्यस् | ए | भ्यां | भ्यस् |
| पञ्चमी | ङसि | भ्यां | भ्यस् | अस् | भ्यां | भ्यस् |
| षष्ठी | ङस् | ओस् | आम् | अस् | ओस् | आम् |
| सप्तमी | ङि | ओस् | सुप् | इ | ओस् | सु । |

प्रत्ययानामेषां संग्रह आर्यया—

स्वौजसमौट् च्छष्टाभ्यां भिस्ङेभ्यां भ्यस्ङसिभ्यां भ्यस् ।
(तदनु) ङसोसां ङयोस्सुप प्रत्ययमाला विभक्तीनाम् ॥

'सु' इत्यत्र उकारः, 'ङसि' इत्यत्र इकारश्चानुनासिकत्वप्रतिज्ञानादित् ; जटौ 'चुटू' (१५) इति ; ङशौ 'लशक्वतद्धिते' (१६) इति । जसादिषु सकारः, अमादिषु मकारश्च 'न विभक्तौ तुस्माः' (१२) इति नेत्संज्ञौ । इतामपनयनेन शोधितं प्रत्ययरूपमुपरि द्वितीयस्तम्भे दर्शितम् । निर्देशसौकर्यं (यथा—सु, टा, = स्, आ), विवेचनं (यथा—जस्, शस्, ङस्, ङसि = अस्), अनुगतधर्मसंपादनं (यथा—ङे, ङसि, ङस्, ङि = ङितः), प्रत्याहारकरणं (यथा—सुट् इति औट्—टकारेण प्रत्याहारः) चानुबन्धानां प्रयोजनम् । अथोदाह्रियते—

## औकारान्तः पुल्लिङ्गः 'ग्लौ' शब्दः ।

I. (1) ग्लौ + स् = { 'ससजुषो रुः' (७०) इति रुः, अवसाने (८२) विसर्गः } ग्लौः ;

(2) ग्लौ + औ = { 'एचोऽयवायावः' (४४) इति आव्, } ग्लावौ ;

(3) ग्लौ + अस् = (आवादेशः, रुत्वविसर्गौ च) ग्लावः ।

II. (1) ग्लौ + अम् = (आवादेशः,) ... ग्लावम् ;

(2) ग्लौ + औ = (I-2-वत्) ... ... ग्लावौ ;

(3) ग्लौ + अस् = (I-3-वत्) ... ... ग्लावः ।

III. (1) ग्लौ + आ = (आवादेशः)... .... ग्लावा ;

(2) ग्लौ + भ्याम् = .... ... .... ग्लौभ्याम्

(3) ग्लौ + भिस् = (रुत्वविसर्गौ,) ... ग्लौभिः ।

IV. (1) ग्लौ + ए = (आवादेशः,) ... ग्लावे ;

(2) ग्लौ + भ्याम् = ... .... .... ग्लौभ्याम्

(3) ग्लौ + भ्यस् = (रुत्वविसर्गौ,) ... ग्लौभ्यः ।

V. (1) ग्लौ + अस् = (I-3-वत्) .... .... ग्लावः ;

(2) ग्लौ + भ्याम् = .... .... ... ग्लौभ्याम्

(3) ग्लौ + भ्यस् = (IV-3-वत्) ... ... ग्लौभ्यः ।

VI. (1) ग्लौ + अस् = (I-3-वत्) .... ... ग्लावः ;

(2) ग्लौ + ओस् = (आव्, रुत्वविसर्गौ,) ... ग्लावोः ;

(3) ग्लौ + आम् = (आवादेशः,) .... ग्लावाम् ।

VII. (1) ग्लौ + इ = (आवादेशः,) .... ग्लावि ;

(2) ग्लौ + ओस् = (VI-2-वत्) ... ग्लावोः ;

(3) ग्लौ + सु = (सस्य षत्वं वक्ष्यते) ... ग्लौषु ।

## दकारान्तः स्त्रीलिङ्गः 'संपद्' शब्दः ।

| | | | | |
|---|---|---|---|---|
| I. (1) | संपद् + स् | = | सुप्रत्ययलोपो वक्ष्यते, 'वावसाने' (११३) | संपत्, संपद् |
| (2) | संपद् + औ | = | ... | ... संपदौ ; |
| (3) | संपद् + अस् | = | (रुत्वविसर्गौ) | .... संपदः । |
| II. (1) | संपद् + अम् | = | ... | ... संपदम् ; |
| (2) | संपद् + औ | = | ... | ... संपदौ ; |
| (3) | संपद् + अस् | = | (रुत्वविसर्गौ) | .... संपदः । |
| III. (1) | संपद् + आ | = | .... | ... संपदा ; |
| (2) | संपद् + भ्याम् | = | ... | .... संपद्भ्याम् ; |
| (3) | संपद् + भिस् | = | (रुत्वविसर्गौ) | .... संपद्भिः । |
| IV. (1) | संपद् + ए | = | .... | .... संपदे ; |
| (2) | संपद् + भ्याम् | = | ... | .... संपद्भ्याम् ; |
| (3) | संपद् + भ्यस् | = | ... | .... संपद्भ्यः । |
| V. (1) | संपद् + अस् | = | ... | .... संपदः ; |
| (2) | संपद् + भ्याम् | = | ... | ... संपद्भ्याम् ; |
| (3) | संपद् + भ्यस् | = | ... | ... संपद्भ्यः । |
| VI. (1) | संपद् + अस् | = | ... | ... संपदः ; |
| (2) | संपद् + ओस् | = | ... | ... संपदोः ; |
| (3) | संपद् + आम् | = | ... | ... संपदाम् । |
| VII. (1) | संपद् + इ | = | ... | ... संपदि ; |
| (2) | संपद् + ओस् | = | ... | ... संपदोः ; |
| (3) | संपद् + सु | = | 'खरि च' (११२) इति चर्त्वे | संपत्सु ॥ |

एवमन्येषामपि शब्दानां रूपाण्यूह्यानि । किं तु सर्वेषां शब्दानां रूपनिष्पत्तिर्नैवं सुगमा । आदेशैरागमैश्च प्रत्ययाः प्रकृतयश्च तत्र तत्र विक्रियन्ते । विकारास्ते पञ्चपादीव्यापिनि 'अङ्गस्य' (६-४-१) इत्यधिकारे विहिताः । किंत्वाचार्यस्तत्र सुप्प्रक्रियां तिङ्प्रक्रियया मिश्रीकृत्य कथयति । ततः सुप्प्रक्रियां पृथक्कृत्य दर्शयिष्यामः । आदौ तावत् सुब्विधावुपयुक्ताः संज्ञा लक्ष्यन्ते—

## (१) संज्ञा ।

### १७० । सर्वादीनि सर्वनामानि । (१-१-२७)

**सर्वादीनि शब्दरूपाणि सर्वनामसंज्ञानि स्युः ।**

सर्व, विश्व, उभ, उभय, डतर, डतम, अन्य, अन्यतर, इतर, (त्वत्, त्व), नेम, सम, (=सर्वपर्यायः) सिम ।

पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । [त्रीण्येतानि गणसूत्राणि]

त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवतु, किम् ।

इति सर्वादिः । भवतुशब्दे उकार इत् । स्वाभिधेयापेक्षोऽवधिनियमो व्यवस्था । तत्रैव पूर्वादीनां सर्वनामता । तेन कुशल इत्यर्थे दक्षिणशब्दो न सर्वनाम । असंज्ञायामित्युक्तेः उत्तराः कुरव इत्यादौ सत्यामपि व्यवस्थायां न सर्वनामता । स्वशब्दस्य (१) आत्मा, (२) आत्मीयं, (३) ज्ञातिः, (४) धनम् इति चतुर्ष्वर्थेषु प्रथमेऽर्थद्वय एव सर्वनामसंज्ञा । डतरडतमौ प्रत्ययौ; ततस्तदन्ता ग्राह्याः । अन्यथा हि संज्ञा निष्प्रयोजना स्यात् । एतौ च प्रत्ययौ किंयत्तदेकेभ्य एव भवतः— कतर, कतम, यतर, यतम, ततर, ततम, एकतर, एकतम इति । अन्यतर, अन्यतम इत्यपि शब्दौ वर्तेते; किं तु तौ न डतरडतमान्तौ;

तयोः 'अन्यतर'-शब्दो गणे विशिष्य पठितत्वात् सर्वनाम; अन्यतमस्तु न । अत्र गणे अपूर्वशब्दाः पठिता वलयचिह्निताः । पूर्वादिः, त्यदादिः, डतरादिरित्यस्मिन् गणे त्रयोऽन्तर्गणाः । अपूर्वशब्दानुपेक्ष्य सर्वादयः सौकर्यार्थं, अन्तर्गणकार्याणि च प्रदर्श्य, कारिकाभिः परिगण्यन्ते—

सर्वविश्वोभयसमं डतरं डतमं पुनः ।
इतरान्ये अन्यतरत् (स्वमोरडडतरादिषु) ॥ १ ॥
पूर्वापरावरस्वान्तराधरोत्तरदक्षिणम् ।
परं (पूर्वादिनवकं स्मात्-स्मिन्-शीषु विकल्पितम्) ॥ २ ॥
तद्यदेतदिदं चादो द्व्येकम् (अत्वं तदादिषु) ।
युष्मदस्मद्भवतु किमिति सर्वादयः स्मृताः ॥ ३ ॥

सर्वेषां नाम सर्वनामेत्यन्वर्था संज्ञा; अत एव सर्वपर्यायः समशब्दोऽत्र गृह्यत इत्युक्तम् । तथापि प्रक्रियासंपादनैकव्यसनी पाणिनिर्येषां सर्वनामतुल्या प्रक्रिया दृश्यते तेषां सर्वनामत्वानर्हाणामपि शब्दानां सर्वनामत्वमतिदिशति; अर्हाणां च प्रक्रियासिद्ध्यर्थं सर्वनामतां विकल्पते, निषेधति च । तथा हि—

### १७१ । विभाषा दिक्समासे बहुव्रीहौ । (१-१-२८)

उत्तरसूत्रेण वक्ष्यमाणेन प्राप्ते निषेधे विभाषते । 'दिङ्नामान्यन्तराले' इति सूत्रेण विहितः पूर्वस्या उत्तरस्याश्च दिशोऽन्तरालम् उत्तरपूर्वा इत्यादिः समासो दिक्समासः; तस्य बहुव्रीहित्वेऽपि विकल्पेन सर्वनामता स्यात् । तेन च उत्तरपूर्वस्यै, उत्तरपूर्वायै इति रूपविकल्पः फलम् ॥

### १७२ । न बहुव्रीहौ । (१-१-२९)

बहुव्रीहिसमासस्योत्तरपदभूतः सर्वादिरपि न सर्वनाम । प्रियो

विश्वो यस्य स प्रियविश्व इति बहुव्रीहेः प्रियविश्वाय इत्येव रूपं न तु प्रियविश्वस्मै इति सर्वनामकार्यम् ॥

### १७३ । तृतीयासमासे । (१-१-३०)

तृतीयासमासे च सर्वनामता न । मासेन पूर्वो मासपूर्वः तस्मै मासपूर्वाय इत्येव, न तु पूर्वस्मै इति ॥

### १७४ । द्वन्द्वे च । (१-१-४१)

द्वन्द्वसमासे च न सर्वनामता । वर्णाश्च आश्रमाश्च इतरे च वर्णाश्रमेतराः इति द्वन्द्वे वर्णाश्रमेतराणाम् इत्येव रूपं, न तु इतरेषामिति ॥

### १७५ । विभाषा जसि । (१-१-३२)

जसि, (प्रथमाबहुवचनस्थाने) यत् कार्यं तत्र वा द्वन्द्वस्य सर्वनामता । वर्णाश्रमेतरे,-तराः इति च रूपम् ॥

### १७६ । प्रथमचरमतयाल्पार्धकतिपयनेमाश्च । (१-१-३३)

प्रथमादयोऽपि जसि वा सर्वनामकार्यं लभेरन् । तत्र नेमशब्दः सर्वादौ पठित इति तस्य प्राप्ते विभाषा; अन्येषां त्वप्राप्ते । प्रथमे, प्रथमाः इत्यादिरूपविकल्पः फलम् ॥

### १७७ । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । (१-१-३४)

### १७८ । स्वमज्ञातिधनाख्यायाम् । (१-१-३५)

### १७९ । अन्तरं बहिर्योगोपसंव्यानयोः (१-१-३६)

सर्वादिगणे गणसूत्रतया पठितमेव सूत्रत्रयमिदं जसि विकल्पविधानार्थं प्रकरणेऽत्र पुनः पठ्यते । पूर्वादयो जसि पिकल्पेनैव सर्वनामानीत्यर्थः । तेन च पूर्वे, पूर्वाः इत्यादि रूपाणि ॥

॥ * ॥ विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानम् ॥

तीयस्तीयप्रत्ययान्तः, द्वितीयतृतीयशब्दौ । ङित्सु ङे-ङसि-ङस्-ङिषु । तेन द्वितीयस्मै, द्वितीयाय; द्वितीयस्मात्, द्वितीयात्; द्वितीयस्मिन्, द्वितीये इति पुन्नपुंसकयोः । द्वितीयस्यै, द्वितीयायै; द्वितीयस्याः, द्वितीयायाः; द्वितीयस्यां, द्वितीयायाम् इति स्त्रियामपि रूपद्वयम् ।

अथ संज्ञान्तराण्यपि प्रकृतोपयुक्तानि कथ्यन्ते—

## १८० । शि सर्वनामस्थानम् । (१-१-४२)

नपुंसके स्वौजसमौट्शस् इति प्रथमाद्वितीयाप्रत्ययानाम् अम्, शी, शि इत्यादेशा वक्ष्यन्ते । तत्र 'शि' इति प्रथमाद्वितीययोर्बहुवचनस्य सर्वनामस्थानमिति संज्ञा ॥

## १८१ । सुडनपुंसकस्य । (१-१-४३)

'सुट्' इति 'औट्' इत्यस्य टकारेण प्रत्याहारः सु, औ, जस्, अम्, औट् इति प्रथमां द्वितीयैकवचनद्विवचने च क्रोडीकरोति । पुंस्त्रियोः स्वादीनि पञ्च वचनानि सर्वनामस्थानसंज्ञानि स्युः । नपुंसके तु पूर्वसूत्रेण 'शि' इति प्रथमाद्वितीययोर्बहुवचनस्य परं सर्वनामस्थानत्वम् ॥

## १८२ । आ 'कडारा'-देका संज्ञा । (१-४-१)

'कडाराः कर्मधारये' (२-२-३८) इति द्वितीयाध्यायद्वितीयपादान्तिमसूत्रमभिव्याप्य एकस्यैकैव संज्ञा बोध्या । विप्रतिषेधे तु 'या परानवकाशा च' सा ग्राह्येति वार्त्तिककारः । अन्यत्र संज्ञाविधावुत्सर्गापवादन्यायो न संचार्य इति नियमार्थमयमेकसंज्ञाधिकारः ॥

नदी घि-लघु गुर्वङ्गं पदं भं वचनत्रयम् ।
अपादानं संप्रदानं करणं च ततः परम् ॥ १ ॥
अथाधिकरणं कर्म कर्ता हेतुश्च कारकम् ।
गतिर्निपातोपसर्गौ कर्मप्रवचनीयकाः ॥ २ ॥

उपग्रहो[1] विभक्तिश्च संहिता चावसानकम् ।
समासाश्चेति संज्ञाः स्युरेकसंज्ञाधिकारगाः ॥ ३ ॥

अन्यत्र तु एकस्य बहवः संज्ञा भवन्त्येव । यथा—सर्वशब्दः प्रातिपदिकं, सर्वनाम च ; सर्वे इति द्विवचनं प्रगृह्यं च । अधिकारेऽस्मिन्—

## १८३ । यू स्त्र्याख्यौ नदी । (१-४-३)

ई च, ऊ च—यू इत्यविभक्तिको निर्देशः स्पष्टप्रतिपत्त्यर्थः । स्त्र्याख्यौ स्त्रीवाचकौ । ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः । यथा—

कुमारी, गौरी, लक्ष्मीः, तनूः, यवागूः, कर्कन्धूः ।

**प्रत्यु०**—('स्त्र्याख्यौ' किम्?) ग्रामणीः, सेनानीः, खलपूः ।

**॥ * ॥ प्रथमलिङ्गग्रहणं च ॥**

स्त्र्याख्यस्योपसर्जनत्वेन लिङ्गान्तरविशिष्टं प्रति न्यग्भावेऽपि सहजं स्त्रीत्वं निमित्तीकृत्य नदीत्वं भवतीत्यर्थः । यथा—

अतिलक्ष्मीः पुरुषः, तस्मै अतिलक्ष्म्यै इति नदीकार्यम् ।

## १८४ । नेयङुवङ्स्थानावस्त्री । (१-४-४)

इयङुवङावादेशौ विधास्येते; तयोः स्थानिनौ यावीदूतौ तदन्तौ न नदीसंज्ञौ । स्त्रीशब्दस्तु इयङ्स्थान्यपि नदीसंज्ञ एव । क्विप् इति सर्वलोपी कश्चित् कृत्प्रत्ययोऽस्ति; तदन्तानि प्रातिपदिकानि विकाराभावाद्धातव एवेति कल्प्यते । तथा च वचनम्—'क्विबन्ता धातुत्वं न जहति' इति । भी, ह्री, श्री, भू इत्यादयो धातुसमानरूपाः, तेषाम् ईदूतौ इयङुवङ्स्थानिनौ । अतस्ते न नदीसंज्ञाः । तेन हे भीः, हे भूः इत्येव रूपम्; न तु हे भि; हे भु इति नदीह्रस्वः । स्त्रीशब्दस्य तु निषेधनिषेधात् हे स्त्रि इति नदीरूपं स्यादेव ॥

---

१. उपग्रहः परस्मैपदात्मनेपदे ।

## १८५ । वामि । (१-४-५)

इयङुवङ्स्थानिनां स्त्रीशब्दभिन्नानाम् आम् इति षष्ठीबहुवचने नदीसंज्ञानिषेधो विकल्पेनैव । अतः श्रीणां, श्रियां, भ्रूणां, भ्रुवाम् इति रूपद्वयमपि ॥

## १८६ । ङिति ह्रस्वश्च । (१-४-६)

ङिति प्रत्यये परे ह्रस्वौ इकारोकारान्तौ च वा नदीसंज्ञौ स्तः । ङे, ङसि, ङस्, ङि इति चतुर्थ्यादीनामेकवचनप्रत्यया ङितः । तेषु इदुदन्तौ स्त्र्याख्यावपि नदीकार्यं लभेयातामित्यर्थः । तेन—मत्यै, मतये; धेन्वै, धेनवे इति रूपद्वयम् । च-शब्देन इयङुवङ्स्थानिनोरी-दूतोर्निषेधोऽपि विकल्प्यते । तेन—श्रियै, श्रिये; भ्रुवै, भ्रुवे इतीदूदन्त-योरपि रूपद्वयम् । तथा च सूत्रेणानेन इदुतोरप्राप्ता नदीसंज्ञा इयङुवङ्-स्थानिनोरीदूतोः प्राप्तो निषेधश्च ङित्सु विकल्प्यते ॥

## १८७ । शेषो घ्यसखि । (१-४-७)

ह्रस्व इत्यनुवर्तते । उक्तादन्यः शेषः । इदुदन्तेषु येषां न नदी-संज्ञा प्राप्नोति ते घिसंज्ञा इत्यर्थः । सखिशब्दस्तु नदीसंज्ञाविरहेऽपि न घिसंज्ञ इति निषेधः । हरिणा, हरये इत्यादिरूपसिद्धिर्घिसंज्ञाप्रयो-जनम् ॥

## १८८ । पतिस्समास एव । (१-४-८)

पतिशब्दः समासे घिसंज्ञः, केवलस्तु न । तेन प्रजापतिना, प्रजापतये इत्यादिरूपसिद्धिः । केवलस्य तु पत्या, पत्ये इत्येव ॥

इत उत्तरं 'ह्रस्वं लघु' 'संयोगे गुरु' 'दीर्घं च' इति सूत्रत्रयं पूर्वमेव व्याख्यातमत्राप्रकृतं च ॥

## १८९ । यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् । (१-४-१३)

यस्माद्धातोर्वा प्रातिपदिकाद्वा प्रत्ययो विधीयते तदादि शब्दरूपं तस्मिन् प्रत्यये परे अङ्गसंज्ञं स्यात् । धातोः प्रत्ययविधौ मध्ये विकरणप्रत्ययोऽपि परापतेत्; तदा विकरणविशिष्टस्य धातोरङ्गसंज्ञासिद्ध्यर्थं 'तदादि' इति । यथा—'सु' इति धातुः; तस्मात् 'ति' इति तिङ्प्रत्ययः । तस्मिन् परे धातोः 'नु' इति विकरणप्रत्ययः; 'सुनुति' इति जातम् । तत्र 'सुनु' इत्यंशः तिप्रत्ययं प्रत्यङ्गम्; अङ्गस्य विहितेन गुणेन 'सुनोति' इति रूपसिद्धिः । इदं तिङ्प्रक्रियायां स्पष्टतरं भविष्यति । सुप्प्रक्रियायां तु प्रकृतिभूतं प्रातिपदिकमेवाङ्गशब्देनोच्यते ॥

सुप्तिङन्तं पदम् । (१-४-१४) व्याख्यातमिदम् । १२८ ।

[१९० । नः क्ये । (१-४-१५)

क्य इत्येवंरूपे प्रत्यये परे नकारान्तं पदसंज्ञं स्यात् । क्यप्रत्ययः पदादेव विधीयते; अतः सिद्धे विधिः 'नान्तमेव क्यप्रत्यये परे पदसंज्ञम्' इति नियमार्थः । इदमुचिते प्रकरणे उदाहरिष्यते ॥

१९१ । सिति च । (१-४-१६)

सिति प्रत्यये परे पूर्वं पदसंज्ञं स्यात् । 'यचि भम्' इति वक्ष्यमाणाया भसंज्ञायाः पुरस्तादपवादोऽयम् । तद्धितेष्वस्योपयोगः ॥]

१९२ । स्वादिष्वसर्वनामस्थाने । (१-४-१७)

सुपः स्त्रीप्रत्ययास्तद्धिताश्च स्वादयः; तेषु सर्वनामस्थानव्यतिरिक्तेषु परेषु पूर्वा प्रकृतिः पदसंज्ञा स्यात् । 'शि सर्वनामस्थानम्' (१८०), 'सुडनपुंसकस्य' (१८१) इति सर्वनामस्थानसंज्ञा पूर्वमेव लक्षिता । 'सुप्तिङन्तं पदम्' (१२८) इति सुबन्तमेव प्रयोगार्हं लौकिकं

१. प्रत्ययविधिस्तृतीयचतुर्थपञ्चमैरध्यायैः क्रियते । तत्र तृतीये धातोरित्यधिकृत्य चतुर्थपञ्चमयोः प्रातिपदिकादित्यधिकृत्य च प्रत्यया विधीयन्ते इति भूयिष्ठं संभवं मत्वैवमुक्तम् । तेन स्त्रीप्रत्ययान्तस्य क्वचित्तिङन्तस्य चाङ्गसंज्ञा भवत्येव ।

पदम् । सुप्स्वपि केषांचित्प्रत्ययानां प्रकृतेः पदसंज्ञा पदकार्यप्रवर्तनार्थमतिदिश्यते । 'रोऽसुपि' (७२) इति सूत्रव्याख्यानं वीक्ष्यताम् ॥

### १९३ । यचि भम् । (१-४-१८)

य् च, अच् च—यच् इति समाहारद्वन्द्वः; यकारादिषु अजादिषु च स्वादिषु परेषु पूर्वं भसंज्ञं स्यादिति पदसंज्ञाया अपवादः । 'असर्वनामस्थाने' इति पर्युदासोऽत्राप्यस्त्येव । यकारादीनामजादीनां च स्वादीनां प्रकृतिः भसंज्ञा, वलादीनां[1] तु पदसंज्ञेति विवेकः ॥

### [१९४ । तसौ मत्वर्थे । (१-४-१९)

मत्वर्थे प्रत्यये यजादौ परेऽपि तकारान्ता सकारान्ता च प्रकृतिर्भसंज्ञैव न तु पदसंज्ञा । अस्योदाहरणं मतुप्प्रकरणे दर्शयिष्यते]

उक्ताभिः संज्ञाभिः सुप्प्रत्ययास्त्रिधा विभक्ताः—

(१) आद्यैः पञ्चभिः प्रत्ययैः सर्वनामस्थानम्; शेषेषु (२) यजादीनां प्रकृतिर्भम्; (३) वलादीनां पदमिति । सर्वनामस्थानसंज्ञा प्रत्ययानां कृता, भ-पद-संज्ञे तु प्रकृतेरिति परं भेदः । पदकार्यातिदेशार्थं कृता पदसंज्ञा प्रकृतेरेव कर्तुं शक्यते; तदनुसारेण भसंज्ञापि तथैव कृता । अतः सर्वनामस्थानसंज्ञामपि प्रकृतेरेवाचार्योऽकरिष्यच्चेत् ऐकरूप्येण सामञ्जस्यमभविष्यत् । विभागोऽयं पट्टिकया प्रदर्श्यते—

| पुंस्त्रियोः | | | क्लीबे | | |
|---|---|---|---|---|---|
| सु | औ | जस् | अम् | शी | शि |
| अम् | औट् | शस् | अम् | शी | शि |
| टा | भ्यां | भिस् | टा | भ्यां | भिस् |
| ङे | भ्यां | भ्यस् | ङे | भ्यां | भ्यस् |
| ङसि | भ्यां | भ्यस् | ङसि | भ्यां | भ्यस् |
| ङस् | ओस् | आम् | ङस् | ओस् | आम् |
| ङि | ओस् | सुप् | ङि | ओस् | सुप् |

1. 'वल्' इति यवर्जं हलां प्रत्याहारः । अल् – यच् = वल् ।

एषु तिर्यग्रेखाया उपरिगतं, वलयान्तर्गतं च सर्वनामस्थानम्; शेषेषु स्थूललिपिभिर्मुद्रितानां प्रकृतिः पदं, परिशिष्टानां प्रकृतिर्भम् । एषां विभागानां तत्तत्संज्ञाकार्यैरेकरूपा भवति प्रक्रिया ॥

---

## (२) संधिकार्याणि ।

स्वरसंधिविधौ पदान्तसंधिरुभयसंधिश्चैव कथितौ; न तु पदमध्यसंधिरिति स इदानीमुच्यते । 'अकः सवर्णे दीर्घः' (५४) इत्युक्त्वा तदुत्तरं सूत्रयत्याचार्यः—

### १९५ । प्रथमयोः पूर्वसवर्णः (६-१-१०२)

प्रथमयोर्विभक्त्योः, प्रथमाद्वितीययोरित्यर्थः । अकः, अचि, दीर्घ इति पदत्रयमनुवर्तते । अकः प्रथमाद्वितीययोरचि परे पूर्वसवर्णो दीर्घ एकादेशः स्यात् । यथा—

हरि + औ = हरी | गुरु + औ = गुरू ।

### १९६ । तस्माच्छसो नः पुंसि । (६-१-१०३)

तस्मात् पूर्वसवर्णदीर्घात् परस्य शसो नकारादेशः स्यात् पुल्लिङ्गे । 'अलोऽन्त्यस्य' इति शसः सकारस्य नकारः । यथा—

| | |
|---|---|
| राम + अस् = रामास् = रामान् | गुरु + अस् = गुरूस् = गुरून् |
| हाहा + अस् = हाहास् = हाहान् | शम्भू + अस् = शम्भूस् = शम्भून् |
| हरि + अस् = हरीस् = हरीन् | पितृ + अस् = पितॄस् = पितॄन् । |

वातप्रमी + अस् = वातप्रमीस् = वातप्रमीन् ।

प्रत्यु०—('पुंसि' किम्?) रमाः, मतीः, गौरीः, तनूः, मातॄः । क्लीबे त्वस्य प्रसक्तिरेव नास्ति ।

अथ दीर्घोऽयं निषिध्यते—

### १९७ । नादिचि । (६-१०४)

अवर्णादिचि परे पूर्वसवर्णदीर्घो न स्यात् । इच् इति व्यापकोऽप्ययं प्रत्याहारो विषयाभावात् 'औ' 'ई' इति द्विवचनद्वयमेव परामृशतीति बोद्धव्यम् । यथा—

राम + औ = रामौ, न तु रामा इति | धन + ई = धने, न तु धना इति ।

१९८ । दीर्घाज्जसि च । (६-१-१०५)

दीर्घेभ्यो जसि इचि च परे न पूर्वसवर्णदीर्घः । यथा—

गौरी गौर्यौ गौर्यः | वधूः वध्वौ वध्वः ।

अपवादैर्निषेधैश्चापहृतव्याप्तिरयं पूर्वसवर्णदीर्घः कुत्र प्रवर्तेतेति विषयोऽस्य कारिकया संगृह्यते—

एकादेशः पूर्वदीर्घ (१) इदुतोरौङि, (२) जस्यतः, ।
(३) अकः शसीति त्रिष्वेव; तत्र नत्वं च पुंशसः ॥

औङिति औकारविभक्तेः प्राचां संज्ञा । 'अतो गुणे' इति वक्ष्यमाणं पररूपं बाधितुं 'जस्यतः' इति; अन्यथा 'अकः सवर्णे...' इति दीर्घेणैव सोऽपि सिध्यति ॥

अथ पूर्वसवर्णदीर्घस्यापवादः—

१९९ । अमि पूर्वः । (६-१-१०७)

अक इत्येव । अकः अमि परे पूर्वरूपमेकादेशः । यथा—

राम + अम् = रामम् ।
रमा + ,, = रमाम् ।
हरि + ,, = हरिम् ।
गौरी + ,, = गौरीम् ।

गुरु + अम् = गुरुम् ।
वधू + ,, = वधूम् ।
ऋकारस्य तु गुणविधानान्नायं संभवति ।

'संप्रसारणाच्च' इत्युत्तरसूत्रमन्यत्र व्याख्यास्यते । 'एङः पदान्तादति' (५५) इति तदुत्तरं सूत्रं व्याख्यातम् ॥

२०० । ङसिङसोश्च । (६-१-११०)

एङो ङसिङसोरति परतः पूर्वरूपमेकादेशः स्यात् । अपदान्तार्थं वचनम् । यथा—

गो + अस् = गोस् = गोः | हरे + अस् = हरेस् = हरेः ।
गुरो + अस् = गुरोस् = गुरोः ।

हरिगुरुशब्दयोरिदुदन्तयोः 'घेर्ङिति' इति गुणो वक्ष्यते ॥

## २०१ । ऋत उत् । (६-१-१११)

ऋकारात् ङसिङसोरति परे उकार एकादेशः । यथा—

पितृ + अस् = पितुस् = पितुः | मातृ + अस् = मातुस् = मातुः ।

'उरण् रपरः' इति रपरोऽयमुकारादेशो भवितुमर्हति । तथापि पितुर् स् इति जाते वक्ष्यमाणेन संयोगान्तलोपेन सलोपे तुल्यमेव रूपम् ॥

## २०२ । ख्यत्यात् परस्य । (६-१-११२)

इकारान्तेषु सखिपतिशब्दयोः परं घिसंज्ञा नास्ति (१८७,–८) । तस्मात् तयोर्हरिशब्दस्य 'घेर्ङिति' इति गुणे, 'ङसिङसोश्च' इति पररूपेण 'हरेः' इतिवत् रूपं न सिध्येत् । 'सखि + अस्,' 'पति + अस्' इति स्थिते 'इको यणचि' इति यणादेशेन 'सख्यस्,' 'पत्यस्' इत्येव भवति । एवं कृतयणादेशयोस्तयोरनुकरणं 'ख्यत्य' इति; अकार उच्चारणार्थः । विकृतरूपग्रहणं घिसंज्ञाभावे उत्वं यथा स्यादिति । परस्ये-त्युक्तिः 'एकः पूर्वपरयोः' इत्यधिकारानिवृत्त्यर्थः । सखिपतिशब्दा-भ्यां परस्य ङसिङसोरत उत् स्यात् । यथा—

सखि + अस् = सख्युः; पति + अस् = पत्युः ।

## २०३ । औतोऽम्शसोः । (६-१-९३)

आ ओत इति च्छेदः । ओकारादम्शसोरचि परे आकार एकादेशः स्यात् । यथा—

गो + अम् = गाम्; गो + अस् = गाः ।

---

## (३) प्रत्ययानामादेशाः ॥

### २०४ । अतो भिस ऐस् । (७-१-९)

अङ्गस्येत्यधिकृतम् । अदन्तादङ्गात् परस्य भिस ऐस् इत्यादेशः स्यात् । 'न विभक्तौ तुस्माः' इति सकारस्य नेत्संज्ञा; अनेकाल्त्वात् सर्वादेशः । यथा—राम + भिस् = राम + ऐस् = रामैः ।

### २०५ । नेदमदसोरकोः । (७-१-११)

'अव्ययसर्वनाम्नामकच् प्राक् टेः' इति सर्वनाम्नाम् अल्पाद्यर्थे 'अक' इति प्रत्ययो वा टेः पूर्वं भवति । तद्गर्भकनिरासार्थं 'अकोः' इति । अकज्रहितयोरिदमदसोर्भिस ऐस् न स्यात् । इदमदसोः 'त्यदादीनामः' इत्यदन्तत्वं भवति । अत ऐसादेशः प्राप्नोत्येव । यथा—

इदम्—एभिः; अदस्—अमीभिः, अमूभिः ।

प्रत्यु०—('अकोः' किम्?) अमुकैः ।

### २०६ । टाङसिङसामिनात्स्याः । (७-१-१२)

अदन्तादङ्गात् टादीनामिनादय आदेशाः स्युः । टा—इन, ङसि—आत्, ङस्—स्य इति यथासंख्यमादेशा भवन्ति ॥

राम + आ = रामेन (रेफसांनिध्यान्नस्य णत्वम्) रामेण । राम + अस् = रामात् । राम + अस् = रामस्य ।

### २०७ । ङेर्यः । (७-१-१३)

अदन्तादङ्गात् ङे इति चतुर्थ्येकवचनस्य यादेशः । यथा—

राम + ए = राम + य = रामाय ('सुपि च' इति दीर्घोऽत्र वक्ष्यते) ।

### २०८ । सर्वनाम्नः स्मै । (७-१-१४)

अदन्तात् सर्वनाम्नस्तु ङे इत्यस्य 'स्मै' इत्यादेशः । यथा—

सर्वस्मै, पूर्वस्मै, अन्यस्मै, तस्मै इत्यादि ।

## २०९ । ङसिङ्योः स्मात्-स्मिनौ । (७-१-१५)

अदन्तात् सर्वनाम्न इत्येव । यथा—

सर्वस्मात्, सर्वस्मिन् । तस्मात्, तस्मिन् ।

## २१० । पूर्वादिभ्यो नवभ्यो वा । (७-१-१६)

पूर्वादिनवकात् परयोर्ङसिङ्योः स्मात्—स्मिनौ विकल्पेनैव ।

**यथा**—पूर्वस्मात्, पूर्वात्; पूर्वस्मिन्, पूर्वे ।

## २११ । जसः शी । (७-१-१७)

अदन्तात् सर्वनाम्नो जसः शी इत्यादेशः । शित्त्वादयं सर्वादेशो भवति । यथा—सर्व + अस् = सर्व + ई = सर्वे ।

एवं विश्वे, अन्ये, एके इत्यादि । पूर्वादीनां जसि सर्वनामसंज्ञाया विकल्पितत्वात् (१७७-८-९) पूर्वे, पूर्वाः इति रूपद्वयम् ॥

## २१२ । औङ आपः । (७-१-१८)

औङित्यौकारविभक्तेः संज्ञेत्युक्तम् । आप् स्त्रीप्रत्ययः चाप्, टाप्, डाप् वा । आबन्तात् परयोः प्रथमाद्वितीयाद्विवचनयोः शी इत्यादेशः ।

**यथा**—रमा + औ = रमा + ई = रमे ।

## २१३ । नपुंसकाच्च । (७-१-१९)

औङः शी इत्ययमादेशः स्यात् । यथा—

धन + औ = धन + ई = धने । यशस् + औ = यशस् + ई = यशसी ।

नामन् + औ = नामन् + ई = नामनी ।

## २१४ । जश्शसोः शिः । (७-१-२०)

नपुंसकाज्जश्शसोः शि इत्ययमादेशः । यथा—वाः वारी **वारि** ।

## २१५ । अष्टाभ्य औश् । (७-१-२१)

'अष्टा' इति कृतात्वस्याष्टन्शब्दस्य ग्रहणार्थम् 'अष्टाभ्यः' इति । तस्माज्जश्शसोरौश् इत्ययमादेशः । शित्त्वात् सर्वादेशः । यथा—

अष्टन्—दीर्घे अष्टा। अष्टा + अस् = अष्टा + औ = अष्टौ। दीर्घाभावे तु उत्तरसूत्रेण लोपे 'अष्ट' इत्यपि रूपम्।

## २१६। षड्भ्यो लुक्। (७-१-२२)

षट्संज्ञकेभ्यो जश्शसोर्लुक् स्यात्। लुक्=लोपः। के नाम षट्संज्ञाः?—

## २१७। ष्णान्ता षट् (संख्या)। (१-१-२४)

## २१८। डति च। (१-१-२५)

षान्ता नान्ता च संख्या डतिप्रत्ययान्तश्च इत्येते षट्संज्ञाः स्युः। षान्ता संख्या षष् इति; नान्ताः पञ्चन्, सप्तन्, अष्टन्, नवन्, दशन् इत्येते पञ्च; डतिप्रत्ययान्तः कतिशब्दः। पञ्चादेः संख्याषट्कस्य वाचिकेयमिति षट्संज्ञा कृतेति प्रतिभाति। अथ प्रकृतं सूत्रमुदाह्रियते—

षष् + अस् = षष्। षकारस्य जश्त्वेन (६९) डकारः, तस्य चावसाने चर्त्व-विकल्पः (११३) षट्, षड्। पञ्चन् + अस् = पञ्चन्, वक्ष्यमाणेन नलोपेन पञ्च।

एवं सप्त, अष्ट, नव, दश, कति इति। **'पदाङ्गाधिकारे तस्य च तदन्तस्य च'** इति परिभाषया षट्संज्ञान्तानामपि जश्शसोर्लुक् भवति। तेन एकादश, द्वादश इत्यादि॥

## २१९। स्वमोर्नपुंसकात्। (७-१-२३)

नपुंसकादङ्गात् परयोः सु अम् इति प्रथमाद्वितीयैकवचनयोर्लुक् स्यात्। यथा—दधि, मधु, कर्तृ, महत्, यशः, तत् इत्यादि।

## २२०। अतोऽम्। (७-१-२४)

अदन्तात्तु नपुंसकात् स्वमोरमादेशः। अमोऽप्यमादेशो लोपबाधनार्थः। यथा—

धन—धनम्; वन—वनम्। 'अमि पूर्वः' इति पूर्वरूपमेकादेशः।

## २२१। अड्डतरादिभ्यः पञ्चभ्यः। (७-१-२५)

डतर, डतम, अन्य, अन्यतर, इतर एभ्यस्तु नपुंसकेभ्योऽदन्तेभ्यः स्वमोः 'अद्' इत्यादेशः। यथा—

कतर + स् = कतर + अद्,— 'अतो गुणे' इति वक्ष्यमाणं पररूपं,—कतरत्, कतरद्। एवम् अन्यत्, इतरत् इत्यादि।

'प्रथमयोः पूर्वसवर्णः' (१९५) इति दीर्घस्तु नपुंसकेऽनपेक्षित इति न प्रवर्तते ॥[1]

---

## (४) अङ्गकार्याणि ॥

### २२२। हल्-ङ्याब्-भ्यो दीर्घात् सु-ति-स्यपृक्तं हल्। (६-१-६८)

लोप इत्यनुवर्तते; स चात्रान्वयानुरोधेन 'लुप्यते' इति विपरिणम्यते। दीर्घादिति ङ्यापोर्विशेषणम्; अपृक्तं नाम—

### २२३। अपृक्त एकाल् प्रत्ययः। (१-२-४१)

एकवर्णात्मकः प्रत्ययः अपृक्तसंज्ञः स्यात् इत्युक्तलक्षणम्। हलन्तात्, दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सु, ति, सि इति प्रत्ययानाम् अपृक्तं हल् लुप्यते। 'सु' इति प्रथमैकवचनमेकवर्णात्मकमेव। ति, सि इत्येतौ प्रथममध्यमपुरुषयोरेकवचने; तयोर्लङादिषु लकारेषु इकारलोपे त्, स् इत्यपृक्तत्वं भवति। अथोदाह्रियते यथा—

| | | | |
|---|---|---|---|
| हल् | संपद् + स् = संपद् | माला + स् = माला | आप्। |
| | वाक् + स् = वाक् | सीमा + स् = सीमा | |
| | त्विष् + स् = त्विष्, त्विड् | गौरी + स् = गौरी | ङी। |
| | ककुभ् + स् = ककुभ्, ककुब् | कुमारी + स् = कुमारी | |

---

१. अत्र व्याख्यातारः 'अड्डतरादिभ्यः' इति सूत्रे डकारप्रश्लेषेण 'अद्ड्' इत्यादेशस्य स्वरूपं प्रकल्प्य डित्त्वात् प्रकृतेष्टिलोपेन कतर् + अद् = कतरद् इति रूपसिद्धिं संपाद्य 'प्रथमयोः पूर्वसवर्णः' इति दीर्घस्यावकाशं वारयन्ति।

मालामतिक्रान्तोऽतिमालः इत्यादौ उपसर्जनह्रस्वे मा भूदिति ङ्यापो-दीर्घविशेषणम् ॥

२२४ । एङ्ह्रस्वात् संबुद्धेः । (६-१-६९)

एङन्तात् ह्रस्वान्ताच्च संबुद्धेर्लोपः स्यात् । संबुद्धिर्नाम संबोधनार्थे प्रथमाया एकवचनम्; तथा च सूत्रम्—

२२५ । एकवचनं संबुद्धिः (प्रथमा संबोधने) । (२-३-४९)

राम + स् = (हे) राम । हरे + स् = (हे) हरे । गुरो + स = (हे) गुरो । | 'हे' इति निपातः संबोधनं द्योतयति ।

'अतो दीर्घो यञि' इत्यनुवर्तमाने

२२६ । सुपि च । (७-३-१०२)

अदन्तस्याङ्गस्य दीर्घः स्यात् यञादौ सुपि परे । यथा—

राम + य = रामाय । | राम + भ्यां = रामाभ्याम् ।

२२७ । बहुवचने झल्येत् । (७-३-१०३)

झलादौ बहुवचने सुपि परे अदन्तस्याङ्गस्य एकारादेशः स्यात्, दीर्घापवादः । तेन 'भ्याम्, य' इत्यनयोः परयोर्दीर्घः । 'भ्यस्, सुप् साम्' इत्येष्वेत्वं च फलितम् ॥

राम + भ्यस् = रामेभ्यः ।

राम + सु = रामेसु, रामेषु । (इण्कवर्गाभ्यां परस्य सस्य षत्वं वक्ष्यते ।)

२२८ । ओसि च । (७-३-१०४)

ओसि परे च अदन्ताङ्गस्य एत् । यथा—

राम + ओस् = रामे + ओस् = रामयोः ।

२२९ । आङि चापः । (७-३-१०५)

'आङ्' इति तृतीयैकवचनस्य ('टा' इत्यस्य) पूर्वाचार्याणां संज्ञा । आबन्तस्य टाप्रत्यये (चकारात्) ओसि च परे एकारः ॥

रमा + आ = रमे + आ = रमया । रमा + ओस् = रमे + ओस् = रमयोः ।

## २३० । संबुद्धौ च । (७-३-१०६)

आबन्तस्य एत् संबुद्धौ परतः । यथा—

रमा + स् = रमे + स् ('संबुद्धिलोपः' २२४) = (हे) रमे ।

## २३१ । अम्बार्थनद्योर्ह्रस्वः । (७-३-१०७)

अम्बार्थानां नदीसंज्ञानां च ह्रस्वः संबुद्धौ । अम्बा, अक्का, अल्ला इति त्रय एव शब्दा आदन्ता अम्बार्थाः ॥

(हे) अम्ब, अक्क, अल्ल (ह्रस्वात् संबुद्धिलोपः २२४ ।)

## २३२ । ह्रस्वस्य गुणः । (७-३-१०८)

ह्रस्वान्तस्याङ्गस्य गुणः स्यात् संबुद्धौ । यथा—

हरि + स् = हरे + स् = हरे । } 'एङः संबुद्धिलोपः' २२४ ।
गुरु + स् = गुरो + स् = गुरो । }

## २३३ । जसि च । (७-३-१०९)

ह्रस्वस्य गुणः स्यात् जसि च परे । यथा—

हरि + अस् = हरे + अस् = हरयः । गुरु + अस् = गुरो + अस् = गुरवः ।

अकारान्तस्य गुणेन कोऽपि न विशेषः । ऋकारान्तस्य तु न केवलं जसि संबुद्धौ च गुणः, अपि तु अन्यत्राप्यस्ति । तदेवाह—

## २३४ । ऋतो ङिसर्वनामस्थानयोः । (७-३-११०)

ऋदन्तस्य ङौ सर्वनामस्थाने च गुणः ॥

पितृ—पितरौ, पितरः; हे पितः; पितरम्, पितरौ; पितरि ।

संबुद्धौ पितृ + स् इति स्थिते गुणेन पितर् स् इति जाते हल्ङ्यादि-लोपः । सौ अनङादेशस्य विशेषविधानाद्गुणो न प्रवर्तते ॥

## २३५ । घेर्ङिति । (७-३-१११)

घिसंज्ञस्य ङिति प्रत्यये गुणः । ङे, ङसि, ङस्, ङि एतानि चतुर्थ्याद्येकवचनानि ङित्प्रत्ययाः ॥

हरि + ए = हरे + ए = हरये ।  गुरु + ए = गुरो + ए = गुरवे ।
हरि + अस् = हरे अस्—'ङसिङसोश्च' (२००) इति पूर्वरूपे, हरेस् = हरेः।
गुरु + अस = गुरो + अस्—(पूर्वरूपम्)= गुरोः। षष्ठ्येकवचनेऽपि तुल्यं रूपम्।
ङौ तु विशेषो वक्ष्यते ।

## २३६ । आण् नद्याः । (७-३-११२)

नदीसंज्ञात् परस्य ङित्प्रत्ययस्य आडागमः स्यात्। टित्त्वादाद्यावयवः। आ + ए = ऐ; आ + अस् = आस्। यथा—

गौरी + ऐ = गौर्यै ।  गौरी + आस् = गौर्याः ।
वधू + ऐ = वध्वै ।  वधू + आस् = वध्वाः ।

## २३७ । याडापः । (७-३-११३)

आबन्तात् ङित्प्रत्ययस्य याडागमः। या + ए = यै; या + अस् = यास्। यथा—रमा + यै = रमायै । रमा + यास् = रमायाः ।

## २३८ । सर्वनाम्नः स्याड्ढ्रस्वश्च । (७-३-११४)

आबन्तात् सर्वनाम्नस्तु ङित्प्रत्ययस्य स्याट् इत्यागमः। तत्संनियोगेन आपो ह्रस्वत्वं च। यथा—सर्वा—सर्वस्यै सर्वस्याः ।

## २३९ । ङेराम्नद्याम्नीभ्यः । (७-३-११६)

नदीसंज्ञादाबन्तात् नीशब्दाच्च ङेः 'आम्' इत्यादेशः। यथा—

गौरी—गौर्याम् ।
रमा —रमायाम्। (२३७ सूत्रेण याडागमश्च)
सर्वा —सर्वस्याम्। (२३८ सूत्रेण स्याडागमह्रस्वौ)
नी —नियाम्। (इयङादेशोऽत्र वक्ष्यते)

## २४० । इदुद्भ्याम् । (७-३-११७)

नदीसंज्ञकाभ्याम् इकार-उकाराभ्यां परस्य ङेराम्। उत्तरसूत्रेण औत्त्वं मा भूदिति वचनम्; अन्यथा पूर्वसूत्रेणैवावाप्यां सिध्यति। यथा—

मति—मत्याम् ।  धेनु—धेन्वाम् ।

## २४१ । औत् । (७-३-११८)

इदुद्भ्यां परस्य ङेरौकारादेशः स्यात् । यथा—

सखि — सख्यौ । पति—पत्यौ ।

पूर्वसूत्रेण नद्या आम् विहितः; उत्तरसूत्रेण घेश्च विशेषो विधीयते । अतः घिनदीसंज्ञारहितौ सखिपतिशब्दावेवास्य सूत्रस्य विषयौ ॥

## २४२ । अच्च घेः । (७-३-११९)

घेः परस्य ङेरपि औकारादेशः । किंतु तदा प्रकृतेर्घेरकारोऽन्तादेशश्च । यथा—

हरि + इ = हर + औ = हरौ । गुरु + इ = गुर + औ = गुरौ ।

## २४३ । आङो नाऽस्त्रियाम् । (७-३-१२०)

घेः परस्य टा इति तृतीयैकवचनस्य ना इत्यादेशः स्यात् (अस्त्रियां) पुन्नपुंसकयोः । यथा—

कविना, गुरुणा, अमुना (कुलेन) । स्त्रियां तु—मत्या, तन्वा ।

---

॥ अथ प्रकरणान्तरविहितानि कार्याणि ॥

## २४४ । आमि सर्वनाम्नः सुट् । (७-१-५२)

'आत्' इत्यनुवर्तते । अवर्णान्तात् (न तु अदन्तात्) सर्वनाम्नः परस्य आमः[1] सुडागमः स्यात् ॥

सर्व + आम्—सर्व + साम्—'बहुवचने झल्येत्' (२२७) सर्वेसां—षत्वं, सर्वेषाम् । स्त्रियां तु अदन्तत्वाभावात् न एत्वम्, इणभावान्न षत्वम्, सर्वासाम् । एवम् अन्येषाम्, अन्यासाम् इत्यादि ।

प्रत्यु०—('आत्' किम् ?) भवताम् ।

---

१. 'आमि' इति सप्तमीनिर्देश उत्तरसूत्रेऽनुवृत्त्यर्थः । अत्र तु 'आत्' इत्यनुवृत्तेः 'सर्वनाम्न' इत्यपि पञ्चमीति स्पष्टम् । तस्मात् 'तस्मादित्युत्तरस्य' इति परिभाषया आम एव सुट् सिध्यति । टित्त्वादाद्यागमश्च ।

## २४५ । त्रेस्त्रयः । (७-१-५३)

त्रि इत्यस्य आमि परे त्रय इत्यादेशः । उत्तरसूत्रेण त्रयाणामिति रूपसिद्धिः ॥

## २४६ । ह्रस्वनद्यापो नुट् । (७-१-५४)

ह्रस्वान्तान्नदीसंज्ञादाबन्ताच्च आमो नुडागमः ॥

राम + आं = राम + नाम्—'नामि' इति वक्ष्यमाणः प्रकृतेर्दीर्घः, रामानाम्—णत्वं—रामाणाम् । एवं धनानाम्, हरीणाम, गुरूणाम्, पितॄणाम्; (नदी) गौरीणाम्, वधूनाम्; (आप्) रमाणाम्, जायानाम् ।

## २४७ । षट्चतुर्भ्यश्च । (७-१-५५)

'षट्संज्ञकेभ्यः' (२१७) चतुरश्च परस्य आमो नुडागमः ॥

चतुर् + आं = चतुर्नां—चतुर्णाम् ।

षष् + आं = षष्नां—'झलां जशोऽन्ते' (६९)—षड्नां—'न पदान्ताट्टोरनाम्' (१०४) इति ष्टुत्वनिषेधस्य निषेधात् ष्टुत्वम्, षड्णां—'प्रत्यये भाषायां नित्यम्' (१०७-वा) इत्यनुनासिकादेशः, षण्णाम् ।

पञ्चन् + आं = पञ्चन् + नां—'नोपधायाः' (२५१) इति दीर्घः—पञ्चान् नां—वक्ष्यमाणः प्रकृतेर्नलोपः—पञ्चानाम । एवम्—सप्तानाम्, अष्टानाम्, नवानाम्, दशानाम्, कतीनाम् ।

अथ 'रामाणाम्' इत्यादौ परामृष्टो दीर्घविधिरुच्यते—

दीर्घ इत्यनुवर्तमाने 'अङ्गस्य' (६-४-१) इत्यधिकृत्य—

## २४८ । नामि । (६-४-३)

कृतनुडागमे आमि परे अङ्गस्य दीर्घः स्यात् ॥

रामाणाम्, धनानाम्, हरीणाम्, गुरूणाम्, पितॄणाम् ।

## २४९ । न तिसृचतसृ । (६-४-४)

अनयोर्नामि न दीर्घः । तिसृणाम् । चतसृणाम् ।

## २५० । नृ च (उभयथा) । (६-४-६)

नृशब्दस्य नामि दीर्घस्तदभावश्च स्यात् । नृणाम्, नॄणाम् ।

२५१ । नोपधायाः । (६-४-७)

नान्तस्योपधाया दीर्घो नामि परे ॥

पञ्चन् + नां — पञ्चान् + नाम् ।

अत्र प्रक्रियाप्रदर्शनार्थं नलोपविधिर्मध्ये कथ्यते—

२५२ । नलोपः प्रातिपदिकान्तस्य । (८-२-७)

पदस्येत्यधिकृतम् । तच्च प्रातिपदिकेत्यंशस्य विशेषणम् । सापेक्षत्वेऽपि गमकत्वात् समासः । यथा 'रतेर्गृहीतानुनयेन' इत्यादौ । प्रातिपदिकान्तस्य नकारलोपो भवति, तच्चेत् प्रातिपदिकं पदसंज्ञमपि स्यात्; प्रातिपदिकाभिन्नस्य पदस्यान्त्यवर्णो नकारश्चेल्लुप्यत इति यावत् । प्रातिपदिकरूपं च पदं सुब्लोपे, हलादौ सुपि परे 'स्वादिष्वसर्वनामस्थाने' (१९२) वा संभवति। पञ्चान् + नाम् इति प्रकृते हलादिप्रत्ययस्य परत्वात् 'पञ्चान्' इति प्रातिपदिकाभिन्नं पदम्; तस्यान्त्यनकारलोपः, **पञ्चानाम्** इति रूपं सिध्यति । एवं राजभ्याम्, राजभिः, राजसु इत्यादिषु नलोपः । 'राजा' 'कर्म' इत्यादिप्रथमैकवचनानि हल्ङ्यादिसूत्रेण सुलोपात् प्रत्ययलोपेन प्रातिपदिकाभिन्नस्य पदस्य नलोपोदाहरणानि । नलोपस्यास्य असिद्धकाण्डगतत्वात् 'नामि' इति दीर्घेण इष्टसिद्धिर्न स्यादित्यपूर्वो 'नोपधायाः' इति विधिरारब्धः । कथं तर्हि 'राजाश्व' इत्यादिसंधिः सिध्यति? तत्र हि राजन् + अश्व इति स्थिते नलोपेन 'राज + अश्व' इति जाते षष्ठाध्यायविहितः सवर्णदीर्घो दृश्यते । इति चेत्—

२५३ । नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति । (८-२-२)

प्रातिपदिकान्तस्य नलोपो य उक्तः स सुब्विधौ, स्वरविधौ, संज्ञाविधौ, कृत्प्रत्यये परे यस्तुक् तद्विधौ च परम् असिद्धः, नान्यत्र । अतो राजाश्व इत्यादिसंधिविधौ नलोपः सिद्ध एव । सुब्विधौ तु

असिद्धत्वात् 'राजभ्याम्' इत्यादौ 'सुपि च' (२२६) इति दीर्घः, 'राजभिः' इत्यादौ 'अतो भिस ऐस्', 'राजसु' इत्यादौ 'बहुवचने झल्येत्' (२२७) इत्येत्वं च न भवति ॥

## २५४ । न ङिसंबुद्ध्योः । (८-२-८)

ङौ संबुद्धौ च नलोपो न स्यात् । यथा—

राजन् + स् — हल्ङ्यादिलोपे, राजन् ।

अत्र नकारो न लुप्यते। ङौ तु छन्दस्येवोदाहरणम्—'परमे व्योमन्' । अत्र छान्दसो ङिलोपः; परमे व्योम्नीत्यर्थः ॥

अथ प्रकृतो दीर्घविधिरेवानुबध्यते—

## २५५ । सर्वनामस्थाने चासंबुद्धौ । (६-४-८)

नान्तस्योपधाया दीर्घः संबुद्धिभिन्ने सर्वनामस्थाने परे । यथा—

राजन् + स् = राजान् + स्—हल्ङ्यादिलोपः, राजान्—'नलोपः प्रातिपदिकान्तस्य' (२५२) राजा । राजानौ; हे राजन् (असंबुद्धावित्युक्तेर्न दीर्घः) । राजानं राजानौ । क्लीबे शेरेव सर्वनामस्थानत्वात् कर्माणि इति दीर्घः ।

## २५६ । इन्हन्पूषार्यम्णां शौ । (६-४-१२)[1]

## २५७ । सौ च । (६-४-१३)

इन्नन्तानाम्, अन्नन्तेषु हन्, पूषन्, अर्यमन् इति शब्दानां च नान्तत्वात् प्राप्त उपधादीर्घः शौ सौ चैव, नान्यत्र सर्वनामस्थाने । यथा—

इन्—**भावी** भाविनौ भाविनः । भावि भाविनी **भावीनि** ।
हन्—**वृत्रहा** वृत्रहणौ वृत्रहणः; वृत्रहणम् । **पूजितवृत्रहाणि** नगराणि ।
पूषन्—**पूषा** पूषणौ पूषणः; पूषणम् । **उदितपूषाणि** उदयगिरिशृङ्गाणि ।
अर्यमन्—**अर्यमा** अर्यमणौ अर्यमणः । **उदितार्यमाणि** ।

नान्तेषु इन्नन्ता अन्नन्ताश्चैव अकृत्रिमाः शब्दाः सन्ति । तत्र अन्नन्तानां

---

१. सन्दर्भशुद्ध्यर्थं सूत्रद्वयमिदं क्रममुपेक्ष्य व्याख्यायते ।

सर्वनामस्थानमात्रे (असंबुद्धौ) दीर्घः; इन्नन्तानां सावेव। उन्नन्ता ऋन्नन्ताश्च कृत्रिमाः सन्ति शौ; तत्र सर्वेषां दीर्घः। हन्पूषार्यम्णां सावेव दीर्घः इति विशेषविधिः ॥

पुंस्त्रियोः सुब्यनो दीर्घः, इनः सौ, शौ तु सर्वतः।

इति संक्षेपः ॥

## २५८। सान्तमहतः संयोगस्य। (६-४-१०)

सकारान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने। 'उगिदचां सर्वनामस्थानेऽधातोः' (२६२) इति सान्तेषु केषांचित् नुमागमो विधास्यते। ते शब्दा अत्रोदाहरणम्। यथा—

विद्वस् + स्—नुम्—विद्वन्स् + स्—अनेन सूत्रेण दीर्घः, विद्वान्स् + स्—हल्ङ्यादिलोपः, विद्वान्स् इति जातं।

## २५९। संयोगान्तस्य लोपः। (८-२-२३)

पदस्येत्यधिकृतम्। संयोगान्तस्य पदस्य लोपः स्यात्, 'अलोऽन्त्यस्य' इत्यन्त्यवर्णस्य लोपः। इत्यसिद्धकाण्डगतेन सूत्रेण 'न्स्' इति संयोगे अन्त्यस्य सकारस्य लोपः, **विद्वान्**। नकारस्य पदान्तत्वात् झल्परकत्वाभावाच्च 'नश्चापदान्तस्य झलि' (९२) इत्यनुस्वारो नात्र भवति। अन्यत्र तु भवत्येव, **विद्वांसौ विद्वांसः, विद्वांसं विद्वांसौ**। 'महत्' इत्यस्याप्येवमेव—**महान् महान्तौ महान्तः, महान्तं महान्तौ** इति रूपाणि। अत्र नुम्नकारस्य 'नश्चापदान्तस्य'—इत्यनुस्वारे कृतेऽपि 'अनुस्वारस्य ययि परसवर्णः' (११५) इति परसवर्णेन नकार एव पुनश्च भवति। 'विद्वान्' 'महान्' इत्यादौ संयोगान्तलोपस्यासिद्धत्वान्न 'नलोपः प्रातिपदिकान्तस्य'। असिद्धकाण्डे नलोप एव हि प्रथमं विधीयते। 'राजा (न्)' इत्यादौ तु न संयोगान्तलोपः, किंतु हल्ङ्यादिलोप इति नकारो लुप्यते। नपुंसके **विद्वांसि, महान्ति** ॥

## २६० । अप्-तृन्-तृच्-स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्तॄणाम् । (६-४-११)

अप् इत्यस्य, तृन्तृच्प्रत्ययान्तानां स्वस्रादीनां च उपधाया दीर्घः स्यात् असंबुद्धौ सर्वनामस्थाने । तृन्तृचौ प्रत्ययौ; अनयोरर्थ एव भेदो न तु रूपे । सर्वेभ्यो धातुभ्यश्चैतौ भवतः । कृ—कर्तृ, भू—भवितृ, दृश्—द्रष्टृ इत्यादि । नप्तृनेष्ट्रादयः शब्दा अव्युत्पन्ना इति पृथगुपात्ताः । यथा—

[1]अप्—आपः— 'आपः स्त्री भूम्नि' इति बहुवचनमात्रेऽस्य प्रयोगः ।
तृन्, तृच्—कर्तारौ कर्तारः, हे कर्तः कर्तारं कर्तारौ ।
स्वसृ—स्वसारौ स्वसारः, हे स्वसः, स्वसारं स्वसारौ ।
नप्तृ—नप्ता नप्तारौ नप्तारः, हे नप्तः नप्तारं नप्तारौ ।

सौ एषां कर्ता, स्वसा इत्यादि रूपमनङादेशेन वक्ष्यते । 'ऋतो ङि सर्वनामस्थानयोः' (२३४) इति गुणेन कर्तर्+औ इति जाते दीर्घः । संबुद्धौ गुणानन्तरं हल्ङ्यादिलोपेन 'कर्तर्' इति जाते अवसाने रेफस्य विसर्गः । [2]तृन्तृजादिभिन्नानां तु पितरौ पितरः; मातरौ मातर इत्यादि ॥

## २६१ । अत्वसन्तस्य चाधातोः (सौ) । (६-४-१४)

अत्वन्तस्य असन्तस्य च उपधाया दीर्घोऽसंबुद्धौ सौ परे न तु धातोः । 'अतु' इत्यत्र उकार इत्; तेन 'मतुप्' 'क्तवतु' इत्यादयः प्रत्यया गृह्यन्ते, उकारानुबन्धेन पठितं प्रातिपदिकं च । यथा सर्वादिगणे 'भवतु' इति । असन्तः सर्वविधोऽपि गृह्यते । यथा—

---

१. अस्य प्रक्रियाविशेषोऽन्यत्रोक्तः । **अपो भि** (तः) (७-४-४८) । अप्शब्दस्य तकारोऽन्तादेशः स्यात् भादौ प्रत्यये परे । तेन—आपः, अपः, अद्भिः, अद्भ्य, अद्भ्यः, अपाम्, अप्सु इति रूपाणि ।

२. उद्गातृशब्दस्याप्ययं दीर्घ इष्यते—'होतृपोतृनेष्टोद्गातारः' इति भाष्यकारप्रयोगात् ।

**अतु**—बुद्धिमत् + स्—दीर्घः; बुद्धिमात् स्—'उगिदचां......' (२६२) इति नुम्, बुद्धिमान्त् स्—हल्ङ्यादिलोपसंयोगान्तलोपौ, बुद्धिमान्। एवं कृतवान्, भवान् इत्यादि।

**अस्**—वेधस्+स्—वेधास् स् हल्ङ्यादिलोपः वेधाः। एवं महायशाः इत्यादि।

**अथात्र बहुत्रान्यत्रापि परामृष्टो नुम्-विधिरुच्यते—**

## २६२। उगिदचां सर्वनामस्थानेऽधातोः। (७-१-७०)

**धातुवर्जमुगिताम् लुप्तनकारस्य अञ्चुधातोश्चाङ्गस्य सर्वनामस्थाने परे नुमागमः स्यात्। 'उगितश्च' (१४१) इति सूत्रव्याख्याने उगितः परिगणिताः दृश्यन्ताम्। मित्त्वादन्त्यादचः पर आगमः; उकार उच्चारणार्थः, तेन 'न्' इत्येवागमस्वरूपम्। यथा—**

| | | | |
|---|---|---|---|
| बुद्धिमत्— | बुद्धिमान् | बुद्धिमन्तौ | इत्यादि। प्रक्रियोक्ता। |
| कृतवत्— | कृतवान् | कृतवन्तौ | ,, |
| तावत्— | तावान् | तावन्तौ | ,, |
| विद्वस्— | विद्वान् | विद्वांसौ | ,, |
| महीयस्— | महीयान् | महीयांसौ | ,, |
| कुर्वत्— | कुर्वन् | कुर्वन्तौ | अत्वन्तत्वाभावान्न दीर्घः। |
| **सर्वनाम**-भवत्— | भवान् | भवन्तौ | 'भवतु' इति उदित् पठितः। |
| शतृप्रत्ययान्तस्य तु | भवन् | भवन्तौ | इत्येव। |

अथ अञ्चुधातौ नुमागम उदाह्रियते। ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' इति सूत्रेण अञ्चुधातोः 'क्विन्' इति कृत्प्रत्ययो भवति, स च सर्वलोपी प्रत्ययः प्रकृतिगतमनुनासिकमपि लोपयति। तथा च प्रपूर्वः अञ्चुधातुः क्विन्प्रत्यये प्राच् इति रूपमापद्यते। एवमेव प्रत्यच्, पराच्, उदच् इत्यादि। प्राच् + स् इति स्थिते नुम्, प्रान्च् + स्—हल्ङ्यादिलोपः, प्रान्च्—संयोगान्तलोपः, प्रान्। एवं स्थिते क्विन्प्रत्ययान्तत्वाद्विशेषकार्यम्—

## २६३। क्विन्प्रत्ययस्य कुः। (८-२-६२)

---

१. अञ्चु, अङ्क, लुण्ट, स्रंस इत्यादिषु धातुषु उपधाभूतोऽनुनासिकः सर्वोऽपि नकारस्य विकार एवेति सिद्धान्तः।

क्विन्प्रत्ययान्तस्य कवर्गोऽन्तादेशः पदान्ते। अनेन कुत्वे प्राङ् इति रूपसिद्धिः। प्राञ्चौ प्राञ्चः; प्राञ्चं प्राञ्चौ। एवं प्रत्यङ् प्रत्यञ्चौ; उदङ् उदञ्चौ इत्यादि। क्लीबे—बुद्धिमन्ति, तावन्ति, कृतवन्ति, विद्वांसि, महीयांसि, कुर्वन्ति, प्राञ्चि, प्रत्यञ्चि इत्यादि।

'**वर्तमाने पृषत्-बृहत्-महत्-जगत्-शतृवच्च**' इत्युणादिसूत्रे 'शतृवच्च' इत्यतिदेशात् नुम्, 'सान्तमहतः...' (२५८) इति दीर्घश्च—महान्–महान्तौ–महान्तः। क्लीबे महान्ति। स्त्रियां महती इति ङीप्।

## २६४। नपुंसकस्य झलचः। (७-१-७२)

**झलन्तस्याजन्तस्य च क्लीबस्य नुम् सर्वनामस्थाने। यथा—**

बृहत् — बृहन्ति। रुध्—रुन्धि। भ्राज्—भ्राञ्जि।
तादृश् — तादृंशि —'नश्चापदान्तस्य' इत्यनुस्वारः।
यशस् — यशांसि ,,
धनुस् — धनूंषि 'सान्तमहतः संयोगस्य' (२५८) इति दीर्घः।
महत् — महान्ति ,,
धन — धनन् + इ—नुमागमे नान्तत्वलाभात् 'सर्वनामस्थाने चासंबुद्धौ' (२५५) इति दीर्घः, धनानि। एवं वारि—वारीणि; मृदु–मृदूनि; कर्तृ–कर्तॄणि।

**प्रत्यु०**—('झलचः' किम्?) वार्—वारि; विमलदिव्–विमलदिवि।

## २६५। इकोऽचि विभक्तौ। (७-१-७३)

**इगन्तस्य नपुंसकस्य अजादौ विभक्तौ नुम्। यथा—**

| | | | | | |
|---|---|---|---|---|---|
| मृदु—मृदुनी | मृदुना | मृदुने | मृदुनः | मृदुनोः | मृदुनि। |
| शुचि—शुचिनी | शुचिना | शुचिने | शुचिनः | शुचिनोः | शुचिनि। |
| कर्तृ—कर्तृणी | कर्तृणा | कर्तृणे | कर्तृणः | कर्तृणोः | कर्तृणि। |

## २६६। तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य। (७-१-७४)

तृतीयादिष्वजादिषु विभक्तिषु भाषितपुंस्कमिगन्तं क्लीबं पुलिङ्ग इव रूपं लभते गालवस्याचार्यस्य मतेन। नुमभावो ह्रस्वाभावश्च पुलिङ्ग-कार्यम्। नुमभावे घिसंज्ञया 'आङो नास्त्रियाम्' 'घेर्ङिति' 'अच्च घेः' इति नाभावगुणादयः। नाभावे रूपभेदो न भवतीति नोदाह्रियते। यथा

| | | | |
|---|---|---|---|
| शुचि—शुचये, | शुचेः ; | शुच्योः, | शुचौ । |
| मृदु—मृदवे, | मृदोः ; | मृद्वोः, | मृदौ । |
| कर्तृ—कर्त्रे, | कर्तुः ; | कर्त्रोः, | कर्तरि । |

ह्रस्वाभावमुदाहर्तुं ह्रस्वविधिरुच्यते ।

## २६८ । ह्रस्वो नपुंसके प्रातिपदिकस्य । (१-२-४७)

नपुंसके दीर्घान्तस्य प्रातिपदिकस्य ह्रस्वः स्यात् ।

| | | | | |
|---|---|---|---|---|
| श्रीपा = श्रीप । | श्रीपम् | श्रीपे | इत्यादि | धनवत् । |
| ग्रामणी = ग्रामणि । | ग्रामणि | ग्रामणिनी | ,, | वारिवत् । |
| खलपू = खलपु । | खलपु | खलपुनी | ,, | मृदुवत् । |

ह्रस्वरहितानाम् एचाम् 'एच इग्घ्रस्वादेशे' (२७) इति ह्रस्वस्थाने इक् भवति । एदन्तः शब्दोऽप्रसिद्धः । यथा—

| | | | | |
|---|---|---|---|---|
| सुद्यो = सुद्यु । | सुद्यु | सुद्युनी | इत्यादि | मधुवत् । |
| सुरै = सुरि । | सुरि | सुरिणी | ,, | वारिवत् । |
| सुनौ = सुनु । | सुनु | सुनुनी | ,, | मधुवत् । |

अथ पुंवद्भावोदाहरणशेषः—

| | | | | | |
|---|---|---|---|---|---|
| ग्रामणि | ग्रामणिना | ग्रामणिने | ग्रामणिनः | ग्रामणिनोः | ग्रामणिनि । |
| | ग्रामण्या | ग्रामण्ये | ग्रामण्यः | ग्रामण्योः | ग्रामण्याम् । |

इति रूपाणि । भाषितः पुमान् येन स्यात्, तत् भाषितपुंस्कं, समानेऽर्थे पुल्लिङ्गप्रयोगार्हम्; विशेष्यनिघ्नमित्यर्थः । 'भाषितपुंस्कम्' इत्युक्तेः वारि, त्रपु इत्यादीनां नित्यक्लीबानां विशेष्याणां नायं विकल्पः ॥

## २६८ । अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः । (७-१-७५)

नुमोऽपवादः । अस्थ्यादीनामजादिषु तृतीयादिषु अनङ् आदेशः स्यात् । स च उदात्त इति स्वरविधिः । अनेकाल्त्वेऽपि ङित्त्वादन्त्यादेशः; 'अन्' इत्येवादेशस्वरूपम् ॥

अस्थि + आ—अस्थन् + आ—'अल्लोपोऽनः' (२९९) इति अनः अकारस्य लोपो वक्ष्यते, अस्थ्ना ; अस्थ्ने, अस्थ्नः, अस्थ्नोः, अस्थ्नि, अस्थनि । एवम्—दध्ना, सक्थ्ना, अक्ष्णा इत्याद्यन्येषामपि ।

## २६९ । नाभ्यस्ताच्छतुः । (७-१-७८)

अभ्यस्तात् परस्य शतृप्रत्ययस्य नुमागमो न स्यात् । शतृप्रत्ययस्य उगित्त्वात् 'उगिदचाम्.......' (२६२) इति नुमः प्राप्तिः । अभ्यस्तो नाम द्विरुक्त्या आवृत्ताक्षरो धातुः ; जक्ष्, जागृ, शास्, दरिद्रा, चकास् इति धातुपञ्चकं च ॥

| | | | | | |
|---|---|---|---|---|---|
| दा—ददत् | ददतौ | ददतः । | शास्—शासत् | शासतौ | शासतः । |
| भृ—बिभ्रत् | बिभ्रतौ | बिभ्रतः । | जागृ—जाग्रत् | जाग्रतौ | जाग्रतः । |

## २७० । वा नपुंसकस्य । (७-१-७९)

अभ्यस्तात् परस्य नपुंसकस्य शतृप्रत्ययस्य नुमागमो वा स्यात् ।

| | | | |
|---|---|---|---|
| दा—ददन्ति, | ददति । | शास्—शासन्ति, | शासति । |
| भृ—बिभ्रन्ति, | बिभ्रति । | जागृ—जाग्रन्ति, | जाग्रति । |

## २७१ । आच्छीनद्योर्नुम् । (७-१-८०)

अवर्णान्तात् अङ्गात् परस्य शतृप्रत्ययस्य नुम् वा स्यात् शीनद्योः परयोः । नदीति स्त्रियां ङीप्रत्ययस्य लक्षकम् । यथा—

| | | | |
|---|---|---|---|
| तुद्—तुद + अत् = तुदत् | —तुदन्ती, | तुदती | (कुले) । |
| | — ,, | ,, | (ब्राह्मणी) । |
| या —या + अत् = यात् | —यान्ती, | याती | (कुले) । |
| | — ,, | ,, | (ब्राह्मणी) । |
| कृ —करिष्य + अत् = करिष्यत् | —करिष्यन्ती, | करिष्यती | (कुले) । |
| | — ,, | ,, | (ब्राह्मणी) । |

प्रत्यु०—('आत्' किम् ?) कृ—कुरु + अत् = कुर्वत्—कुर्वती । सु—सुनु + अत् = सुन्वत्—सुन्वती । अद्—अद् + अत् = अदत्—अदती ।

## २७२ । शप्श्यनोर्नित्यम् । (७-१-८१)

शप्, श्यन् इति द्वावपि विकरणप्रत्ययौ अकारयकाररूपौ । आभ्यां परस्य शतुः नित्यं नुमागमः । भूवादिर्व्युत्पन्नधातुश्च शब्विकरणः । दिवादिः श्यन्विकरणः । यथा—

भू—भव + अत् = भवत्—भवन्ती चिकीर्षन्ती (कुले), भवन्ती चिकीर्षन्ती (ब्राह्मणी)। दिव्—दीव्य + अत् = दीव्यत्—दीव्यन्ती (कुले), दीव्यन्ती (ब्राह्मणी)।

**२७३। सावनडुहः। (७-१-८२)**

सौ परेऽनडुहोऽङ्गस्य नुमागमः। इदमुपरि उदाहरिष्यामः।

**२७४। दिव औत्। (७-१-८४)**

दिव्-शब्दस्य औदित्यादेशः सौ। यथा—दिव् + स् = दिऔ + स् = द्यौः। दिव् शब्दस्य प्रक्रियान्तरमन्यप्रकरणोक्तम्—

**२७५। दिव उत्। (७-१-१३१)**

दिवः अन्तादेश उकारः स्यात् पदान्ते। यथा—

दिव् + भ्यां = दिउ + भ्यां = द्युभ्यां—द्युभिरित्यादि।

**२७६। पथिमथ्यृभुक्षामात्। (७-१-८५)**

पथिन्, मथिन्, ऋभुक्षिन् इत्येतेषामङ्गानाम् आकारोऽन्तादेशः स्यात् सौ।

**२७७। इतोऽत् सर्वनामस्थाने। (७-१-८६)**

पथ्यादीनामिकारस्य अकारादेशः स्यात् सर्वनामस्थाने।

**२७८। थो न्थः। (७-१-८७)**

पथिमथोः थकारस्य न्थादेशः स्यात् सर्वनामस्थाने; अथ सूत्रत्रयमुदाह्रियते—

पथिन् + स्—आत्वं—पथिआ + स्—इकारस्य अत्वं—पथ + आ + स्—न्थत्वं—पन्था + स् = पन्थाः। एवं मन्थाः, ऋभुक्षाः।

पथिन् + औ—अत्वं—पथन् + औ—थो न्थः—पन्थन् + औ—'सर्वनामस्थाने चासम्बुद्धौ' (२५५) इत्युपधादीर्घः—पन्थानौ, पन्थानः। पन्थानं, पन्थानौ। एवं मन्थानौ, ऋभुक्षाणौ इत्यादि।

**२७९। भस्य टेर्लोपः। (७-१-८८)**

पथ्यादीनां भसंज्ञानां टेर्लोपः स्यात्। यथा—

पथिन् + अस् = पथः। पथा, पथे, पथः, पथोः, पथि। प्रातिपदिकान्तलोपेन (२५२) पथिभ्यां, पथिभ्यः, पथिषु। एवं—मथः, मथे, मथिभ्यां—भ्यः। ऋभुक्षः, ऋभुक्षे, ऋभुक्षिभ्यां—भ्यः इत्यादि।

२८० । **पुंसोऽसुङ्** । (७-१-८९)

पुंस्शब्दस्य असुङादेशः स्यात् सर्वनामस्थाने । ङित्वात् अन्तादेशः; उकार इत् 'उगिदचां ...' (२६२) इति नुमर्थः । यथा—

पुंस् + स् = पुमस् + स्—नुम्, पुमन्स् + स्—'सान्तमहतः संयोगस्य' (२५८) इति दीर्घः, पुमान्स् + स्—सुलोपसंयोगान्तलोपौ, पुमान् । 'नश्चापदान्तस्य झलि' (९२) इत्यनुस्वारः, पुमांसौ, पुमांसः । पुमांसम्, पुमांसौ, पुंसः । पुंसा । संयोगान्तलोपः, पुंभ्यां, पुंभिः । पुंसे,.........पुंसु । संबुद्धौ दीर्घाभावात् 'हे पुमन्' ।

२८१ । **गोतो णित्** [ओतो णिदिति वक्तव्यम्] । (७-१-९०)

ओदन्तात् परं सर्वनामस्थानं णिद्वत् स्यात् । णित्त्वप्रयोजनं चान्यत्रोक्तम्—

२८२ । **अचो ञ्णिति** । (७-१-११५)

अजन्ताङ्गस्य वृद्धिः स्यात् ञिति णिति च प्रत्यये परे । यथा—

गो—णिद्वद्भावाद्वृद्धिः, गौः-गावौ-गावः । हे गौः । 'औतोऽम्शसोः' (२०३) इति अंशसोराकार एकादेशः, गां-गावौ-गाः । 'ङसिङसोश्च' (२००) इति पूर्वरूपं, गोः । एवं द्यौः-द्यावौ-द्यावः । इत्यादि ।

२८३ । **सख्युरसम्बुद्धौ** । (७-१-९२)

सखिशब्दात् परं सर्वनामस्थानं णिद्वत् स्यात् न तु सम्बुद्धौ । णिद्वद्भावाद्वृद्धिः । यथा—

सखायौ-सखायः । असम्बुद्धावित्युक्तेर्न णित्त्वम्; 'ह्रस्वस्य गुणः' (२३२) इति गुणः; 'एङ् ह्रस्वात्' (२२४) इति सम्बुद्धिलोपः, हे सखे; सखायम्-सखायौ-सखीन् । 'असखि' (१८७) इति निषेधेन घिसंज्ञाभावान्न तत्कार्याणि नाभावगुणादीनि । सख्या-सखिभ्याम्-सखिभिः । सख्ये; 'ख्यत्यात् परस्य' (२०२) इत्युत्वं, सख्युः । सखीनाम् । 'औत्' (२४१) इति ङेरौत्वं, सख्यौ-सख्योः-सखिषु । सौ तु विशेष उच्यते—

२८४ । **अनङ् सौ** । (७-१-९३)

असम्बुद्धौ सौ परे सखिशब्दस्य अनङादेशः स्यात् । अकारस्योच्चारणार्थत्वात् 'अन्' इत्येवादेशस्वरूपम् । ङित्त्वादन्त्यस्य भवति । यथा—

सखि + स्—सखन् + स् । इदानीं नान्तत्वात् 'राजा' इतिवत् उपधादीर्घसुलोप-नलोपैः **सखा** इति रूपनिष्पत्तिः ।

## २८५ । ऋदुशनस्पुरुदंसोऽनेहसां च । (७-१-९४)

**ऋकारान्तानाम् उशनस्, पुरुदंसस्, अनेहस्—इति शब्दानां च अनङादेशः असम्बुद्धौ सौ परे । यथा—**

कर्तृ—कर्ता सखा इतिवत् । 'ऋतो ङि...' (२३४) इति गुणः, 'अप्तृन्...' (२६०) इति दीर्घश्च, कर्तारौ–कर्तारः । हे कर्तः । कर्तारम्–कर्तारौ–कर्तॄन्; कर्त्रा–कर्तृभ्याम्–कर्तृभिः । कर्त्रे । 'ऋत उत्' (२०१), कर्तुः । कर्त्रोः–कर्तॄणाम् । गुणः, कर्तरि । कर्तृषु । पितृमात्रादीनामव्युत्पन्नशब्दानां तु 'अप्तृन्' इति दीर्घाभावात् पिता–पितरौ–पितरः इत्यादि ।

उशनस्—उशना । पुरुदंसस्—पुरुदंसा । अनेहस्—अनेहा ।

**प्रत्यु०**—(सम्बुद्धौ तु) हे उशनः, पुरुदंसः, अनेहः ।

**॥ * ॥ उशनसः सम्बुद्धावनङ् नलोपश्च वा वाच्यः ॥**

यथा—अनङि हे उशनन्; नलोपे हे उशन । एवं च उशनस्शब्दस्य रूपाणि—उशना–उशनसौ–उशनसः; हे उशनन्, उशनः, उशन । उशनसम्–उशनसौ–उशनसः; उशनसा—पदान्तत्वात् रुत्वम्, उत्वं च, उशनोभ्याम्, उशनोभिः । उशनसे, उशनसः । उशनसोः । उशनसाम् । उशनसि । उशनस्सु ।

## २८६ । तृज्वत् क्रोष्टुः । (७-१-९५)

**क्रोष्टुशब्दस्तृजन्तवत् स्यात् असम्बुद्धौ सर्वनामस्थाने परे । क्रोष्टुशब्दस्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः । तृज्वद्भावात् कर्तृशब्दवद्रूपाणि—**

क्रोष्टा–क्रोष्टारौ–क्रोष्टारः । सम्बुद्धौ तदभावात् गुरुशब्दवत्—हे क्रोष्टो । क्रोष्टारम्–क्रोष्टारौ; शसि क्रोष्टून् ।

## २८७ । स्त्रियां च । (७-१-९६)

**क्रोष्टुशब्दस्तृजन्तवत् स्यात् । तेन 'ऋन्नेभ्य...' (१४०) इति ङीप्—**

क्रोष्ट्री–क्रोष्ट्र्यौ–क्रोष्ट्र्यः । हे क्रोष्ट्रि ।
क्रोष्ट्रीम्–क्रोष्ट्र्यौ–क्रोष्ट्रीः ।
क्रोष्ट्र्या–क्रोष्ट्रीभ्याम्–क्रोष्ट्रीभिः ।
क्रोष्ट्र्यै । क्रोष्ट्र्याः । क्रोष्ट्रीणाम्; क्रोष्ट्र्याम् ।

**इति गौरीशब्दवन्नदीरूपाणि ।**

**सुखार्थं नदीकार्याणि संगृह्यन्ते—**

**सम्बुद्धौ ह्रस्वता, ङेराम्,-आड्योगो ङसि-ङे ङसाम् ।**
**आमि नुट् चेति चत्वारि नदीकार्याणि सुप्स्विह ॥**

२८८ । विभाषा तृतीयादिष्वचि । (७-१-९७)

अजादिषु तृतीयादिविभक्तिषु क्रोष्टुशब्दो वा तृजन्तवत् स्यात् । तेन— क्रोष्ट्रा, क्रोष्ट्रे, क्रोष्टुः, क्रोष्ट्रोः, क्रोष्टरि इति कर्तृशब्दवद्रूपाणि । तृज्वद्भावाभावे हलादिविभक्तिषु च गुरुशब्दवत् क्रोष्टुना, क्रोष्टुभ्यां, क्रोष्टुभिः, क्रोष्टवे इत्यादि-रूपाणि च । आमि प्रथममेव नुडागमकरणेन अजादित्वाभावात् क्रोष्टूनाम् इत्येव ।

२८९ । चतुरनडुहोरामुदात्तः । (७-१-९८)

चतुर्, अनडुह अनयोः सर्वनामस्थाने आमागमः । स चोदात्त इति स्वर-विधिः । मित्वादन्त्यादचः पर आगमः । यथा—

चतुआर् + अस् = चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः । 'षट्चतुर्भ्यश्च' (२४७) इति नुट्, चतुर्णाम् । चतुर्षु । अनडुह् + स—आम्, अनड्वाह् + स्— 'सावनडुहः' (२७३) इति नुम्, अनड्वान् ह् + स्—सुलोपसंयोगान्तलोपौ, अनड्वान् । अनड्वाहौ—अनड्वाहः । सम्बुद्धौ तु—

२९० । अम् सम्बुद्धौ । (७-१-९९)

सम्बुद्धौ अनडुह् इत्यस्य अम् इति ह्रस्व आगमः ।

हे अनड्वन् । अनड्वाहम्—अनड्वाहौ—अनडुहः । अनडुहा । पदसंज्ञायां 'वसुस्रंसु-ध्वंस्वनडुहां दः' (७३) इति दत्वम्, अनडुद्भ्याम्, अनडुद्भिः ।......अनडुत्सु ।

---

अथ प्रकरणान्तरोक्तान्यङ्गकार्याणि ॥

२९१ । अर्वणस्त्रसावनञः । (६-४-१२७)

'अर्वन्' इत्यङ्गस्य 'तृ' इत्यादेशः स्यात् न तु सौ परे, नापि नञः परस्य । ऋकार इत् 'उगिदचां...' (२६२) इति नुमर्थः । यथा—

अर्वा अर्वन्तौ अर्वन्तः । हे अर्वन् ।
अर्वन्तम् अर्वन्तौ अर्वतः । अर्वता अर्वद्भ्याम्......अर्वत्सु ।

स्त्रियाम् उगित्वात् ङीप्—अर्वती अर्वत्यौ अर्वत्यः ।

प्रत्यु०—('अनञः' किम्?) अनर्वा अनर्वाणौ......यज्ववत् ।
('अङ्गस्य' किम्?) अर्वरथः—'नलोपः प्रातिपदिकान्तस्य' (२५२)

---

## अथ भसंज्ञाकार्याणि ॥

### २९२ । भस्य । (६-४-१२९)

अधिकारसूत्रमिदम् ।

### २९३ । वसोः संप्रसारणम् । (६-४-१३१)

वसुप्रत्ययान्तस्य भस्य संप्रसारणं स्यात् । किं नाम संप्रसारणम् ?—

### २९४ । इग्यणः संप्रसारणम् । (१-१-४५)

यणः स्थाने आदिश्यमान इक् संप्रसारणसंज्ञः स्यात् । यत्र संप्रसारणं विधीयते तत्र यवरलानपनीय तत्स्थाने इ-उ-ऋ-ऌकाराः कर्तव्या इत्यर्थः । अथ संप्रसारणकरणे नियमाः—'एकः पूर्वपरयोः' इत्यधिकारे

### २९५ । संप्रसारणाच्च (अचि पूर्वः) । (६-१-१०८)

संप्रसारणादचि परे पूर्वरूपमेकादेशः स्यात् । पूर्वः संप्रसारणस्वर इक् । तथा च यवरलानामुत्तरस्वरसहितानामक्षररूपाणामेव इ-उ-ऋ-ऌकाराः कार्या इति फलितम् ।

### २९६ । न संप्रसारणे संप्रसारणम् । (६-१-३७)

संप्रसारणे परे पूर्वस्य यणः संप्रसारणं न स्यात् । संप्रसारणार्हस्य यणोऽनेकत्वे परस्य यण एव संप्रसारणं, नान्येषामिति भावः । तथा चानुपदमेव विधीयमाने 'युवन्'-शब्दस्य संप्रसारणे वकारस्यैव संप्रसारणं, न तु युकारस्य । अथ प्रकृतं सूत्रमुदाह्रियते—

विद्वस् इति वसुप्रत्ययान्तः शब्दः । तस्य शसि विद्वस् + अस् इति स्थिते वसुप्रत्ययवकारस्याक्षरस्यान्तरतम्यात् उकारः संप्रसारणम्, विदुस् + अस्—वक्ष्यमाणं षत्वम्, विदुषः । विदुषा, विदुषे, विदुषः२, विदुषोः२, विदुषाम्, विदुषि । पदसंज्ञायां तु 'वसुस्रंसु......' (७३) इति दत्वं, विद्वद्भ्याम्, विद्वद्भिः । विद्वद्भ्यः । विद्वत्सु । सर्वनामस्थाने 'उगिदचाम्' (२६२) इति नुम्, 'सान्तमहतः......' (२५८) इति दीर्घश्च, विद्वान्–विद्वांसौ–विद्वांसः । हे विद्वन्, विद्वांसम्, विद्वांसौ ।

एवमन्येषामपि शब्दानां सर्वनामस्थानकार्यं, पदकार्यं, भकार्यं च पृतक्पृथग्वेदितव्यम् ॥

## २९७। वाह ऊठ्। (६-४-१३२)

वाह् इत्येतदन्तस्य भस्य 'ऊठ' इत्येवंरूपं संप्रसारणं स्यात्। 'ऊठ्' इति रूपनिर्देशः 'एत्येधत्यूठ्सु' (५०) इति पृथक्कृत्य निर्देशार्थः। यथा—

विश्वं वहतीति विश्ववाह्। तस्य शसि—विश्ववाह् + अस् इति स्थिते वकारस्य ऊकारः, विश्व ऊहः—'एत्येधत्यूठसु' (५०) इति गुणापवादो वृद्धिः; विश्वौहः। विश्वौहा, विश्वौहे, विश्वौहः, विश्वौहोः, विश्वौहाम्, विश्वौहि। पदसञ्ज्ञायां 'हो ढः' (६३) इति ढत्वे जश्त्वे च विश्ववाड्भ्याम्, विश्ववाड्भिः इत्यादि। सर्वनामस्थाने विशेषविधेरभावात् विश्ववाट्–विश्ववाहौ–विश्ववाहः इत्यादि।

## २९८। श्वयुवमघोनामतद्धिते। (६-४-१३३)

श्वन्, युवन्, मघवन् इत्येतेषां भसंज्ञानां संप्रसारणं स्यात्, न तु तद्धिते। यथा—

श्वन्—शुनः, शुना, शुने, शुनः, शुनोः, शुनां, शुनि।
युवन्—यूनः, यूना इत्यादि।
मघवन्—मघोनः, मघोना इत्यादि।

प्रत्यु०—('अतद्धिते' किम्?) यूनो भावो यौवनम् (युवन् + अ) तद्धितोऽण्।

## २९९। अल्लोपोऽनः। (६-४-१३४)

अन्नस्तस्य भस्य अनः अकारलोपः स्यात्। यथा—

राजन् + अस्—राज् न् + अस्—श्चुत्वं, राज्ञः।
राज्ञा, राज्ञे, राज्ञः, राज्ञोः, राज्ञाम्।

## ३००। विभाषा ङिश्योः। (६-४-१३६)

ङौ श्यां च परतः उक्तं वा। यथा—

ङौ—राज्ञि—राजनि। श्याम्—(नाम—नाम्नी, नामनी—नामानि।)

## ३०१। न संयोगाद्वमन्तात्। (६-४-१३७)

वान्तान्मान्ताद्वा संयोगात् परस्य अनो भस्याल्लोपो न स्यात्। यथा—

ब्रह्मन्—ब्रह्मणा; अथर्वन्—अथर्वणा।

### ३०२ । अचः । (६-४-१३८)

'अच्' इति लुप्तनकारस्याञ्चतेर्ग्रहणम्; तदन्तस्य भस्याल्लोपः यथा—

प्रति अच् + अस—अल्लोप, प्रतिच् + अस् इति स्थिते—

### ३०३ । चौ (दीर्घः) । (६-३-१३८)

'अञ्चु' इत्युदिद्धातुः । तस्याकारनकारयोर्लोपे 'चु' इत्यवशिष्यते । तस्य सप्तम्येकवचनं 'चौ' इति । अकारनकारयोर्लोपात् 'च्' इत्येवं-रूपतां प्राप्ते अञ्चतौ परे पूर्वस्य दीर्घः स्यात् इति दीर्घे—प्रतीचः इति रूपसिद्धिः । प्रतीचा, प्रतीचे, प्रतीचः इत्यादि ॥

**प्रत्यु०**—('भस्य' किम्?) प्रत्यग्भ्यां, प्रत्यग्भिः, प्रत्यग्भ्यः, प्रत्यक्षु ।

सर्वनामस्थाने 'उगिदचां......' इति नुम्—

प्रत्यङ्–प्रत्यञ्चौ–प्रत्यञ्चः । प्रत्यञ्चम्–प्रत्यञ्चौ । एवम्—प्राङ्–प्राञ्चौ...प्राचः । प्राचा प्राग्भ्यां...प्राक्षु । सम्यञ्च्—सम्यङ् सम्यञ्चौ[1]...समीचः । समीचा । सम्यग्भ्यां...सम्यक्षु ।

**क्लीबे**—प्रत्यक् प्रतीची प्रत्यञ्चि । पुनस्तद्वत् । शेषं पुंवत् ।

| | | | | |
|---|---|---|---|---|
| प्राक् | प्राची | प्राञ्चि | ,, | ,, |
| सम्यक् | समीची | सम्यञ्चि | ,, | ,, |

### ३०४ । उद ईत् । (६-४-१३९)

उद् इत्युपसर्गात् परस्य भस्य 'अचः' अकारस्य लोपापवाद ईदादेशः । यथा—

उदच्—उदीचः, उदीचा, उदीचे इत्यादि ।

सर्वनामस्थाने पदसंज्ञायां च प्रत्यग्वत् ।

अञ्चतिप्रकरणादन्यत्र विहितमपि तत्कार्यमुच्यते—

### ३०५ । तिरसस्तिर्यलोपे । (६-३-९४)

---

१. 'समः समि' (६-३-९३) इति सूत्रेण क्विप्रत्ययान्तेऽञ्चतौ 'सम्' इत्युपसर्गस्य 'समि' इत्यादेशो विधीयते । एवम् 'सहस्य सध्रि' इति सूत्रमप्यत्रानुसन्धेयम् ।

'तिरस्' इत्यव्ययस्य 'तिरि' इत्यादेशः स्यात् अकारलोपरहिते क्विप्रत्ययान्ते अञ्चतौ परे । अकारलोपो भसंज्ञायामेव; अतः सर्वनामस्थाने पदसंज्ञायां च तिर्यादेशः । यथा —

तिर्यङ्—तिर्यञ्चौ–तिर्यञ्चः; तिर्यञ्चं–तिर्यञ्चौ–तिरश्चः; तिरश्चा–तिर्यग्भ्यां...... ...तिर्यक्षु ।

## ३०६ । आतो धातोः । (६-४-१४०)

आकारान्तस्य धातोर्भस्य लोपः स्यात् । 'अलोऽन्त्यस्य' इत्यन्त्यवर्णस्य आकारस्यैव लोपः । यथा—

विश्वपा—विश्वपौ–विश्वपा–विश्वपे–विश्वपः–विश्वपोः–विश्वपां–विश्वपि । पदसंज्ञायां— विश्वपाभ्यां, विश्वपाभिः, विश्वपाभ्यः । विश्वपासु । सर्वनामस्थाने विश्वपाः–विश्वपौ–विश्वपाः । हे विश्वपाः । विश्वपां, विश्वपौ । पुंस्त्रियोस्तुल्यं रूपम्, क्लीबे ह्रस्वात् विश्वपं·विश्वपे इत्यादि धनवत् । क्विप्प्रत्ययान्तस्य आदन्तधातोर्भाषायां विरल एव प्रयोगः ।

---

## अथान्यतो विहितान्यङ्गकार्याणि ॥

## ३०७ । अष्टन आ विभक्तौ । (७-२-८४)

अष्टन्शब्दस्य आकारोऽन्तादेशः स्यात् विभक्तौ । विभक्तिस्वरविधौ 'अष्टनो दीर्घात्' (६-१-१२७) इति सूत्रे दीर्घग्रहणात् ज्ञायते वैकल्पिकमिदमष्टन आत्वमिति । 'अष्टाभ्य औश्' (२१५) इति जश्शसोरौश्त्वविधौ कृतात्वस्याष्टन्शब्दस्य निर्देशात् आत्वपक्षे जश्शसोरौश्; आत्वाभावपक्षे तु 'षड्भ्यो लुक्' (२१६) इति तयोः (जश्शसोः) लुक् । तथा च द्विविधा रूपावलिः—

आत्वे—अष्टौ, अष्टौ, अष्टाभिः, अष्टाभ्यः[२], अष्टानाम्, अष्टासु ।

तदभावे—अष्ट, अष्ट, अष्टभिः, अष्टभ्यः[२], अष्टानाम्, अष्टसु ।

तत्र आमि परे 'अष्टानाम्' इति तुल्यं रूपं[१] आत्वाभावेऽपि 'नोपधायाः' (२५१) इति दीर्घप्रसङ्गात् । 'षट्चतुर्भ्यश्च' (२४७) इति नुट् च विहितः । एवम्—

---

१. अष्टन् + आम् इति स्थिते 'अष्टन आ विभक्तौ' इत्यात्वं 'षट्चतुर्भ्यश्च' इति नुट् च समं प्राप्तौ । तत्रामि प्रतिपदोक्तत्वान्नित्यादपि दीर्घात् प्रथमं नुट् । पश्चाद्विभक्तिसामान्यकार्यमात्वम् । एवं निर्वाहे दीर्घविधौ हलीत्यपकर्षणं भाषामर्यादायामदृष्टचरं कुशकाशावलम्बनमेव ।

पञ्च, पञ्च, पञ्चभिः, पञ्चभ्यः, पञ्चभ्यः, पञ्चानाम्, पञ्चसु ।

इतिवद् अन्येषामपि षट्संज्ञानां रूपाणि ।

**३०८ । रायो हलि । (७-२-५)**

रैशब्दस्यात्वं हलादौ विभक्तौ । राः । राभ्याम् । राभिः । राभ्यः । रासु ।

युष्मदस्मदोः प्रक्रिया पृथग्वर्णयिष्यत इति तत्सम्बद्धानि सूत्राणि मध्यगतान्यत्रोपेक्षितानि ।

**३०९ । त्रिचतुरोः स्त्रियां तिसृचतसृ । (७-२-९९)**

स्त्रियां वर्तमानयोरनयोरुक्तावादेशौ स्याताम् । जसि–'जसि च' (२३३) इति, 'ऋतो ङि......' (२३४) इति वा गुणे, शसि पूर्वसवर्णदीर्घे च प्राप्ते—

**३१० । अचि र ऋतः । (७-२-१००)**

तिसृचतस्रोः ऋकारस्य रेफादेशः स्यादजादौ विभक्तौ । आमि 'ह्रस्वनद्यापः' (२४६) इति नुटि 'न तिसृचतसृ' (२४९) इति दीर्घनिषेधः ।

तिस्रः, तिस्रः, तिसृभिः, तिसृभ्यः, तिसृभ्यः, तिसृणां, तिसृषु ।

चतस्रः, चतस्रः, चतसृभिः, चतसृभ्यः, चतसृभ्यः, चतसृणां, चतसृषु ।

पुन्नपुंसकयोः आमि 'त्रेस्त्रयः' (२४५) इति त्रयादेशे 'नामि' इति दीर्घः । चतुरः 'षट्चतुर्भ्यश्च' इति नुट्, हलन्तत्वान्न दीर्घः ।

पुं—त्रयः त्रीन्
क्ली—त्रीणि त्रीणि } त्रिभिः, त्रिभ्यः, त्रिभ्यः, त्रयाणां, त्रिषु ।

पुं—चत्वारः चतुरः
क्ली—चत्वारि चत्वारि } चतुर्भिः, चतुर्भ्यः, चतुर्भ्यः, चतुर्णां, चतुर्षु ।

सर्वनामस्थाने 'चतुरनडुहोः......' इत्यामागमः (२८९) ।

**३११ । जराया जरसन्यतरस्याम् । (७-२-१०१)**

जराशब्दस्य जरस् इत्यादेशो वा अजादौ विभक्तौ । यथा—

जरा { जरे जराः जरां जरे जराः ।
{ जरसौ जरसः जरसं जरसौ जरसः ।

{ जरया जरायै जरायाः जरयोः जराणां जरायाम् ।
{ जरसा जरसे जरसः जरसोः जरसां जरसि ।

हलादौ तु—जराभिः जराभ्यः जरासु ।

अङ्गाधिकारस्थितत्वात् तदन्तविधिः—

निर्जरः { निर्जरौ निर्जराः
{ निर्जरसौ निर्जरसः इत्यादि ।

## ३१२ । त्यदादीनामः । (७-२-१०२)

त्यदादीनामकारोऽन्तादेशः स्याद्विभक्तौ । सर्वादिरन्तर्गणस्त्यदादिः । तत्र त्यच्छब्दस्तच्छब्दपर्यायश्छन्दस्येव दृश्यते । अनेन दकारस्य अकारादेशे कृते त + अ इति स्थिते संधिकार्यविशेषः—

## ३१३ । अतो गुणे (पररूपमपदान्तात्) । (६-१-९७)

अपदान्तादकारात् गुणवर्णे (अ, ए, ओ) परे पररूपमेकादेशः स्यात् । इति पररूपेण—

त + अ = त । एवं—यद् = य; एतद् = एत; इदम् = इद;
अदस् = अद; द्वि = द्व । अदन्तत्वात् यः, यौ, ये इत्यादि सर्वशब्दवत् ।

द्विशब्दस्य द्वित्ववाचकत्वाद् द्विवचनमेव—

द्वौ द्वौ द्वाभ्या[३] द्वयोः[२] ।

अन्येषां प्रक्रियाविशेषा अनुपदमेव वक्ष्यन्ते । अपदान्तसंधिषु मुख्योऽयं पररूपसंधिर्बहुत्रोपयोक्ष्यते इति ध्येयम् ॥

## ३१४ । किमः कः । (७-२-१०३)

किंशब्दस्य विभक्तौ क इत्यादेशः । अदन्तत्वात् सर्ववद्रूपाणि—

कः–कौ–के । कम्–कौ–कान् । केन–काभ्यां–कैः इत्यादि ।

## ३१५ । तदोस्सस्सावनन्त्ययोः । (७-२-१०६)

त्यदादीनामनन्त्ययोस्तकारदकारयोः सकारादेशः स्यात् सौ परे । तदेतददसामेव सकारादेशस्यावकाशः । यथा—

तद्—तद् + स्—अत्वं, पररूपं, त + स्—सादेशः, **सः–तौ–ते** इत्यादि सर्ववत् ।

एतद्—एतद् + स्—अत्वं, पररूपं, एत + स्—सादेशः, एसः, वक्ष्यमाणं षत्वम्, **एषः–एतौ–एते** इत्यादि सर्ववत् ।

स्त्रियाम् अत्वानन्तरम् 'अजाद्यत...' इति टापि **या, का, सा, एषा** इत्यादि सर्वावत् । क्लीबे 'स्वमोर्नपुंसकात्' (२१९) इति लुक् । **यत्, ये, यानि; किं, के, कानि; तत्, ते, तानि; एतत्, एते, एतानि**; पुनस्तद्वत्, शेषं पुंवत् ।

## ३१६ । अदस औ सुलोपश्च । (७-२-१०७)

अदसः सौ परे औकारोऽन्तादेशः स्यात् सोर्लोपश्च । यथा—

अदस् + स्—अद औ + स्—सुलोपे, अदौ—दकारस्य पूर्वसूत्रेण सत्वं, **असौ**। अकारान्तत्वाभावात् स्त्रियां न टाप् 'असौ' इति पुंसि स्त्रियां च तुल्यमेव रूपम् । क्लीबे तु 'स्वमो...' (२१९) इति लुका सुः परो नास्तीति नैतत्प्रवर्तते । द्विवचने अदस् + औ इत्यत्र त्यदाद्यत्वेन अदौ इति जाते असिद्धकाण्डे विकार उक्तः—

## ३१७ । अदसोऽसेर्दादु दो मः । (८-२-८०)

अदसः, असेः, दात्, उ, दः, मः इति पदच्छेदः । (असेः) [1]सकारान्त-इकारान्तभिन्नस्य अदसो दकारात् परस्य स्वरस्य उकारः स्यात्; तदा दकारस्य मकारश्च । दस्य मुः इति सङ्घातस्यैवादेशमनुक्त्वा 'दादु दो मः' इति प्रत्येकमादेशविधानम् '...अप्रत्ययः' (३८) इति निषेधं बाधित्वा विधेयकोटौ प्रविष्टस्याप्युकारस्य आन्तरतम्येन ह्रस्वस्य उकारः, दीर्घस्य ऊकार इति सवर्णग्रहणार्थम् । अनेन अदौ = अमू ॥

बहुवचने अदन्तत्वात् 'जसः शी' (२११) इति शीभावेन 'अदे' इति जाते मुत्वस्यापवादो मीत्वं विधीयते—

## ३१८ । एत ईद् बहुवचने । (८-२-८१)

बहुवचनविषये अदसो दकारात् परस्य एकारस्य 'ई' इत्यादेशः, न तु 'उ' इति । अदे = अमी । स्त्रियां तु अदन्तत्वाट्टापि अदाः = अमूः, एकाराभावादीत्वं न ॥

---

१. अदस्शब्दः त्यदाद्यत्वेन अकारान्तो भवति । 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' इति सूत्रेण 'अदद्रि' इति इकारान्तता चास्य स्यात् । इकारान्तत्वे त्यदाद्यत्वाभावे च मुत्वं न स्यादित्यर्थः । 'असेः' इति पदस्य व्याख्याने पक्षभेदाः सन्ति ।

| पुंसि। | स्त्रियाम्। |
|---|---|
| अदम् = अमुम्। | अदाम् = अमूम्। |
| अदौ = अमू। | अदे = अमू (द्विवचनत्वादीत्वं न)। |
| अदान् = अमून्। | अदाः = अमूः। |

तृतीयैकवचने अत्वेन अद + आ इति स्थिते॥

## ३१९। न मु ने (असिद्धम्)। (८-२-३)

(ने) नाभावे कर्तव्ये मुत्वं नासिद्धम्। मुत्वं निमित्तीकृत्य घिसंज्ञया 'आङो नास्त्रियाम्' इति नाभावो भवति इति यावत्। **अमुना** इति रूपं सिद्धम्। स्त्रियां तु नाभावविरहात् अदया = अमुया। अदाभ्याम् = अमूभ्याम्। 'नेदमदसोरकोः' (२०५) इति निषेधात् 'अतो भिस ऐस्' न भवति। 'बहुवचने झल्येत्' (२२७) अदेभिः = अमीभिः। स्त्रियाम्, अदाभिः = अमूभिः॥

| पुंसि। | स्त्रियाम्। |
|---|---|
| अदस्मै = अमुष्मै। | अदस्यै = अमुष्यै। |
| अदाभ्याम् = अमूभ्याम्। | अदाभ्याम् = अमूभ्याम्। |
| अदेभ्यः = अमीभ्यः। | अदाभ्यः = अमूभ्यः। |
| अदस्मात् = अमुष्मात्। | अदस्याः = अमुष्याः। |
| अदाभ्याम् = अमूभ्याम्। | अदाभ्याम् = अमूभ्याम्। |
| अदेभ्यः = अमीभ्यः। | अदाभ्यः = अमूभ्यः। |
| अदस्य = अमुष्य। | अदस्याः = अमुष्याः। |
| अदयोः = अमुयोः। | अदयोः = अमुयोः। |
| अदेषाम् = अमीषाम्। | अदासाम् = अमूषाम्। |
| अदस्मिन् = अमुष्मिन्। | अदस्याम् = अमुष्याम्। |
| अदेषु = अमीषु। | अदासु = अमूषु। |

क्लीबे—अदस् = अदः, स्वमोर्लुप्तत्वात् न किञ्चित् कार्यम्।

अदे = अमू। अदानि = अमूनि।

पुनस्तद्वत्; शेषं पुंवत्। 'अमुष्मै' इत्यादौ षत्वं प्रति मुत्वस्य सिद्धत्वात् इणः परस्य आदेशावयवस्य सस्य षत्वम्। ३७५-सूत्रं दृश्यताम्॥

'अव्ययसर्वनाम्नामकच्प्राक्टेः' इति सूत्रेण सर्वनाम्नाम् अज्ञाताद्यर्थे अकप्रत्ययो विधीयते, स च टेः प्राग्भवति। प्रत्ययस्य गर्भगतत्वाच्छब्दभेदो नास्ति। तकद्, यकद्, एतकद्, इदकम्, अदकस् इत्येवमादिरूपतामापन्नेभ्यः सकः, तकौ, तके इत्यादि रूपाणि। तत्र अदश्शब्दस्यैव साकच्कस्य बहुलः प्रयोगः। तस्य च किञ्चिदिवार्थविशेषोऽप्यस्ति। अमुकस्मिन् वर्षे अमुकस्मिन् मासि अमुकस्मिन् दिने लिखितम् इत्यादिवत् नामग्रहणं विना सामान्यनिर्देशार्थमस्योपयोगः। अस्य च सौ रूपविशेषमाह कात्यायनः—

**॥ ❀ ॥ औत्वप्रतिषेधः साकच्काद्वा वक्तव्यः सादुत्वं च ॥**

अदसः सौ औत्वं वा; औत्वाभावपक्षे सात् परस्य स्वरस्य उत्वं च इत्यर्थः। तेन असकौ, असुकः इति रूपद्वयम्।

असकौ—असुकः। अमुकौ—अमुके। अमुकम्—अमुकौ—अमुकान्। अमुकेन—अमुकाभ्याम्—अमुकैः इत्यादि। '...अकोः' (२०५) इति ऐस्त्वनिषेधस्य निषेधात् ऐस्त्वम्।

## ३२०। इदमो मः। (७-२-१०८)

इदमो मकारोऽन्तादेशः स्यात् सौ परे। त्यदाद्यत्वं मा भूदिति मकारस्य मकारो विधीयते॥

## ३२१। दश्च। (७-२-१०९)

इदमो दकारस्य मकारादेशः स्याद्विभक्तौ॥

## ३२२। यः सौ। (७-२-११०)

सौ तु इदमो दकारस्य यकारः। सत्वमत्वयोरपवादः॥

## ३२३। इदोऽय् पुंसि। (७-२-१११)

पुल्लिङ्गे तु 'इद्' इत्यस्य 'अय्' इत्यादेशः सौ॥

इदम् + स्—अयम् + स् = अयम्।

**स्त्रियाम्**—इदम् + स्—इयम् + स् = इयम्।

**क्लीबे**—इदम्। स्वमोरभावान्न कोऽपि विकारः।

| **पुंसि।** | **स्त्रियाम्।** |
|---|---|
| इदम् = इमम्। | इदाम् = इमाम्। |
| इदौ = इमौ। | इदे = इमे। |
| इदान् = इमान्। | इदाः = इमाः। |

## ३२४। अनाप्यकः। (७-२-११२)

आप् इति तृतीयैकवचनात् प्रभृति सुपः पकारेण प्रत्याहारः। आपि परे इदम इदः स्थाने अन् इत्यादेशः॥

## ३२५। हलि लोपः। (७-२-११३)

हलादौ विभक्तौ तु इदम इदो लोपः स्यात्। '**नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे**' इति परिभाषया समग्रस्य इदो लोपः। ङे-ङसि-ङस्-ङीनां स्मायाद्यादेशैः, आमः सुडागमेन च हलादित्वादिद् इत्यंशस्य लोपे अकार एव शिष्यते। अदन्तत्वात् 'सुपि च' इति दीर्घो 'बहुवचने झल्येत्' च भवतः। 'नेदमदसोः...' इति ऐसादेशो न भवति॥

| | | | | | |
|---|---|---|---|---|---|
| अनेन | आभ्याम् | एभिः | अनया | आभ्यां | आभिः |
| अस्मै | ,, | एभ्यः | अस्यै | ,, | आभ्यः |
| अस्मात् | ,, | एभ्यः | अस्याः | ,, | ,, |
| अस्य | अनयोः | एषाम् | अस्याः | अनयोः | आसाम् |
| अस्मिन् | ,, | एषु। | अस्याम् | ,, | आसु। |

कथम् अकारस्यैव अदन्तत्वम्? येन स्मायाद्यादेशाः, स्त्रियां टाप् च प्रवर्तन्ते इति चेत्—

## ३२६ । आद्यन्तवदेकस्मिन् । (१-१-२१)

एकस्मिन् वर्णे क्रियमाणं कार्यं तदादाविव तदन्त इव च स्यात् । तेन अदादेरदन्तस्य च विहितं कार्यमकारमात्रस्यापि भवति ॥

त्यदादिष्वेतत्तदोरन्योऽप्यस्ति विशेषः—

## ३२७ । एतत्तदोः सुलोपोऽकोरनञ्समासे हलि । (६-१-१३२)

(अकोः) अकच्प्रत्ययरहितयोः एतत्तदोः 'सु'-प्रत्ययलोपः स्यात् संहितायां हलि परे; नञ्समासे तूक्तं न । यथा—

एषस् + ददाति = एष ददाति । | सस् + ददाति = स ददाति ।

प्रत्यु०—('अकोः' किम्?) एषको ददाति; सको ददाति ।

('अनञ्समासे' किम्?) अनेषो ददाति ।

एष न भवतीत्यनेषः; स न भवतीत्यसः ॥

('हलि' किम्?) एषोऽत्र; सोऽत्र ।

## ३२८ । सोऽचि लोपे चेत् पादपूरणम् । (६-१-१२४)

अचि परेऽपि 'सः' इति तदः सुलोपः स्यात्, लोपेन पादपूरणं प्रयोजनं लभ्यते चेत् । यथा—

"सैष दाशरथी रामः, सैष राजा युधिष्ठिरः ।
सैष कर्णो महात्यागी, सैष भीमो महाबलः ॥"

प्रयोजनापेक्षोऽयं विधिस्तस्यान्यथैव सिद्धत्वे न प्रवर्तते । अतः

"सोऽहमाजन्मशुद्धानाम्"

इत्यादौ विनैव लोपं पादपूरणाल्लोपो न भवति ॥

अत्रेदं चोद्यम्—ननु नपुंसके स्वमोर्विषये त्यदाद्यत्वं कुतो न भवति? तत्र हि 'स्वमोर्नपुंसकात्' इति प्रत्ययो लुप्यते; ततो विभक्तेः परत्वाभावादत्वस्य न प्रसक्तिरिति चेत्, नेदं समाधानम् । तर्हि 'राजा' इत्यादावपि हल्ङ्यादिलोपेन सुप्रत्ययस्यादर्शनात्...

'सुप्तिङन्तं पदम्' इति पदसंज्ञा न स्यात् । ततश्च पदान्तत्वाभावात् 'न लोपः प्रातिपदिकान्तस्य' इति नलोपः कथं प्रवर्तते ? इति दुर्घटमापतेत् । अत्रोच्यते—सर्वो लोपो न तुल्यः ; लोपस्यापि प्रकारभेदाः सन्ति । तथा हि—

### ३२९ । अदर्शनं लोपः । (१-१-६०)

वर्णानामदर्शनम्, अश्रवणम्, अनुच्चारणम्, अनुपलब्धिः लोप इत्युच्यते ॥

### ३३० । प्रत्ययस्य लुक्श्लुलुपः । (१-१-६१)

लुक्, श्लु, लुप् एतैरपि शब्दैः प्रत्ययस्यादर्शनं क्रियते । प्रत्ययविषये एतेऽपि शब्दा लोपपर्याया इत्यर्थः ॥

### ३३१ । प्रत्ययलोपे प्रत्ययलक्षणम् । (१-१-६२)

प्रत्यये लुप्तेऽपि प्रत्ययनिमित्तकं कार्यं स्यात् । तथा च 'राजा' इत्यादौ हल्ङ्यादिलोपेन सौ लुप्तेऽपि तन्निमित्तका पदसंज्ञा भवत्येव ॥

### ३३२ । न लुमताङ्गस्य । (१-१-६३)

लुमता-शब्देन (लुक्, श्लु, लुप् इत्येभिः, त्रिष्वपि हि 'लु' इत्यक्षरं साधारणम्) प्रत्ययलोपे कृते लुप्तप्रत्ययनिमित्तकमङ्गकार्यं न स्यात् ॥

अनेन प्रकृते इष्टसिद्धिः । स्वमोरदर्शनं लुक्शब्देन कृतम् ; त्यदाद्यत्वं चाङ्गकार्यम् ; अतस्त्यदाद्यत्वं स्वमोर्लुकि न स्यात् । पदसंज्ञा तु अङ्गकार्यत्वाभावात् भवत्येव । एवं च क्लीबे प्रथमाद्वितीयैकवचनयोः प्रत्ययविरहादङ्गकार्याभावाच्च विरला एव प्रकृतेर्विकाराः ॥

सत्यमुक्तविधया पूर्वपक्षस्य समाधानमासीत् ; तथाप्याशङ्का हृदयान्निश्शेषमनिर्मृष्टा किञ्चिदिव कालुष्यमवशेषयति । तथा हि—स्वमोर्हि लुप्तयोस्त्यदाद्यत्वस्य नावसरः ; अत्वमेव प्रथमं प्रवर्तताम् ; लोपः प्रथमं कर्तव्य इत्यत्र किं मानम् ? इति । अत्रोच्यते—यत्र तुल्यबला अनेके

विधयो युगपत् समाविशन्ति तत्र बलपरीक्षा कर्तव्या । सा चैवम्—सूत्रानुक्रमे पूर्वात् परं बलीयः । परादप्यनित्यात् नित्यं बलीयः । नित्यादपि बहिरङ्गादन्तरङ्गं बलीयः । अन्तरङ्गादप्युत्सर्गादपवादो बलीयान् । एष्वपवादः पूर्वमेवोक्तलक्षणः । कृताकृतप्रसङ्गि नित्यम्; अल्पाश्रयमन्तरङ्गं, बह्वाश्रयं बहिरङ्गं इत्यन्ययोः प्रायिकं लक्षणम् । लक्षणान्तराण्यपि क्वचिदाश्रीयन्ते । अनया रीत्या प्रकृते बलपरीक्षायां कृतायां सूत्रानुक्रमे परमप्यत्वं नित्येन लोपेन बाध्यते । लोपो हि कृतेऽकृतेऽप्यत्वे सावकाशः । ननु कथमत्वे कृते लोपस्य प्रसङ्गः? 'अतोऽम्' इति अमादेशस्य अपवादस्य सद्भावात इति चेत्, नैष दोषः । प्रसक्त एव किलोत्सर्गोऽपवादेन बाध्यते । अतः कृतेऽप्यत्वे अस्त्येव लोपस्य प्रसङ्गः । यदि पुनरत्वं लब्धप्रतिष्ठम् अभविष्यत् तदैव हि लोपामादेशयोः उत्सर्गापवादचिन्ता प्रासक्ष्यत, इत्यलं प्रसक्तानुप्रसक्तया सिद्धान्तचिन्तया; प्रकृतमनुसरामः ॥

अत्र इदमदसोः प्रक्रियाजटिलतया रूपनिष्पत्तिः कष्टा संवृत्ता । युष्मदस्मदोस्त्वितोऽपि कष्टतरा दृश्यते । यत्र व्यापकः सामान्यविधिर्न सुकरः, तत्र सिद्धरूपपाठ एव वरीयान् । अभिमतश्चायं मार्ग आचार्यस्यापि; यतः स 'सद्यःपरुत्परार्यैषमः......' इत्यादीन् शब्दान् प्रक्रियां विनैवानुशास्ति । योऽयं निपात इत्युच्यते । अतो बाला युष्मदस्मदोः सिद्धां रूपावलिमेव पठन्तु । व्यत्यस्तबहुलस्यापि शब्दस्य रूपाणि प्रक्रियाव्यसनी पाणिनिरलुप्तक्षम एवानायासमिव कथं निष्पादयतीति प्रदर्शयितुं परं कथ्यते ॥

## युष्मदस्मत्प्रक्रिया ॥

### ३३३ । युष्मदस्मद्भ्यां ङसोऽश् । (७-१-२७)

युष्मदस्मद्भ्यां परस्य षष्ठ्येकवचनस्य अश् इत्यादेशः । शित्वात् सर्वादेशः ।

**३३४ । ङेप्रथमयोरम् ।** (७-१-२८)

आभ्यां चतुर्थ्येकवचनस्य प्रथमाद्वितीययोश्च अम् इत्यादेशः ।

**३३५ । शसो न ।** (७-१-२९)

आभ्यां शसो नकारोऽन्तादेशः । अमोऽपवादः ।

**३३६ । भ्यसो भ्यम् ।** (७-१-३०)

आभ्यां भ्यसो भ्यं, चतुर्थीबहुवचनस्यायमादेशः । पञ्चमीबहुवचनस्य तु—

**३३७ । पञ्चम्या अत् ।** (७-१-३१)

आभ्यां पञ्चम्या भ्यसः अत् इत्यादेशः ।

**३३८ । एकवचनस्य च ।** (७-१-३२)

आभ्यां पञ्चम्या एकवचनस्य (ङसेः) च अत् इत्यादेशः ।

**३३९ । साम आकम् ।** (७-१-३३)

साम् इति कृतसुट्कस्य आमो निर्देशः । सुटो निवृत्त्यर्थं ससुट्कस्य आदेशविधानम् । एवं प्रत्ययानामादेशाः ।

**अथ प्रकृतेर्विकाराः—**

**३४० । युष्मदस्मदोरनादेशे** (आ) । (७-२-८६)

युष्मदस्मदोः अनादेशरूपायां विभक्तौ परतः आकारोऽन्तादेशः स्यात् ।

**३४१ । द्वितीयायां च ।** (७-२-८७)

युष्मदस्मदोराकारोऽन्तादेशः ।

**३४२ । प्रथमायाश्च द्विवचने भाषायाम् ।** (७-२-८८)

प्रथमाद्विवचने च अनयोराकारोऽन्तादेशः । भाषायामेव न तु छन्दसि ।

**३४३ । योऽचि ।** (७-२-८९)

अजादौ अनादेशरूपायां विभक्तौ युष्मदस्मदोर्यकारोऽन्तादेशः स्यात् ।

**३४४ । शेषे लोपः ।** (७-२-९०)

उक्तादन्यः शेषः । आकारयकारादेशयोरविषये युष्मदस्मदोरन्त्यस्य लोपः स्यात् ।

"पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि ।
यान्यद्विवचनान्यत्र तेषु लोपो विधीयते ॥"

**३४५ । मपर्यन्तस्य ।** (७-२-९१)

अधिकारोऽयम् । इतः परं वक्ष्यमाणा युष्मदस्मदोरादेशाः युष्म्, अस्म् इति मपर्यन्तांशस्य बोध्याः ।

३४६ । **युवावौ द्विवचने** । (७-२-९२)

द्विवचने युष्म् इत्यंशस्य 'युव' इति, अस्म् इत्यंशस्य 'आव' इति चादेशः स्यात् ।

३४७ । **यूयवयौ जसि** । (७-२-९३)

युष्मदस्मदोर्मपर्यन्तस्य जसि 'यूय'-'वय' इत्यादेशौ स्तः ।

३४८ । **त्वाहौ सौ** । (७-२-९४)

३४९ । **तुभ्यमह्यौ ङयि** । (७-२-९५)

३५० । **तवममौ ङसि** । (७-२-९६)

युष्मदस्मदोर्मपर्यन्तस्य उक्तेषु प्रत्ययेषु उक्ता आदेशाः स्युः ।

३५१ । **त्वमावेकवचने** । (७-२-९७)

अनयोरेकवचने 'त्व', 'म' इत्यादेशौ ।

३५२ । **प्रत्ययोत्तरपदयोश्च** । (७-२-९८)

तद्धितादिषु प्रत्ययेषु (समासे) उत्तरपदे च परत एकत्ववाचिनोर्युष्मदस्मदोः मपर्यन्तस्य त्व, म इत्यादेशौ । यथा—

ईय इति तद्धितप्रत्ययः । युष्मद् + ईय, अस्मद् + ईय इति स्थिते मपर्यन्तस्य त्वमादेशाभ्यां (त्व + अद् = त्वद्), (म + अद् = मद्) त्वदीयं, मदीयम् । तवेदं ममेदम् इत्यर्थः । द्विबहुवचनयोस्तु त्वमादेशाभावात् 'युवयोर्युष्माकं वा इदम्', युष्मदीयम् 'आवयोरस्माकं वा इदम्' अस्मदीयम् । एवमुत्तरपदेऽपि तव पुत्रः त्वत्पुत्रः, मम पुत्रः मत्पुत्रः ।

**अथ रूपाणि निष्पाद्यन्ते—**

युष्मद् + स्; अस्मद् + स्—'ङे प्रथमयोरम्'—युष्मद् + अम्, अस्मद् + अम्; मपर्यन्तस्य 'त्वाहौ सौ'—त्व + अद् + अम्, अह + अद् + अम्,—'शेषे लोपः' त्व + अ + अम्, अह + अ + अम्,—'अतो गुणे' (३१३) 'अमि पूर्वः' (१९९) **त्वम्, अहम्** ।

युष्मद् + औ, अस्मद् + औ—युष्मद् + अम्, अस्मद् + अम्—'युवावौ द्विवचने' युवद् + अम्, आवद् + अम्,—'प्रथमायाश्च द्विवचने भाषायाम्' इति आत्वम्, युव + आ + अम्; आव + आ + अम् सवर्णदीर्घपूर्वरूपे **युवाम्, आवाम्** ।

युष्मद् + अस्, अस्मद् + अस्—'यूयवयौ जसि', शेषे लोपः—**यूयम्, वयम्** ।

युष्मद् + अम्, अस्मद् + अम्—'त्वमावेकवचने,' 'द्वितीयायां च' इति आत्वम् । **त्वाम्, माम्** ।

युवाम् आवाम् प्रथमाद्विवचनवत् ।

युष्मद् + अस्, अस्मद् + अस्—'शसो न' युष्मद् + अन्, अस्मद् + अन्, 'द्वितीयायां च' इत्यात्वं—युष्मा + अन, अस्मा + अन्—**युष्मान्, अस्मान् ।**

युष्मद् + आ, अस्मद् + आ 'त्वमावेकवचने', 'योऽचि'—**त्वया, मया ।**

युष्मद् + भ्याम्, अस्मद् + भ्यां—'युवावौ द्विवचने', 'युष्मदस्मदोरनादेशे' इत्यात्वं—**युवाभ्याम्, आवाभ्याम् ।**

युष्मद् + भिस्, अस्मद् + भिस्—'युष्मदस्मदोरनादेशे' इत्यात्वं—**युष्माभिः, अस्माभिः ।**

युष्मद् + ए, अस्मद् + ए—'ङेरम्', 'तुभ्यमह्यौ ङयि', 'शेषे लोपः'—**तुभ्यं, मह्यम् ।**

युवाभ्याम्, आवाभ्यां—तृतीयाद्विवचनवत् ।

युष्मद् + भ्यस्, अस्मद् + भ्यस्—'भ्यसो भ्यम्,' 'शेषे लोपः' **युष्मभ्यम्, अस्मभ्यम् ।**

युष्मद् + अस्, अस्मद् + अस्—'एकवचनस्य च' इति ङसेरत्, 'त्वमावेकवचने', 'शेषे लोपः', 'अतो गुणे' **त्वत्, मत् ।**

युवाभ्याम्, आवाभ्यां—पूर्ववत् ।

युष्मद् + भ्यस्, अस्मद + भ्यस्—'पञ्चम्या अत', 'शेषे लोपः', 'अतो गुणे'—**युष्मत्, अस्मत् ।**

युष्मद् + अस्, अस्मद् + अस्—'युष्मदस्मद्भ्यां ङसोऽश्', 'तवममौ ङसि', 'शेषे लोपः', 'अतो गुणे'—**तव, मम ।**

युष्मद् + ओस्, अस्मद् + ओस्—'युवावौ द्विवचने', 'योऽचि' इति यत्वं, **युवयोः, आवयोः ।**

युष्मद् + आम्, अस्मद् + आं—'साम आकम्', 'शेषे लोपः' **युष्माकम्, अस्माकम् ।**

युष्मद् + इ, अस्मद् + इ—'त्वमावेकवचने', 'योऽचि' **त्वयि, मयि ।**

युवयोः, आवयोः—पूर्ववत् ।

युष्मद् + सु, अस्मद् + सु—'युष्मदस्मदोरनादेशे' इति आत्वं—**युष्मासु, अस्मासु ।**

अथान्वादेशरूपाणि—

किञ्चित् कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानम् अन्वादेशः। नाम्नामन्वादेशे सर्वनामान्युपयुज्यन्ते। सर्वनाम्नामप्यन्वादेशे क्वचित् सर्वनामान्तराणि सन्ति; किं त्वेतानि खिलत्वात् कासुचिदेव विभक्तिषु। तत्र युष्मदस्मदोरन्वादेशरूपाणि प्रथममुच्यन्ते—

३५३। पदस्य। (८-१-१६)

३५४। पदात्। (८-१-१७)

३५५। अनुदात्तं सर्वमपादादौ। (८-१-१८)

इदं सूत्रत्रयमधिक्रियते। वक्ष्यमाणं पदस्यैव। तच्च पदात् परम् अपादादिस्थं च भवितुमर्हति। वाक्यादौ पादादौ च न भवतीत्यर्थः॥

३५६। युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ। (८-१-२०)

श्रूयमाणषष्ठीचतुर्थीद्वितीयान्तयोः (अत एव पदयोः) युष्मदस्मदोः वां नौ इति यथासंख्यमादेशौ॥

३५७। बहुवचनस्य वस्नसौ। (८-२-२१)

षष्ठीचतुर्थीद्वितीयाबहुवचनान्तयोरनयोः वस्, नस् इत्यादेशौ॥

३५८। तेमयावेकवचनस्य। (८-२-२२)

उक्तविभक्त्येकवचनान्तयोः ते, मे इत्यादेशौ। एवं च पारिशेष्यात् वांनावादेशौ द्विवचनस्यैव॥

३५९। त्वामौ द्वितीयायाः। (८-१-२३)

द्वितीयैकवचनान्तयोः तेमयोरपवादौ त्वा, मा इत्यादेशौ। अथोदाह्रियते—

"श्रीशस्त्वावतु मापीह दत्तात्ते मेऽपि शर्म सः।
स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः॥
सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः।
सोऽव्याद्वो नः शिवं वो नो दद्यात् सेव्योऽत्र वः स नः॥"

प्रत्यु०—('पदात्' किम्?) युष्मान् पातु हरिः ।
('अपादादौ' किम्?) युष्मान् पातु हरिर्नित्यमस्मानपि महेश्वरः ।

**॥ * ॥ युष्मदस्मदादेशा अनन्वादेशे वा वक्तव्याः ॥**

अन्वादेशे तु नित्यं स्युः । यथा—
'त्वं मद्गृहमागच्छ; पुस्तकं ते दास्यामि'। अत्र तुभ्यं दास्यामि इति न भवति ॥

## ३६० । न च-वा-हा-हैवयुक्ते । (८-२-२४)

एषां निपातानां योगे युष्मदस्मदादेशाः न स्युः । यथा—
हरिस्त्वां मां च रक्षतु । कथं त्वां, मां वा न रक्षेत् इत्यादि । अत्र त्वामादेशौ न भवतः ।

पदात् परयोरेव युष्मदस्मदोरादेशा विहिताः । तत्र पदात् परत्वे नियममाह—

## ३६१ । आमन्त्रितं पूर्वमविद्यमानवत् । (८-१-७२)

आमन्त्रितमिति संबोधनप्रथमायाः संज्ञा । आमन्त्रितात्मकं पूर्वपदम् असदिव स्यात् । पदात् परत्वस्य विचारणायां आमन्त्रितं पूर्वपदत्वेन न गण्यत इत्यर्थः । यथा—

हरे मां पाहि; हरे तुभ्यं नमः ।

अत्र हरे इत्यस्य आमन्त्रितत्वात् तन्निमित्तकं पदात् परत्वमादाय मां, तुभ्यमित्यनयोः मा, ते इत्यादेशौ न भवतः ।

## ३६२ । नामन्त्रिते समानाधिकरणे सामान्यवचनम् । (८-१-७३)

समानाधिकरणे विशेषणे परे सामान्यवचनस्य (विशेष्यस्य) आमन्त्रितस्य अविद्यमानवद्भावो न स्यात् । यथा—

हरे दयालो नः पाहि ।

निर्बन्धा एते कालक्रमाच्छिथिलीभूताः ।

अथ इदमेतदोरन्वादेशरूपाणि—'पदस्य' 'पदात्' इत्यादयोऽधिकारा नात्र सन्ति; प्रातिपदिकस्यैवादेशो विधीयते । 'इदमोऽन्वादेशे एतदः' इत्यनुवर्तमाने—

## ३६३ । द्वितीयाटौस्स्वेनः । (२-४-३४)

द्वितीयायां टौसोश्च परत इदमेतदोरन्वादेशविषये एन इत्यादेशः स्यात् । स्त्रियामदन्तत्वाट्टाप् । क्लीबे तु—

॥ * ॥ एनदिति नपुंसकैकवचनं वक्तव्यम् ॥

इति वार्त्तिकेन एनत् । अमो डतरादिवत् अदादेशोऽपि भवतीत्यर्थः ।

| | | | | | |
|---|---|---|---|---|---|
| पुंसि — एनम् | एनौ | एनान् | एनेन | एनयोः | एनयोः |
| स्त्रियाम्—एनाम् | एने | एनाः | एनया | ,, | ,, |
| क्लीबे — एनत् | एने | एनानि | एनेन | ,, | ,, |

अन्वादेशप्रदर्शनार्थमुदाहरणम्—

देवदत्तः पटुः; अनेन व्याकरणधीतम्; एनं न्यायमध्यापय । देवदत्तयज्ञदत्तौ भ्रातरौ; एतयोर्महितं कुलम; एनावध्यापय ।

अथ ईदूदन्तानां धातूनां क्विबन्तत्वे धातुत्वस्य क्षतिं विनैव प्रातिपदिकत्वमापन्नानां रूपसिद्धिरवशिष्यत इति सा प्रारभ्यते—

## ३६४ । अचि श्नुधातुभ्रुवां य्वोरियङुवङौ । (६-४-७७)

य्वोः=इवर्ण-उवर्णयोः । इदं च धातोर्विशेषणम्, इतरयोरव्यभिचारात् । श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तधातोर्भ्रूशब्दस्य च इयङ्, उवङ् इत्यादेशौ स्तः अजादौ प्रत्यये परे । आन्तरतम्यादिवर्णस्य इयङ्, उवर्णस्य उवङ् इति विवेकः । ङित्त्वादनेकाल्त्वेऽप्यन्त्यादेशः । यथा—

सुधीः[1], सुधियौ सुधियः । हे सुधीः । 'अमिपूर्वात्' पूर्वसवर्णदीर्घाच्च परत्वादियङ्, सुधियं सुधियः । सुधिया सुधीभ्यां........सुधियां । सुधीषु ।

स्वभूः स्वभुवौ स्वभुवः । स्वभुवं स्वभुवः इत्यादि सुधीवत् ।

स्त्रियां नदीकार्ये विशेषः । ङ्यन्तत्वाभावान्न सुलोपः । सम्बुद्धौ 'नेयङुवङ्स्थानावस्त्री' (१८४) इति नदीत्वनिषेधान्न ह्रस्वः, ङित्सु 'ङिति ह्रस्वश्च' (१८६) इति, आमि 'वामि' (१८५) इति च विकल्पेन नदीकार्याणि ।

---

१. सुष्ठु ध्यायतीति सुध्यै + क्विप् = सुधी ।

| | | | | | |
|---|---|---|---|---|---|
| श्रीः | श्रियौ | श्रियः | श्रियै, श्रिये | श्रीभ्यां | श्रीभ्यः |
| हे श्रीः | ,, | ,, | श्रियाः, श्रियः | ,, | ,, |
| श्रियं | ,, | ,, | ,, | श्रियोः | श्रीणां, श्रियाम् |
| श्रिया | श्रीभ्यां | श्रीभिः | श्रियां, श्रियि | ,, | श्रीषु। |

भ्रूः भ्रुवौ भ्रुवः; हे भ्रूः इत्यादि श्रीवदेव। एवं भूरपि।

## ३६५। स्त्रियाः। (६-४-७९)

स्त्रीशब्दस्य च अजादौ प्रत्यये परे इयङ्।

## ३६६। वाम्शसोः। (६-४-८०)

अमि शसि च स्त्रिया इयङ् वा। निषेधे विकल्पे च 'अस्त्री' इति निषेधात् नित्या नदीसंज्ञा—ङीबन्तत्वात् सुलोपः।

| | | | | | |
|---|---|---|---|---|---|
| स्त्री | स्त्रियौ | स्त्रियः | स्त्रियै | स्त्रीभ्यां | स्त्रीभ्यः |
| हे स्त्रि | ,, | ,, | स्त्रियाः | ,, | ,, |
| स्त्रियं, स्त्रीं | ,, | स्त्रियः, स्त्रीः | स्त्रियाः | स्त्रियोः | स्त्रीणाम् |
| स्त्रिया | स्त्रीभ्यां | स्त्रीभिः | स्त्रियां | ,, | स्त्रीषु। |

## ३६७। एरनेकाचोऽसंयोगपूर्वस्य। (६-४-८२)

असंयोगपूर्वो य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये परे। इयङोऽपवादः। यथा—

ग्रामणीः (ग्राम + नी) ग्रामण्यौ, ग्रामण्यः; ग्रामण्यं, ग्रामण्यौ, ग्रामण्यः; ग्रामण्या, ग्रामणीभ्याम् इत्यादि। 'ङेराम्नद्याम्नीभ्यः' (२३९) इति विशेषविधानात् ङे-राम्, ग्रामण्याम्। तथा च षष्ठीबहुवचने सप्तम्येकवचने च तुल्यं रूपम्।

**प्रत्यु०**—('अनेकाचः' किम्?) नीः, नियौ, नियः; नियम् इत्यादि।
('असंयोगपूर्वस्य' किम्?) श्रीः, श्रियौ, श्रियः।

**धात्ववयवभूत एव संयोगोऽत्र गृह्यते; तेन—**

उन्नीः (उत् + नी) उन्न्यौ, उन्न्यः; उन्न्यम् इत्यादौ यण् भवत्येव।

**॥ * ॥ गतिकारकेतरपूर्वपदस्य यण्नेष्यते ॥**

**यथा**—शुद्धा धीर्यस्य स शुद्धधीः, शुद्धधियौ, शुद्धधियः।

इयङुवङौ यण् च नपुंसके न भवति, परेण 'नपुंसकस्य झलचः' (७-१-७२) 'इकोऽचि विभक्तौ' (७-१-७३) इति नुमा बाधात्। तेन क्लीबे—

सुधी—सुधि सुधिनी सुधीनि; सुधिना सुधिने... ... ...
स्वभू—स्वभु स्वभुनी स्वभूनि; स्वभुना स्वभुने... ... ...
ग्रामणी—ग्रामणि ग्रामणिनी ग्रामणीनि; ग्रामणिना... ... ...

इत्यादीन्येव रूपाणि। तृतीयादौ गालवमतेन पुंवद्भावविकल्पस्तु स्यादेव। तेन—सुधिया, सुधिये इत्याद्यपि ॥

### ३६८ । ओः सुपि । (६-४-८३)

असंयोगपूर्वो य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ सुपि प्रत्यये परे। उवङोऽपवादः ॥

खलं पुनातीति खलपूः, खलप्वौ, खलप्वः। प्रसूः, प्रस्वौ, प्रस्वः।
प्रत्यु०—('अनेकाचः' किम्?) पूः, पुवौ, पुवः। सूः, सुवौ, सुवः।
('असंयोगपूर्वस्य' किम्?)कटप्रूः, कटप्रुवौ, कटप्रुवः।
('सुपि प्रत्यये' किम्?) लुलु + अतुः = लुलुवतुः—लिट्।

### ३६९ । वर्षाभ्वश्च । (६-४-८४) (पुनर्भ्वश्चेति वक्तव्यम्)।

उत्तरसूत्रेण निषेधं बाधितुं यण् विधीयते। यथा—

वर्षाभ्वौ, वर्षाभ्वः; पुनर्भ्वौ, पुनर्भ्वः।

### ३७० । न भूसुधियोः । (६-४-८५)

भूधातोः सुधीशब्दस्य च यण् न स्यात्। यथा—

स्वभूः, स्वभुवौ, स्वभुवः इत्यादि। | सुधीः, सुधियौ, सुधियः इत्यादि।

---

उक्ता सुपां प्रक्रिया। अथ षत्वणत्वयोर्विधिरारभ्यते, योऽयं सुपीव तिङ्कृत्तद्धितसमासेष्वपि तत्र तत्रोपयुक्तः। तयोः प्रथमम्—

## षत्वप्रकरणम्।

### ३७१ । अपदान्तस्य मूर्धन्यः । (८-३-५५)

वक्ष्यमाणो मूर्धन्यविधिरपदान्तस्य स्थानिनो भवतीत्यधिक्रियते। ऋटुरषा मूर्धन्याः; तेषु षकारढकारावेव विधीयेते, यतः सकारधकारावेव स्थानिनौ गृहीतौ। सस्य षत्वं, धस्य ढत्वं च विधीयत इति फलितम्। तत्रापि ढत्वविधिर्विरल इति प्रकरणस्य 'षत्वप्रकरणम्' इति नाम कृतम्॥

३७२। सहेः साडः सः। (८-३-५६)

साड्रूपस्य सहधातोः सकारस्य मूर्धन्यः षः स्यात्। यथा—

तुराषाट्, तुराषाड्, तुरासाहौ, तुरासाहः; तुरासाहा, तुराषाड्भ्यां...तुराषाट्सु। पदान्ते 'हो ढः' (६३) इति ढत्वे जश्त्वे च साड्रूपता सम्भवति; ततस्तत्रैव षत्वम्। 'वावसाने' (८-४-५६) (११३) इति चर्त्वस्यासिद्धत्वात् 'तुराषाट्' इत्यत्रापि षत्वम्।

३७३। इण्कोः। (८-३-५७)

अधिकारोऽयम्। इण् च, कुश्च इण्कुः इति समाहारद्वन्द्वः। तस्य पञ्चम्यन्तम् 'इण्कोः' इति। इतोऽनुक्रमिष्यमाणः षत्वविधिः विशेषवचनाभावे इण्कवर्गाभ्यां परस्य सस्य बोध्यः॥

३७४। नुम्विसर्जनीयशर्व्यवायेऽपि (८-३-५८)

अयमप्यधिकारः। व्यवायो व्यवधानम्; नुम् इत्यनुस्वारोपलक्षणम्। सकार इण्कुभ्यां साक्षात्परो भवितुमर्हतीति न निर्बन्धः। इण्कवर्गयोः सस्य च, मध्यपतितैरनुस्वारविसर्गशषसैर्व्यवधानं न गण्यत इत्यर्थः। एवं परिकरबन्धं कृत्वा विधिमारभते—

३७५। आदेशप्रत्यययोः। (८-३-५९)

इण्कुभ्यां परस्यापदान्तस्य सस्य षः स्यात्, यदि स सकार आदेशः प्रत्ययावयवो वा भवति; नुम्विसर्गशर्व्यवायेऽपि चायं स्यात्। यथा—

एसः = एषः—'तदोः सस्सौ...' (३१५) इत्यादेशः सकारः।
सुषुवे —धात्वादेः षः सः ,, ,,

हरिसु = हरिषु—सुप्प्रत्ययावयवः सकारः
गुरुषु, पितृषु, रामेषु, गीर्षु... ...इणः परः ,,
वाक्षु, कुङ्षु... ... .. कवर्गात् ,,

**प्रत्यु०**—('इण् कुभ्याम्' किम ?) नामसु, राजसु, सम्पत्सु ।
('अपदान्तस्य' किम ?) हविस्,–हविः, हविर्भिः; धनुस्,–धनुः, धनुर्भिः ।
('आदेशप्रत्यययोः' किम् ?) विसम् ।

**नुमादिव्यवधानेऽपि षत्वं यथा—**

हवींषि, धनूंषि—नुमा व्यवधानम् ।
हविःषु, धनुःषु—विसर्गेण ।
हविष्षु, धनुष्षु—सकारेण ।

अत्र हविस् + सु इति स्थिते प्रकृतिसकारस्य पदान्तत्वात् षत्वं न भवति; प्रत्ययसकारस्य प्रकृतिसकारव्यवधानेऽपि 'शर्व्यवायेऽपि' इति षत्वम्; ततः ष्टुत्वेन प्रकृतिसकारस्य षः, हविष्षु इति रूपसिद्धिः । एतदर्थमेव[1] शर्व्यवायेऽपीत्युक्तम् । अन्यथा सकारस्य सकारेण व्यवधानं धूर्तप्रलापः स्यात् । 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति तिस्रादेशस्य षत्वं मा भूदिति 'आदेशः प्रत्ययावयवो वा' इति भेदेन व्याख्यातम् । आगमानां प्रत्ययावयवत्वेन ग्रहणात् 'सर्वेषाम्' इत्यादौ सुटः षत्वम् ॥

[ ३७६ । **शासिवसिघसीनां च** । (८-३-६०)

एषामिण्कुभ्यां परस्य सस्य षः । धात्ववयवत्वेनाप्राप्तौ वचनम् । यथा—

शास्—शिष्टः, अशिषत्, शिष्यः ।
वस् —उषितम्; उषित्वा ।
घस् —जक्षतुः; जक्षुः ।

**प्रत्यु०**—('इण्कोः' किम् ?) शास्ति; वसति; जघास ।

---

१. शर् = श–ष–साः । एषु शस्य 'व्रश्चभ्रस्ज' इति षत्वं, 'झलां जश्' इति जश्त्वं वा, षस्य 'षढोः' इति कत्वं च सकारे परेऽवश्यं भावि । परिशेषात् सकारव्यवधान एव उदाहरणसम्भवः । इत्थं च प्रत्याहारग्रहणं चिन्त्यप्रयोजनमित्यभिसंधिः ।

### ३७७ । स्तौतिण्योरेव षण्यभ्यासात् । (८-३-६१)

अभ्यासगतादिणः षत्वं कृतषत्वे सनि स्तुधातोर्ण्यन्तानां चैव नान्येषाम् । यथा—

स्तु—तुष्टूषति—; ण्यन्तम्—सिषेवयिषते ।

प्रत्यु०—( अन्येषां तु ) सिच्—सिसिक्षति; सू—सुसूषते ।

### ३७८ । सः स्विदिस्वदिसहीनां च । (८-३-६२)

एषां कृतषत्वे सनि सस्य स एव । षत्वनिषेधार्थं वचनम् । यथा—

सिस्वेदयिषति; सिस्वादयिषति; सिसाहयिषति ।

### ३७९ । प्राक्सितादड्व्यवायेऽपि । (८-३-६३)

'परिनिविभ्यः सेवसित...' इति ७०-तमसूत्रे सितशब्दात् प्राक् विधयः अडागमेन व्यवधानेऽपि स्युः । यथा—

अभ्यषुणोत; अभ्यषिचत्; न्यषेधत्; न्यषीदत् इत्यादि । 'उपसर्गात् सुनोति...' (३८१) 'सदिरप्रतेः' (३८२) इति वक्ष्यमाणं षत्वम् ।

### ३८० । स्थादिष्वभ्यासेन चाभ्यासस्य । (८-३-६४)

'उपसर्गात् सुनोति' इति उत्तरसूत्रे स्थाशब्दात् प्रभृति 'परिनिविभ्यः...' (३८६) इति सूत्रे 'सित' इत्यतः प्राचीनानामभ्याससकारस्य अभ्यासव्यवधानेऽपि प्रकृतिसकारस्य च षत्वं स्यात् । यथा—

स्था—अधितष्ठौ—अभ्यासव्यवधाने । सेन—अभिषिषेणयिषति ।

अभ्यासस्येति वचनं नियमार्थम् । स्थादिष्वेव अभ्याससकारस्य षत्वमिति, नान्यत्र 'अभिसुसूषति' इत्यादौ ।

### ३८१ । उपसर्गात् सुनोति-सुवति-स्यति-स्तौति-स्तोभति-स्था-सेनय-सेध-सिच-सञ्ज-स्वञ्जाम् । (८-३-६५)

उपसर्गस्थान्निमित्तात् ( इण् कुभ्यां ) परस्य सुनोत्यादीनां सस्य षः । यथा—

सु—अभिषुणोति—अभ्यषुणोत । सु—अभिषुवति—अभ्यषुवत् । इत्यादि ।

### ३८२ । सदिरप्रतेः । (८-३-६६)

उपसर्गस्थान्निमित्तात् परस्य सस्य षः । न तु प्रतेः परस्य । यथा—

निषीदति—न्यषीदत् (३७९) निषसाद (३८०) । प्रत्यु०—प्रतिसीदति ।

### ३८३ । स्तम्भेः । (८-३-६७)

पूर्ववत् । यथा—अभिष्टभ्नाति; अभ्यष्टभ्नात् ।

३८४। अवाच्चालम्बनाविदूर्ययोः। (८-३-६८)

स्तम्भेः षः स्यात् उक्तयोरर्थयोः। यथा—

अवष्टभ्यास्ते—आलम्बने। अवष्टब्धा सेना—आविदूर्ये (सामीप्ये)।

३८५। वेश्च स्वनो भोजने। (८-३-६९)

विपूर्वस्य स्वनतेः भोजनेऽर्थे षत्वम्। यथा— विष्वणति—सशब्दं भुङ्क्ते इत्यर्थः।

प्रत्यु०—('भोजने' किम्?) विस्वनति मृदङ्गः।

३८६। परिनिविभ्यः सेव-सित-सय-सिवु सह सुट्-स्तु स्वञ्जाम्। (८-३-७०)

परि, नि, वि इत्युपसर्गेभ्यः सेवादीनां सस्य षः। यथा—

परिषेवते—निषेवते—विषेवते। परिषहते—निषहते—विषहते।

सुट्—परिष्करोति—पर्यष्करोत् इत्यादि।

'उपसर्गात् सुनोति...' इत्येव सिद्धे स्तुस्वञ्जोर्ग्रहणमुत्तरसूत्रेण अड्व्यवाये विकल्पार्थम्।

३८७। सिवादीनां वाड्व्यवायेऽपि। (८-३-७१)

पूर्वसूत्रोक्तेषु सिवादीनाम् अड्व्यवायेऽपि विकल्पेन षत्वम्; सितात् प्राक् तु नित्यमुक्तं (३७९)। तथा च सितात् परं अड्व्यवाये कथञ्चिदपि न षत्वम्। यथा—व्यसहत, व्यषहत। पर्यसहत, पर्यषहत इत्यादि।

३८८। इणः षीध्वंलुङ्लिटां धोऽङ्गात्। (८-३-७८)

अत्र धः इति धकारस्य स्थानिनो ग्रहणात् मूर्धन्यो ढकारः। इणन्तादङ्गात् परेषां षीध्वंलुङ्लिटां धकारस्य ढः स्यात्। 'षीध्वम्' इति आत्मनेपदाशीर्लिङ्मध्यमबहुवचनप्रत्ययरूपम्। यथा—

च्यु—च्योषीढ्वम्—षीढ्वम्। च्यु—अच्योढ्वम् लुङ्।

कृ—चकृढ्वे—लिट्।

'इण्कोः' इत्यधिकारे 'इणः' इति पुनर्ग्रहणं कोर्निवृत्त्यर्थम्। तेन पच्—पक्षीध्वं, यज्—यक्षीध्वम् इत्यादौ न मूर्धन्यः।

३८९। विभाषेटः। (८-३-७९)

इणः परात् इटः उत्तरेषां षीध्वंलुङ्लिटां ढो वा। यथा—

लु—लविषीध्वं, लविषीढ्वम्। लुलुविध्वे, लुलुविढ्वे।

३९० । सुषामादिषु च । (८-३-९८)

सुषामादयः शब्दाः कृतषत्वा निपात्यन्ते । यथा—

सु + सामन् = सुषामन् । दुष्षन्धिः, सुष्षन्धिः । सुष्ठु, दुष्ठु इत्यादि ।

३९१ । ह्रस्वात् तादौ तद्धिते । (८-३-१०१)

ह्रस्वात् परस्य सस्य षः तकारादौ तद्धिते परे । यथा—

चतुस् + तयं = चतुष्टयम् । पदान्तेऽपि आदेशप्रत्ययभिन्नस्यापि षत्वार्थं वचनम् ।

३९२ । सातपदाद्योः (न) । (८-३-१११)

सात् इति तद्धितप्रत्ययस्य पदादिसकारस्य च न षत्वम् । यथा—

अग्निसात्, गुरुसात्, पितृसात् । दधि सिञ्चति, मधु सिञ्चति ।

---

णत्वप्रकरणम् ।

३९३ । रषाभ्यां नो णः समानपदे । (८-४-१)

रेफषकाराभ्यां परस्य नस्य णः स्यात्; रेफषकारौ नकारश्च एकस्मिन्नेव पदे वर्तन्ते चेत् । यथा—

चतुर्णा, वितीर्णे, पुष्णाति, मुष्णाति ।

प्रत्यु०—('समानपदे' किम्?) अग्निर्नयति ।

॥ * ॥ ऋवर्णाच्चेति वक्तव्यम् । यथा—तिसृणां, पितॄणाम् ।

३९४ । अट्कुप्वाङ्नुम्व्यवायेऽपि । (८-४-२)

अट्प्रत्याहारः, कवर्गः, पवर्गः, आङ् उपसर्गः, नुमागमः एभिर्व्यस्तैः यथासम्भवं समस्तैर्वा व्यवधानेऽपि रेफषकारऋकारेभ्यः परस्य नस्य णः स्यात् समानपदे । यथा—

अड्व्यवाये—करिणा, गुरुणा, चोरेण, पुरुषेण ।
कवर्ग—अट्—अर्केण, मूर्खेण, मृगाणाम् ।
पवर्ग ,, —दर्पेण, चर्मणा, पुष्पेण ।
आङ् ,, —पर्याणद्धम् ।
नुम् ,, —बृंहणम् ।
अट्पवर्ग ,, —ब्रह्मणा, रामेण ।

प्रत्यु० –('समानपदे' किम्?) वारिनिधिः ।

## ३९५ । प्रातिपदिकान्तनुम्विभक्तिषु च (वा पूर्वपदात्) । (८-४-११)

प्रातिपदिकान्ते नुमि विभक्तौ च यो नकारः तस्य पूर्वपदस्थान्निमित्तात् परस्य वा णत्वम्—असमानपदे णत्वामिदमिति स्वरूपेण सिध्यति । यथा—

प्रातिपदिकान्ते—माषवापिणौ—माषवापिनौ ।
नुमि—माषवापाणि—माषवापानि ।
विभक्तौ—माषवापेण —माषवापेन ।

## ३९६ । एकाजुत्तरपदे णः । (८-४-१२)

एकाच् उत्तरपदं यस्य स एकाजुत्तरपदः तस्मिन् समासे प्रातिपदिकान्तनुम्विभक्तिनकारस्य पूर्वपदस्थं निमित्तमादाय नित्यं णत्वम् । विकल्पनिवृत्त्यर्थं ण इति पुनर्ग्रहणम् । यथा—

प्रातिपदिकान्ते—वृत्रहणौ, वृत्रहणः ।
नुमि —क्षीरपाणि ।
विभक्तौ —क्षीरपेण ।

## ३९७ । कुमति च । (८-४-१३)

कवर्गवत्युत्तरपदेऽपि नस्य पूर्ववण्णत्वम् । यथा—

प्रातिपदिकान्ते—वस्त्रयुगिणौ, स्वर्गकामिणौ ।
नुमि —वस्त्रयुगाणि, स्वर्गकामाणि ।
विभक्तौ —वस्त्रयुगेण, स्वर्गकामेण ।

## [ ३९८ । उपसर्गादसमासेऽपि णोपदेशस्य । (८-४-१४)

णोपदेशस्य धातोः नकारस्य उपसर्गस्थं निमित्तमादाय णत्वं स्यात् समासे असमासेऽपि । यथा—

प्रणामः—प्रणमति ; परिणामः—परिणमति ।
प्रत्यु०—('णोपदेशस्य' किम् ?)—प्रनर्दति ।

## ३९९ । हिनुमीना । (८-४-१५)

अनयोर्नस्य उपसर्गस्थं निमित्तमादाय णत्वम् । यथा—

प्रहिणोति—प्रमीणाति ।

४०० । आनि लोट् । (८-४-१६)

आनि इति लोडुत्तमस्य नकारस्य उपसर्गस्थं निमित्तमादाय णत्वम् । यथा—
प्रभवाणि, प्रवपाणि, परियाणि ।

## ४०१ । नेर्गद-नद-पत-पद-घु-मा-स्यति-हन्ति-याति-वाति-द्राति-प्साति-वपति-वहति-शाम्यति-चिनोति-देग्धिषु च । (८-४-१७)

नि इत्युपसर्गस्य नस्य उपसर्गस्थं निमित्तमादाय णत्वम् । गद-नदादिषु परेषु यथा—प्रणिगदति, प्रणिनदति, परिणिनदति इत्यादि ।

## ४०२ । शेषे विभाषाऽकखादावषान्त उपदेशे । (८-४-१८)

अककारखकारादिः अषकारान्तश्च यो धातुरुपदेशे तस्मिन् शेषे परे उपसर्गस्थं निमित्तमादाय नेर्णत्वं वा । यथा—

प्रणिपचति, प्रनिपचति ; प्रणिभिनत्ति, प्रनिभिनत्ति ।
प्रत्यु०—('अकखादौ' किम्?) प्रनिकरोति – प्रनिखादति ।
('अषान्ते' किम्?) प्रनिपिनष्टि ।

४०३ । अनितेः । (८-४-१९)

उपसर्गस्थं निमित्तमादाय अनधातोर्नस्य णत्वम् । यथा—प्राणिति—प्राणः ।

४०४ । हन्तेरत् पूर्वस्य । (८-४-२२)

अकारपूर्वस्य हन्तेर्नकारस्य उपसर्गस्थं निमित्तमादाय णत्वम् । यथा—
प्रहणनं, परिहणनम् । प्रत्यु०—('अत्पूर्वस्य' किम्?) प्रघ्नन्ति, परिघ्नन्ति ।

## ४०५ । कृत्यचः । (८-४-२९)

कृत्प्रत्ययस्थो यो नकारोऽच उत्तरः तस्य उपसर्गस्थं निमित्तमादाय णत्वम् । अन, मान, अनीय, अनि, निष्ठा एते कृत्प्रत्यया अत्रोदाहरणम् । यथा—प्रयाणं, प्रयाणीयम् इत्यादि ।

प्रत्यु०—('अचः' किम्?) प्रभुग्नः ।

## ४०६ । णेर्विभाषा । (८-४-३०)

ण्यन्तात् यो विहितः कृत्प्रत्ययः तत्स्थस्य नकारस्य उपसर्गस्थं निमित्तमादाय वा णत्वम् । यथा—प्रयापणं, प्रयापनम् ।

### ४०७। हलश्चेजुपधात्। (८-४-३१)

हलादिर्यो धातुरिजुपधः तस्मात् परो यः कृत्प्रत्ययः तत्स्थस्य नस्य उपसर्गस्थं निमित्तमादाय वा णत्वम्। यथा—प्रकोपनम्, प्रकोपणम्।

### ४०८। इजादेः सनुमः। (८-४-३२)

इजादेः सनुमो हलन्तात् धातोर्विहितो यः कृत्प्रत्ययः तत्स्थस्य नस्य उपसर्गस्थं निमित्तमादाय णत्वम्। यथा—प्रेङ्खणम्।

सनुमश्चेत् इजादेरेवेति नियमार्थमिदम्।

### ४०९। न भाभूपूकमिगमिप्यायीवेपाम्। (८-४-६४)

एषामुपसर्गस्थं निमित्तमादाय कृन्नकारस्य न णत्वम्। यथा—प्रभानं, परिभवनम् इत्यादि।

### ४१०। षात् पदान्तात्। (८-४-३५)

पदान्तात् षकारात् परस्य न णत्वम्। यथा—निष्पादनं, दुष्पादनम् इत्यादि।

प्रत्यु०—('षात्' किम्?) निर्णयः। ('पदान्तात्' किम्?) पुष्णाति।

### ४११। पदान्तस्य। (८-४-३७)

पदान्तस्य नकारस्य न णत्वम्। यथा—रामान्, वृक्षान्, पितॄन्, कुर्वन्।

### ४१२। पदव्यवायेऽपि। (८-४-३८)

पदव्यवधानेऽपि न णत्वम्। 'प्रातिपदिकान्त' (३९५) इत्यादिना प्राप्तिः। यथा—माषकुम्भवापेन, चतुरङ्गयोगेन, पर्यवनद्धम्।

### ४१३। क्षुभ्नादिषु च। (८-४-३९)

न णत्वम्। यथा—क्षुभ्नाति, तृप्नोति इत्यादि।

---

## नामरूपावलिः॥

अत्र सुपां प्रक्रियाकथने प्रत्ययानां प्रकृतीनां च विकाराः पृथङ् निरूपिताः। रूपाणि तु उभयेषां युगपत् प्रवर्तनेनैव सिद्ध्यन्ति; अतः सुखार्थं तत्तत्प्रक्रियानुसंधानपुरस्सरं सामान्यशब्दानां रूपावलिर्विलिख्यते। विशेषशब्दानां तु रूपाणि तत्र तत्रैव प्रायशो दर्शितानि॥

**अकारान्तः पुल्लिङ्गो 'राम'-शब्दः ॥**

| एकवचनम् । | द्विवचनम् । | बहुवचनम् । |
|---|---|---|
| प्र—**रामः** (रुत्वविसर्गौ) | **रामौ** (वृद्धिरेचि) | **रामाः** (प्रथमयोः पूर्वसवर्णः) |
| स – **हे राम** एङ्ह्रस्वात् सम्बुद्धेरिति लोपः | **रामौ** ,, | **रामाः** ,, |
| द्वि—**रामम्** (अमि पूर्वः) | **रामौ** ,, | **रामान्** (तस्माच्छसो नः पुंसि) |
| तृ—**रामेण** टाङसिङसामिना त्स्याः, णत्वं | **रामाभ्यां** (सुपि चेति दीर्घः) | **रामैः** (अतो भिस ऐस्) |
| च—**रामाय** (ङेर्यः, सुपि च) | **रामाभ्यां** ,, | **रामेभ्यः** (बहुवचने झल्येत्) |
| पं – **रामात्** (ङसेरात्) | **रामाभ्यां** ,, | **रामेभ्यः** ,, |
| ष—**रामस्य** (ङसः स्यः) | **रामयोः** (ओसि चेत्येत्वं) | **रामाणां** { ह्रस्वनद्यापो नुट्, नामीति दीर्घः, णत्वम् |
| स—**रामे** (आद्गुणः) | **रामयोः** ,, | **रामेषु** बहुवचने झल्येत्, षत्वम् |

**स्त्रियां** ङ्याब्भ्यां विषयापहारात् अकारान्तो नास्त्येव ।

**नपुंसके धनशब्दः ॥**

| | | |
|---|---|---|
| प्र द्वि }—**धनं** (अतोऽम्, अमि पूर्वः) | **धने** (नपुंसकाच्चेत्यौङः शीः) | **धनानि** { जश्शसोः शिः, नपुंसकस्य झलचः इति प्रकृतेर्नुम्; नान्तत्वात् सर्व...चासम्बुद्धाविति दीर्घः । |

शेषं पुंवत् ।

## पुंसि सर्वशब्दः ॥

| | | |
|---|---|---|
| सर्वः | सर्वौ | सर्वे (जसः शी) |
| हे सर्व | सर्वौ | सर्वे |
| सर्वम् | सर्वौ | सर्वान् |
| सर्वेण | सर्वाभ्यां | सर्वैः |
| सर्वस्मै (ङेः स्मै) | सर्वाभ्यां | सर्वेभ्यः |
| सर्वस्मात् (ङसः स्मात्) | सर्वाभ्यां | सर्वेभ्यः |
| सर्वस्य | सर्वयोः | सर्वेषाम् {आमि सर्वनाम्नः सुट्, बहुवचने झल्येत्, षत्वम् |
| सर्वस्मिन् (ङेः स्मिन्) | सर्वयोः | सर्वेषु । |

क्लीबे—सर्वं सर्वे सर्वाणि । पुनस्तद्वत्, शेषं पुंवत् ।

जसः शी, स्मात्-स्मिनौ, ङेः स्मै, सुट्चामः सर्वनामसु ।
शीस्मात्स्मिनस्तु पूर्वादिनवकस्य विकल्पिताः ॥

---

## आकारान्तः ।

आकारान्ताः शब्दाः पुंसि न सुप्रसिद्धाः । स्त्रियामकारान्ता आप्प्रत्ययेन आकारान्ता भवन्ति; तादृशा एव प्रायः सर्वेऽप्याकारान्ताः । क्लीबे तु 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वविधानाद्दीर्घान्ताः सर्वे ह्रस्वान्ता भवन्ति । ततो ह्रस्वतुल्यमेव रूपं च । क्विबन्तत्वेन धात्वात्मका आदन्ताः (विरलप्रयोगाः) पुंस्त्रियोस्तुल्यरूपाः । तेषां भसंज्ञायाम् 'आतो धातोः' इत्याकारलोप एव प्रक्रिया ॥

| | | | | | |
|---|---|---|---|---|---|
| विश्वपाः | विश्वपौ | विश्वपाः | विश्वपे | विश्वपाभ्यां | विश्वपाभ्यः । |
| हे ,, | ,, | ,, | विश्वपः | ,, | ,, । |
| विश्वपाम् | ,, | विश्वपः | ,, | विश्वपोः | विश्वपाम् । |
| विश्वपा | विश्वपाभ्यां | विश्वपाभिः | विश्वपि | ,, | विश्वपासु । |

## स्त्रियाम् आबन्ताः ।

| | | | |
|---|---|---|---|
| रमा | (हल्ङ्यादिलोपः) | रमे (औङ आप इति शी) | रमाः (सवर्णदीर्घः) |
| हे रमे | {सम्बुद्धौ चेत्येत्वं, एङ्ह्रस्वात् सम्बुद्धेरिति लोपः,} | रमे | रमाः |
| रमां | (अमि पूर्वः) | रमे | रमाः |
| रमया | (आङि चाप इत्येत्वं) | रमाभ्यां | रमाभिः |

| | | | | |
|---|---|---|---|---|
| रमायै | (याडापः) | रमाभ्यां | रमाभ्यः | |
| रमायाः | | रमाभ्यां | रमाभ्यः | ह्रस्वनद्याप इति नुट्, णत्वम् । |
| रमायाः | | रमयोः | रमाणां | |
| रमायां | (याडापः ङेराम्) | रमयोः | रमासु । | |

## आबन्तं सर्वनाम ।

| | | | |
|---|---|---|---|
| सर्वा | | सर्वे | सर्वाः |
| हे सर्वे | | सर्वे | सर्वाः |
| सर्वा | | सर्वे | सर्वाः |
| सर्वया | | सर्वाभ्यां | सर्वाभिः |
| सर्वस्यै | सर्वनाम्नः स्याड्ढ्रस्वश्च | सर्वाभ्यां | सर्वाभ्यः |
| सर्वस्याः | ( ,, ) | सर्वाभ्यां | सर्वाभ्यः |
| सर्वस्याः | ( ,, ) | सर्वयोः | सर्वासां (आमि सर्वनाम्नः सुट्) |
| सर्वस्यां | ( ,, ) | सर्वयोः | सर्वासु । |

## इदुदन्तौ (घिसंज्ञौ)—पुंसि—हरि-गुरुशब्दौ—

| | | | | | |
|---|---|---|---|---|---|
| हरिः / गुरुः | रुत्वविसर्गौ | हरी / गुरू | प्रथमयोः पूर्वसवर्णः | हरयः / गुरवः | जसि चेति गुणः । |
| हे हरे / हे गुरो | ह्रस्वस्य गुणः, एङ्ह्रस्वात् सम्बुद्धेरिति सुलोपः | हरी / गुरू | ,, / ,, | हरयः / गुरवः | |
| हरिम् / गुरुम् | अमि पूर्वः | हरी / गुरू | | हरीन् / गुरून् | तस्माच्छसो नः पुंसि |
| हरिणा / गुरुणा | आङो नाऽस्त्रियां णत्वं | हरिभ्यां / गुरुभ्यां | | हरिभिः / गुरुभिः | |
| हरये / गुरवे | घेर्ङितीति गुणः | हरिभ्यां / गुरुभ्यां | | हरिभ्यः / गुरुभ्यः | |
| हरेः / गुरोः | घेर्ङितीति गुणः, ङसिङसोश्चेति पूर्वरूपम् | हरिभ्यां / गुरुभ्यां | | हरिभ्यः / गुरुभ्यः | |
| हरेः / गुरोः | ,, | हर्योः / गुर्वोः | सन्धिः यण् | हरीणाम् / गुरूणाम् | ह्रस्वनद्यापो नुट्, नामीति दीर्घः, णत्वम् । |
| हरौ / गुरौ | अच्च घेरिति प्रकृतेरत्त्वं, ङेरौत्त्वं च | हर्योः / गुर्वोः | | हरिषु / गुरुषु | आदेशप्रत्यययोरिति षत्वम् |

## स्त्रियां मतितनुशब्दौ—

अनयोः चतुर्थ्याद्येकवचनेषु 'ङिति ह्रस्वश्च' इति नदीकार्यमात्रं विशेषः । नदीकार्यं चात्र ङे-ङसि-ङस्सु 'आण्नद्याः' इति प्रत्ययस्य आडागमः; ङौ 'ङेराम्नद्याम्नीभ्यः' इत्यामादेशश्च । तेन मत्यै, तन्वै; मत्याः, तन्वाः; २. मत्यां तन्वां; इति च वैकल्पिकानि रूपाणि ॥

## क्लीबे वारित्रपुशब्दौ

| | | | | | | |
|---|---|---|---|---|---|---|
| प्र – | वारि | स्वमोर्नपुंसकादिति लुक् | वारिणी | नपुंसकाच्चेत्यौङः शी, इकोऽचि विभक्ताविति प्रकृतेर्नुम् णत्वं | वारीणि | जश्शसोः शिः, नपुंसकस्य झलचः इति नुम्, सर्वनाम ......सम्बुद्धौ इति दीर्घः, णत्वम् । |
| द्वि – | त्रपु | | त्रपुणी | | त्रपूणि | |
| हे – | वारि, वारे<br>त्रपु, त्रपो | गुणविकल्पः | वारिणी<br>त्रपुणी | | वारीणि<br>त्रपूणि | |
| तृ – | वारिणा<br>त्रपुणा | इकोऽचि विभक्ताविति नुम्, णत्वं | वारिभ्यां<br>त्रपुभ्यां | | वारिभिः<br>त्रपुभिः | |
| च – | वारिणे<br>त्रपुणे | नुम्, णत्वं | वारिभ्यां<br>त्रपुभ्यां | | वारिभ्यः<br>त्रपुभ्यः | |
| पं – | वारिणः<br>त्रपुणः | नुम्, णत्वं | वारिभ्यां<br>त्रपुभ्यां | | वारिभ्यः<br>त्रपुभ्यः | |
| ष – | वारिणः<br>त्रपुणः | नुम्, णत्वं | वारिणोः<br>त्रपुणोः | नुम्, णत्वं | वारीणां<br>त्रपूणां | ह्रस्वनद्यापो नुट्, नामीति दीर्घः णत्वं |
| स – | वारिणि<br>त्रपुणि | नुम्, णत्वं | वारिणोः<br>त्रपुणोः | नुम्, णत्वं | वारिषु<br>त्रपुषु | षत्वम् |

सम्बुद्धौ 'स्वमोर्नपुंसकात्' इति, सोर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावात् 'ह्रस्वस्य गुणः' न प्राप्नोति। तथापि तस्य गुणस्य विकल्प इष्यते। स चैवं सिध्यति—'ह्रस्वस्य गुणः सम्बुद्धौ' इत्यनुवृत्तिसंस्कृते सूत्रे 'सम्बुद्धौ' इति सप्तमी परसप्तमीति पक्षे सम्बुद्धौ परतो विहितत्वादङ्गकार्यं गुणो 'न लुमताङ्गस्य' इति प्रत्ययलक्षणनिषेधान्न प्रवर्तते। 'सम्बुद्धौ' इति विषयार्थे सप्तमीति चेत् व्याख्यायते, तर्हि अङ्गकार्यत्वाभावात् स्यादेव प्रत्ययलक्षणेन गुणः। उभयोः पक्षयोः प्रामाण्याद्विकल्पः फलति। अन्ये त्वभीष्टमिदमन्यथा साधयन्ति। यथा—'[1]इकोऽचि विभक्तौ' इति सूत्रे 'अचि'-ग्रहणमत्र ज्ञापकम्। तथा हि—सूत्रे तस्मिन् 'अचि' इति किमर्थमुक्तम्? हलि मा भूदिति। हल्यपि कामं प्रवर्तताम्, को दोषः—'वारिन् भ्याम्,' 'वारिन् भिः' इत्याद्यनिष्टं रूपमापतेत्। नैष दोषः—'नलोपः प्रातिपदिकान्तस्य' इति 'राजभ्याम्' इत्यादिष्विव नलोपो भविष्यति। भवतु, तथापि सम्बुद्धौ दोषः स्यात्, 'न ङिसम्बुद्ध्योः' इति तत्र नलोपस्य निषेधात्। नायमपि दोषः, सम्बुद्धेर्लुका लुप्तत्वेन प्रत्ययलक्षणनिषेधान्न सम्बुद्धिः परास्ति। एवम् 'अचि'-ग्रहणं व्यर्थं सत् ज्ञापयति प्रत्ययलक्षणनिषेधोऽनित्य इति। प्रत्ययलक्षणनिषेधः सम्बुद्धौ कदाचिन्न प्रवर्ततेति भीत्यैव किलाचार्यः 'अचि' इत्युक्तवान्। इति। व्याख्यातृवक्रतादृष्टान्ततया प्रपञ्चोऽयमत्रास्माभिरादृतः॥

तथा च सम्बुद्धौ वारे, वारि; त्रपो, त्रपु; कर्तः, कर्तृ इति सर्वत्र गुणविकल्प इष्यते। वारिणे, वारिणः इत्यादौ 'घेर्ङिति' इति

---

1. इकोऽचि व्यञ्जने माभूदस्तु लोपः स्वरः कथम्।
स्वरो वै श्रूयमाणोऽपि लुप्ते किन्न भविष्यति॥
रायात्वं तिसृभावश्च व्यवधानान्नुमा अपि।
नुड्वाच्य उत्तरार्थं तु इह किञ्चित् त्रपो इति॥

गुणः परत्वान्नुमा बाध्यते । आमि तु—'**नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन**' इति भाष्यवचनात् परमपि नुमम् बाधित्वा नुट् भवति । नुटि च कृते नामि' इति दीर्घः । पूर्वविप्रतिषेधो नाम विप्रतिषेधे पूर्वं कार्यमिति विपरीता व्यवस्था । 'इकोऽचि...' इति नुम्, 'अचि र ऋतः,' 'तृज्वत्क्रोष्टुः' इति तृज्वद्भावः एतान् परानपि बाधित्वा नुट् भवेदिति भाष्यवाक्यार्थः ॥

---

## ईकारान्तः ।

(१) अव्युत्पन्नाः (उणादिनिष्पन्ना वा), (२) क्विबन्तधात्वात्मकाः, (३) ङ्यन्ताश्चेति त्रिविधा ईकारान्ताः । तत्राव्युत्पन्नेषु ययी-पपी-वातप्रम्यादयः पुंसि; लक्ष्मी-तरी-तन्त्र्यादयः स्त्रियां च त्रिचतुरा एव । क्विबन्तेषु पञ्चषाः प्रसिद्धाः पुंस्त्रियोस्तुल्यरूपाश्च । ते च इयङादेशिनो यणादेशिनश्चेति द्विविधाः । ङ्यन्ता एव भूयिष्ठाः । यद्यपि ते नित्यस्त्रीलिङ्गास्तथापि पुंस्यपि उपसर्जनीभूता द्वित्रा ङ्यन्तकार्यं (सुलोपं) लभन्ते । त्रिविधानामपि नित्यस्त्रीलिङ्गानाम्

सम्बुद्धौ ह्रस्वता ङेराम्, आड्योगो ङसिङेङसाम् ।
आमि नुट् चेति चत्वारि नदीकार्याणि सुप्स्विह ॥

इति परिगणितानि नदीकार्याणि भवन्ति । पुंसि प्रथमलिङ्गग्रहणान्नदीत्वम् । क्लीबे तु सर्वेऽपि ह्रस्वादिकारान्ता भवन्ति ॥

१. **अव्युत्पन्नः पुंसि पपीशब्दः**—(पाति लोकमिति पपीः सूर्यः)

| | | | | | |
|---|---|---|---|---|---|
| पपीः | पप्यौ | पप्यः | पप्ये | पपीभ्यां | पपीभ्यः |
| हे पपीः | पप्यौ | पप्यः | पप्यः | पपीभ्यां | पपीभ्यः |
| पपीं {अमि पूर्वः} | पप्यौ | पपीन् {तस्माच्छसो नः पुंसि} | पप्यः | पप्योः | पप्यां |
| पप्या | पपीभ्यां | पपीभिः | पपी {सवर्णदीर्घः} | पप्योः | पपीषु । |

## २. क्विबन्तः पुंसि सुधीशब्दः—(इयङादेशी)

| | | | | | |
|---|---|---|---|---|---|
| सुधीः | सुधियौ | सुधियः | सुधिये | सुधीभ्यां | सुधीभ्यः |
| हे सुधीः | ,, | ,, | सुधियः | ,, | ,, |
| सुधियं | ,, | ,, | ,, | सुधियोः | सुधियां |
| सुधिया | सुधीभ्यां | सुधीभिः | सुधियि | ,, | सुधीषु । |

## ग्रामणीशब्दः—(यणादेशी)

| | | | | | |
|---|---|---|---|---|---|
| ग्रामणीः | ग्रामण्यौ | ग्रामण्यः | ग्रामण्ये | ग्रामणीभ्यां | ग्रामणीभ्यः |
| हे ,, | ,, | ,, | ग्रामण्यः | ,, | ,, |
| ग्रामण्यम् | ,, | ,, | ,, | ग्रामण्योः | ग्रामण्याम् |
| ग्रामण्या | ग्रामणीभ्यां | ग्रामणीभिः | ग्रामण्यां (ङेराम्) | ,, | ग्रामणीषु । |

अमि शसि च परत्वादियङ्यणौ, न तु पूर्वरूपपूर्वसवर्णदीर्घौ ।

## १. अव्युत्पन्नः स्त्रियां लक्ष्मीशब्दः—

| | | | | | |
|---|---|---|---|---|---|
| लक्ष्मीः | लक्ष्म्यौ | लक्ष्म्यः | लक्ष्म्यै (आण्नद्याः) | लक्ष्मीभ्यां | लक्ष्मीभ्यः |
| हे लक्ष्मि (नदीह्रस्वः) | ,, | ,, | लक्ष्म्याः | ,, | ,, |
| लक्ष्मीम् | ,, | लक्ष्मीः (पूर्वसवर्णदीर्घः) | ,, | लक्ष्म्योः | लक्ष्मीणां (नदीत्वान्नुट्) |
| लक्ष्म्या | लक्ष्मीभ्यां | लक्ष्मीभिः | लक्ष्म्यां (ङेराम्) | ,, | लक्ष्मीषु । |

## २. क्विबन्ताः स्त्रियाम्—

एषु विशेष्यनिघ्नाः पुंवत् । नित्यस्त्रीलिङ्गानामियङादेशिनां स्त्रीशब्दवर्जं सम्बुद्धौ न नदीह्रस्वम्; अन्यत्र नदीकार्याणि वा । यणादेशिनां तु नित्यस्त्रीलिङ्गानां (सन्ति चेत्) नित्यं नदीकार्यम् ॥

## ३. ङ्यन्तः स्त्रियां गौरीशब्दः—

सौ हल्ङ्यादिलोपो विशेषः; शेषं लक्ष्मीवत् ।

## ऊकारान्तः—

ईकारान्तवत्; ङ्यन्त इति विभागो नास्तीत्येव भेदः ।

## ऋकारान्ताः । पुंसि कर्तृशब्दः—

| | | |
|---|---|---|
| कर्ता (अनङ्, उपधादीर्घः, हल्ङ्यादिलोपः, नलोपः,) | कर्तारौ (ऋतो ङीति गुणः अप्तृन्निति दीर्घश्च) | कर्तारः (गुणदीर्घौ) |
| हे कर्तः (गुणः, हल्ङ्यादिलोपश्च) | ” ” | ” |
| कर्तारम् (गुणदीर्घौ) | ” | कर्तॄन् (पूर्वसवर्णदीर्घः) |
| कर्त्रा (सन्धिः यण्) | कर्तृभ्यां | कर्तृभिः |
| कर्त्रे ( ” ) | ” | कर्तृभ्यः |
| कर्तुः (ऋत उत्) | ” | ” |
| ” ” | कर्त्रोः | कर्तॄणां (नुट्दीर्घौ) |
| कर्तरि (गुणः) | ” | कर्तृषु (षत्वम्) |

पितृप्रभृतीनामव्युत्पन्नानां सर्वनामस्थाने दीर्घाभावो भेदः ।

## स्त्रियां 'मातृ'-शब्दः—

शसि मातॄः; शेषं पितृवत् । स्वसृशब्दस्य शसि स्वसॄः; शेषं कर्तृवत् । स्त्रियां स्वस्रादिसप्तकमेव ऋकारान्तम्; अन्येषां 'ऋन्नेभ्य...' इति ङीब्विधानात् ।

## क्लीबे कर्तृशब्दः—

इदुदन्तवन्नुमागमेन रूपसिद्धिः । क्लीबे इगन्तानां विशेष्यनिघ्नानां गालवमतेन तृतीयादिषु पुंवद्भावे पुल्लिङ्गरूपाणि च ॥

एजन्ता विरला एव शब्दाः; तेषूपलभ्यमानाः प्रागेव दर्शितप्रक्रियाश्च । हलन्तेष्वप्येवमेवोन्नेया रूपसिद्धिः । तेषु प्रायः प्रत्ययानामादेशाभावात् सुगमतरा प्रक्रिया । सर्वनामस्थानकार्यं, पदकार्यं, भकार्यम् इति विभागं पुरस्कृत्य प्रकुर्यात् । हल्सन्धावुक्ताः कुत्व-ढत्व-षत्व-जश्त्व-चर्त्व-रुत्वादयः पदान्तविकारा अप्यनुसंधेयाः ॥

# ॥ तिङन्तप्रक्रिया ॥

फलानुकूलो व्यापारः, व्यापारजन्यं फलं वा क्रिया । यथा— पचनक्रियायां पात्राधिश्रयणाग्निज्वालनादिर्व्यापारः, तण्डुलादिषु विक्लेदः फलम्; यथा च गमनक्रियायां चलनं व्यापारो देशान्तरसंयोगश्च फलम् । एवमन्यत्रापि फलव्यापारावूह्यौ । क्रिया तावत् शौर्यसौन्दर्यवैदुष्यादि-गुणवत् द्रव्यमाश्रित्यैव तिष्ठति, न तु स्वयमेव स्थातुं शक्नोति । क्रियाया आश्रयभूतं द्रव्यं कारकमित्युच्यते । तथा च क्रियाजनकं कारकमिति कारकलक्षणम् । तच्च—

अपादानं, संप्रदानं, करणं, तदधेः परम् ।
कर्म, कर्तेति षोढैव पाणिन्युक्तमनुक्रमात् ॥

तत्र व्यापारांशस्याश्रयः कर्ता ; फलांशस्याश्रयः कर्म ; क्रियासिद्धौ साधकी-भूय कर्तुर्यदुपकरोति तत् करणम् ; कर्तृकर्मान्यतरद्वारा क्रियाया आधारभूतं अधिकरणम् इत्यादि । यथा—देवदत्तस्तण्डुलं पचतीत्यत्र पात्राधिश्रय-णाग्निज्वालनादिरूपो व्यापारो देवदत्तमाश्रित्य तिष्ठतीति देवदत्तः कर्ता ; विक्लेदरूपस्य फलस्याश्रयस्तण्डुल इति तण्डुलः कर्म । दण्डेन हन्तीत्यादौ हननक्रियासाधने कर्तुर्दण्डोऽत्यन्तमुपकरोतीति दण्डः करणम् । तथा स्थाल्यां तण्डुलं पचतीति पचनक्रियायाः कर्मभूततण्डुलद्वारा आधारभूता स्थाली अधिकरणमित्यादि । यत्र व्यापारः फलञ्चैकमेव द्रव्यमाश्रित्याव-तिष्ठते सा क्रिया अकर्मिका । यथा निद्रातीति । निद्राक्रियायां हि देव-दत्तो निद्रातीत्यादौ विषयेभ्यो मनोव्यावर्तनरूपो व्यापारः, विश्रमजन्य-नवीभावप्रतिपत्तिरूपं फलं च देवदत्तं कर्तारमेवाश्रयतः। फलव्यापारयो-र्वैयधिकरण्ये (आश्रयभेदे) एव क्रियायाः कर्मसंभवः । एवं कारकेषु कर्ता प्रधानम् । किञ्च स एव हि क्रियाया मुख्यांशस्य व्यापारस्याश्रयः ।

कर्तुरनन्तरं कर्मणः प्राधान्यं, क्रियायामप्रधानांशस्य फलस्याश्रयत्वात्। अन्यानि तु कारकाणि करणादीनि परिकरमात्रम् ॥

क्रिया किल द्रव्यमाश्रित्यैव तिष्ठतीत्युक्तम्; तथा च वृक्षावलम्बिन्या लताया इव आश्रयभूतद्रव्यप्रतीतिपूर्वमेव क्रियायाः प्रतीतिर्जायते। आश्रयेषु च कर्ता कर्म च धातुवाच्यांशस्य समवायीति प्रधानम्। इतराणि तु प्रकृतधातुवाच्यव्यापाराक्षिप्तानामवान्तरव्यापाराणामाश्रया इत्यप्रधानम्। अतः कर्तृकर्माविनाभावेनैव क्रियाया बोधो जायते। यत्र कर्तारं पुरस्कृत्य क्रिया भासते तत्र कर्तरि प्रयोगः; यत्र कर्म पुरस्कृत्य क्रिया भासते तत्र कर्मणि प्रयोगः। यदा पुनः कारकसंसर्गं पदान्तरबोध्यत्वेन विवक्षित्वा केवला क्रिया धातुना विवक्ष्यते तदा भावे प्रयोगः। भावो नाम केवला क्रियैव। समानाधिकरणफलव्यापारवाचकानां धातूनां कर्ता कर्म च वस्तुत एकमेव। एवञ्जातीयकानामितरानधीनत्वलक्षणं प्राधान्यं पुरस्कृत्य जायमानो व्यपदेशः कर्तेत्येव युज्यते। यथा—मण्डलेश्वरोऽपि सम्राट् सम्राडित्येव व्यवह्रियते। इत्थमकर्मकाणां कर्म पुरस्कृत्य प्रयोगो न संभवति। यासां क्रियाणां कारकरूपा उपाधयो विरलास्तासामेव निरुपाधिकं प्रतिभानं स्वारसिकं युज्यत इति अकर्मकाणां भावे, कर्तरि च प्रयोगः; सकर्मकाणां तूक्तयुक्त्यैव कर्मणि कर्तरि च प्रयोगः। तदेतदभिसन्धायाचार्यः सूत्रयति—

**४१४। लः कर्मणि च भावे चाकर्मकेभ्यः। (३-४-६९)**

कर्तरीत्यनुवर्तते। लकारः कर्तरि कर्मणि च स्यात्। अकर्मकेभ्यस्तु कर्तरि, भावे च। अथ लस्यादेशानाह—

**४१५। लस्य। (३-४-७७)**

इत्यधिकृत्य—

**४१६। तिप्तस्झि-सिप्थस्थ-मिब्वस्मस्-तातांझ-थासाथांध्वम्-इड्वहिमहिङ्। (३-४-७८)**

एतेऽष्टादश प्रत्यया लस्यादेशाः स्युः। एषां विभाग उच्यते—

४१७। लः परस्मैपदम्। (१-४-९९)

लादेशाः परस्मैपदसंज्ञा स्युः॥

४१८। तङानावात्मनेपदम्। (१-४-१००)

तङ्प्रत्याहार 'आन' इत्ययं प्रत्ययश्चात्मनेपदसंज्ञः। तङ् इति त आताम् इत्यादीनां महिङ्पर्यन्तानां प्रत्याहारः। तिङ् इति च सर्वेषाम्। तथा च तिप्तस् इत्यारभ्य मस्पर्यन्तानामेव परस्मैपदसंज्ञा। तिङस्तावदेवं द्विविधाः, परस्मैपदमात्मनेपदं चेति। प्रत्ययानां श्लोकेन संग्रहः—

तिप्तस्झिसिप्थस्थमिपश्च वस्मसौ क्रमात् परस्मैपदसंज्ञका अमी।
तातांझथासः पुनरात्मनेपदे भवेयुराथांध्वमिटो वहिर्महिङ्॥

अनयोर्विषयं विभजति—

४१९। अनुदात्तङित आत्मनेपदम्। (१-३-१२)

४२०। स्वरितञितः कर्त्रभिप्राये क्रियाफले। (१-३-७२)

४२१। शेषात् कर्तरि परस्मैपदम्। (१-३-७८)

उदात्तेतां धातूनां परस्मैपदम्; अनुदात्तेतामात्मनेपदम्; स्वरितेतामुभयमिति व्यवस्था। तत्राजन्तधातूनामजूपेत्करणस्यासौकर्यात् ङित आत्मनेपदिनः, ञित उभयपदिनः, निरनुबन्धाः शेषत्वात् परस्मैपदिन इति नियमः कृतः। अत्रोभयपदिनां पदभेदे अर्थभेदोऽप्यस्तीति कृत्वा 'कर्त्रभिप्राये क्रियाफले' इत्युक्तम्। कर्तृगामिनि क्रियाफले इत्यर्थः। अत्र क्रियाफलं लौकिकमुपयोगरूपमेव विवक्षितं, न तु शास्त्रीयं व्यापारसहजन्यं फलम्। यथा—पचनक्रिया परार्थमात्मार्थमपि भवति। यत्र परार्था क्रिया तत्र परस्मैपदम्; यत्र त्वात्मोपयोगायैव तत्रात्मनेपदमित्यन्वर्थे संज्ञे। इयं व्यवस्था प्रयोक्तृणामश्रद्धया काला-

ल्लुप्तप्रचारा विकल्पमात्र इदानीं पर्यवसिता । 'अग्निष्टोमेन स्वर्गकामो यजेत' इत्यादिविधिवाक्येषु 'गयाश्राद्धं करिष्ये' इत्यादिसङ्कल्पेषु च परमनुष्ठीयते । स्वरसंस्कारं विना यतः संस्कृतभाषेदानीन्तनैरेकश्रुत्यैव भाष्यते तत उदात्तेत्त्वानुदात्तेत्त्वस्वरितेत्त्वैर्लक्षितः पदविवेकोऽपि सङ्केतमात्रं संवृत्तः, न तूपयोगाय कल्पते । अतो नाम्नां लिङ्गव्यवस्थेव धातूनां पदव्यवस्थापि पृथग्यत्नेनैवावगन्तव्या वर्तते । अथोभे अपि पदे त्रिभिः पुरुषैर्विभज्येते—

४२२ । तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः । (१-४-१०१)

तिङ उभयोः पदयोस्त्रयः त्रिकाः क्रमादुक्तसंज्ञाः स्युः ॥

४२३ । तान्येकवचनद्विवचनबहुवचनान्येकशः । (१-४-१०२)

प्रथमादिपुरुषत्रयं क्रमात् प्रत्येकमेकवचनादिसंज्ञं स्यात् । 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इति वचनानां विनियोगः पूर्वमेवोक्तः । पुरुषाणां तु विनियोगमाह—

४२४ । युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः । (१-४-१०५)

४२५ । अस्मद्युत्तमः । (१-४-१०७)

४२६ । शेषे प्रथमः । (१-४-१०८)

समानमधिकरणं प्रवृत्तिनिमित्ताश्रयो येषां ते समानाधिकरणाः । यथा 'नीलमुत्पलम्' इत्यत्र नीलत्वमुत्पलत्वं च एकमेव वस्तु उत्पलरूपमाश्रित्य तिष्ठति; अतो नीलपदम् उत्पलपदस्य समानाधिकरणं विशेषणम् । यत्र त्वाश्रयभेदस्तत्र व्यधिकरणं विशेषणम् । यथा—राज्ञः पुरुष इति । अत्र यद्यपि राजपदं पुरुषं विशिनष्टि तथापि राजत्वं पुरुषत्वं च भिन्नवस्तुनिष्ठम् । एकस्यामेव विभक्तौ प्रयुक्तयोः विशेषणविशेष्ययोः [1]सम्बन्धः सामानाधिकरण्यमिति फलितम् । केन सह

1. भिन्नप्रवृत्तिनिमित्तयोः पदयोरेकस्मिन् धर्मिणि वृत्तिः ।

सामानाधिकरण्यमित्याकाङ्क्षायां लकारवाच्यकारकेणेत्यर्थादायाति। स्थानी = स्थानवान्, प्रसक्तः, अप्रयुज्यमानोऽर्थसिद्ध इति यावत्। उपपदं नाम साकाङ्क्षं सहप्रयुज्यमानं पदम्। एवं परिकरबन्धं कृत्वा सूत्रार्थो व्याख्यायते—लकारवाच्यभूतेन कारकेण (कर्त्रा, कर्मणा वा) समानाधिकरणे युष्मच्छब्दे प्रयुज्यमाने अर्थसिद्धे वा मध्यमः प्रयोक्तव्यः; एवं भूते अस्मच्छब्दे उत्तमः; मध्यमोत्तमयोरविषये प्रथमः। कर्तरि प्रयोगे कर्तुः, कर्मणि प्रयोगे कर्मणश्च युष्मदा अस्मदा नामान्तरेण वा सामानाधिकरण्यं विमृश्य पुरुषनिर्णयः। वचननिर्णयोऽप्येवमेव। कर्तुः कर्मणो वा एकत्वे एकवचनम्; द्वित्वे द्विवचनम्; बहुत्वे बहुवचनमिति। एवं च पुरुषद्वारा कियायामपि संख्यायोगः। लकारार्थभूतं कारकं पुरुषवचननियामकमिति संक्षेपः। अथ कथं भावे प्रयोगे पुरुषवचनविभागः, तत्र लकारवाच्यस्य कारकस्यैवाभावात्? इति चेत्, नास्त्येवेत्युत्तरम्। प्रथमपुरुष एकवचनं च सामान्यमिति कृत्वा प्रथमपुरुषैकवचनप्रत्यय एव भावे प्रयोगे सर्वत्र प्रयुज्यते। पदयोरुभयोरपि पुरुषवचनप्रत्यया यथायथं विभज्याधो दर्शिताः—

## परस्मैपदम्।

| | सानुबन्धाः। | | | निरनुबन्धाः। | | |
|---|---|---|---|---|---|---|
| | एक० | द्वि० | बहु० | एक० | द्वि० | बहु० |
| प्रथमः— | तिप् | तस् | झि। | ति | तस् | झि। |
| मध्यमः— | सिप् | थस् | थ। | सि | थस् | थ। |
| उत्तमः— | मिप् | वस् | मस्। | मि | वस् | मस्। |

## आत्मनेपदम्।

| | | | | | | |
|---|---|---|---|---|---|---|
| प्रथमः— | त | आताम् | झ। | त | आताम् | झ। |
| मध्यमः— | थास् | आथाम् | ध्वम्। | थास् | आथाम् | ध्वम्। |
| उत्तमः— | इट् | वहि | महिङ्। | इ | वहि | महि। |

परस्मैपदैकवचनेषु पकारः; आत्मनेपदोत्तमैकवचने टकारः; तद्बहुवचने ङकारश्च इत्। तसादौ सकारस्य, आतामादौ मकारस्य च 'न विभक्तौ तुस्माः' इति नेत्संज्ञा। झि, झ इत्यनयोः 'चुटू' इत्यनेन प्राप्ताऽपीत्संज्ञा नात्र विवक्षिता; 'झोऽन्तः' (४६४) इति तस्यादेशविधानात्॥

अथ कोऽसौ 'लः'? यस्य तिबादय आदेशा विधीयन्ते। 'ल' इति लट्, लिट्, लुट्, लृट्, लेट्, लोट्, लङ्, लिङ्, लुङ्, लृङ् इति प्रत्ययदशकस्य सामान्यग्रहणम्। एषु लेडेकश्छन्दस्येव प्रयुज्यते; अन्ये नव साधारणाः। ननु लट्, लिट् इत्यादीन् कुत्राप्यदृष्टश्रुतान् प्रत्ययान् प्रकल्प्य पारमार्थिका दृष्टश्रुताः ति, तस् इत्यादयस्तेषामादेशा इति किमर्थं गण्यन्ते? किं नायं शिरोवेष्टनेन प्राणायामः? इति चेत्, नैवम्। कालसंसर्गं विना क्रियाया अन्वयपूर्तिर्न स्यात्। कालश्च भूतो, भावी, वर्तमान इति त्रिविधः। तत्र भूतभाविनौ पुनर्दूर आसन्नश्चेति द्विविधौ। तयोरासन्नः अद्यतन इति, दूरोऽनद्यतन इति चोच्यते। भूतस्य पुनः परोक्षभूतमिति तृतीयोऽप्यस्ति प्रभेदः। वर्तमानस्त्ववधिभूतत्वादेकविध एव। एवम्—

| | |
|---|---|
| (१) अद्यतनभूतम्। | (४) अद्यतन भावि। |
| (२) अनद्यतनभूतम्। | (५) अनद्यतन भावि। |
| (३) परोक्षभूतम्। | (६) वर्तमानम्। |

चेति भेदप्रभेदैः षड्विधः कालः। किं च विधिनियोगप्रार्थनादिभिः प्रकारैर्विशिष्टायाः क्रियायाः प्रत्यायनमावश्यकम्। उक्तान् कालभेदान् प्रकारभेदांश्च दर्शयितुं कल्पिता लडादयः। ननु कथमिदं घटते? लकाराणां हि कर्तृकर्मभावेष्वन्यतम एव वाच्योऽर्थ उक्तः। सत्यं, लडादयः कर्त्रादीनेवाभिदधति, किं तु लट्त्वलिट्त्वादिविशेषेण कालप्रकारावपि द्योतयन्ति। तथा हि—यदा धातुर्वर्तमानकालावच्छिन्नायां क्रियायां वर्तते तदा लडाख्यो लकारः; यदा भूतकालावच्छिन्नायां,

तदा लुङाख्यः; अन्यदा अन्य इति । तथा च लत्वसामान्येन कर्त्रादीन्, लट्त्वलिट्त्वादिविशेषैः कालप्रकारौ च बोधयन्ति लकारा इति तेषामुभयप्रकाशकत्वम् ॥

अथ लकाराणां कालप्रकारविवेकः—लोट्, लिङ्, लृङ् एते प्रकारबोधकाः, अन्ये षट् कालबोधकाः । तत्र—

४२७ । वर्तमाने लट् । (३-२-१२३)

वर्तमानकालसंसृष्टक्रियावृत्तेर्धातोः (कर्तृकर्मभावेषु) लट् स्यात् ॥

४२८ । लुङ् (भूते) । (३-२-११०)

भूतसामान्यवृत्तेर्धातोर्लुङ् स्यात् ॥

४२९ । अनद्यतने लङ् । (३-२-१११)

अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् ॥

४३० । परोक्षे लिट् । (३-२-११५)

परोक्षमप्रत्यक्षं, वक्तुः साक्षात्कारायोग्यकालिकम् । परोक्षभूतार्थवृत्तेर्धातोर्लिट् ॥

४३१ । अनद्यतने लुट् (भविष्यति) । (३-३-१५)

अनद्यतनभविष्यदर्थवृत्तेर्धातोर्लुट् ॥

४३२ । लृट् शेषे च । (३-३-१३)

अद्यतनभविष्यति सामान्यभविष्यति च वर्तमानाद्धातोर्लृट् । अथ प्रकारबोधका लकाराः—

४३३ । विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् । (३-३-१६१)

४३४ । लोट् च । (३-३-१६२)

विध्याद्यर्थविषयार्थकाद्धातोर्लिङ्लोटौ स्तः । विधिश्चोदना, भृत्यादेर्निकृष्टस्य प्रवर्तनम्; अन्येऽपि चोदनाभेदा एव ॥

## ४३५ । आशिषि लिङ्लोटौ । (३-३-१७३)

आशीर्विषयार्थवृत्तेर्धातोर्लिङ्लोटौ स्तः । अर्थान्तराण्यप्यनयोर्लकारार्थप्रकरणे वक्ष्यन्ते ॥

## ४३६ । लिङ्निमित्ते लृङ् क्रियातिपत्तौ । (३-३-१३९)

क्रियातिपत्तेरधिकस्यार्थस्य प्रतीतौ हेतुहेतुमद्भावादौ लिङर्थे वर्तमानाद्धातोर्भविष्यति काले लृङ् ॥

कालप्रकारयोः प्राचीनैरन्वर्थानि नामानि कृतान्यासन् । तानि मात्रालाभव्यसनी पाणिनिरुपेक्ष्य 'ल' इति वर्णस्याक्षरमालामालंब्य कृत्रिमाः संज्ञाः कृतवान्; ताश्च प्रक्रियासाम्योपलम्भात् टितो ङितश्चेति द्विधा विभक्तवान् । प्राचीनसंज्ञास्त्वेताः—

| कालः । | प्रकारः । |
|---|---|
| भवन्ती = लट् । | अतिसर्गिणी = लोट् ।[1] |
| परोक्षा = लिट् । | विधायिका = लिङ् । |
| (भूत) अनद्यतनी = लङ् । | अतिपातिका = लृङ् । |
| (भूत) अद्यतनी = लुङ् । | |
| भविष्यन्ती = लृट् । | |
| (भावि) अनद्यतनी = लुट् । | |

सर्वेषामपि लकाराणां तिबादय एव प्रत्ययाः; भेदप्रतीतिस्तु आगमैरादेशैर्विकरणप्रत्ययैश्च । अथ के नाम विकरणप्रत्ययाः?—इह यथा सुपः प्रातिपदिकेभ्योऽञ्जसैवोत्पद्यन्ते तथा तिङो धातुभ्यो विना व्यवधानमुत्तरे न प्रवर्तन्ते; किंतु मध्ये तयोर्निरर्थकाः प्रत्ययाः प्रक्षिप्यन्ते । रूपनिष्पादनादन्यत् नास्त्येषां प्रयोजनम् । त एते प्रत्यया विकरणसंज्ञाः । विकरणम् = विकारहेतुरित्यन्वर्था संज्ञा । धातुभ्य एवं द्विगुणाः प्रत्ययाः—प्रथमं रूपनिष्पादका विकरणसंज्ञाः; ततः पुरुषवचन-

१. प्रकारस्योक्तास्त इमाः संज्ञा ऊहिता एव; अन्याः पुनर्यास्कादिभिर्व्यवहृताः ।

बोधकास्तिङः इति। अत्र उपर्युपरिप्रत्ययोत्पत्तौ विकरणं प्रति केवलो धातुः प्रकृतिः; तिङ्प्रत्ययं प्रति विकरणविशिष्टो धातुरिति व्यवस्था। विशिष्टप्रकृतेरप्येवं प्रकृतित्वसम्पादनार्थं किल प्रकृतेरङ्गसंज्ञां विधाय, तां च 'यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' (१८९) इति आदिशब्दघटितां मध्यपातिप्रत्ययान्तरग्राहिणीं लक्षितवानाचार्यः। उक्तसूत्रव्याख्या दृश्यताम्॥

नव सन्ति विकरणप्रत्यया असाधारणाः। शप्, लुक्, श्लु, श्यन्, श्नुः, श, श्नम्, उ, श्ना इति। एषु लुक्, श्लु इति द्वौ लोपरूपौ। अन्येषु अन्त्यो हल् आदिः शकारश्चानुबन्धः। अमुकस्य धातोरमुकं विकरणमिति विवेचनं तु गणकरणेन। अत्र पाणिनिरादिमं विकरणमुत्सर्गं प्रकल्प्य शेषानष्टौ तस्यापवादान् करोति। यथा—

**४३७। कर्तरि शप् (सार्वधातुके)। (३-१-६८)**

कर्तरि प्रयुक्ते सार्वधातुके परे धातोः शप्प्रत्ययः स्यात्। प्रत्ययानां सार्वधातुकार्धधातुकभेदं यथाप्रदेशं वक्ष्यामः। अथ शपोऽपवादा उच्यन्ते—

**४३८। दिवादिभ्यः श्यन्। (३-१-६९)**

दिवादिगणपठितेभ्यो धातुभ्यः श्यन् प्रत्ययः शपोऽपवादः॥

**४३९। वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रासित्रुटिलषः। (३-१-७०)**

एभ्यो धातुभ्यः श्यन् वा; श्यनभावपक्षे औत्सर्गिकः शप्॥

**४४०। स्वादिभ्यः श्नुः। (३-१-७३)**

**४४१। श्रुवः शृ च। (३-१-७४)**

श्रुधातोः श्नुप्रत्ययस्तत्संनियोगेन धातोः 'शृ' इत्यादेशश्च॥

**४४२। तुदादिभ्यः शः। (३-१-७७)**

**४४३। रुधादिभ्यः श्नम्। (३-१-७८)**

४४४। तनादिकृञ्भ्य उः। (३-१-७९)

४४५। क्र्यादिभ्यः श्ना। (३-१-८१)

४४६। स्तन्भु-स्तुन्भु-स्कन्भु-स्कुन्भु-स्कुञ्भ्यः-श्नुश्च। (३-१-८२)

एभ्यः श्ना श्नुश्च स्तः॥

४४७। अदिप्रभृतिभ्यः शपः (लुक्)। (२-४-७२)

अदादिभ्यः शपो लुक् स्यात्॥

४४८। जुहोत्यादिभ्यः श्लुः। (२-४-७५)

एभ्यः शपः श्लुः। श्लुरपि लोपपर्याय इत्युक्तम् (३३०)। इह किल भूवादिरदादिर्दिवादिरित्यादिर्दशगणात्मको धातुपाठः। तत्राष्टानामदादिप्रभृतीनां लुगाद्यपवादविधानाद् भूवादिचुराद्योः परिशिष्टयोः सनाद्यन्तानां चौत्सर्गिकः शप्। तत्र चुरादीनां 'णिच्' इत्यन्योऽप्यस्ति स्वार्थिकः प्रत्यय इति विशेषः। विकरणप्रत्ययांस्तत्तद्गणनिर्देशपूर्वं शार्दूलविक्रीडितेन संगृह्णाति प्रक्रियासर्वस्वकारो भट्टनारायणः—

"भूवादौ शबदादिकेषु लुगपि, श्लुः स्याज्जुहोत्यादिषु,
श्यन् दैवादिकधातुषु, श्नुरपि च स्वादौ, तुदादौ तु शः,।
रुध्यादौ श्न,-मथो तनादिषु भवेदुप्रत्ययः, क्र्यादिषु
श्ना स्यात्, स्वार्थिकणिच्चुरादिषु, पुनस्तत्रापि शब्जायते॥"

विकरणप्रत्यययोगं न सर्वे धातुभ्य उत्पद्यमानाः प्रत्यया अपेक्षन्ते। इह हि प्रातिपदिकेभ्यो यथा सुपस्तद्धिताश्चेति द्विविधाः प्रत्ययाः भवन्ति, तथा धातुभ्योऽपि तिङः कृतश्चेति द्विविधाः प्रत्ययाः। तेषु येषां विकरणमपेक्षितं ते सार्वधातुकसंज्ञाः कृताः; येषां तु विकरणमनपेक्षितं ते आर्धधातुकसंज्ञाः। लिडाशीर्लिङौ वर्जयित्वा तिङः सर्वेऽपि सार्वधातुकाः। कृत्सु भूयिष्ठा आर्धधातुकाः; विरलास्तु सार्वधातुकाः शकारेण अनुबन्धेन चिह्निताः। प्रक्रियार्थं पुनराचार्यो विकरणेष्वपि सार्वधातुकार्धधातुकभेदं करोति। तथा चात्र सूत्राणि—

४४९ । तिङ् शित् सार्वधातुकम् । (३-४-११३)

धातोर्विहितेषु प्रत्ययेषु तिङश्शितश्च सार्वधातुकसंज्ञाः ॥

४५० । आर्धधातुकं शेषः (३-४-११४)

तिङ्शिद्भ्योऽन्ये धातोर्विहिताः प्रत्यया आर्धधातुकसंज्ञाः ॥

४५१ । लिट् च । (३-४-११५)

लिट् तिङप्यार्धधातुक एव ।

४५२ । लिङाशिषि । (३-४-११५)

आशीरर्थको लिङपि तथा । 'कर्तरि शप्' इति कर्तरि प्रयोग एव शबादीन्युक्तानि विकरणानि । भावकर्मप्रयोगयोस्तु—

४५३ । सार्वधातुके यक् । (३-१-६७)

भावकर्मार्थयोः प्रयुक्ते सार्वधातुके परे धातोर्यक् प्रत्ययः स्यात् । शप इव यकोऽपवादविधानाभावात् भावकर्मणोर्न विकरणभेदः । दशानामपि गणानां यगेक एव विकरणम् ॥

अथ केषुचिल्लकारेषु प्रयोगभेदेऽपि गणभेदेऽप्यभिन्नानि सन्ति विकरणानि । तथा हि—

४५४ । स्यतासी ऌलुटोः । (३-१-३३)

ऌ इति लङ्ऌटोर्ग्रहणम् । धातोर्लङ्ऌटोः परयोः स्यप्रत्ययः, लुटि तासिप्रत्ययश्च । कर्तरि शबादीनां भावकर्मणोर्यकश्चायमपवादः ॥

४५५ । च्लि लुङि । (३-१-४३)

लुङ्येवं च्लिप्रत्ययः स्यात् ॥

४५६ । च्लेः सिच् । (३-१-४४)

च्लेः सिजादेशः स्यात् ॥

४५७ । शल इगुपधादनिटः क्सः । (३-१-४५)

शलन्तादिगुपधादनिटस्तु धातोश्च्लेः क्स इत्यादेशः, न तु सिच् ।

**४५८। णिश्रिद्रुस्रुभ्यः कर्तरि चङ्। (३-१-४८)**

णिप्रत्ययान्तेभ्यो धातुभ्यः श्रिद्रुस्रुभ्यश्च चङ्; अयं कर्तरिप्रयोग एव, न तु भावकर्मणोरिति विशेषः। अतो भावकर्मणोरौत्सर्गिकः सिच्, तदपवादः क्सश्चैव ॥

**४५९। अस्यतिवक्तिख्यातिभ्योऽङ्। (३-१-५२)**

एभ्यः कर्तर्यङ्। भावकर्मणोस्तु सिजेव ॥

**४६०। लिपिसिचिह्वश्च। (३-१-५३)**

एभ्योऽपि कर्तर्यङ् ॥

**४६१। पुषादिद्युताद्यॢदितः परस्मैपदेषु। (३-१-५५)**

पुषादिभ्यः (दिवाद्यन्तर्गणभूतेभ्यः), द्युतादिभ्यः (भूवाद्यन्तर्गणभूतेभ्यः) ॡदिद्भ्यश्च धातुभ्यः परस्मैपदलुङि अङ् स्यात्। 'परस्मैपदेषु' इत्युक्तेः कर्तर्येवेति स्पष्टम् ॥

**४६२। इरितो वा। (३-१-५७)**

इरितो धातोः परस्मैपदे लुङ्यङ् वा ॥

लुङ्येवं चत्वारि विकरणानि—सिच्, क्सः, चङ्, अङ् चेति। तत्र क्ससिचौ सार्वत्रिकौ; चङङौ कर्तर्येव। लिट आर्धधातुकत्वान्न तत्र विकरणप्रत्ययः ॥

लकाराणां विकरणव्यवस्थामधो लिखिता पट्टिका दर्शयति—

| लकारः। | कर्तरि प्रत्ययः। | | भावकर्मणोः प्रत्ययः। |
|---|---|---|---|
| लट्, लङ्, लोट्, लिङ् | सामान्यः | शप् | यक् |
| | अदादौ | लुक् | |
| | जुहोत्यादौ | श्लुः | |
| | दिवादौ | श्यन् | |
| | स्वादौ | श्नुः | |
| | तुदादौ | शः | |
| | रुधादौ | श्नम् | |
| | तनादौ | उः | |
| | क्र्यादौ | श्ना | |

| लकारः । | कर्तरि प्रत्ययः । | | भावकर्मणोः प्रत्ययः । | |
|---|---|---|---|---|
| लट्, लङ् | स्य | | स्य | |
| लुट् | तासिः | | तासिः | |
| लुङ् | शल इगुपधादनिटः | क्सः | शल इगुपधादनिटः | क्सः |
| | पुषादिद्युताद्यॢदितः | अङ | शेषात् | सिच् |
| | ण्यन्तात् | चङ् | | |
| | शेषात् | सिच् | | |

श्लोकेनापि संग्रहः—

लङ्लोटोरपि लङ्लिङोर्विकरणं शप् सापवादाष्टकः
स्यात् कर्तर्यथ भावकर्मविषये त्वेको यगेवात्र हि ।
स्यस्तासिर्लृयुगे च लुट्यपि भवेत् कर्त्रादिभेदं विना
लुङ्येवं क्ससिचावुभौ पुनरिमौ चङ्ङङ्युतौ कर्तरि ॥

उपकरणैरेभिर्बद्धपरिकरास्तिङन्तप्रक्रियां दर्शयिष्यामः । तत्र प्रथमं कर्तरि लकाराणां—तत्राप्यादौ विकरणभेदवन्तो लट्-लङ्-लोट्-लिङ् इत्येते आदीयन्ते—

## (1) I. भूवादिगणः ॥

### १. भू सत्तायाम् ।

ङित्त्वानुदात्तेत्त्वयोरभावाच्छेषत्वेन 'शेषात् कर्तरि...' (४२१) इति परस्मैपदम् । वर्तमानकालावच्छिन्नाया भवनक्रियाया विवक्षायां 'वर्तमाने लट्' (४२७) इति लट् । भू + लट् इति स्थिते अकार-टकारयोरितोर्लोपेन भू + ल् इति जायते । ततः कर्तुर्युष्मदोऽस्मदस्त-द्भिन्नस्य वा एकत्वादिविवक्षायां ल् इत्यस्य यथायथं तिप्तसादय आदेशाः प्रवर्तन्ते । भू + ति इति स्थिते 'कर्तरि शप्' (४३७) इति शप् विकरणप्रत्ययो मध्ये परापतति ; भू + अति इति जातम् । शपः शित्वेन सार्वधातुकत्वात्

४६३ । सार्वधातुकार्धधातुकयोः (गुणः) । (७-३-८४)

सार्वधातुकार्धधातुकयोः परयोरिगन्तस्याङ्गस्य गुणः । इति 'भू' इतीगन्ताङ्गस्य गुणे भो + अ + ति—संधिकार्येण अवादेशेन **भवति** इति रूपसिद्धिः । एवमेव **भवतः** इति च । बहुवचने भू + अ झि इति स्थितम् ॥

४६४ । झोऽन्तः (प्रत्ययादेः) । (७-१-३)

प्रत्ययादिभूतस्य झस्य 'अन्त्' इत्यादेशः स्यात् ॥

४६५ । अदभ्यस्तात् । (७-१-४)

अभ्यस्तात्तु धातोः परस्य झस्य अत् इत्येवादेशः ॥

४६६ । आत्मनेपदेष्वनतः । (७-१-५)

आत्मनेपदेषु (अनतः) अकारभिन्नात् वर्णात् परस्य च अत् इत्येवादेशः; अकारात्तु अन्त् इति । एवं च झकारोच्चारणम् अन्त्, अत् इत्यनयोरन्यतरस्य श्रवणार्थम् । अनेन प्रकृते झिप्रत्ययः 'अन्ति' इति रूपमापद्यते । भव + अन्ति इति स्थिते 'अतो गुणे' (३१३) इत्यनेन पररूपे कृते **भवन्ति** । **भवसि, भवथः, भवथ**; '**भवमि**' इति स्थिते—

४६७ । अतो दीर्घो यञि (सार्वधातुके) । (७-३-१०१)

अदन्ताङ्गस्य दीर्घः स्यात् यञादौ सार्वधातुके परे । इति दीर्घः, **भवामि, भवावः, भवामः** इति रूपाणि ॥

| | | | | | |
|---|---|---|---|---|---|
| स | भवति | त्वं | भवसि | अहं | भवामि |
| तौ | भवतः | युवां | भवथः | आवां | भवावः |
| ते | भवन्ति | यूयं | भवथ | वयं | भवामः |

इति समानाधिकरणस्य कर्तुरनुरोधेन प्रयोगः ॥

---

१. इक एव हि गुणवृद्ध्योर्योग्यता । अतो गुणवृद्धिविधौ विशेषनिर्देशाभावे 'इकः' इति स्थानी योग्यतया स्वयमुपतिष्ठते । परिभाषितं चाचार्येण—'इको गुणवृद्धी' (१-१-३) इति । एवम् इकः इति लब्धम् ।

अथ लङ्—

पूर्ववल्लस्य तिबादयः; पूर्ववदेव शपि कृते भवति इत्येव रूपमपि प्राप्नोति । तत्र विशेषः—

४६८ । लुङ्लङ्लृङ्क्ष्वडुदात्तः । (६-४-७१)

एषु लकारेषु परेष्वङ्गस्य अडागमः स्यात् । अङ्गस्येत्यधिकाराल्लब्धम् ॥

४६९ । आडजादीनाम् । (६-४-७२)

अजादीनां धातूनाम् आट् इत्यागमः, न तु अट् इति ॥

४७० । न माङ्योगे । (६-४-७२)

माङ् इति निपातस्य योगे तु अडाटौ न । इति प्रकृते धातोरडागमः; स च टित्त्वादाद्यावयवः । अभवति इति जातम् ॥

इह हि लकाराणां तिबादयः प्रत्ययाः साधारण्येनोक्ताः । सर्वेषामप्येकरूपाश्चेत् प्रत्ययाः कथं भेदप्रतीतिः स्यात्? अतस्तेषु तेषु लकारेषु ते ते भेदा आदिष्टाः । प्रकरणपूर्त्यर्थं सूत्रक्रमानुरोधार्थं च तानादेशान् सर्वान् मध्ये प्रदर्श्य प्रकृतां लङ्प्रक्रियां पूरयिष्यामः। उक्ता हि सुप्स्वपि 'अतो भिस ऐस्' 'जश्शसोः शिः' इत्यादय आदेशाः; तद्वदिह तिङ्ष्वपि ॥

तिङामादेशाः ।

४७१ । टित आत्मनेपदानां टेरे । (३-४-७९)

टितो लकारस्य यान्यात्मनेपदानि तेषां टेरेकारादेशः स्यात् । यथा—

| | | | | | |
|---|---|---|---|---|---|
| त | = ते | (थास् | = से) | इ | = ए |
| आताम् | = आते | आथाम् | = आथे | वहि | = वहे |
| झ | = झे | ध्वम् | = ध्वे | महि | = महे |

४७२ । **थासः से** । (३-४-८०)

टितो लकारस्य यः थास् तस्य से इत्यादेशः । तथैव दर्शितं चेदमुपरि ॥

४७३ । **लिटस्तझयोरेशिरेच्** । (३-४-८१)

स्पष्टं सूत्रम् । शित्त्वादनेकाल्त्वाच्च सर्वादेशौ । तथा च आत्मनेपदलिटः ए, आते, इरे इति प्रथमपुरुषः; मध्यमोत्तमौ तु टित्सामान्यस्यैव ।

४७४ । **परस्मैपदानां णलतुसुस्-थ लथुस,-णल्वमाः** । (३-४-८२)

लिटः परस्मैपदानाम्—

णल्, अतुस्, उस् । थल्, अथुस्, अ । णल्, व, म इत्यादेशाः ।

एषु णकारो लकारश्च इतौ ॥

४७५ । **विदो लटो वा** । (३-४-८३)

'विद ज्ञाने' इति धातोर्लटोऽपि णलादय आदेशा वा स्युः । परस्मैपदानामित्येव ॥

४७६ । **ब्रुवः पञ्चानामादित आहो ब्रुवः** । (३-४-८४)

'ब्रू व्यक्तायां वाचि' इति धातोर्लटः परस्मैपदानामादितः पञ्चानां वचनानामपि णलादय आदेशा वा स्युः; तत्संनियोगेन ब्रूधातोः 'आह' इत्यादेशश्च ॥

४७७ । **लोटो लङ्वत्** । (३-४-८५)

लोटो लङ इव कार्याणि भवन्ति । तामाद्यादेशाः सलोपश्च लङ्कार्यं वक्ष्यते; तद्वयं लोटोऽपि स्यादित्यर्थः । विशेषमप्याह—

४७८ । **एरुः** । (३-४-८६)

लोट इकारस्य उकार आदेशः स्यात् । यथा—तिप् = तुप्; झि = झु

४७९ । सेर्ह्यपिच्च । (३-४-८९)

लोटः सेः (सिपः) हि इत्यादेशः स्यात्; अपिच्चायमादेशः स्यात् । इह हि स्थानिधर्मा आदेशमपि संक्रामन्ति; तस्मात् सिपः पित्त्वेन हिरपि पित्कार्यं लभेतेति तन्निषिध्यते । अपित्कार्यं च ङिद्वद्भावो गुणनिषेधफलको वक्ष्यते ॥

४८० । मेर्निः । (३-४-८९)

लोटो मेः (मिपः) नि इत्यादेशः । 'सेर्हि...' इति 'मेर्निः' इति च इकारान्तयोरादेशयोर्विधानात् 'एरुः' (४७८) इत्युकारादेशोऽनयोर्न भवति । यद्युत्वमनयोरपि विवक्षितमभविष्यत्तर्हि हु, नुः इत्युकारान्तावेवाकरिष्यदिमावाचार्यः । इकारान्तौ पठित्वा पुनरुकारान्तकरणं हि वृथा क्लेशः स्यात् ॥

४८१ । आमेतः । (३-४-९०)

लोट एकारस्य आम् आदेशः । पूर्वसूत्रेषु परस्मैपदानि स्थानिनः; अत्रोत्तरसूत्रे चात्मनेपदानि । आत्मनेपदे हि लोटष्टित्लकारत्वात् 'टित आत्मनेपदानां टेरे' (४७१) इति सर्वे प्रत्यया एकारान्ता भवन्ति; तस्यैकारस्येदानीं लोटि परम् आमादेशो विधीयते । अस्याप्यपवादमाह—

४८२ । सवाभ्यां वामौ । (३-४-९१)

लोटः सकारवकाराभ्यां परस्य एकारस्य तु 'व' 'अम्' इति यथासंख्यमादेशौ । 'से' इति प्रत्यय एव सात् पर एकारः, तथा 'ध्वे' इत्यत्रैव वात् परः । एवञ्च लोटः से=स्व; ध्वे=ध्वं च भवतीति सिद्धम् ॥

४८३ । आडुत्तमस्य पिच्च । (३-४-९२)

लोडुत्तमस्य 'आट्' इत्यागमः, स पिच्च स्यात् । आडागमी पित्त्वधर्मं गुणनिषेधनिमित्तत्वाभावरूपं लभेतेत्यर्थः । विशेषकथनाभावादयमागम उभयोरपि पदयोर्भवति ॥

## ४८४ । एत ऐ । (३-४-९३)

लोडुत्तमस्य एकारस्य ऐकारः आदेशः । अयमात्मनेपद एव संभवति। एवं च 'आमेतः' इत्यादिभिश्चतुर्भिः सूत्रैः आत्मनेपदलोट एते आदेशाः साधिताः—

ताम् आताम् झाम् | स्व आथाम् ध्वम् | ऐं आवहै आमहै ।

सुखार्थमत्र कारिका—

तामातां झां लोट्प्रथमः, स्वाथांध्वमिति मध्यमः ।
ऐ आवहै आमहै इत्युत्तमश्चात्मनेपदे ॥

परस्मैपदेऽपि लङादेशानुक्त्वा कारिकां करिष्यामः ॥

## ४८५ । [1]नित्यं ङितः (स उत्तमस्य लोपः) । (३-४-९९)

ङिल्लकारस्य य उत्तमपुरुषस्तस्य सस्य लोपः स्यात् । तथा च वस् = व; मस् = म ॥

## ४८६ । इतश्च । (३-४-१००)

ङिल्लकाराणाम् इकारस्य च लोपः । तथा च ति = त्; झि=झ्; सि = स् । मिपस्त्वादेशो वक्ष्यते—

## ४८७ । तस्थस्थमिपां तां-तं-त-अमः । (३-४-१०१)

ङिल्लकारस्यैव । तस् = ताम्; थस् = तं; थ = त; मि = अम् । एवं च परस्मैपदे लङ्लिङ्लुङ्लृङामादेशा एते—

ति = त्, तस् = ताम्, झि = झ्; सि = स्, थस् = तम्, थ = त; मि = अम्, वस् = व, मस् = म ।

[2]अदतामन् प्रथमः स्यादसतमतेत्यत्र मध्यमः पुरुषः ।
अमवामोत्तम एवं ङित्सु परस्मैपदेऽपूर्वाः ॥

---

१. मध्ये सूत्रपञ्चकं लेट्कार्यविधायकमित्युपेक्षितम् ।

२. अदन्तविकरणस्थल एवं विकरणेन सह श्रूयत इत्येव । परमार्थतस्तु आद्यमकारं विना आदेशा इति पूर्वपट्टिकया सिद्धम् ।

'लोटो लङ्वत्' (४७७) इत्युक्तेरुत्तमसकारलोपः, तान्तन्तामादेशाश्च लोटोऽपि भवन्ति; 'एरुः' 'सेर्ह्यपिच्च' 'मेर्निः' 'आडुत्तमस्य पिच्च' इति विशेषाश्च तस्य । एभिर्विधिभिः संपन्ना लोडादेशाः—

ति = तु, तस् = तां, झि = झु; सि = हि, थस् = तम्, थ = त; मि = आनि, वस् = आव, मस् = आम ।

तु-ताम्-अन्तु, हि-तं-त, आनि लोड्याावाम परे पदे ॥

४८८ । लिङः सीयुट् । (३-४-१०२)

लिङादेशानां सीयुडागमः स्यात् । अयमात्मनेपदस्यैव । परस्मैपदस्य तु अन्यो विधीयते—

४८९ । यासुट् परस्मैपदेषूदात्तो ङिच्च । (३-४-१०३)

परस्मैपदलिङादेशानां यासुट् इत्यागमः, स च ङित् स्यात् । ङित्त्वस्य गुणनिषेधादिः फलं वक्ष्यते—आदेशानप्युक्त्वा रूपाणि दर्शयिष्यामः ॥

४९० । किदाशिषि । (३-४-१०४)

आशीरर्थकस्य लिङो यासुडागमः कित् स्यात्, न तु ङित् । 'वचिस्वपियजादीनां किति' (५१५) इति संप्रसारणं, 'जाग्रोऽविचिण्णल्ङित्सु' (७५४) इति गुणश्च कित्त्वस्य विशेषप्रयोजनम् । आगमस्य कित्त्वङित्त्वादिरतिदिष्ट आगामिनः प्रत्ययस्योपकरोति । आगमा हि प्रत्ययानामवयवभूताः ॥

४९१ । झस्य रन् । (३-४-१०५)

४९२ । इटोऽत् । (३-४-१०६)

उभयमपि लिङ एव ॥

४९३ । सुट् तिथोः । (३-४-१०७)

'ति' ईतीकार उच्चारणार्थः । लिङ्सम्बन्धिनोस्तकारथकारयोः सुट् इत्यागमः स्यात् । त, आताम्, थास्, आथाम् इति चतुर्ष्वात्मनेपदेषु त-थौ विद्येते । तौ सुडागमेन स्त, आस्तां, स्थाम्, आस्थाम् इति रूपमापद्येते । सुडागमस्तथयोर्वर्णयोः सीयुडागमः समग्रस्य प्रत्ययस्येति विषयभेदात् सुट्सीयुटोर्नोत्सर्गापवादभावः । एवं च उभयमपि युगपत् समाविशति । आगमादेशाभ्यां विकृता आत्मनेपदलिङादेशा अधो दर्शिताः—

सीयुस्त सीयास्ताम् सीय्रन् | सीय्स्थास् सीयास्थाम् सीय्ध्वम्
सीय सीय्वहि सीय्महि ।

अत्र यकारादेः संयोगस्याभावात् व्यञ्जनादिप्रत्ययेषु तस्य लोपो भवति । तथा च सूत्रम्—

४९४ । लोपे व्योर्वलि । (३-१-६६)

वकारयकारयोर्लोपः स्यात् वलि परे । वल्प्रत्याहारश्च यकारवर्जितानि व्यञ्जनानि क्रोडीकरोति । अनेन यकारवकारादिः संयोगो यकारेण सहैवेत्यायाति । यलोपेऽस्मिन् कृते पूर्वोक्ताः प्रत्ययाः—

सीस्त सीयास्तां सीरन् | सीस्थास् सीयास्थाम् सीध्वम् | सीय सीवहि सीमहि ।
इति रूपाणि प्रतिपद्यन्ते ॥

परस्मैपदे तु यासुडागमस्य सकारेणैव कार्यनिर्वाहात् सुडागमो नापेक्ष्यते । यासुडागमे कृते परस्मैपदलिङः प्रत्ययाः—

---

१. उच्चारणार्थं तावदकार आसज्यत इतीयमाचार्यस्य शैली । सेह किमिति परित्यक्तेति विचारणायां, यदीह त-थोरिति सूत्रयेत् 'त' इति विशिष्टस्य ग्रहणमित्यपि सम्भाव्येत । तदा चात्मनेपदप्रथमैकवचनस्य परस्मैपदमध्यमबहुवचनस्य च सुडिति स्यात् । तिथोरिति सूत्रेण तु यद्यपि तिपो ग्रहणं किं न स्यादित्यापादनाऽऽपतति तथापि तस्य ग्रहणे भूयादित्यत्र स्कोरिति लोपेनाश्रवणमेव सुटः स्यादिति पर्यालोचनया सा निवर्तयितुं शक्येति भगवतो हृदयमिति प्रतिभातीति दिक् ।

| | | |
|---|---|---|
| यास् त् = (यात्) | यास्स् = यास् | यासम् |
| यास्तां | यास्तम् | यास्व |
| यासुस् | यास्त | यास्म |

लिङो ङिल्लकारत्वात् 'तस्थस्थमिपां तान्तन्तामः', उत्तमस्य सलोपश्च । झेर्जुसादेश उत्तरसूत्रेण । अत्र 'यास्त्' इत्यत्र संयोगान्तलोपस्यापवादः संयोगादिलोपो भवति । तथा च सूत्रम्—

४९५ । **स्कोः संयोगाद्योरन्ते च** । (झलि लोपः) । (८-२-२९)

झलि परे पदान्ते च संयोगादिभूतयोः सकारककारयोर्लोपः स्यात् । इति [1]सकारलोपेन 'यात्' इत्येव प्रथमपुरुषैकवचनम् ॥

उभयोरपि पदयोरुक्ताः प्रत्ययाः आशीर्लिङ एव; विधिलिङस्तु आगमानां सकारलोपः कथितः । तथा हि—

४९६ **लिङः सलोपोऽनन्त्यस्य** । (सार्वधातुके) । (७-२-७९)

सार्वधातुकलिङः सकारस्य लोपः स्यात्; न तु अन्त्यस्य (सकारस्य) अनेन [2]सार्वधातुकलिङि यासुट्सीयुट्सुटां सकारा लुप्यन्ते । लुप्तसकारा विधिलिङ्प्रत्ययाः—

**परस्मैपदे ।** **आत्मनेपदे ।**

| | | | | | |
|---|---|---|---|---|---|
| यात् | यास् | यां | ईत | ईथास् | ईय |
| यातां | यातम् | याव | ईयातां | ईयाथाम् | ईवहि |
| [3]युस् | यात | याम | ईरन् | ईध्वम् | ईमहि |

**याद्यातां युस् प्रथमे यास्यातं यात मध्यमे पुरुषे ।**
**यां याव याम चान्त्ये विधिलिङ आशीर्लिङस्तु ससकाराः ॥**

---

१. अत्र यास्त् इति स्थिते हलः परत्वात् हल्ङ्यादिलोपो नाशङ्क्यः । आगममकारस्य प्रत्ययाङ्गत्वेन तिपोऽपृक्तत्वाभावात् ।

२. विधिलिङेव सार्वधातुकलिङित्यप्युच्यते । 'लिङाशिषि' (४७२) इति आशीर्लिङ आर्धधातुकत्वं विहितम् । विध्याद्यर्थेषु तु लिङ् 'तिङ्शित्सार्वधातुकम्' इति सार्वधातुकमेव ।

३. (५०२)–तम सूत्रेणात्र पररूपे आकारलोपः ।

इटोऽत्कारो झस्य रंश्च भेदो लिङ्यात्मनेपदे ।
सीयुट्सुटावागमौ च सलोपश्चानयोर्विधौ ॥

अथ तिङादेशेषु क्रमप्राप्तः प्रसङ्गादनुकृष्टश्च झेर्जुसादेशः—

४९७। झेर्जुस्। (३-४-१०८)

लिङो झेर्जुसादेशः स्यात्। जकार इत्; सकारस्तु 'न विभक्तौ तुस्माः' इति नेत् ॥

४९८। सिजभ्यस्तविदिभ्यश्च। (३-४-१०९)

अलिङर्थमारम्भः। सिच् इति लुङो विकरणम्; अभ्यस्तं द्विरुक्तो धातुः; 'विद ज्ञाने' इत्ययं धातुः; एभ्यश्च झेर्जुस्। ङित इत्येव। तेन लङ्लुङोरेवायम् ॥

४९९। आतः। (३-४-११०)

आदन्ताद्धातोः परस्य ङितां झेर्जुस्। लङ्लुङोरेव आकारात् परो झिस्सम्भवति। तत्र 'गातिस्थाघुपाभूभ्य........' इति सिचो लुग्विधानात् लुङि झेरनेन जुस् भवति। लङि तु उत्तरसूत्रेण विकल्प्यते ॥

५००। लङः शाकटायनस्यैव। (३-४-१११)

आदन्तात् झेर्जुस् पूर्वसूत्रोक्तो लङि शाकटायनस्यैव मते, नान्येषाम्; तथा च विकल्पः ॥

५०१। द्विषश्च। (३-४-११२)

द्विषः परस्य लङो झेर्जुस् शाकटायनमते।
जुस्प्रस्तावाज्जुसि परे विहितः संधिविशेषोऽप्यत्रोच्यते ॥

५०२। उस्यपदान्तात् (आत् पररूपम्)। (६-१-९६)

अपदान्तादवर्णादुसि परे पररूपमेकादेशः स्यात्। यथा—

या + उस् = युस्। दर्शितं च तथा (४९६)–तमसूत्रे।

अत्र लङ्प्रक्रियां दर्शयितुं प्रवृत्ता वयं लङादेशानां तिबादीनां विकारवर्णनप्रस्तावेन लकारान्तरेष्वपि तादृशान् विकारान् कथयन्तो

मध्ये सुदूरं विक्षिप्ताः स्मः। अथ प्रसक्तानुप्रसक्तान्निवृत्त्य मार्गमनुसरामः। धातोरडागमेन मध्ये शपो विकरणप्रत्ययस्य प्रक्षेपेण च 'अभवति' इत्यवस्थामारूढायां रूपनिष्पत्तौ लङ्प्रक्रियामुज्झितवन्तो वयम्। 'नित्यं ङितः' (४८५) 'इतश्च' 'तस्थस्थमिपां तान्तन्तामः' इति त्रिभिः सूत्रैरुक्तेषु सलोप–इलोप–तान्तन्तामादेशेषु कृतेष्विष्टरूपासिद्धिः—**अभवत् अभवताम् अभवन्; अभवः अभवतम् अभवत; अभवम् अभवाव अभवाम**। प्रथमपुरुषबहुवचने **अभवन्ति = अभवन्त् = अभवन्** इति इलोपानन्तरं संयोगान्तलोपः। 'न माङ्योगे' (४७०) इत्यडागमप्रतिषेधात् मास्म भवत्, मास्म भवताम् इत्यादीनि रूपाणि॥

लोट्—शप्गुणावादेशैः 'भव' इति जाते अङ्गे, ४८७-तमसूत्रनिरूपितानां तुतामन्तु इति प्रत्ययानां योगेन प्रथमपुरुषे रूपसिद्धिः—**भवतु भवतां भवन्तु,** मध्यमे तु **भव हि** इति स्थिते अनुपदमुच्यमानेन सूत्रेण हिलोपे—**भव भवतं भवत। भवानि भवाव भवाम**। अथ हिलोपं विदधाति—

**५०३। अतो हेः (लुक्)। (६-४-१०५)**

अदन्तादङ्गात् परस्य हेर्लुक् स्यात्॥

**५०४। उतश्च प्रत्ययादसंयोगपूर्वात्। (६-४-१०६)**

असंयोगपूर्वो य उकारस्तदन्तात् प्रत्ययात् परस्य च हेर्लुक्। श्नुविकरणा उविकरणाश्च धातवोऽत्रोदाहरणम्। सुनुहि = सुनु; कुरुहि = कुरु इति। पूर्वसूत्रस्य शप्–श्यन्–शविकरणा उदाहरणम् एवं च हेः पञ्चसु विकरणेषु लोपस्य प्रसक्तिरस्ति। हिप्रसङ्गादन्योऽपि तस्य विकार उच्यते॥

**५०५। हुझल्भ्यो हेर्धिः। (६-४-१०१)**

जुहोतेर्झलन्तेभ्यश्च धातुभ्यो हेर्धिरादेशः। जुहुधि, अद्धि, रुन्धि

इति लुक्–श्लु–श्नविकरणा अस्योदाहरणम् । एवं च हेः लुक् धि इत्यादेशश्च भवतः ॥

अथ प्रकृतस्य लोटः प्रथममध्यमैकवचनयोरर्थविशेषे रूपविशेष उच्यते । 'आशिषि लिङ्लोटौ' (४३५) इति लिङ्लोटोराशीरर्थेऽपि प्रयोग उक्तः । तत्र आशिषि लिङ् 'आर्धधातुकत्वात्' (४५२) लकारान्तरमिव सर्वत्र भिन्नरूपः; आशिषि लोटस्तु परस्मैपदे तुह्योः परं रूपभेदः । तथा च सूत्रम्—

५०६ । तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् । (७-१-३५)

आशिषि 'तु' 'हि' इति लोट्प्रथममध्यमैकवचनयोस्तातङ् इत्यादेशो वा । अनेकाल्त्वात् सर्वादेशः । ङित्त्वं तु गुणवृद्धिप्रतिषेधादिकार्यान्तरविधानार्थकम् । "यद्यपि 'ङिच्च' (३२) इत्ययमपवादस्तथाप्यनन्यार्थङित्त्वेष्वनङादिषु चरितार्थ इति गुणवृद्धिप्रतिषेधसंप्रसारणाद्यर्थतया संभवत्प्रयोजनङकारे तातङि मन्थरं प्रवृत्तः परेण 'अनेकाल्शित्सर्वस्य' (३८) इत्यनेन बाध्यते । इहोत्सर्गापवादयोरपि समबलत्वात्" । तातङि अकारो ङकारयोजनार्थकः; 'तात्' इत्येवादेशस्वरूपम् । अनेन **भवतु भवतात्, भव भवतात्** इत्याशिषि रूपद्वयम् ॥

लिङ्—इलोप - तान्तन्तामादेश - यासुडागम - सलोपैः 'यात्' 'याताम्' इत्यादयः प्रत्ययाः । शप्-गुणावादेशाः 'भव' इति प्रकृतिः । **भव + यात्** इति स्थिते—

५०७ । **अतो येयः** (सार्वधातुकस्य) । (७-३-८०)

अदन्ताङ्गात् परः सार्वधातुकावयवो 'या' इत्यग्रम् 'इय्' इति भवति; 'या' इत्यस्य इय् इत्यादेश इत्यर्थः । 'इयः' इत्यकार उच्चारणार्थः । **भव + इय्त्** इति जाते 'लोपो व्योर्वलि' (४९४) इति यलोपे **भवेत्** इति रूपसिद्धिः । उसि अमि च परं यकारः श्रूयते; अन्यत्र लुप्यते । **भवेतां भवेयुः । भवेः भवेतं भवेत । भवेयं भवेव भवेम ।**

२. एध वृद्धौ । अनुदात्तेत् ।

लट्—'अनुदात्तङित:' इत्यात्मनेपदम् । 'टित आत्मनेपदानां टेरे' (४७१) इत्येत्वेन ते, आते, अन्ते इत्यादयः प्रत्ययाः, शप् विकरण-प्रत्ययः । एध् + अ + ते = एधते । एध + आते इति स्थिते—

### ५०८ । सार्वधातुकमपित् (ङित्) । (१-२-४)

अपित् सार्वधातुकं ङित्स्यात् । यस्मिन् सार्वधातुके पकार इत् न दृश्यते स सर्वोऽपि ङिद्वेदितव्यः । ङित्त्वप्रयोजनानि गुणवृद्धिप्रतिषेध-संप्रसारणादीनि बहुविधानि । अत एव 'सेर्ह्यपिच्च' (४७९) इत्यत्र सिंप आदेशत्वेन सिद्धं हेः पित्त्वं निषिद्धम् । पित्त्वाभावे च अपित्सार्वधातुक-त्वेन 'हिः' ङिद्भवति । एवमेव लोडुत्तमस्य अपित्त्वेन प्राप्तं ङित्त्वं निषेद्धुम्, 'आडुत्तमस्य पिच्च' (४८३) इत्यपूर्वं पित्त्वं विहितम् । इत्थं च सार्व-धातुकेषु पित्त्वङित्त्वे विरुद्धधर्मौ । तथा च भाष्यवचनं—'पिच्च ङिन्न, ङिच्च पिन्न' इति । अनेन लोटि पितस्तिप आदेशोऽपि तातङ् ङित्कार्य-मेव लभते, न पित्कार्यम् । पित्त्वस्यैवमतीव कार्यकारित्वात् पित्सार्व-धातुकानां वसन्ततिलकेन संग्रहः—

लिङ्-ही विनैकवचनानि पदे परार्थे
　लोडुत्तमो विकरणं प्रथमं च पित्स्यात् ।
लोडुत्तमान्य इह नास्ति पिदन्यवर्गे
　ङित्स्यान्न पित्, पिदपि नैव ङिदित्यवेहि ॥

एवमात्मनेपदे लोडुत्तमवर्जं सर्वेऽपि लादेशा ङितः । ङित्त्वेन च 'आताम्, आथाम्' इति द्विवचनयोराद्याकारस्य इयादेशो भवति । तथा च 'अतो येयः' (५०७) इत्यत उत्तरं सूत्रम्—

### ५०९ । आतो ङितः । (७-२-८१)

अतः परस्य ङित्प्रत्ययसम्बन्धिन आकारस्य इयादेशः । 'लोपो व्योर्वलि' इति यलोपः । आते = इते । अनेन अकारान्तेषु विकरणेषु आताम् = इताम्; आथाम् = इथाम् । अनयोरेव हि प्रत्यययोराकारोऽस्ति ॥

प्रकृते एध + आते = एध + इते = एधेते । 'झोऽन्तः' 'अतो गुणे', एधन्ते । एधसे एधेथे एधध्वे । एध + ए इत्यत्रापि 'अतो गुणे' (३१३) इति पररूपं वृद्धेरपवादः । एधे एधावहे एधामहे ॥

लङ्—धातोरजादित्वात् अडागमस्यापवाद आडागमः । आडागमे च—

५१० । आटश्च (अचि वृद्धिः) । (६-१-९०)

आटोऽचि परे वृद्धिरेकादेशः । इति गुणापवादो वृद्धिः । प्रकृते धातोरेजादित्वेन 'वृद्धिरेचि' इत्येव यद्यपि वृद्धिर्भवति तथापि आ + इच्छत् = ऐच्छत् इत्यादिवत् इगादिषु धातुषु वृद्धिः प्रयोजनम् । ऐधत ऐधेताम् ऐधन्त । ऐधथाः ऐधेथाम् ऐधध्वम् । ऐधे ऐधावहि ऐधामहि ॥

लोट्—एधताम् एधेताम् एधन्ताम् । एधस्व एधेथाम् एधध्वम् । एधै एधावहै एधामहै ॥

लिङ्—४९६-तमसूत्रे निरूपितानां लुप्तसकारसीयुडागमयुक्तानां प्रत्ययानां योगे कृतशपो धातोर्यथायथं रूपाणि—एधेत एधेयाताम् एधेरन् । एधेथाः एधेयाथाम् एधेध्वम् । एधेय एधेवहि एधेमहि ॥

२. शुच शोके । उदात्तेत् ।

अत्र हि 'सार्वधातुकार्धधातुकयोः' (४६३) इति सूत्रेण इगन्तस्य गुण उक्तः; इगुपधस्यापि स उच्यते उत्तरसूत्रेण—

५११ । पुगन्तलघूपधस्य च । (७-३-८६)

पुगन्तस्य लघूपधस्य चाङ्गस्य इको गुणः स्यात् सार्वधातुकार्धधातुकयोः । 'अर्तिह्री...' इति पुगागमो णौ विधीयते; तत्प्रकरणे पुगन्तमुदाहरिष्यामः । पूर्वसूत्रेण इगन्तस्य प्रकृतसूत्रेण लघूपधस्य (अर्थाद्ध्रस्वेगुपधस्यैव) च गुणो विधीयते; सार्वधातुकार्धधातुकाभ्यां च

धातोर्विहिताः कृत्स्नाः प्रत्यया व्याप्ताः । अतश्च इगन्तस्य ह्रस्वेगुपान्त्यस्य च धातोः प्रत्ययमात्रे गुण इत्यायातम् । लघूपधस्येत्युक्तेरिगुपान्त्यस्य गुणस्तु दीर्घोपधस्य नेति भेदः ॥

| | | | |
|---|---|---|---|
| लट्—शोचति | शोचतः | शोचन्ति | इत्यादि । |
| लङ्—अशोचत् | अशोचताम् | अशोचन् | ,, |
| लोट्—शोचतु, शोचतात् | शोचताम् | शोचन्तु | ,, |
| लिङ्—शोचेत् | शोचेताम् | शोचेयुः | ,, |

**४. स्मृ स्मरणे** । परस्मैपदी ।

स्मरति । अस्मरत् । स्मरतु । स्मरेत् ।

**५. वृतु वर्तने** । अनुदात्तेत् ।

वर्तते । अवर्तत । वर्तताम् । वर्तेत ।

**६. राज दीप्तौ** । स्वरितेत् ।

स्वरितेत्त्वादुभयपदी । राजति—राजते । अराजत्—अराजत । राजतु—राजताम् । राजेत्—राजेत ।

**७. षह मर्षणे** । अनुदात्तेत् ।

## ५१२ । धात्वादेः षः सः । (६-१-६४)

**धात्वादेः षकारस्य सः स्यात् ॥**

## ५१३ । णो नः । (६-१-६५)

**धात्वादेर्णकारस्य नकारः स्यात् । इह धात्वादिसकारस्य उपसर्गस्थं निमित्तमादाय षत्वसाधनार्थं केचिद्धातवः षकारादयः पठ्यन्ते । षत्वं हि 'आदेशप्रत्यययोः' इत्यधिकारात् आदेशस्य प्रत्ययावयवस्य वा परं भवतीत्यादेशत्वसंपादनाय षोपदेशतया पठित्वा पुनः षस्य सत्वं विधीयते । एवमेव 'उपसर्गादसमासेऽपि णोपदेशस्य' (३९८) इति व्यवस्थार्थं णकारादिः पाठः । एवञ्च षादिर्णादिश्च पाठो निमित्तसद्भावे षत्वणत्वयोर्ज्ञापनाय । उच्चारणशैथिल्येन धातुपाठस्याविश्वास्यत्वात् णोपदेशषोपदेशयोर्विवेकः क्रियते—**

षोपदेशाः स्युरेकाचः स्वरदन्त्या तसादयः ।
स्वदति-स्विद्यति-स्वञ्ज-ष्वष्क-स्मि-स्वपयोऽपि च ॥
वर्जयेत् सेव्सृपौ स्तृस्तॄस्त्यायतीन् सृसृजावपि ।
णोपदेशास्त्वनर्द्-नाटि-नाथ्-नाध्-नन्द्-नक्क-नॄ-नृतः ॥

अत्र स्वरान्त इति दन्त्यान्त इति च सकारस्य विशेषणं, न तु धातोः । आद्यसकारस्य परो वर्णो यदि स्वरस्तवर्ग्यो वा भवति तर्हि स धातुः षोपदेश इत्यर्थः । निषेवते, विषहते, अभिष्टौति इत्यादीन्युदाहरणानि षत्वप्रकरणे दृश्यन्ताम् ॥

सहते । असहत । सहताम् । सहेत इत्यादिरूपाणि ।

८. नीञ् प्रापणे ।

ञित्वादुभयपदी । णस्य नत्वम्—नयति-ते । अनयत्—त । नयतु—ताम् । नयेत्—त इत्यादि ।

---

## (2) VI. तुदादिगणः, शविकरणः ।

अत्र धातुपाठे दृष्टं गणक्रममुल्लङ्घ्य प्रक्रियानुरोधान्नवः कोऽपि क्रम आदृतः । इह हि 'अतो येयः' 'आतो ङितः' 'अतो हेः' 'आत्मनेपदेष्वनतः' इति इयादेश-हिलोप-अतादेशा अदन्ताङ्गस्य विशेषा दृष्टाः । अतोऽकारान्तविकरणका गणाः प्रथममुपात्ताः ॥

१. तुद व्यथने । स्वरितेत् ।

'श' इति विकरणस्य शित्त्वेन सार्वधातुकत्वात् पित्त्वाभावाच्च 'सार्वधातुकमपित्' (५०८) इति ङित्त्वम् । ङित्त्वाच्च

५१४ । क्ङिति च (इको न गुणवृद्धी) । (१-१-५)

किति ङिति च प्रत्यये परे इको गुणवृद्धी न स्तः । इति सूत्रेण गुणनिषेधः । वस्तुत इह अकारात्मकस्य विकरणद्वयस्य कल्पनमनुबन्धभेदेन प्रक्रियाभेदसंपादनार्थमेव । पित्त्वेन ङित्त्वाभावादेकत्र गुणः,

पित्त्वाभावेन ङित्त्वादन्यत्न न गुणः । येषु गुण इष्टः ते भूवादिरिति, येषु नापेक्षितो गुणस्ते तुदादिरिति च अकारविकरणकान् धातून् द्विधा विभज्य 'शप्' 'श' इति सार्वधातुकं विकरणप्रत्ययं पितमपितं च कृतवानाचार्य इति सारम् ॥ तुदति-ते । अतुदत्-त । तुदतु-तां । तुदेत्-त ।

## २. ओ व्रश्चू छेदने ।

ओकार ऊकारश्चेतौ । धातुषु बहुविधा अनुबन्धाः प्राक्परस्ताच्च तत्तत्कार्यार्थमायोज्यन्ते; ते तत्र तत्र वक्ष्यन्ते, धातुप्रकरणान्ते च संग्रहीष्यन्ते । अत्र संप्रसारणकरणार्थं तद्विधायकानि सूत्राणि व्याख्यायन्ते—

## ५१५ । वचिस्वपियजादीनां किति (संप्रसारणम्) । (६-१-१५)

वच परिभाषणे, ब्रुवो वच, स्वप शयने, भूवाद्यन्तर्गणो यजादिः इत्येतेषां किति प्रत्यये परे संप्रसारणं स्यात् । यथा—क्तप्रत्यये—

वच—उक्त; स्वप—सुप्तः; यज—इष्ट; वप—उप्त; वेञ्—ऊत; ह्वे—हूत; वद—उदित इत्यादि ।

## ५१६ । ग्रहि-ज्या-वयि-व्यधि-वष्टि-विचति-वृश्चति-पृच्छति-भृज्जतीनां ङिति च । (६-१-१६)

ग्रहादीनां नवानां किति ङिति च प्रत्यये संप्रसारणम् । यथा—

| धातुः - | किति-(क्त) | ङिति (श्ना) | वश | —उशित | उशन्ति | (झि) |
|---|---|---|---|---|---|---|
| ग्रह | —गृहीत | गृह्णाति | व्यच | —विचित | विचति | (श) |
| ज्या | —जीन | जिनाति | व्रश्च | —वृक्ण | वृश्चति | (श) |
| वय | —ऊयतुः (लिटि) | | प्रच्छ | —पृष्ट | पृच्छति | (श) |
| व्यध | —विद्ध | विध्यति (श्यन्) | भ्रज्ज | —भृष्ट | भृज्जति | (श) |

## ५१७ । लिट्यभ्यासस्योभयेषाम् । (६-१-१७)

वच्यादीनां ग्रह्यादीनां च लिटि अभ्यासस्य संप्रसारणम् । यथा—

| | | | |
|---|---|---|---|
| वच—उवाच | यज—इयाज | ग्रह—जग्राह | वयि—उवाय |
| स्वप—सुष्वाप | वप—उवाप | ज्या—जिज्यौ | व्यच—विव्याच |

इत्यादि ।　　इत्यादि ।

प्रकृते शप्रत्ययस्य ङित्त्वात् 'ग्रहि......' इति संप्रसारणम्। 'न संप्रसारणे संप्रसारणम्' (२९६) इति नियमात् परस्य रेफस्यैव तत्, न तु वकारस्य। रेफस्य च ऋकारः संप्रसारणम् ॥

वृश्चति वृश्चतः वृश्चन्ति। अवृश्चत्। वृश्चतु। वृश्चेत् इत्यादि।

३. **मुच्लृ मोक्षणे**। स्वरितेत्।

मुचादीनां नुमागमविधानात् नुम्प्रकरणमारभ्यते—

### ५१८। इदितो नुम् धातोः। (७-१-५८)

इदितो धातोः प्रत्ययमात्रे नुमागमः स्यात्। यथा—

टु णदि समृद्धौ (शप्)—नन्दति, नन्दतः इत्यादि।
लुटि स्तेये (शप्)—लुण्टति, लुण्टतः ,,

### ५१९। शे मुचादीनाम्। (७-१-५९)

मुचादीनां शप्रत्यये परे नुमागमः। यथा—

| | |
|---|---|
| मुच्—मुञ्चति | लिप—लिम्पति |
| सिच्—सिञ्चति | कृत—कृन्तति |
| विद्लृ—विन्दति | खिद—खिन्दते |

**प्रत्यु०**—('शे' किम्?) मुक्त, सिक्त, विन्न, लिप्त, कृत्त, खिन्न।
मुचसिचलिपलुम्पतयः खिदावद, कृतपिंशती मुचादिः स्यात्।

### ५२०। मस्जिनशोर्झलि। (७-१-६०)

ह श्चुत्वादिभिरिष्टरूपसिद्धिर्भविष्यतीति कृत्वा मस्जभ्रस्जव्रस्च इत्यादिवत् धातवः सोपधाः पठ्यन्ते; संयोगादिलोपसंपादनार्थश्चायं क्लेशः। मज्ज, नश इत्यनयोः झलादौ प्रत्यये नुम्। यथा—

तुमुन् प्रत्यये—मङ्क्तुम्, नंष्टुम्।

### ५२१। रभेरशब्लिटोः। (अचि) (७-१-६३)

रभधातोरजादौ प्रत्यये नुम्, न तु शपि लिटि च। यथा—

(घञि) आरंभः; (अनीयरि) आरंभणीयम्; (ल्युटि) आरंभणम्।
प्रत्यु०—(शपि) आरभते; (लिटि) आरेभे।

५२२ । लभेश्च । (७-१-६४)

पूर्ववदशब्लिटोरचि नुम् । यथा—
(ण्वुलि) लम्भकः । शपि तु लभते । लिटि च लेभे ।

५२३ । आङो यि । (७-१-६५)

आङुपसृष्टस्य लभेर्यादौ प्रत्यये नुम् । यथा—आलम्भ्या बडवा ।

५२४ । उपसर्गात् खल्घञोः । (७-१-६७)

यथा—(खलि) सुप्रलंभ, दुष्प्रलंभ । (घञि) प्रलम्भः, विप्रलम्भः ।
उपसर्गाभावे तु—लाभः ।

५२५ । न सुदुर्भ्यां केवलाभ्याम् । (७-१-६८)

यथा—सुलभं, दुर्लभम् । 'केवलाभ्याम्' इत्युक्तेः सुप्रलम्भम् ।

४. कृ विक्षेपे । परस्मैपदी ।

कृ + अ + ति इति स्थिते विशेषविधिः—

५२६ । ऋत इद्धातोः । (७-१-१००)

ऋकारान्तस्य धातोरङ्गस्य इकारादेशः स्यात् । 'उरण् रपरः' इति रपरोऽयं 'इर्' इति भवति । 'सार्वधातुकार्धधातुकयोः' इति गुणः परत्वादिदं बाधते; अतः क्ङित्स्वेवास्यावकाशः । अनेन किरति, किरतः, किरन्ति इत्यादि ॥

५२७ । उपधायाश्च । (७-१-१०१)

उपधायाश्च ऋकारस्य इत् । यथा—
कृत—कीर्तयति ।

५२८ । उदोष्ठ्यपूर्वस्य । (७-१-१०२)

ओष्ठ्यवर्णः पूर्वो यस्मात् स ओष्ठ्यपूर्वः । ओष्ठ्यपूर्व-ऋकारान्तस्य तु धातोरङ्गस्य उत् । यथा—

पॄ—पिपर्ति पिपूर्तः पिपुरति । (श्लुविकरणम्)
मॄ—मुमूर्षति (सनि दीर्घेण मॄ इति भवति धातु)

५. पृङ् व्यायामे । प्रायेण व्याङ्पूर्वः ।

५२९ । रिङ् शयग्लिङ्क्षु (ऋतः) । (७-४-२८)

शः, यक्, लिङ् एषु परेषु ऋदन्ताङ्गस्य रिङ्, ङित्त्वादन्त्यादेशः । व्यापृ + अ + ते = व्याप्रि + अ + ते; 'अचि श्नुधातु....' (३६४) इतीयङि, **व्याप्रियते । व्याप्रियत—व्याप्रियेताम्** इत्यादि । एवं दृङ्धातोराङ्पूर्वस्य **आद्रियते आद्रियेते** इत्यादि ॥

---

## (3) IV. दिवादिगणः, श्यन्विकरणः ।

१. दिवु क्रीडाविजिगीषादिषु । परस्मैपदी ।

दिव् + य + ति इति स्थिते दीर्घो विधीयते—

५३० । [1]र्वोरुपधाया दीर्घ इकः (धातोः पदस्य) । (८-२-७६)

रेफान्तस्य वकारान्तस्य च धातोः उपधाया इकः दीर्घः स्यात् पदान्ते । यथा—

गॄ—गीः गिरौ गिरः । गीर्भ्यां गीर्भिः गीर्षु ।
धुर्वी—धूः धुरौ धुरः । धूर्भ्यां धूर्भिः धूर्षु ।
पॄ—पूः पुरौ पुरः । पूर्भ्यां पूर्भिः पूर्षु ।
आशास्—आशीः आशिषौ आशिषः; आशीर्भ्यां आशीःषु ।

वकारान्तो धातुरुदाहार्यो नास्ति; तद्ग्रहणमुत्तरार्थम् ।

५३१ । हलि च । (८-२-७७)

हलि च परे रेफवान्तस्य धातोरुपधाया इको दीर्घः । यथा—

स्तॄ–स्तीर्णम्, शॄ–शीर्णम्, गॄ–गीर्णम्, दिव्–दीव्यति, सिव्–सीव्यति ।

अपदान्तार्थं सूत्रमिदम् ।

५३२ । उपधायां च । (८-२-७८)

धातोरुपधाभूतौ यौ रेफवकारौ हल्परौ तयोरुपधाया इको दीर्घः ।

---

१. इदं सुप्प्रकरणे व्याख्येयं सूत्रं सौकर्यादत्रैवोपात्तम् ।

**यथा**—मुर्च्छ—मूर्च्छितः । धुर्व—धूर्वितः ।

**वोपध उदाहार्यो नास्ति । इत्थं च वकारस्य 'हलि च' इति सूत्रे एव फलम् ॥**

## ५३३ । न भकुर्छुराम् । (८-२-७९)

**रेफवकारान्तस्य भस्य कुर्, छुर् इत्येतयोश्च दीर्घो न । यथा—**

धुर् + य = धुर्यः । कुर् + यात् = कुर्यात् । छुर् + यात् = छुर्यात् ।

**हलि चेति दीर्घेण प्रकृते**

दीव्यति दीव्यतः दीव्यन्ति; अदीव्यत्—दीव्यतु—दीव्येत् ।

### २. शमु उपशमे । परस्मैपदी ।

**शम्यति इति स्थिते दीर्घविधिः—**

## ५३४ । शमामष्टानां दीर्घः श्यनि । (७-३-७४)

**शमादीनामष्टानां धातूनां दीर्घः श्यनि । यथा—**

| | | | |
|---|---|---|---|
| शमु—शाम्यति | दमु—दाम्यति | भ्रमु—भ्राम्यति | क्लमु—क्लाम्यति |
| तमु—ताम्यति | श्रमु—श्राम्यति | क्षमु—क्षाम्यति | [1]मदी—माद्यति |

## ५३५ । ष्ठिवुक्लम्वाचमां शिति । (७-३-७५)

**एषां शित्प्रत्यये परे दीर्घः । यथा—**

**ष्ठिवु—ष्ठीवति । (शप्) क्लमु—क्लामति । (शप्) आचमु—आचामति (आङोऽभावे तु चमति)**

**क्लमधातोरनेनैव श्यन्यपि दीर्घे सिद्धे शमादौ पाठः कार्यान्तरार्थः ।**

## ५३६ । क्रमः परस्मैपदेषु (शिति) । (७-३-७६)

**क्रमधातोः परस्मैपदे शिति प्रत्यये दीर्घः । यथा—**

**क्रामति—(शप्) अक्रामत्—क्रामतु ।**

**प्रत्यु०—('परस्मैपदेषु' किम्?) आक्रमते सूर्यः ।**

## ५३७ । इषुगमियमां छः । (७-३-७७)

---

१. शमित्यष्टाभ्यो घिनुणिति घिनुण् कार्यान्तरम् ।

एषां छकारोऽन्तादेशः स्यात् शिति प्रत्यये । यथा—

इषु—इच्छायां (श) इच्छति—ऐच्छत् ।
गमॢ–गतौ (शप्) गच्छति—अगच्छत् ।
यम—उपरमे ( ,, ) यच्छति—अयच्छत् ।
शितोऽन्यत्र तु गमिष्यति इत्यादि ।

५३८ । पा-घ्रा-ध्मा-स्था-म्ना-दाण्-दृश्य-र्ति-सर्ति-शद-सदां पिब-जिघ्र-धम-तिष्ठ-मन-यच्छ-पश्य-ऋच्छ-धौ-शीय-सीदाः । (७-३-७८)

एषाम् एते आदेशाः शिति प्रत्यये । तत्र सर्तेः धौ इत्यादेशो वेगितायां गतावेव इति नियमः । पा इति 'पा पाने' इत्यस्यैव ग्रहणम्, न तु 'पा रक्षण' इत्यस्य । यथा—

| धातुः | आदेशः | उदा० । | धातुः | आदेशः | उदा० । |
|---|---|---|---|---|---|
| पा | — पिब | — पिबति | दृशिर् | — पश्य | — पश्यति । |
| घ्रा | — जिघ्र | — जिघ्रति | ऋ | — ऋच्छ | — ऋच्छति । |
| ध्मा | — धम | — धमति | सृ | — धौ | — धावति । |
| स्था | — तिष्ठ | — तिष्ठति | शद | — शीय | — शीयते । |
| म्ना | — मन | — मनति | षद्लृ | — सीद | — सीदति । |
| दाण् | — यच्छ | — यच्छति | | | |

प्रत्यु०—('शिति' किम्?) पानं, घ्राणं, ध्मानम् इत्यादि ।

अस्य सूत्रस्य श्लोकेनाप्युदाहरणम्—

व्याघ्रो जिघ्रति, सीदतीह सदनं धावन् वनान्निस्सरन्
ऋत्वा प्राच्छेति निर्भयं, विधमति ध्मातेषु शङ्खेष्वयम् ।
स्थाने तिष्ठत, पेयमाशु पिबत, म्नायं मनन्तु द्विजाः
शस्त्रं यच्छत दत्तलक्ष्यमिह भोः, शादोऽस्य संशीयताम् ॥

वस्तुतः पाघ्रादयः पिबजिघ्रादयश्च खिलधातवः । एके आर्धधातुकमात्रविषयाः, अन्ये सार्वधातुकमात्रविषया इति । नष्टाश्वदग्धरथन्यायेन पाणिनिरेषां स्थान्यादेशभावं कल्पयति ।

५३९ । ज्ञाजनोर्जा । (७-३-७९)

'ज्ञा अवबोधने' (श्ना) 'जनी प्रादुर्भावे' (श्यन्) इत्यनयोः जा इत्यादेशः शिति प्रत्यये । यथा—

ज्ञा—जानाति, जानीते । जन—जायते, अजायत, जायतां, जायेत ।

५४० । प्वादीनां ह्रस्वः । (७-३-८०)

क्र्यादेः अन्तर्गणभूतानां प्वादीनां शिति परे ह्रस्वः । यथा—

पू —पुनाति । अन्यत्र—पूतम् ।

लू —लुनाति । ,, लूनम् ।

स्तॄ —स्तृणाति । ,, स्तीर्णम् ।

पूञ्-लूञ्-स्तॄञ्-कॄञ्-वॄञ्-धूञ्-शॄ-कॄ-भॄ-मॄ-दॄ-जॄ-ॠ-गॄ-ज्या-री-ली-व्ली-प्ली—एते प्वादयः ॥

३. सो अन्तकर्मणि । परस्मैपदी ।

सो + य + इति स्थिते—

५४१ । ओतः श्यनि । (७-३-७१)

ओकारान्तस्याङ्गस्य लोपः श्यनि; 'अलोऽन्त्यस्य' इत्योकारस्यैव लोपः । यथा—स्यति स्यतः स्यन्ति । अस्यत्—स्यतु—स्येत् ।

एवं 'दो अवखण्डने' इत्यस्य—

द्यति —अद्यत्—द्यतु—द्येत् ।

---

(5) ५. स्वादिगणः, श्नुविकरणः ॥

श्नुप्रत्ययस्य विकरणस्य ङित्त्वात् प्रकृतेर्धातोर्न गुणः; परस्मैपदैकवचनानां पित्त्वेन ङित्त्वाभावात् तेषु श्नुप्रत्ययान्तस्याङ्गस्य गुणः । सुनोति सुनुतः । सुनु + अन्ति इत्यत्र 'अचिश्नु.......' इत्युवङि प्राप्ते तदपवादो यण् विधीयते । तथा हि—'एरनेकाचोऽसंयोगपूर्वस्य' इति प्रकरणे—

५४२ । हुश्नुवोः सार्वधातुके । (६-४-८७)

हुधातोः श्नुप्रत्ययान्तस्यानेकाचोऽसंयोगपूर्वस्याङ्गस्य च यण् स्यादजादौ सार्वधातुके । सुन्वन्ति । सुनोषि सुनुथः सुनुथ । सुनोमि ।

५४३ । लोपश्चास्यान्यतरस्यां म्वोः । (६-४-१०७)

अस्येत्यनेन 'उतश्च प्रत्ययादसंयोगपूर्वात्' इति पूर्वसूत्रोक्तं परामृश्यते । असंयोगपूर्वो यः प्रत्ययोकारः तदन्तस्याङ्गस्य लोपो वा मकारवकारयोः परयोः । अनेन सुन्वः—सुनुवः, सुन्मः—सुनुमः इति रूपद्वयम् । सुनुते सुन्वाते । अदन्ताङ्गस्याभावात् झस्य अदादेशः । (४६६) सुन्वते । सुनुषे सुन्वाथे, सुनुध्वे । सुन्वे सुन्वहे, सुनुवहे सुन्महे, सुनुमहे ॥

उक्त उकारलोपः करोतौ नित्यो विधीयते—

५४४ । नित्यं करोतेः । (६-४-१०८)

उतः प्रत्ययस्य असंयोगपूर्वस्य म्वोर्लोप उक्तः, करोतेर्विषये नित्यं स्यात् । यथा—कुर्वः, कुर्मः । कुर्वहे, कुर्महे ।

५४५ । ये च । (६-४-१०९)

यकारादौ प्रत्यये परे च करोतेरुक्तो लोपः । यथा—कुर्यात् ॥

५४६ । अत उत् सार्वधातुके । (६-४-११०)

उप्रत्ययान्तस्य करोतेरकारस्य स्थाने उकारः स्यात् क्ङिति सार्वधातुके । यथा—कुरुतः, कुर्वन्ति, कुर्यात् ।

अथ प्रकृतो धातुरुदाह्रियते—

लङ्—अनुनोत् असुनुताम् असुन्वन् ।
असुनुत असुन्वाताम् असुन्वत ।

लोट्—सुनोतु सुनुतात् सुनुताम् सुन्वन्तु ।
सुनु सुनुतात् । सुनवानि ॥ सुनुताम् सुन्वाताम् सुन्वताम्
सुनुष्व । सुनवै सुनवावहै ।

लिङ्—अदन्ताङ्गस्याभावात् इयादेशो न ।
सुनुयात् सुनुयाताम् सुनुयुः । सुन्वीत सुन्वीयाताम्

२. आप्लृ व्याप्तौ। परस्मैपदी।

आप्नोति आप्नुतः। संयोगपूर्वत्वात् उवङेव। आप्नुवन्ति। आप्नुवः, आप्नुमः। संयोगपूर्वत्वात् अत्रापि न विकल्पः। अत एव न हिलोपश्च—आप्नुहि।

३. अशू व्याप्तौ। आत्मनेपदी।

अश्नुते अश्नुवाते अश्नुवते; आश्नुत आश्नुवाताम् आश्नुवत; अश्नुताम्। अश्नुवीत।

---

## (5) VIII. तनोत्यादिगणः, उविकरणः॥

### १. तनु विस्तारे करणे च। उभयपदी।

**पूर्ववत् उप्रत्ययान्तस्याङ्गस्य पित्त्वात् गुणः॥**

तनोति तनुतः तन्वन्ति। तनोषि तनुथः तनुथ। तनोमि तन्वः, तनुवः। तन्मः, तनुमः। तनुते तन्वाते तन्वते। अतनोत् अतनुताम् अतन्वन्। अतनुत अतन्वाताम् अतन्वत। तनोतु तनुतात्। तनु तनुतात्। तनवानि। तनुतां तन्वातां तन्वताम्। तनुष्व। तनवै, तनवावहै। तनुयात् तनुयाताम्। तन्वीत तन्वीयताम्।

### २. डुकृञ् करणे। उभयपदी।

शित्त्वाभावात् उप्रत्यय आर्धधातुकम्। अतश्च तस्य न ङित्वम्। ङित्वाभावाच्च धातोर्गुणः। तिप्सिप्मिप्सु उप्रत्ययस्य च गुणः, **करोति**। 'अत उत्सार्वधातुके' (५४६) इति ङित्सु द्विबहुवचनेषु गुणाकारस्य उदादेशः, **कुरुतः कुर्वन्ति। करोषि कुरुथः कुरुथ। करोमि कुर्वः कुर्मः**। 'नित्यं करोतेः' (५४४) इति नित्यं उकारप्रत्ययस्य लोपः। **कुरुते कुर्वाते कुर्वते। कुरुषे कुर्वाथे कुरुध्वे। कुर्वे कुर्वहे कुर्महे। अकरोत् अकुरुत। करोतु। कुरु। करवाणि। कुरुतां कुर्वातां कुर्वताम्। कुरुष्व। करवै करवावहै**। 'ये च' (५४५) इत्युलोपः। **कुर्यात् कुर्यातां कुर्युः। कुर्वीत कुर्वीयातां कुर्वीरन्।**

---

## (6) IX. क्र्यादिगणः, श्नाविकरणः॥

### १. क्रीञ् द्रव्यविनिमये। उभयपदी।

**क्रीणाति। क्रीणा+तस्** इत्यत्र आकारस्य ईकारो विधीयते—अत्र 'अत उत्सार्वधातुके' इति हि सूत्रं व्याख्यातेष्वन्तिमम्; व्याख्येयं

च सूत्रं तस्मादेकेनैव सूत्रेणान्तरितम् । अतो मध्यगतमप्रकृतमपि तत् व्याख्यायैव प्रस्तुतोपयोगि सूत्रं व्याख्यास्यामः ॥

५४७। श्नसोरल्लोपः। (६-४-१११)

श्नम् इति विकरणप्रत्ययस्य असधातोश्च अकारस्य लोपः सार्वधातुके क्ङिति । **भिनत्ति भिन्तः** । **अस्ति स्तः** इति तत्तत्प्रकरणयोरुदाहरिष्यामः ॥

५४८। श्नाभ्यस्तयोरातः। (६-४-११२)

श्ना इति विकरणप्रत्ययस्य अभ्यस्तानामङ्गानां च आकारस्य लोपः स्यात् सार्वधातुके क्ङिति । अनेन प्रकृते (क्रीणा + तस् इत्यत्र) लोपे प्राप्ते तस्यापवादः—

५४९। ई हल्यघोः। (६-४-११३)

हलादौ तु सार्वधातुके क्ङिति श्नाभ्यस्तयोरात ईत् । घुसंज्ञस्य त्वभ्यस्तस्य नेदमिति निषेधः । अतश्च श्नाभ्यस्तयोराकारस्य अजादौ क्ङिति सार्वधातुके लोपः, हलादौ तु ईत्वमिति व्यवस्था । अनेन प्रकृते **क्रीणीतः** इति रूपसिद्धिः । अन्तीत्यजादौ प्रत्यये लोपः, **क्रीणन्ति** । **क्रीणासि क्रीणीथः क्रीणीथ** । **क्रीणामि क्रीणीवः क्रीणीमः** । एकवचनेषु तु ङित्त्वाभावादुभयमपि नास्ति । आत्मनेपदलटि सर्वत्र ङित्त्वाद्यथायथम् ईत्वलोपौ—**क्रीणीते क्रीणाते क्रीणते; क्रीणीषे क्रीणाथे क्रीणीध्वे** । **क्रीणे क्रीणीवहे क्रीणीमहे** । **अक्रीणात् अक्रीणीताम् अक्रीणन्** । **अक्रीणीत अक्रीणाताम् अक्रीणत** । **क्रीणातु, क्रीणीतात् क्रीणीतां क्रीणन्तु** । **क्रीणीहि** । **क्रीणानि** । **क्रीणीतां क्रीणातां क्रीणतां** । **क्रीणीष्व** । **क्रीणै क्रीणावहै** । **क्रीणीयात् क्रीणीयातां क्रीणीयुः** ॥

यासुटो ङित्त्वात् सर्वत्र ईत्वम् । **क्रीणीत क्रीणीयातां क्रीणीरन्** ॥

प्रसङ्गवशात् हलि सार्वधातुके क्ङित्यनुशिष्टा अन्येऽपि विशेषविधयोऽत्रैव कथ्यन्ते—

५५०। इद्दरिद्रस्य। (६-४-११४)

हलादौ क्ङिति सार्वधातुके दरिद्रातेरिदादेशः। दरिद्राति दरिद्रितः। अभ्यस्तत्वात् प्राप्तस्य ईत्वस्यापवादः।

५५१। भियोऽन्यतरस्याम्। (६-४-११५)

भीधातोरुक्तनिमित्ते इत्वं वा। तेन बिभितः बिभीतः इति रूपद्वयम्।

५५२। जहातेश्च। (६-४-११६)

ओ हाक् त्यागे इति धातोश्च इत्वं वा। तेन जहितः जहीतः इति रूपद्वयम्।

५५३। आ च हौ। (६-४-११७)

जहातेर्हौ परे इत्वम् ईत्वम् आत्वं च वा स्यात्। तेन जहिहि जहीहि जहाहि इति रूपत्रयम्।

५५४। लोपो यि। (६-४-११८)

यादौ क्ङिति सार्वधातुके जहातेराकारस्य लोपः। तेन यासुटि जह्यात् इति रूपम्।

२. मृद क्षोदे। परस्मैपदी।

विकरणस्य ङित्त्वान्न गुणः; मृद्नाति मृद्नीतः मृद्नन्ति। लोटि मृद्नीहि इति रूपे प्राप्ते—

५५५। हलः श्नः शानज्झौ। (३-१-८३)

हलः परस्य श्नाप्रत्ययस्य शानच् इत्यादेशः हौ परे। अनेन मृद्नाहि = मृदानहि। 'अतो हेः' (५०३) इति हिलोपेन मृदान इति रूपं सिद्ध्यति। एवं बध—बधान। मुष—मुषाण। स्तभ—स्तभान इत्यादिषु हलन्तेषूह्यम्॥

३. पूञ् पवने। उभयपदी।

'प्वादीनां ह्रस्वः' (५४०) इति ह्रस्वः। पुनाति-पुनीते।

४. ग्रह ग्रहणे। उभयपदी।

'ग्रहिज्या......' (५१६) इति संप्रसारणम्। गृह्णाति, गृह्णीतः। गृह्णीते। अगृह्णात्। अगृह्णीत। गृह्णातु, गृह्णीतां। गृह्णीयात्, गृह्णीत।

---

## (7) VII. रुधादिगणः । श्नम्विकरणः ।

### १. रुधिर् आवरणे । उभयपदी ।

'प्रत्ययः' 'परश्च' इत्यधिकारेऽपि वर्तमाने मित्त्वस्य प्रयोजनान्तराभावात् 'मिदचोऽन्त्यात्' इत्यन्त्यादचः परः क्रियते श्नम् प्रत्ययः । रुनध् + ति इति स्थिते—

### ५५६ । झषस्तथोर्धोऽधः । (८-२-४०)

झषः परयोस्तकारथकारयोर्धकार आदेशः स्यात्, न तु दधातेः । इति तकारस्य धकारः—रुनध् + धि इति जातम् । 'झलां जश् झशि' इति जश्त्वं णत्वं, **रुणद्धि** । रुनध्धस् इति जाते 'श्नसोरल्लोपः' (५४७) इति ङित्सु अल्लोपः, **रुन्धः**[1] **रुन्धन्ति** । **रुणत्सि रुन्धः रुन्ध** । तथोर्धत्वविधानात् प्रथममध्यमयोर्द्विवचने तुल्यं रूपम् । **रुणध्मि रुन्ध्वः रुन्ध्मः** ॥

ङित्सु श्नसोरल्लोपविधानात् पित्स्वेव श्नमोऽकारस्य श्रवणम् । पितश्च तिप्सिप्मिपो लोडुत्तमश्चेति परिगणिताः ॥

रुन्धे रुन्धाते रुन्धते । (चर्त्वे,) रुन्त्से रुन्धाथे रुन्ध्वे; रुन्धे रुन्ध्वहे रुन्ध्महे ।

**अरुणध् + त्** इत्यत्र हल्ङ्यादिलोप (२२२), जश्त्वचर्त्वे, **अरुणद्, अरुणत् अरुन्धाम् अरुन्धन्** । 'दश्च' (५८२), इति वा रुः । **अरुणः, अरुणत् अरुन्धम् अरुन्ध । अरुणधम् अरुन्ध्व अरुन्ध्म । अरुन्ध अरुन्धाताम् अरुन्धत । अरुन्धाः । अरुन्धि ।**

रुणद्धु, रुन्धात् रुन्धां रुन्धन्तु । 'हुझल्भ्यो हेर्धिः' (५०५) रुन्धि–रुन्धात्, रुन्ध रुन्ध; रुणधानि रुणधाव रुणधाम ।

---

१. 'रुन्ध् धः' इति धकारद्वयमत्र वर्तते; तथाप्युच्चारणे न भेदः । 'झरो झरि सवर्णे' (लोपो वा-८-४-६५) इत्येकस्य धकारस्य वैकल्पिको लोपः ।

रुन्धां रुन्धातां रुन्धताम् । रुन्त्स्व । रुणधै रुणधावहै रुणधामहै ।
रुन्ध्यात् रुन्ध्यातां रुन्ध्युः । रुन्धीत रुन्धीयातां रुन्धीरन् ।

**एवमेव भिदिर् विदारणे, छिदिर् द्वैधीकरणे इत्यादयः ॥**

**२. पिष्लृ सञ्चूर्णने** । परस्मैपदी ।

ष्टुत्वं, **पिनष्टि** । अल्लोपे 'नश्चापदान्तस्य झलि' (९२) इत्यनुस्वारः, **पिंष्टः पिंषन्ति** । पिनष् + सि इत्यत्र—

**५५७ । षढोः कः सि । (८-२-४१)**

षकारढकारयोः ककार आदेशः सकारे परे । इति षकारस्य कत्वम् । पिनक्सि । सस्य कवर्गात् परत्वात् षत्वं, **पिनक्षि** । **पिंष्ठः पिंष्ठ** । **पिनष्मि पिंष्वः पिंष्मः** । हल्ङ्यादिलोपः, जश्त्वचर्त्वे, **अपिनट्, अपिनड् अपिंष्टां अपिंषन्** । **अपिनट्–अपिनड्, अपिंष्टं अपिंष्ट** । **अपिनषं अपिंष्व अपिंष्म** । **पिनष्टु, पिंष्टात् पिंष्टां पिंषन्तु** । पिन्ष् + हि इत्यत्र हेर्धिः, **पिन्ष् + धि**—ष्टुत्वं,—**पिन्ष् + ढि**— 'झलां जश् झशि' इति जश्त्वं, **पिन्ड् + ढि**—अनुस्वारपरसवर्णौ, **पिण्ड्ढि** । 'झरो झरि' इति वा लोपः, **पिण्ढि** । **पिनषाणि पिनषाव पिनषाम** । **पिंष्यात् पिंष्यातां पिंष्युः** इत्यादि ॥

**३. उन्दी क्लेदने** । परस्मैपदी ।

उन्द् + ति इति स्थिते—

**५५८ । श्नान्नलोपः । (६-४-२३)**

श्नमः परस्य नस्य लोपः स्यात् । इति नलोपे **उनद् + ति = उनत्ति, उन्तः उन्दन्ति** । लङि **औनत् औनद्** । एवम् अञ्जू व्यक्तिमर्षणकान्तिगतिषु इत्यस्य **अनक्ति अङ्क्तः अञ्जन्ति** । लङि **आनक् आनग्** इत्यादि ॥

---

## (४) VIII. अदादिगणः । लुग्विकरणः ।

### १. अद भक्षणे । परस्मैपदी ।

**अत्ति अत्तः अदन्ति; अत्सि अत्थः अत्थ । अद्मि अद्वः अद्मः ।** लङि आद् + त् इति स्थिते वक्ष्यमाणेन 'अदः सर्वेषाम्' (५७८) इति सूत्रेण प्रत्ययस्य अडागमे—**आदत् आत्ताम् आदन् ।** पूर्ववदाडागमे **आदः आत्तम् आत्त । आदम् आद्व आद्म ।** लोटि **अत्तु अत्तात् अत्ताम् अदन्तु;** हेर्धिः—**अद्धि । अदानि अदाव अदाम ।** लिङि **अद्यात् अद्यात् अद्युः ।**

### २. हन हिंसागत्योः । परस्मैपदी ।

**हन्ति ।** हतः इति रूपसिद्ध्यर्थमनुनासिकलोप उच्यते—

**५५९ । अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति । (६-४-३७)**

अनुदात्तोपदेशानां वनतेस्तनोत्यादीनां चानुनासिकलोपः स्यात् क्ङिति झलादौ प्रत्यये परे । अनुदात्तोपदेशेषु यम - रम - नम - गम - हन - मन्यतय एवानुनासिकान्ताः । तनु - क्षणु - क्षिणु - ऋणु - तृणु - घृणु - वनु - मनु—इत्येते तनोत्यादयः । तस्थस्थानां ङित्त्वात् झलादित्वाच्चानेन नकारलोपः, **हतः हथः हथ ।** सिपि लोपस्यावकाशाभावान्नकारस्यानुस्वारः, **हंसि ।** उत्तमे तु न किञ्चित्, **हन्मि हन्वः हन्मः ।** झौ उपधालोप उच्यते—

**५६० । गमहनजनखनघसां लोपः क्ङित्यनङि । (६-४-९८)**

अचि उपधाया इति चानुवर्तते । गमादीनामुपधाया लोपः स्यात् क्ङित्यजादौ प्रत्यये न त्वङि । यथा—

| धातुः-लिटि | अतुस् | उस् | धातुः-लिटि | अतुस् | उस् |
|---|---|---|---|---|---|
| गम — | जग्मतुः | जग्मुः | खन — | चख्नतुः | चख्नुः |
| हन — | जघ्नतुः | जघ्नुः | घस — | जक्षतुः | जक्षुः |
| जन — | जज्ञे | जज्ञाते | | | |

प्रत्यु०—अङि तु—अगमत्, अघसत् ।

अनेन उपधालोपेन ह्नन्ति इति जाते कुत्वम् । तद्यथा—

५६१ । हो हन्तेर्ञ्णिन्नेषु (कु) । (७-३-५४)

हन्तेर्हस्य कुत्वं स्यात् ञिति णिति च प्रत्यये नकारे च । अत्र नकारस्य परत्वात् कुत्वम्; हकारस्य चान्तरतम्यात् कवर्गो घकारः । घ्नन्ति इति रूपम् । अनेन सूत्रेण वृत्रहन्शब्दस्य भसंज्ञायामल्लोपेऽचि कुत्वेन **वृत्रघ्नः वृत्रघ्ना वृत्रघ्ने** इत्यादि रूपाणि ॥

५६२ । **अभ्यासाच्च** । (७-३-५५)

हन्तेर्हस्य कुत्वम् । तेन जघान जिघांसति इत्यादि सिध्यति ॥

लङि तिप्सिपोर्हल्ङ्याब्दिलोपः । **अहन् अहताम् अघ्नन्** । **अहन् अहतम् अहत** । **अहनम् अहन्व अहन्म** ।

लोटि हौ हहि इति प्राप्ते—

५६३ । **हन्तेर्जः** (हौ) । (६-४-३६)

इति जादेशेन **जहि** इति रूपम् । उत्तमे **हनानि हनाव हनाम** ।

लिङि यासुटो ङित्त्वेऽपि अजादित्वाभावान्नोपधालोपः । झलादित्वाभावान्नापि नलोपः । **हन्यात् हन्याताम्** इत्यादि ।

३. **द्विष अप्रीतौ** । उभयपदी ।

द्वेष्टि-द्विष्टः; अद्वेट्-अद्विष्ट । झौ 'द्विषश्च' (५०१) इति वा जुसादेशः, अद्विषुः अद्विषन् । द्वेष्टु । द्विड्ढि । द्वेषाणि । द्विष्टां । द्विक्ष्व (षढोः कः सि) द्वेषै । द्विष्यात् । द्विषीत ।

४. **चक्षिङ् व्यक्तायां वाचि** ।

चक्ष्+ते इत्यत्र संयोगादिलोपेन (४९५) ककारे लुप्ते ष्टुत्वे च कृते **चष्टे चक्षाते चक्षते** । **अचष्ट** । **चष्टां** । **चक्षीत** ।

५. **रुदिर् अश्रुमोचने** । परस्मैपदी ।

५६४ । **रुदादिभ्यः सार्वधातुके** (वलादेरिट्) । (७-२-७६)

रुद्, स्वप्, श्वस्, अन्, जक्ष् एभ्यः पञ्चभ्यः परस्य वलादेः सार्वधातुकस्य इडागमः स्यात् ॥

**रोदिति रुदितः रुदन्ति** । **रोदिषि रुदिथः** इत्यादि । लङि प्रक्रियां परस्ताद्दर्शयिष्यामः ।

एवं **स्वपिति, श्वसिति, अनिति, जक्षिति** । 'जक्षित्यादयः षट्' इत्यभ्यस्तत्वात् 'अदभ्यस्तात्' (४६५) इति झेरदादेशः, **जक्षति** इति बहुवचनम् ।

६. **ईड स्तुतौ** । ७. **ईश ऐश्वर्ये** । आत्मनेपदिनौ ।

**५६५ । ईशः से । (७-२-७७)**

**५६६ । ईडजनोर्ध्वे च । (७-२-७८)**

ईड, ईश, जन एषां से ध्वे इति सार्वधातुकयोरिडागमः स्यात् ।

**यथा—ईश— [1]ईष्टे ईशाते ईशते ईशिषे ईशिध्वे ।**

ईड— [2]**ईट्टे ईडाते ईडते ईडिषे ईडिध्वे ।**

जनधातोर्लुग्विकरणाभावात् छन्दस्येवोदाहरणम् । से ध्वे इति विकृतनिर्देशात् लड्लोटोरेव इडागमः । ईशधातोरपि ध्वे प्रत्यये इट इष्टत्वात् 'ईशीडजनां सेध्वयोः' इति सूत्रकरणमुचिततरमभविष्यत् ।

८. **यु मिश्रणामिश्रणयोः** । परस्मैपदी ।

**५६७ । उतो वृद्धिर्लुकि हलि (सार्वधातुके पिति) । (७-३ ८९)**

**उकारान्तस्याङ्गस्य वृद्धिः स्याल्लुकि सति हलादौ पिति सार्वधातुके परे ॥**

यौति युतः युवन्ति । यौषि । यौमि । अयौत् । यौतु । युयात् । एवं णु स्तुतौ इत्यादयः ।

९. **ऊर्णुञ् आच्छादने** । उभयपदी ।

**५६८ । ऊर्णोतेर्विभाषा । (७-३-९०)**

**ऊर्णोतेर्हलि पिति सार्वधातुके वा वृद्धिः ।**

**ऊर्णौति, ऊर्णोति ऊर्णुतः ऊर्णुवन्ति ; ऊर्णौषि ऊर्णोषि ; ऊर्णौमि ऊर्णोमि ।**

**५६९ । गुणोऽपृक्ते । (७-३-९१)**

**अपृक्ते हलि पिति सार्वधातुके ऊर्णोतेर्गुणः, न तु वृद्धिः ।**

**और्णोत् और्णुताम् और्णुवन् । और्णोः । ऊर्णौतु, ऊर्णोतु । ऊर्णुहि । ऊर्णवानि । ऊर्णुयात् । तङि ऊर्णुते । और्णुत ऊर्णुताम् ऊर्णुवीत ।**

---

१. 'व्रश्चभ्रस्ज......छशां षः' (६७) इति षत्वे कृते ष्टुत्वम् ।

२. 'खरि च' इति चर्त्वानन्तरं ष्टुत्वम् । लङि ऐष्ट ऐशाताम् ऐशत ; ऐट्ट ऐडाताम् ।

५७० । तृणह इम् । (७-३-९२)

तृणह इति 'तृह हिंसायाम्' इति रौधादिकस्य कृतश्नमो ग्रहणम् । तृणह् इत्यङ्गस्य इमागमो हलि पिति सार्वधातुके ।

तृह् + ति—श्नम्, तृणह् + ति—इमागमः, तृणेह् + ति—ढत्वं, तृणेढ् + ति 'झषस्तथोर्धोऽधः' (५५६), तृणेढ् + धि—ष्टुत्वं, तृणेढ् + ढि—'ढो ढे लोपः' (७९) तृणेढि । तृण्ढः तृंहन्ति । तृणेक्षि । तृणेह्मि तृंह्वः तृंह्मः । अतृणेट् । तृणेढु, तृण्ढात् । तृण्ढि । तृणहानि तृणहाव । तृंह्यात् तृंह्यातास् । इत्यादि । रुधादावुदाहर्तव्यो धातुः सूत्रक्रमानुरोधादत्रोपात्तः ॥

१०. ब्रूञ् व्यक्तायां वाचि । उभयपदी ।

५७१ । ब्रुव ईट् । (७-३-९३)

ब्रू इत्यस्य हलादेः पितः सार्वधातुकस्य ईडागमः ॥

ब्रवीति ब्रूतः ब्रुवन्ति । ब्रवीषि । ब्रवीमि ।

'ब्रुवः पञ्चानां........' (४७६) इति प्रथमतः पञ्चानां वचनानाम् आहादेशसंनियोगेन णलतुसुस्थलथुसादेशा उक्ताः । तेन—

आह आहतुः आहुः । थलि—

५७२ । आहस्थः (थलि) । (८-२-३५)

इति सूत्रेण थकारेऽन्तादेशे कृते चर्त्वेन तकारः । आत्थ आहथुः । शेषे ब्रूथ । ब्रवीमि ब्रूवः ब्रूमः इत्येकमेव रूपम् । तङि ब्रूते ब्रुवाते ब्रुवते इत्यादि । लङि अब्रवीत् अब्रूत । लोटि ब्रवीतु ब्रूताम् । 'हलादेः पितः' इत्युक्तेः ब्रवाणि ब्रवाव । ब्रवै ब्रवावहै । लिङि ब्रूयात् ब्रुवीत ॥

[५७३ । यङो वा । (७-३-९४)

यङः परस्य हलादेः पितः सार्वधातुकस्य ईडागमो वा । उदाहरणं—यङन्तप्रक्रियायाम् ॥]

११. तु गतिवृद्धिहिंसासु । परस्मैपदी (सौत्रः) ।
१२. रु शब्दे । ,,
१३. ष्टुञ् स्तुतौ । उभयपदी ।

## ५७४ । तुरुस्तुशम्यमः सार्वधातुके । (७-३-९५)

सार्वधातुके इत्यनुवर्तमाने पुनस्तद्ग्रहणं 'पिति' इत्यस्य निवृत्त्यर्थम् । एभ्यः परस्य हलादेः[1] सार्वधातुकस्य ईडागमो वा ।

| | | | | | |
|---|---|---|---|---|---|
| स्तवीति | स्तुवीतः | स्तुवन्ति । | स्तवीषि | स्तुवीथः | स्तुवीथ |
| स्तौति | स्तुतः | | स्तौषि | स्तुथः | स्तुथ |
| स्तवीमि | स्तुवीवः | स्तुवीमः । | ... | अस्तवीत् | ... |
| स्तौमि | स्तुवः | स्तुमः | ... | अस्तौत् | ... |
| स्तवीतु | स्तुवीयात् । | तङ्यप्येवम्— | स्तुवीते | स्तुवाते स्तुवते । | |
| स्तौतु | स्तुयात् | | स्तुते | | |

इत्यादिरूपद्वयं हलादिप्रत्ययेषूह्यम् । तु रु इत्यनयोरपि स्तुधातोरिव रूपाणि । शम्यमोस्तु आदादिकत्वाभावाच्छन्दस्येवोदाहरणम् ।

१४. अस भुवि । परस्मैपदी ।

## ५७५ । अस्तिसिचोऽपृक्ते । (७-३-९६)

अस्तेः सिजन्ताच्च परस्यापृक्तस्य हलादेः सार्वधातुकस्य ईडागमः ।

**यथा**—अस्—आसीत् । आसीः (लङ्) । कृ—अकार्षीत् (लुङ्) ।

अस्तेः शेषाणि रूपाणि प्रकृतगणान्ते दर्शयिष्यामः । सिच उदाहरणान्तराणि च लुङि व्याख्यास्यामः ॥

## ५७६ । रुदश्च पञ्चभ्यः । (७-३-९८)

रुदादिभ्यो हलादेरपृक्तस्य सार्वधातुकस्य ईडागमः । रुदादिपञ्चकं (५६४)-तमे सूत्रे परिगणितम् । पञ्चापि ते आदादिकाः । लटि रूपाणि च तेषां तत्रोक्तानि । लङि प्रस्तुतसूत्रेण तिप्सिपोरपृक्तयोरीडागमः—

---

१. हलादौ पिति सार्वधातुके ईडागमो योज्य इत्यन्वयः । एवमन्यत्राप्यागमविधिषु सप्तम्यन्तस्यान्वयो बोध्यः । ऐकरूप्यार्थं षष्ठ्यन्तत्वं कृत्वा व्याख्यातं भविष्यति ।

| | | | | | |
|---|---|---|---|---|---|
| अरोदीत् | अरुदिताम् | अरुदन् । | अरोदीः | अरुदितम् | इत्यादि । |
| अस्वपीत् | अस्वपिताम् | अस्वपन् । | अस्वपीः | अस्वपितम् | ,, |
| अश्वसीत् | अश्वसिताम् | अश्वसन् । | अश्वसीः | अश्वसितम् | ,, |
| आनीत् | आनिताम् | आनन् । | आनीः | आनितम् | ,, |

अजक्षीत् अजक्षिताम् अजक्षुः । अत्र 'सिजभ्यस्तविदिभ्यश्च' (४९८) इति झेर्जुस् । 'जक्षित्यादयः षट्' इत्यभ्यस्तत्वम् ।

## ५७७ । अड् गार्ग्यगालवयोः । (७-३-९९)

रुदादिभ्यो हलादेः सार्वधातुकस्य अडागमो गार्ग्यगालवयोर्मते ॥

| | | | | | |
|---|---|---|---|---|---|
| अरोदत् । | अरोदः | अश्वसत् । | अश्वसः | अजक्षत् । | अजक्षः |
| अस्वपत् । | अस्वपः | आनत् । | आनः | | |

लोटि हौ परत्वादिडागमे कृते झलः परत्वाभावात् न 'हुझल्भ्यो हेर्धिः' । रुदिहि । स्वपिहि । श्वसिहि । अनिहि । जक्षिहि इति रूपाणि ॥

## ५७८ । अदः सर्वेषाम् । (७-३-१००)

अत्तेरपृक्तस्य हलः सार्वधातुकस्य अडागमः सर्वेषामाचार्याणां मते । उदाहृतं च गणप्रारम्भे । आदत् आदः ॥

जक्ष, जागृ, दरिद्रा, चकास्, शास् इति पञ्च धातवो लौकिकेष्वभ्यस्ताः । तत्र जक्षितेरुक्तानि रूपाणि ॥

### १५. जागृ निद्राक्षये । परस्मैपदी ।

जागर्ति, जागृतः, अभ्यस्तत्वात् 'झस्यात्' जाग्रति । लङि— अजागः अजागृतां । 'सिजभ्यस्तविदिभ्यश्च' (४९८) इति झेर्जुसि कृते—

## ५७९ । जुसि च (गुणः) । (७-३-८३)

इगन्ताङ्गस्य गुणः जुसि । इति गुणेन अजागरुः । अजागः अजागृतम् इत्यादि । लोटि—जागर्तु, जागृतात् जागृतां जाग्रतु ।

---

१. ञि । ष्वप् शये । श्वस प्राणने । अन च । जक्ष भक्षहसनयोः इति धातुपाठः । सर्वे परस्मैपदिनश्च ।

**जागृहि । जागराणि । जागराव ।** लिङि—**जागृयात् जागृयातां जागृयुः ।** अत्र 'जुसि च' इति विहितो गुणो यासुटो ङित्त्वान्न भवति। इह हि 'सार्वधातुकमपित्' इति ङित्त्वेन निषिद्धं गुणं विधातुं किल 'जुसि च' इति गुण आरभ्यते । लिङो झेर्जुसस्तु अपित्सार्वधातुकत्वेन यासुड्योगेन च द्विगुणमस्ति ङित्त्वम् । अतः प्रथममेव ङित्त्वं बाधितुं अपवादो 'जुसि च' इति गुणः शक्नोति, न तु यासुट्प्रयुक्तं द्वितीयमपि[1]। एवं 'जाग्रोऽविचिण्णल्ङित्सु' इति विशेषविहितो जागर्तेर्गुणोऽपि यासुटो ङित्त्वात् लिङि न भवति ॥

१६. **दरिद्रा दुर्गतौ** । परस्मैपदी ।

**दरिद्राति** 'इद्दरिद्रस्य' (५५०) इति हलादौ क्ङिति सार्वधातुके इदादेशः। 'श्नाभ्यस्तयोरातः' (५४८) इति अजादौ लोपः, **दरिद्रितः दरिद्रति** । लङि—**अदरिद्रात् अदरिद्रिताम् अदरिद्रुः** । लिङि—**दरिद्रियात्** ।

१७. **चकासृ दीप्तौ** । परस्मैपदी ।

**चकास्ति चकास्तः चकासति । चकास्सि चकास्थः** इत्यादि । लङि-हल्ङ्यादिलोपे **अचकाः** इति रूपे प्राप्ते दत्वं विधीयते—

## ५८० । तिप्यनस्तेः (दस्सः) । (८-२-७३)

**तिपि परे पदान्तस्य सस्य दः स्यात् न त्वस्तेः ॥**

अचकात्, अचकाद् । अचकास्ताम्, अचकासुः ।

## ५८१ । सिपि धातो रुर्वा । (८-२-७४)

**सिपि परे पदान्तस्य सस्य वा रुः । पक्षे दः ॥**

अचकात्, अचकाद्, अचकाः ।

## ५८२ । दश्च । (८-२-७५)

**सिपि परे पदान्तस्य दस्य रुर्वा । यथा—**

विद ज्ञाने—अवेः अवेत् त्वम् । भिद—अभिनः अभिनत् त्वम् ।

---

१. जुसि गुणे यासुटि प्रतिषेधो वक्तव्यः इति वार्त्तिकं प्रत्याख्यातुमयमुपायः काशिकायामुक्तः ।

### १८. शासु अनुशिष्टौ। परस्मैपदी।

**शास्ति**। हलादौ क्ङिति विशेषो विधीयते—

### ५८३। शास इदङ्हलोः (क्ङिति)। (६-४-३४)

शास्तेरुपधाया इत् स्यात् अङि हलादौ क्ङिति च। इति इत्वे निमित्तसद्भावात् 'शासिवसि........' (३७६) इति षत्वम्। **शिष्टः शासति, शास्सि शिष्टः** इत्यादि। लङि—'तिप्यनस्तेः' (५८०) इति दत्वम्—

अशात् अशिष्टाम् अशासुः। अशाः अशात् अशिष्टम् इत्यादि। लोटि—शास्तु शिष्टात्, शिष्टां शासतु।

### ५८४। शा हौ। (६-४-३५)

शास्तेः शादेशो हौ परे। शादेशस्यास्य असिद्धत्वेन झलन्तत्वस्य अक्षतेः 'हुझल्भ्यो हेर्धिः' इति धिः। **शाधि** इति रूपं सिद्ध्यति॥

शासानि शासाव शासाम। (लिङि) शिष्यात् शिष्यातां शिष्युः इत्यादि।

अथ षष्ठाध्यायगतस्यास्य शादेशस्य कीदृशमसिद्धत्वम्—

### ५८५। असिद्धवदत्राभात्। (६-४-२२)

(आ भात्) 'भस्य' (६-४-१२९) इति सूत्रपर्यन्तम्। तदन्तर्गतो विधिरिति यावत्। सः असिद्ध इव स्यात्। कुत्रेत्युच्यते—अत्रेति। अत्र—इतः प्रभृति भस्येत्यवध्यन्तर्गतेष्वेव विधिषु कर्तव्येषु। आभादित्यवधिनिर्देशमवष्टभ्य तत्र भवाः विधय आभीया उच्यन्ते। एवं च आभीयो विधिराभीयं विधिमुद्दिश्यासिद्ध इति फलितम्। असिद्धवद्भावश्च विधीनां विषयसाम्य एव सप्रयोजनः स्यात्। अतः आभीयो विधिः समानाश्रये आभीय एव विधौ कर्तव्ये असिद्धः स्यादिति सङ्केतस्वरूपम्। आभीयविधीनां परस्परमसिद्धत्वात् कृतेऽप्यादेशे स्थानिप्रयुक्तो विधिः प्रवर्तते, न प्रवर्तते चादेशप्रयुक्तो विधिः। सङ्केतस्यास्य प्रधानप्रयोजनान्युदाहरिष्यामः—

## १. आदेशेषु स्थानिप्रयुक्तविधेरुदाहरणानि—

१. { एधि / शाधि } —एत्व-शाभावयोः कृतयोरपि झलन्तलक्षणं धित्वम् ।

२. { आयन् / आसन् } —इणो यणि अस्तेरल्लोपे च कृतेऽपि अजादित्वलक्षणः आट् ।

३. कारिष्यते —इटि कृतेऽपि 'णेरनिटि' इति लोपः ।

४. कुरु —कृतेऽपि हिलोपे सार्वधातुकनिमित्तकमुत्वम् ।

## २. आदेशेषु स्वप्रयुक्तविध्यप्रवृत्तेरुदाहरणानि—

१. जहि —जादेशे कृते 'अतो हेः' इति हेर्न लुक् ।

२. गतः —अनुनासिकलोपे कृते 'अतो लोपः' इति नाल्लोपः ।

३. अपाचितरां—प्रथमं चिणो लुकि प्रवृत्ते पुनः तरपो न लुक् ।

**असमानाश्रयं तु नासिद्धम् । यथा—प्रशमय्य । ण्याश्रयो मितां ह्रस्वः, ल्यबाश्रयोऽयादेशश्च भवतः । तत्तत् प्रकरणं दृश्यताम् ॥**

### १९. शीङ् स्वप्ने । आत्मनेपदी ।

### ५८६ । शीङः सार्वधातुके गुणः । (७-४-२१)

**शीङः सार्वधातुके परे गुणः । शेते शयाते ॥**

### ५८७ । शीङो रुट् (झः) । (७-१-६)

**शीङो झादेशस्य अतो रुडागमः । इति रुट् ॥**

शेरते । शेषे । शयाथे इत्यादि । अशेत अशयातां, अशेरत । शेतां शयातां शेरतां । शयीत शयीयातां शयीरन् ।

### २०. विद ज्ञाने । परस्मैपदी ।

**वेत्ति वित्तः विदन्ति । वेत्सि वित्थः वित्थ । वेद्मि विद्वः विद्मः । 'विदो लटो वा' (४७५) इति णलाद्यादेशेषु—वेद विदतुः विदुः । वेत्थ विदथुः विद । वेद विद्व विद्म इत्यपि लटि रूपाणि । लङि—'दश्च' इति (८२) सिपि वा रुः । अवेः अवेत् अवित्तम् अवित्त । लोटि—वेत्तु, विद्धि, वेदानि । अत्र विदांकरोतु, विदां-**

कुरुतात्, विदांकुरुतां विदांकुर्वन्तु इत्यादीनि अनुप्रयोगरूपाण्यपि लिट्याम्प्रकरणे वक्ष्यन्ते। लिङि—विद्यात् विद्यातां विद्युः इत्यादि ॥

संपूर्वकस्यास्य आत्मनेपदित्वात् आत्मनेपदे विशेष उच्यते—

५८८ । वेत्तेर्विभाषा । (७-१-७)

वेत्तेर्झादेशस्य अतो वा रुडागमः । यथा—

संवित्ते संविदाते संविद्रते । (लङि) समविद्रत । (लोटि) संविद्रताम् । इत्यपि रूपाणि ।

२१. इण् गतौ । परस्मैपदी ।

एति, इतः । अनेकाच्त्वाभावात् अप्राप्तो यण् विधीयते—

५८९ । इणो यण् (अचि) । (६-४-८१)

अजादौ प्रत्यये परे इण्धातोर्यण् ॥

यन्ति । एषि इथः इथ । एमि इवः इमः । ऐत् ऐताम् आयन् । एतु इतात् इतां यन्तु । इहि । अयानि । इयात् इयाताम् ।

२२. इङ् अध्ययने । आत्मनेपदी ।

अयम् अधिपूर्व एव प्रयुज्यते ॥

अधीते अधीयाते अधीयते । अध्यैत । (परत्वात् पूर्वमियङि इयाताम् इति जाते आट् वृद्धिश्च) अध्यैयाताम् । अध्यैयत । अध्यैथाः अध्यैयाथाम् अध्यैध्वम् । अध्यैयि । अधीताम् । अधीयीत अधीयीयाताम् । अधीयीय ।

२३. या प्रापणे । परस्मैपदी ।

याति, यातः यान्ति । अयात् अयाताम्—

'लङः शाकटायनस्यैव' (५००) इति झेर्वा जुस् । अयुः अयान् । एवमन्येषामपि आदन्तानाम् ॥

स्ना—अस्नुः अस्नान् । भा—अभुः अभान् । वा—अवुः अवान् ।

२४. मृजू शुद्धौ । परस्मैपदी ।

५९० । मृजेर्वृद्धिः । (७-२-११४)

मृजधातोरिको वृद्धिः प्रत्यये परे ॥

मार्ज् + ति–'व्रश्चभ्रस्जसृजमृज......' (६७) इति षः। ष्टुत्वं **मार्ष्टि, मृष्टः**। 'क्ङित्यजादौ वेष्यते' इति भाष्यात् **मृजन्ति, मार्जन्ति**। 'षढोः कस्सि' **मार्क्षि, मृष्ठः, मृष्ठ। मार्ज्मि, मृज्वः, मृज्मः॥**

लङि—हल्ङ्यादिलोपेन अमार्ज् इति स्थिते—

**५९१। रात्सस्य (संयोगान्तस्य लोपः)। (८-२-२४)**

**रेफात् परस्य सस्यैव संयोगान्तलोपः। इति नियमात् संयोगान्तलोपो न भवति। जश्त्वचर्त्वे—**

अमार्ट् अमृष्टाम् अमृजन्, अमार्जन् इत्यादि। (लोटि) मार्ष्टु। मृड्ढि। मार्जानि मार्जाव मार्जाम। मृज्यात्।

**२५. वश इच्छायाम्।** परस्मैपदी।

व्रश्चादिषत्वं, 'ग्रहिज्यावयि......' (५१६) इति ङित्सु संप्रसारणं च॥

वष्टि उष्टः उशन्ति। वक्षि। अवट् औष्टाम् औशन्। अवशम्। वष्टु। उड्ढि। वशानि।

**२६. लिह आस्वादने।** उभयपदी।

लेह् + ति— ढत्वं, लेढ् + ति—'झषस्तथोर्धोऽधः' लेढ् + धि—ष्टुत्वं, लेढ् + ढि—ढलोपः,—**लेढि**। ढ्रलोपे दीर्घः,—**लीढः लिहन्ति**। 'षढोः कस्सि' **लेक्षि**। तङि—**लीढे,** लिहाते लिहते। लिक्षे। अलेट्—अलीढ। लेढु। लीढि, लेहानि। लीढाम्। लिक्ष्व। लेहै। लिह्यात्—लिहीत।

**२७. दुह प्रपूरणे।** उभयपदी।

'दादेर्धातोर्घः' (६४) 'झषस्तथोर्धोऽधः', झलां जश्झशि' इति घत्व-धत्व-जश्त्वानि॥

दोग्धि दुग्धः दुहन्ति। 'भष्भावः' (६८) धोक्षि दुग्धः दुग्ध। दोह्मि दुह्वः दुह्मः। दुग्धे दुहाते दुहते। धुक्षे दुहाथे धुग्ध्वे। अधोक्–अदुग्ध। दोग्धु-दुग्धाम्। दुह्यात् - दुहीत।

'अस्तिसिचोऽपृक्ते' (५७५) इति सूत्रस्य व्याख्याने असधातोर्लङि तिप्सिपोरेव रूपाण्युक्तानि । रूपशेषकथनं तत्र व्याक्षिप्तमधुना क्रियते—

'श्नसोरल्लोपः' (५४७) इति ङित्स्वल्लोपः । अस्ति स्तः सन्ति । अस्सि इति स्थिते सलोपः । तथा हि—

५९२ । तासस्त्योर्लोपः (सस्य) । (७-४-५०)

तासेरस्तेश्च सकारस्य लोपः स्यात् सकारादौ प्रत्यये परे । तास् इति लुटः शाश्वतो विकरणप्रत्ययः । यथा—

तास्—भवितास्सि = भवितासि । अस्—अस् + सि = असि ।

५९३ । रि च । (७-४-५१)

रेफादौ प्रत्यये च तासस्त्योः सलोपः । यथा—

तास्—भवितास् + रौ = भवितारौ । अस्तेश्छन्दस्येवोदाहरणम् ।

५९४ । ह एति । (७-४-५२)

एति तु परे तासस्त्योः सस्य हः । यथा—

तास्—एधितास् + ए = एधिताहे । अस्—व्यतिस् + ए = व्यतिहे ।

प्रकरणपूर्त्यर्थं सूत्रद्वयमत्रैव व्याख्यातम् ।

**असि स्थः स्थ । अस्मि स्वः स्मः ।** लङि—**आसीत् ।** श्नसोरल्लोपस्याभीयत्वेनासिद्धत्वात् अजादित्वस्य न हानिरित्याडागमः, **आस्ताम् आसन् । आसीः आस्तम् आस्त । आसम् आस्व आस्म ।** लोटि—**अस्तु, स्तात् स्तां सन्तु ।** अस् + हि इत्यत्र हेर्ङित्वादल्लोपे सकारस्य एत्वमुच्यते—

५९५ । घ्वसोरेद्धावभ्यासलोपश्च । (६-४-११९)

घु इति दा-धा-रूपयोर्धात्वोः संज्ञा । दा-धा-धात्वोरस्तेश्च एकारोऽन्तादेशो हौ परे, अभ्यासोऽस्ति चेत् तस्य लोपश्च । इति सकारस्य एकारः । तस्य चाभीयत्वेनासिद्धत्वात् 'हुझल्भ्यो हेर्धिः', **एधि, स्तात् स्तं स्त । असानि असाव असाम ।** लिङि यासुटो ङित्त्वात् सर्वत्राल्लोपः, **स्यात् स्यातां स्युः । स्याः स्यातं स्यात । स्यां स्याव स्याम ॥**

---

## (१) III. जुहोत्यादिगण:, श्लुविकरण: ।

१. हु हवि:प्रक्षेपे । परस्मैपदी ।

श्लुरिति लोपपर्याय इत्युक्तम् । तस्मिन् कृते प्रकृतेर्द्वित्वं विशेष इति सपरिवारो द्वित्वविधिरारभ्यते—

### ५९६ । एकाचो द्वे प्रथमस्य । (६-१-१)

एकोऽच् यस्मिन् स वर्णसमुदाय एकाच् इति पूर्वमेव व्याख्यातम् । यथायोगं द्वयोरपि पार्श्वयोर्हल्भिर्मिलितो मध्यगत एक: स्वर एकाच्शब्देन गृह्यते । तथा च द्वितीयस्वरपर्यन्तो वर्णराशि: प्रथम एकाच् भवति । तस्य द्वित्वम् (आवृत्ति:) स्यात् इत्यधिकार: । यथा—दुधातोर्लिटि द्वित्वम् । दुदु + अ । वृद्धि:, **दुदाव** ॥

### ५९७ । अजादेर्द्वितीयस्य । (६-१-२)

अजादि चेद् द्विर्वाच्यं शब्दरूपं तर्हि द्वितीयस्यैकाचो द्वित्वं, न तु प्रथमस्य । यथा—अशधातो: सन्प्रत्यये अशि + स इति स्थिते धातो: सन्निमित्तके द्वित्वे अशिशिषति इति द्वितीयस्यैकाचो द्वित्वम् । द्वितीयस्यैकाचोऽभावे तु प्रथमस्यैव ॥

### ५९८ । न न्द्रा: संयोगादय: । (६-१-३)

द्वितीयस्यैकाचो द्वित्वप्रसक्तौ संयोगस्यादिभूता: नकार—दकार—रेफा: न द्विरुच्यन्ते । इमान् वर्णान् वर्जयित्वा शेषस्य द्वित्वं कार्यम् । **यथा**—अर्दते: सनि द्वित्वे **अर्दिदिषति** इति रभिन्नस्य 'दि' इत्यस्य द्वित्वम् ।
अञ्चते: ,, **अञ्चिचिषति** इति नभिन्नस्य 'चि' इत्यस्य द्वित्वम् ।

**॥ * ॥ यथेष्टं नामधातुष्विति वक्तव्यम् ॥**

नामोत्पन्नेषु धातुषु प्रथमस्य द्वितीयस्य तृतीयादेर्वा यथेष्टमेकाचो द्वित्वं स्यात् । यथा—

पुत्र इवाचरति पुत्रायते । पुत्रायितुमिच्छति 'पुत्रायिष' इति सन्नन्तनामधातो: **पुपुत्रायिषते, पुतित्रायिषते । पुत्रायियिषते, पुत्रायिषषते ।**

### ५९९ । पूर्वोऽभ्यासः । (६-१-४)

द्विरुक्तस्य पूर्वं रूपमभ्याससंज्ञं स्यात् । यथा—

पच् पच् इत्यत्र पूर्वः पच् इत्ययमभ्यासः ।

### ६०० । उभे अभ्यस्तम् । (६-१-५)

द्विरुक्तः समुदायोऽभ्यस्तसंज्ञः । यथा—

ददति इत्यत्र दद् इति प्रकृतिरभ्यस्तम् ।

### ६०१ । जक्षित्यादयः षट् । (६-१-६)

अदादिगणे 'जक्ष भक्षहसनयोः' इत्यत आरभ्य षट् धातवोऽभ्यस्तसंज्ञाः स्युः । तेषु च जक्ष्, जागृ, दरिद्रा, चकास्, शास्, इति पञ्चैव लौकिका इति पूर्वमेवोक्तम् । वस्तुत एतेऽपि द्विरुक्ता एव । तथा हि—'कास्' इत्ययं द्वित्वे साधारणेनाभ्यासकार्येण 'चकास्' इति संपद्यते । 'गृ' इत्यस्याभ्यासदीर्घे 'जागृ' इति रूपं सुलभम् । 'द्रा' इत्यस्य 'दरिद्रा' इति रूपमाप्तुमभ्यासस्य रिगागम एवापेक्ष्यते । अभ्यासकार्यैरीदृशैर्जक्षिशास्ती अपि द्विरुक्ताविति साधयितुं शक्यते । दीधी, वेवी इत्युत्तरयोश्छान्दसयोर्द्विरुक्तिनिष्पन्नत्वं स्पष्टमेव । एवं च सप्त धातवोऽभ्यस्ता इत्यायाति । पाणिनिस्तु षडित्येवाह । संख्यावैषम्यं परिहर्तुं जक्षितिस्ततः परं षट् चेति सूत्रं व्याचक्षते पूर्वाचार्याः । जक्षीत्यादीनां सार्वत्रिकं द्वित्वमस्तीति, अभ्यासकार्याणि च बहूनि स्युरिति, 'जजागार' 'ददरिद्रौ' इत्यादिवत् पुनर्द्वित्वमेते सहन्त इति च कृत्वा पाणिनिरेनान् कृतद्वित्वानेव केवलधातुत्वेन पठितवानिति मन्यामहे । अन्यथा 'गुप्तिज्किद्भ्यः सन्' 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' इति स्वार्थे सन्प्रत्ययमिव गृप्रभृतीनां द्वित्वमवक्ष्यदाचार्यः । इत्यलमतिप्रसङ्गेन ॥

एवं द्वित्वस्य देशनियमं संज्ञाव्यवस्थां च कृत्वा तस्य निमित्तान्याह—

### ६०२ । लिटि धातोरनभ्यासस्य । (६-१-८)

लिटि परे अनभ्यासधात्ववयवस्य प्रथमस्यैकाचो द्वे स्तः, अजादेस्तु द्वितीयस्य । यथा—जप्—जजाप । दह्—ददाह । सद्—ससाद ।

एकं निमित्तमाश्रित्य सकृत् कृतद्वित्वस्य धातोः अन्यं निमित्तमाश्रित्य पुनर्द्वित्वं मा भूदिति 'अनभ्यासस्य' इति चाधिक्रियते । अतश्च जुगुप्सते, चिकित्सति इति स्वार्थसन्नन्ताभ्यां गुपकितधातुभ्यां पुनरिच्छार्थके सनि द्वित्वं न स्यात् । जुगुप्सिषते, चिकित्सिषतीत्येव रूपम् । एवं सन्नन्ताद्यङन्ताद्वा णिचि चङि कृतेऽपि पुनर्द्वित्वस्यावकाशोऽस्ति ॥

### ६०३ । सन्यङोः । (६-१-९)

षष्ठ्यन्तमेतत् । सन्नन्तस्य यङन्तस्य चानभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वे स्तः, अजादेस्तु द्वितीयस्य । यथा—

पच—सन्—पिपक्षति । यङ्—पापच्यते ।

### ६०४ । श्लौ । (६-१-१०)

श्लौ कृते च पूर्ववद्द्वे स्तः । यथा—हु—जुहोति । दा—ददाति ।

### ६०५ । चङि । (६-१-११)

चङि परेऽपि पूर्ववद्द्वे स्तः । यथा—

चुर—अचूचुरत् । दह—अदीदहत् ।

अथाभ्यासविकारा उच्यन्ते—

### ६०६ । ह्रस्वः (अभ्यासस्य) । (७-४-५९)

अभ्यासस्वरस्य ह्रस्वः स्यात् । यथा—

दा—ददाति । नी—निनाय । सू—सुषुवे ।

### ६०७ । हलादिः शेषः । (७-४-६०)

अभ्यासस्यादिर्हल् चेत् स शिष्यते । अन्ये लुप्यन्ते ॥

पठ्—पपाठ । अत्र ठकारस्य लोपः । व्रज—वव्राज । रेफजकारयोर्लोपः ।

व्रश्च—वव्रश्च । अत्र रेफशकारचकाराणां लोपः ।

अजादेरेकाचो धातोर्द्वितीयैकाचोऽभावात् प्रथमस्यैव द्वित्वम् । आदेर्हलोऽसम्भवात् सर्वे हलो लुप्यन्ते । तथा च अटधातोर्लिटि परे द्वित्वे अ अट् = आट । यङन्तत्वेन द्वित्वे तु द्वितीयस्यैकाचः सत्वात् अट्य = अट्यट्य । आदिहल् टकारः शिष्यते, अटट्य (= अटाट्या) ॥

### ६०८ । शर्पूर्वाः खयः । (७-४-६१)

शर्, पूर्वो येभ्यः ते खय एव शिष्यन्ते, न तु शर् । खराति-खराभ्यामनुगतेन ऊष्मणा चेद्धातुरारभते तर्हि खरातिखरावेव शिष्येते, न तु आदिरूष्मा इत्यर्थः । यथा—

स्तन्–तस्तान । श्च्युत्–चुश्च्युते । स्पन्द्–पस्पन्दे । ष्ठिव्–ठिष्ठेव (टिष्ठेव) ।

### ६०९ । कुहोश्चुः । (७-४-६२)

अभ्यासस्य कवर्गहकारयोश्चवर्ग आदेशः स्यात् । यथा—

गम्–जगाम । कम्–चकमे । हु–जुहोति ।

'अभ्यासे चर्च' (१११) इति पूर्वमेव व्याख्यातम् । तेन अभ्यासे झशां जशः, खरां चरश्च भवन्ति । यथा—

भभूव = बभूव । धधौ = दधौ । फफाल = पफाल । थस्थौ = तस्थौ । झघान = जघान ।

हकारस्यान्तरतम्यात् झकारः चवर्गः । तस्य जश्त्वेन जकारः, जुहोति ॥

### ६१० । उरत् । (७-४-६६)

अभ्यास-ऋवर्णस्य अकारः स्यात् । अकारादेशस्य रपरत्वेऽपि हलादिशेषेण अकार एव शिष्यते । यथा—

वृत्–ववृते । कृ–कक्रे = चक्रे । तॄ–ततार ।

### ६११ । द्युतिस्वाप्योः संप्रसारणम् । (७-४-६७)

अनयोरभ्यासस्य संप्रसारणम् । यथा—द्युत–दिद्युते । स्वापि–सुष्वापयिषति ।

### ६१२ । व्यथो लिटि । (७-४-६८)

व्यथेर्लिण्निमित्तकाभ्यासे संप्रसारणम् । यथा—

व्यथ—विव्यथे । यङि तु, वाव्यथ्यते ।

६१३ । **दीर्घ इणः किति** । (७-४-६९)

इण्धातोरभ्यासस्य दीर्घः किति लिटि । यथा—[इयाय] ईयतुः, ईयुः ।

६१४ । **अत आदेः** । (७-४-७०)

अभ्यासस्यादेरकारस्य दीर्घः स्याल्लिटि । 'अतो गुणे' इति पररूपस्यायमपवादः । यथा—अट—अ अट = आट ।

६१५ । **तस्मान्नुड् द्विहलः** । (७-४-७१)

कृतदीर्घात् अभ्यासाकारात् परस्य द्विहल उत्तरखण्डस्य नुडागमः । यथा—

अर्च्—अ अर्च्—आ अर्च् = आनर्च् । अञ्ज्—अ अञ्ज्—आ अञ्ज्=आनञ्ज् ।

प्रत्यु०—('द्विहलः' किम् ?) अट्—आट् ।

६१६ । **अश्नोतेश्च** । (७-४-७२)

अश्नोतेश्च दीर्घीभूतादकारात् परस्योत्तरखण्डस्य नुट् । यथा—

अशू व्याप्तौ—आनशे । 'अश्नोतेः' इति श्नुविकरणग्रहणादश्नातेः, 'अश भक्षणे' इत्यस्य आश, आशतुः इत्येव ।

६१७ । **भवतेरः** । (७-४-७३)

भवतेरभ्यासस्य अकारः स्याल्लिटि । यथा—बभूव । अन्यत्र बुभूषति, बोभूयते ।

६१८ । **निजां त्रयाणां गुणः श्लौ** । (७-४-७५)

निजिर्, विजिर्, विष् एषामभ्यासस्य गुणः श्लौ । यथा—

नेनेक्ति । वेवेक्ति । वेवेष्टि । अन्यत्र—निनेज ।

६१९ । **भृञामित्** । (७-४-७६)

भृञां त्रयाणां—भृञ् भरणे, माङ् माने, ओ हाङ् गतौ—इत्येतेषामभ्यासस्य इकारः श्लौ । यथा—बिभर्ति । मिमीते । जिहीते । अन्यत्र—बभार इत्यादि ।

६२० । **अर्तिपिपर्त्योश्च** । (७-४-७७)

श्लावित्येव । ऋ—इयर्ति । पृ—पिपर्ति ।

[ ६२१ । **सन्यतः** । (७-४-७९)

सनि परे अदन्तस्याभ्यासस्य इकारः । यथा—

पच—पिपक्षति । यज्—यियक्षति । स्था—तिष्ठासति । पा—पिपासति ।

अन्यत्र—पपाच, ययाच, तस्थौ, पपौ इत्यादि ।

## ६२२ । ओः पुयण्ज्यपरे । (७-४-८०)

पु, यण्, ज् एषां समाहारद्वन्द्वात् सप्तम्यन्तं 'पुयण्जि' इति । अवर्णानुगतेषु पवर्ग - मध्यम - जकारेषु परेषु उवर्णान्तस्याभ्यासस्य इकारः सन्निमित्तके द्वित्वे । यथा—

पू— पिपावयिषति । लू—लिलावयिषति । भू—बिभावयिषति । जु—जिजावयिषति । यु—यियावयिषति ।

अकारपरकत्वसंपादनाय णिजन्तेभ्यः सन् ॥

## ६२३ । गुणो यङ्लुकोः । (७-४-८२)

यङि यङ्लुकि च इगन्तस्याभ्यासस्य गुणः । यथा—

चि—चेचीयते ।　लू—लोलूयते ।　—(यङि ।)

हु —जोहवीति ।　क्रुशि—चोक्रुशीति ।　—(यङ्लुकि ।)

## ६२४ । दीर्घोऽकितः । (७-४-८३)

अकितोऽभ्यासस्य दीर्घो यङ्यङ्लुकोः । यथा—

पच—पापच्यते, पापचीति ।　यज—यायज्यते, यायजीति ।

अत्र अकिच्छब्दो विशेषार्थे प्रयुक्तः । यङ्यङ्लुकोः रुक्, रिक्, रीक्, नुक्, नीक् इति कित आगमा विधीयन्ते । एत एवात्र कितः । रुगाद्यागमाभावे अभ्यासस्य दीर्घ इत्यर्थः ॥

## ६२५ । नीग्वञ्चु-स्रंसु-ध्वंसु-भ्रंसु-कस-पत-पद-स्कन्दाम् । (७-४-८४)

एषामभ्यासस्य नीगागमो यङ्यङ्लुकोः । यथा—

वञ्च—वनीवच्यते । वनीवञ्चीतीत्यादि ।

## ६२६ । नुगतोऽनुनासिकान्तस्य । (७-४-८५)

अनुनासिकान्तस्याङ्गस्य योऽभ्यासः तस्याकारान्तस्य नुगागमो यङ्यङ्लुकोः । यथा—

रम्—रंरम्यते । रंरमीति ।

### ६२७ । जप - जभ - दह - दश - भञ्ज - पशाञ्च । (७-४-८६)

एषामपि नुक् । यथा—जप—जञ्जप्यते । जञ्जपीति इत्यादि ।

६२८ । **चरफलोश्च** । (७-४-८७)

नुक् । यथा—चञ्चूर्यते । चञ्चुरीति । पम्फुल्यते । पम्फुलीति ।

६२९ । **उत् परस्यातः** । (७-४-८८)

चरफलोरभ्यासात् परस्य अत उत् यङ्यङ्लुकोः । तथैवोदाहृतं च ।

६३० । **ति च** । (७-४-८९)

तकारादौ प्रत्यये परे चरफलोरकारस्य उत् । यथा—
क्तिन्प्रत्यये—चूर्तिः, फुल्तिः ।

६३१ । **रीगृदुपधस्य च** । (७-४-९०)

ऋदुपधस्याङ्गस्य योऽभ्यासः तस्य रीगागमो यङ्यङ्लुकोः । यथा—वृत्— वरीवृत्यते । वरीवृतीति ।

६३२ । **रुग्रिकौ च लुकि** । (७-४-९१)

यङ्लुकि ऋदुपधाभ्यासस्य रुक्, रिक्, रीक् च स्युः । यथा—
नृत्—नर्नर्ति । नरिनर्ति । नरीनर्ति ।
रुगागमे उकार इत् । रिग्रीकोस्तु इकार-ईकारौ नेतौ ॥

६३३ । **ऋतश्च** । (७-४-९२)

ऋकारान्तस्य चाङ्गस्य योऽभ्यासस्तस्य रिग्रीकौ रुक् च यङ्लुकि । यथा—कृ—चर्कर्ति । चरिकर्ति । चरीकर्ति ।

६३४ । **सन्वल्लघुनि चङ्परेऽनग्लोपे** । (७-४-९३)

लघुनि धात्वक्षरे परे योऽभ्यासः तस्य चङ्परे, णौ परे सनीव कार्यं स्यात् अग्लोपाभावे । 'सन्यतः' (६२१) 'ओः पुयण्ज्यपरे' (६२२) इति अकार–उवर्णयोः विहितं च कार्यं इत्वम् । तत् चङ्परे णावपि भवतीत्यर्थः । यथा—

कृ—अचीकरत् । पू—अपीपवत् । पच—अपीपचत् । लू—अलीलवत् ।
प्रत्यु०—('लघुनि' किम्?) रक्ष—अररक्षत् । जागृ— अजजागर्त् ।
('अनग्लोपे' किम्?) कथ—अचकथत् ।

इदमुत्तरसूत्रं च चङ्प्रकरणे स्पष्टीभविष्यति ॥

६३५ । **दीर्घो लघोः** । (७-४-९४)

लघोरभ्यासस्य दीर्घः स्यात् सन्वद्भावविषये । सदीर्घमेवोदाहृतम् ॥

६३६ । **अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम्** । (७-४-९५)

एषामभ्यासस्य अत् इत्यादेशः स्यात् चङ्परे णौ परे । यथा—

स्मृ—असस्मरत् । त्वर—अतत्वरत् इत्यादि ।

इत्वबाधनार्थं अत्त्वं विधीयते ।

६३७ । **विभाषा वेष्टिचेष्ट्योः** । (७-४-९६)

यथा—अविवेष्टत्, अववेष्टत् । अचिचेष्टत्, अचचेष्टत् ।

६३८ । **ई च गणः** । (७-४-९७)

यथा—अजीगणत्, अजगणत् ।]

श्लौ द्वित्वप्रसङ्गात् द्वित्वप्रकरणमत्रोपक्षिप्तम् । अथ प्रकृतानि हुधातोर्लडादिषु रूपाण्युच्यन्ते—

शपः श्लौ द्वित्वमभ्यासकार्यं (चुत्वजश्त्वे) च, जुहु इति प्रकृतिर्जायते । पित्सु गुणः, **जुहोति जुहुतः** । 'अदभ्यस्तात्' (४६५) इत्यदादेशः, 'हुश्नुवोः सार्वधातुके' (५४२) इति यण्, **जुह्वति जुहोषि** इत्यादि । **अजुहोत् अजुहुताम्** । 'सिजभ्यस्तविदिभ्यश्च' (४९८) इति झेर्जुस्, 'जुसि च' (५७९) इति गुणः, **अजुहवुः** । **अजुहोः** इत्यादि । **जुहोतु जुहुतात् जुहुतां जुह्वतु** । 'हुझल्भ्यो हेर्धिः', **जुहुधि** । **जुहवानि** । **जुहुयात्, जुहुयाताम्** ॥

२. **डु भृञ् धारणपोषणयोः** । उभयपदी ।

३. **माङ् माने** । आत्मनेपदी ।

४. **ओ हाङ् गतौ** । ,, ।

'भृञामित्' (६१९) इत्यभ्यासाकारस्य इत्वम् ॥

बिभर्ति बिभृतः बिभ्रति । अबिभः अबिभृताम् अबिभरुः । अबिभः । बिभर्तु । बिभृहि । बिभराणि । बिभृयात् ।

('ईहल्यघोः' (५४९) इति ईत्वं) मिमीते । (श्नाभ्यस्तयोरातः' (५४८) इत्याल्लोपः) मिमाते, मिमते । अमिमीत । मिमीताम् । मिमीत ।

जिहीते जिहाते जिहते । अजिहीत । जिहीताम् । जिहीत ।

**५. ओ हाक् त्यागे** । परस्मैपदी ।

जहाति । ('जहातेश्च' (५५२) इति इत्वमीत्वं च ।) जहीतः–जहितः, जहति । अजहात्, अजहिताम्–अजहीताम्, अजहुः । जहातु, जहितात्–जहीतात्, जहितां–जहीतां, जहतु । ('आ च हौ' (५५३) इति आत्वम्, इत्वम्, ईत्वं च ।) जहाहि, जहिहि–जहीहि । ('लोपो यि' (५५४) इति आल्लोपः) जह्यात्, जह्याताम् ।

**६. पॄ पालनपूरणयोः** । परस्मैपदी ।

(अर्तिपिपर्त्योश्च' (६२०) इत्यभ्यास–अकारस्य इत्वं,) पिपर्ति । ('उदोष्ठ्यपूर्वस्य' (५२८) इत्युत्वम् । रपरत्वम् । 'हलि च' (५३१) इति दीर्घः), पिपूर्तः पिपुरति । पिपर्षि । अपिपः अपिपूर्ताम् अपिपरुः । पिपूर्यात् ।

**७. ञि भी भये** । परस्मैपदी ।

बिभेति । ('भियोऽन्यतरस्याम्' (५५१) इति वा इत्वम् ।) बिभितः–बिभीतः, बिभ्यति । अबिभेत्, अबिभिताम्–अबिभीताम्, अबिभयुः । बिभेतु, बिभितात्–बिभीतात् बिभितां–बिभीतां, बिभ्यतु । बिभिहि–बिभीहि । बिभयानि । बिभियात्–बिभीयात् ।

**८. डु दाञ् दाने** । उभयपदी ।

**९. डु धाञ् धारणपोषणयोः** । उभयपदी ।

## ६३९ । दाधा घ्वदाप् । (१-१-२०)

**दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युः । 'दाप् लवने', 'दैप् शोधने' इत्येतौ वर्जयित्वा । डु दाञ् दाने, दाण् दाने, दो अवखण्डने, देङ् प्रणिदाने इति चत्वारो दारूपाः । डु धाञ् धारणपोषणयोः, धेट् पाने इत्येतौ धारूपौ । अनेन प्रकृतौ धातू घुसंज्ञौ ॥**

**ददाति** । 'श्नाभ्यस्तयोरातः' (५४८) इत्याल्लोपः । **दत्तः** । 'अघोः' इति निषेधात् अत्र 'ई हल्यघोः' (५४९) इति ईत्वं न । **ददति ददासीत्यादि** । **अददात् अदत्ताम् अददुः** । **ददातु** । 'घ्वसोरेद्धावभ्यासलोपश्च' (५९५) इत्येत्वमभ्यासलोपश्च । **देहि** । **दद्यात्** । तङि—**दत्ते ददाते ददते** । **दत्से** । **अदत्त** । **दत्ताम् दत्स्व** । **ददै** । **ददीत** ।

**दधाति** । आल्लोपे दध् + तस् इति स्थिते—

### ६४० । दधस्तथोश्च । (८-२-३८)

**'एकाचो बशो भष् झषन्तस्य स्ध्वोः' (६८) इत्यस्मात् उत्तरं सूत्रमिदम् । द्विरुक्तस्य झषन्तस्य धा-धातोर्बशो भष् स्यात् तथयोः स्ध्वोश्च परतः। इति भष्भावेन धध् + तस् । 'झषस्तथोर्धोऽधः' इति धादेशस्तु न भवति, अध इति निषेधात् । चर्त्वम्—**

धत्तः, दधति । दधासि, धत्थः धत्थ । अदधात्, अधत्ताम्, अदधुः । दधातु । धेहि । दध्यात् । (तङि) धत्ते, दधाते, दधते (भष्भावः) धत्से, धध्वे । अधत्त, अधध्वम् । धत्तां, धत्स्व । दधै । दधीत ।

**१०. णिजिर् शौचपोषणयोः** । उभयपदी ।
**११. विजिर् पृथग्भावे—**　　,,
**१२. विषॢ व्याप्तौ—**　　,,

'निजां त्रयाणां गुणः श्लौ' (६१८) इत्यभ्यासस्य गुणः । नेनेक्ति, नेनिक्तः, नेनिजति । अनेनेक् । नेनेक्तु । नेनिग्धि ।

### ६४१ । नाभ्यस्तस्याचि पिति सार्वधातुके (गुणः) । (७-३-८७)

अभ्यस्तस्याङ्गस्य अजादौ पिति सार्वधातुके लघूपधगुणो न । इति गुणनिषेधः । **नेनिजानि, नेनिजाव, नेनिजाम** । एवं विज्, विष्, इत्येतावपि ।

---

**विकरणभेदवतां लट्—लङ्—लोट्—लिङां प्रक्रियैवं परिसमापिता । अथ शाश्वतविकरणका लकाराः प्रारभ्यन्ते । शप्श्यनादयो यथा लड्लङादिषु तथा स्यतासादयो लृङ्लृङादिषु च धातुतिङोर्मध्ये स्थित्वा इष्टं रूपं निष्पादयन्ति । शप्श्यनादयश्च विकरणप्रत्यया इति व्यवह्रियन्ते । अतः स्यतासादयोऽपि तं व्यपदेशमर्हन्त्येव । श्यनादिवत्ते गणभेदेन न प्रवर्तन्त इत्येव विशेषः । तान्येतानि शाश्वतानि विकरणानि श्यनादिभ्यो भेदप्रत्यायनाय संस्करणमिति नवेन नामधेयेन व्यवहरिष्यामः । पूर्वाचार्यास्तु स्यतासादीन् तत्तन्नाम्नैव व्यपदिष्टवन्तः, न तु कयापि सामान्यसंज्ञया ॥**

## तत्र प्रथमं लृट्-लृङौ स्यसंस्करणकौ ।

(१) दाञ् दाने—'स्यतासी लृलुटोः' (४५४) इति स्यप्रत्ययः संस्करणम् । तिबादिप्रत्यययोगेन रूपनिष्पत्तिः—

| | | | | | |
|---|---|---|---|---|---|
| दास्यति | दास्यतः | दास्यन्ति । | दास्यते | दास्येते | दास्यन्ते । |
| दास्यसि | दास्यथः | दास्यथ । | दास्यसे | दास्येथे | दास्यध्वे । |
| दास्यामि | दास्यावः | दास्यामः । | दास्ये | दास्यावहे | दास्यामहे । |

स्यप्रत्ययस्य अदन्तत्वात् 'अतो दीर्घो यञि' (४६७) इति दीर्घः, 'आतो ङितः' (५०९) इति इयादेशश्च भवतः ॥

लङ्यडागमः—

| | | | | | |
|---|---|---|---|---|---|
| अदास्यत् | अदास्यताम् | अदास्यन् । | अदास्यत | अदास्येताम् | अदास्यन्त । |
| अदास्यः | अदास्यतम् | अदास्यत । | अदास्यथाः | अदास्येथाम् | अदास्यध्वम् । |
| अदास्यम् | अदास्याव | अदास्याम । | अदास्ये | अदास्यावहि | अदास्यामहि । |

विकरणभेदाभावात् 'दाण् दाने' इति भौवादिकस्य 'दो (=दा) अवखण्डने' इति दैवादिकस्य 'दाप् लवने' इत्यादीनामन्येषां च तुल्यमेव लृट्-लृङोः रूपम् ॥

(२) जि जये—इगन्तत्वात् गुणः ॥

जेष्यति, जेष्यतः, जेष्यन्ति । अजेष्यत्, अजेष्यताम् इत्यादि ।

(३) विद विचारणे—इगुपधत्वात् गुणः ॥

वेत्स्यते वेत्स्येते वेत्स्यन्ते । अवेत्स्यत अवेत्स्येताम् इत्यादि ।

"सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे ।
विन्दते विन्दति प्राप्तौ श्यन्-लुक्-श्नं-शेष्विदं क्रमात् ॥

इति चतुर्षु विकरणेष्वयं धातुरर्थभेदेन पदभेदेन च पठ्यते । लृट्-लृङोस्तु विकरणभेदाभावात्तुल्यरूपतैव स्यात् । तथापि 'विद विचारणे' इति रौधादिकस्य 'विद सत्तायाम्' इति दैवादिकस्य च परं रूपभेदोऽस्ति । तत्र च निमित्तमिडागमः । स्यप्रत्ययो हि शित्त्वाभावादार्धधातु-

कम् । आर्धधातुकस्य धातुविशेषेण इडागमो भवति । तत्र तौदादिक-स्यादादिकस्य च विद्धातोरिडागमोऽस्ति, अन्ययोस्तु नास्तीति रूप-भेदः । स्यप्रत्यय इडागमेन 'इस्य' इति, तत 'आदेशप्रत्यययोः' (३७५) इति षत्वेन 'इष्य' इति च रूपमापद्यते। तेन **वेदिष्यते वेदिष्येते वेदिष्यन्ते वेदिष्यति** इत्यादि वा रूपाणि । अन्ययोस्तु '**वेत्स्यते**' इत्यादिरूपाणि ॥

---

इह ह्यार्धधातुकेषु इडागमस्य सत्त्वासत्त्वविकल्पैः सेटः, अनिटः, वेटश्चेति त्रिविधा धातवः संपद्यन्ते । अत इड्व्यवस्थां तावद्वक्ष्यामः—

## इड्व्यवस्था ॥

### ६४२ । आर्धधातुकस्येड्वलादेः । (७-२-३५)

वलादेरार्धधातुकस्य इडागमः स्यात् । वल्प्रत्याहारश्च यकार-भिन्नानि व्यञ्जनानि क्रोडीकरोति । यथा—

| धातुः | | स्य | तासि | तव्य | तुमुन् |
|---|---|---|---|---|---|
| भू | — | भविष्यति | भविता | भवितव्यम् | भवितुम् |
| शीङ् | — | शयिष्यते | शयिता | शयितव्यम् | शयितुम् |
| एध | — | एधिष्यते | एधिता | एधितव्यम् | एधितुम् |

वक्ष्यमाणान् निषेधान् बाधितुं विशेषविधय आरभ्यन्ते—

### ६४३ । स्नुक्रमोरनात्मनेपदनिमित्ते । (७-२-३६)

अनयोर्वलादेरार्धधातुकस्य इट्, एतौ चेत् आत्मनेपदस्य निमित्तं न भवतः। भावकर्मकर्मकर्तृकर्मव्यतीहारादीनि आत्मनेपदनिमित्तानि वक्ष्यन्ते । यथा—

| | | | |
|---|---|---|---|
| प्रस्नविष्यति | प्रस्नविता | प्रस्नवितव्यम् | प्रस्नवितुम् |
| क्रमिष्यति | क्रमिता | क्रमितव्यम् | क्रमितुम् |

अनात्मनेपदनिमित्ते एवानयोरिडागम इति नियमार्थं सूत्रम् । तथा च आत्मनेपद-निमित्तेषु प्रस्नोष्यते, उपक्रंस्यते इति इट् नास्त्येव ।

## ६४४ । ग्रहोऽलिटि दीर्घः । (७-२-३७)

ग्रहः परस्य इटो दीर्घो न तु लिटि । यथा—

ग्रहीष्यति ग्रहीता ग्रहीतव्यम् ग्रहीतुम् । लिटि तु—जगृहिव जगृहिम ।

## ६४५ । वृतो वा । (७-२-३८)

वृङ् वृञोः ॠदन्तानां च इटो वा दीर्घः न तु लिटि । यथा—

वृञ्—वरीष्यति वरिष्यति वरीता वरिता इत्यादि ।
तॄ—तरीष्यति तरिष्यति तरीता तरिता ,,

लिटि तु—ववरिथ, तेरिथ ।

## ६४६ । न लिङि । (७-२-३९)

'वृतो वा' इति दीर्घो लिङि न स्यात् । यथा—

वृ—वरिषीष्ट । तॄ—तरिषीष्ट ।

## ६४७ । सिचि च परस्मैपदेषु । (७-२-४०)

न दीर्घः । यथा—

अवारिष्टाम् । अवारिषुः । अतारिष्टाम् । अतारिषुः ।

## ६४८ । इट् सनि वा । (७-२-४१)

वृतोरिडागमो वा सनि । यथा—

विवरिषति विवरीषति (वुवूर्षति) । तितरिषति तितरीषति (तितीर्षति)

## ६४९ । लिङ्सिचोरात्मनेपदेषु । (७-२-४२)

वृतोरिड्वा । यथा—

वृषीष्ट वरिषीष्ट । अवृत अवरिष्ट अवरीष्ट ।
स्तीर्षीष्ट स्तरिषीष्ट । अस्तीर्ष्ट अस्तरिष्ट अस्तरीष्ट ।

## ६५० । ऋतश्च संयोगादेः । (७-२-४३)

ऋदन्ताद्धातोः संयोगादेः परयोः लिङ्सिचोरात्मनेपदेषु वा इट् ।
यथा—स्मृषीष्ट स्मरिषीष्ट । अस्मृषाताम् अस्मरिषाताम् ।

## ६५१ । स्वरतिसूतिसूयतिधूञूदितो वा । (७-२-४४)

स्वरत्यादिभ्यः ऊदिद्भ्यश्च धातुभ्यो वलादेरार्धधातुकस्य इड्वा ।

यथा—षूङ् प्राणिप्रसवे — प्रसविष्यते　प्रसोष्यते ।
धूञ् कम्पने — धविष्यति　धोष्यति ।
क्षमूष् सहने — क्षमिष्यते　क्षंस्यते ।
गुपू रक्षणे — गोपिष्यति　गोप्स्यति (गोपायिष्यति) ।

## ६५२ । रधादिभ्यश्च । (७-२-४५)

वलादेरार्धधातुकस्य इड्वा । यथा—

रधिष्यति रत्स्यति ।　नशिष्यति नङ्क्ष्यति ।

## ६५३ । तीषसहलुभरुषरिषः । (७-२-४८)

तकारादावार्धधातुके इषादिभ्य इड्वा । यथा—

इषू—एष्टा एषिता ।　सह—सोढा सहिता ।

## ६५४ । सनीवन्तर्धभ्रस्जदंभुश्रिस्वृयूर्णुभरज्ञपिसनाम् । (७-२-४९)

इवन्तानां धातूनां ऋधूभ्रस्ज इत्यादीनां च इड्वा सनि । यथा—

इवन्तानां—दिदेविषति,　दुद्यूषति ।
,,　—सिसेविषति,　सुस्यूषति ।
ऋध　—अर्दिधिषति,　ईर्त्सति ।

## ६५५ । वसतिक्षुधोरिट् (क्त्वानिष्ठयोः) । (७-२-५२)

वसतेः क्षुधेश्च क्त्वानिष्ठयोरिट् । यथा—उषितः, उषित्वा ।　क्षुधितः, क्षुधित्वा ।

## ६५६ । उदितो वा (क्त्वि) । (७-२-५६)

उदितो धातोः क्त्वाप्रत्यये वा इट् । यथा—

शमु—शमित्वा, शान्त्वा । असु क्षेपे—असित्वा, अस्त्वा ।

## ६५७ । गमेरिट् परस्मैपदेषु (से) । (७-२-५८)

गमेः सकारादेरार्धधातुकस्य परस्मैपदेष्विट् । यथा—गमिष्यति, जिगमिषति ।
प्रत्यु०—('सादेः' किम् ?) गन्ता । ('परस्मैपदेषु' किम् ?) संगंस्यते ।

६५८। न वृद्भ्यश्चतुर्भ्यः। (७-२-५९)

वृतु, शृधू, स्यन्दू, वृधू एभ्यश्चतुर्भ्यः सकारादेरार्धधातुकस्य परस्मैपदेषु इट् न। यथा—वृत्—वर्त्स्यति, वर्तिष्यते।

६५९। तासि च क्लृपः। (७-२-६०)

यथा—कल्प्ता, कल्प्स्यति। आत्मनेपदे तु—कल्पितासे, कल्पिष्यते।

## ६६०। अचस्तास्वत्थल्यनिटो नित्यम्। (७-२-६१)

(तास्वत्) तासाविव ये नित्यमनिटोऽजन्ता धातवः तेभ्यस्थलि (लिण्मध्यमैकवचने) इडागमो न स्यात्। यथा—

| तास्। | थल्। | तास्। | थल्। |
| --- | --- | --- | --- |
| या—याता | ययाथ। | चि—चेता | चिचेथ। |
| नी—नेता | निनेथ। | हु—होता | जुहोथ। |

प्रत्यु०—('अचः' किम्?) भिद्—भेत्ता, बिभेदिथ। ('तास्वत्' किम्?) लू—लूत्वा (क्त्वा) लुलविथ। ('नित्यम्' किम्?) धू—धोता, धविता, दुधविथ। तासौ धूधातोर्वेट्त्वात् स न नित्यानिट्। अतश्च थलि इण्निषेधो न। अत्र तावदिड्विधौ विधिरूपो निषेधरूपो विकल्परूपो वा विशेषविधिस्तासौ न क्रियत इति तासिः सेट्त्वानिट्त्वपरीक्षायां मूर्धाभिषिक्तोदाहरणत्वेनोपात्तः। अत उक्तं 'तास्वदनिटो नित्यम्' इति॥

## ६६१। उपदेशेऽत्वतः। (७-२-६२)

(हलन्तस्यापि) उपदेशे अकारवतस्तासीव नित्यानिटो धातोस्थल इण्न॥

## ६६२। ऋतो भारद्वाजस्य। (७-२-६३)

तासीव नित्यानिट ऋदन्तस्यैव धातोस्थल इण्न भारद्वाजस्य मते॥

अनेन सूत्रत्रयेण किमायातमिति पश्यामः—तासावनिट्सु धातुषु अजन्तानाम् अकारवतां च थल्यपि नेट्। भारद्वाजस्त्वाचार्य ऋदन्तानामेव तासावनिटां थलि इण्निषेधमिच्छति। तथा च तासावनिट्सु ऋदन्तः थलि सर्वमतेऽप्यनिट्। ऋद्भिन्नाजन्तः अकारवांश्च भारद्वाजमते

सेट्, अन्येषां मते अनिडिति विरोधाद्वेट् इति फलितम् । अथ किमित्ययमास्थीयते यत्नः, तासावनिट् चेद्धातुस्थल्यप्यनिडेव हि स्यात्—इति चेत्, उच्यते अनिटामपि लिटि क्रादिनियमादिट् प्राप्नोतीति । स चायम्—

## ६६३ । कृ-सृ-भृ-वृ-स्तु-द्रु-स्रु-श्रुवो लिटि (इण् न) । (७-२-१३)

क्रादिभ्योऽष्टभ्य एव लिटीण्निषेध इति । अनेन क्रादिवर्जमनिटां लिटि सर्वत्र इटि प्राप्ते थलप्रत्ययमात्रे व्यवस्था क्रियते–'अचस्तास्वत्...' इत्यादिसूत्रत्रयेण । सूत्रचतुष्टयेन चायं फलितोऽर्थः—क्रादयोऽष्टौ लिट्यनिटः । अन्येषु प्रकृत्या सेटां प्रवर्तमानमिडागमं को निवारयति? अनिटां परं विशेषः कथ्यते—स च थल्येकस्मिन्नेव । ऋदन्ता अनिटः । शेषस्वरान्ता अकारवन्तश्च वेट इति । शेषस्वरान्तेषु पुनः ऌदन्ता न सन्त्येव धातवः । एजन्ताः 'आदेच उपदेशेऽशिति' इति सूत्रेण लिटि आदन्ता भवन्तीति अणन्ता एव परिशिष्यन्ते । तथा च लिट इण्नियमस्तावदयम्—

लिटि सेटः कृ-सृ-भृ-वृ-स्तु-द्रु-स्रु-श्रून्यधातवः ।
एतेषु तासावनिटां थल्यनिट् स्याद्दन्तकः ॥
अकारवानणन्तश्च वेट् स्यादिति विनिर्णयः ।

## ६६४ । ऋद्धनोः स्ये (इट्) । (७-२-७०)

ऋकारान्तानां हन्तेश्च स्यप्रत्यये इट् स्यात् । यथा—

स्मृ—स्मरिष्यति । कृ––करिष्यति । हन—हनिष्यति ।

### ६६५ । अञ्जेः सिचि । (७-२-७१)

यथा—आञ्जीत, आञ्जिष्टाम्, आञ्जिषुः ।

### ६६६ । स्तुसुधूञ्भ्यः परस्मैपदेषु । (७-२-७२)

एभ्यः परस्मैपदे सिचि इट् । यथा—अस्ताविष्टाम् । असाविष्टाम् । अधाविष्टाम् । तङि तु—अस्तोषाताम् । असोषाताम् । अधोषाताम् । अधविषाताम् ।

## ६६७ । यमरमनमातां सक् च । (७-२-७३)

यम रम नम इत्येतेषाम् आदन्तानां च परस्मैपदे सिचि सगागमः स्यात् इडागमश्च । सिच इट्, धातोः सक् इति विवेकः । यथा—

यम् + स् + तां—यम् + स् + इस् + तां—यंसिष्टाम् । अडागमेन—अयंसिष्टाम् । एवं व्यरंसिष्टाम्, अनंसिष्टाम्, अयासिष्टाम्, अभासिष्टाम् इत्यादि ।

६६८ । **स्मिपूङ्रञ्ज्वशां सनि** । (७-२-७४)

६६९ । **किरश्च पञ्चभ्यः** । (७-२-७५)

स्मिङ्, पूङ् ऋ, अञ्जू, अशू, कॄ, गॄ, दृङ्, धृङ्, प्रच्छ एभ्यः सन इट् ।

**अथ इडागमो निषिध्यते—**

## ६७० । नेड्वशि कृति । (७-२-८)

**वशादौ कृत्प्रत्यये इडागमो न । यथा—**

ईश्—ईश्वरः । भस्—भस्म । याच्—याच्ञा । **प्रत्यु०**—तिङि तु—रुद, रुरुदिव ।

## ६७१ । तितुत्रतथसिसुसरकसेषु च । (७-२-९)

**एषु कृत्प्रत्ययेष्विडागमो न । यथा—**

तन् + ति = तन्तिः (= तांतिः) । दीप् + ति = दीप्तिः । सच् + तु = सक्तुः ।

तन् + त्र = तन्त्रम् । हस् + त = हस्तः । इत्यादि ।

**एषु 'ति' इति क्तिन्क्तिचोः सामान्यग्रहणम् । तयोः क्तिन् सर्वधातुभ्यो भवति भूतिः, वृतिः, युतिः, वृद्धिः, गुप्तिः इत्यादि । अन्ये प्रत्ययास्त्वौणादिकत्वादाकिञ्चित्कराः । क्तिन्प्रत्यये च—**

**॥ * ॥ अग्रहादीनामिति वक्तव्यम् ॥**

**इति वार्त्तिकात् गृहीतिः, उपस्निहीतिः, निकुचितिः इत्यादिष्विडागमो द्रष्टव्यः ॥**

## ६७२ । एकाच उपदेशेऽनुदात्तात् । (७-२-१०)

**अयमेव मुख्य इण्निषेधः । उपदेशे यो धातुरेकाच्, अनुदात्तश्च तस्मादिडागमो न स्यात् । इह धातुपाठे धातव उदात्ता अनुदात्ताश्चेति द्विधा विभक्ताः । अनुदात्तेष्वेकाचोऽनिटः । अनेकाच उदात्ताश्च सेट**

इति व्यवस्थेत्यर्थः। अथोदात्तानुदात्तयोः कथं विवेक इति चेत्, परिगणनेनैव। परिगणनं च कारिकाभिः—

"ऊदृदन्तैर्यौति-रु-क्ष्णु-शीङ्-स्नु-नु-क्षु-श्वि-डीङ्-श्रिभिः।
वृङ्-वृञ्भ्यां च विनाजन्तेष्वेकाचो निहताः स्मृताः॥"

शक्लोतिः पच-मुञ्चती रिच-वचौ विच् सिच्-(च) पृच्छि त्यजी
नेनेक्ति-भेज-भञ्ज्-भुजोऽथ यजति-भ्रेस्जि (श्च) मस्जि (स्ततः)।
युज्-रुज्-रञ्जति-सञ्जयः सृज-विजिर्-ष्वञ्ज-क्षुदः पद्यतिः
छिन्दत्यत्ति-खिद-स्तुदिर्नुद-भिदौ शद-विद्यतिः स्विद्यतिः॥ १॥

स्कन्दिः (किञ्च) विनत्ति-सीदति-हदो बन्धिः क्रुधि-क्षुध्यती-
राधि-बुध्यति-युध्यती व्यध-रुधौ साधिः शुधिः सिध्यतिः।
हन्ति-मन्यति-राप-क्षिप-च्छुप-लिप-स्तप्-तिप्-सृपो दृप्यति-
र्वप्-शप्-तृप्यति-लुम्पति-स्वपितयो भान्तेषु यब्-रब्-लभः॥ २॥

गम्-यम्-नम्-रमि-दंशयः क्रुश-दिशौ रिश्-रुश-लिशः पश्यति-
र्मृश्-विश्-स्पृश क्रुषयस्त्विष द्विष दुषस्तुष् पुष्यतिः श्लिष्यति।
(पश्चात्) पिष्-विष शिष्-शुषो वसति घस् दह्-दिह्-दुहो नह्यति-
र्मिह्-रिह्-लुह्-वहयः शतं द्व्यधिकमित्युक्ता हलन्ताः पुनः॥ ३॥

## ६७३। श्र्युकः किति। (७-२-११)

श्रिधातोः उपदेशे उगन्तानां च किति प्रत्यये इण् न। यथा—

| | |
|---|---|
| श्रि + क्त = श्रित। | श्रि + क्त्वा = श्रित्वा। |
| भू + क्त = भूत। | भू + क्त्वा = भूत्वा। |
| तॄ + क्त = तीर्ण। | तॄ + क्त्वा = तीर्त्वा। |

प्रत्यु०—('किति' किम्?) श्रयिष्यति, भविष्यति, तरिष्यति।

## ६७४। सनि ग्रहगुहोश्च। (७-२-१२)

ग्रहगुहोरुगन्तानां च सनि इण् न। यथा—

ग्रह—जिघृक्षति। गुह—जुघुक्षति। भू—बुभूषति। वुवूर्षति। तितीर्षति।

(६६३) 'कृ-सृ-भृ-वृ........' (७-२-१३) व्याख्यातम्॥

## ६७५ । श्वीदितो निष्ठायाम् । (७-२-१४)

श्वयतेरीदितश्च निष्ठायाम् इण् न । यथा—

श्वि—शून-शूनवत् । दीपी—दीप्त-दीप्तवत् ।

## ६७६ । यस्य विभाषा । (७-२-१५)

यस्य धातोर्विकल्पेन यत्र क्वापि इडुक्तः तस्य निष्ठायाम् इण् न । यथा—

धू —धूत, धूतवत् । 'स्वरति-सूति सूयति...' (६५१) इति विकल्पः ।
गुहू—गूढ, गूढवत् ,, ,,
वृधु—वृद्ध, वृद्धवत् । 'उदितो वा' (६५६) ,,

## ६७७ । आदितश्च । (७-२-१६)

आदितश्च धातोर्निष्ठायाम् इण् न । यथा—

ञिष्विदा—स्विन्न, स्विन्नवत् । क्ष्विदा—क्ष्विण्ण, क्ष्विण्णवत् ।

## ६७८ । विभाषा भावादिकर्मणोः । (७-२-१७)

भावे आदिकर्मणि च या निष्ठा तत्र आदितो धातोर्वा इण् न । यथा—

मिदा—मिन्नमनेन, मेदितमनेन । प्रमिन्नः, प्रमेदितः ।

---

## लुट्—तासिसंस्करणकः ॥

'स्यतासी लृलुटोः' (४५४) इति तास् संस्करणप्रत्ययः, 'तासस्त्योर्लोपः' (५९२) 'रि च' (५९३) इति तासः सलोपः, 'ह एति' (५९४) इति सस्य हादेशश्च पूर्वमेवोक्तः । सेटामिट् च भवति ॥

(१) भू सत्तायां, सेट्—तासौ तन्निमित्तके गुणे इडागमे अवादेशे च कृते भवितास् + ति इति जायते—

## ६७९ । लुटः प्रथमस्य डारौरसः । (२-४-८५)

लुटः प्रथमपुरुषप्रत्ययानां डा, रौं, रस् इत्यादेशाः स्युः । विशेष-कथनाभावात् उभयोरपि पदयोः । ततश्च तिप्प्रसृझीनां तातांझानां च लुटि डा रौ रस् इति प्रत्ययाः । तत्र डा इति डित्करणं पूर्वस्य टेर्लोप-नार्थम् । भवित् + आ = भविता । 'रि च' इति 'तासस्त्यो...' इति च सलोपः—

भविता भवितारौ भवितारः । भवितासि भवितास्थः भवितास्थ । भवितास्मि भवितास्वः भवितास्मः ।

(२) **एध वृद्धौ, सेट्**—एधिता एधितारौ एधितारः । एधितासे एधितासाथे एधिताध्वे ।

अत्र—

## ६८० । धि च (सस्य लोपः) । (८-२-२५)

धकारादौ प्रत्यये परे सकारस्य लोपः स्यात् इति सूत्रेण सलोपः ।

'ह एति' इति तास् सकारस्य हत्वम्—

एधिताहे एधितास्वहे एधितास्महे ।

(३) **दुह**—('दादेर्धातोर्घः' (६४) धत्वं,)—दोग्धा दोग्धारौ ।

(४) **लिह**—गुणः 'हो ढः' (६३) धत्वं, ष्टुत्वं 'ढलोपः' (८१) लेढा लेढारौ ।

(५) **वह**—ढत्वधत्वष्टुत्वेषु कृतेषु दीर्घापवाद ओत्वम् । यथा—

## ६८१ । सहिवहोरोदवर्णस्य । (६-३-११२)

सह, वह इत्यनयोरवर्णस्य ओत्स्यात् ढूलोपे ॥

सोढा सोढारौ । एवम्—वोढा वोढारौ ।

(६) **सृज विसर्गे**, (७) **दृशिर् प्रेक्षणे** । अनयोर्लघूपधगुणापवादः अमागम उच्यते—

## ६८२ । सृजिदृशोर्झल्यमकिति । (६-१-५८)

अनयोर्झलादावकिति प्रत्यये परे अमागमः । व्रश्चादिषत्वं—

स्रष्टा स्रष्टारौ । द्रष्टा द्रष्टारौ ।

६८३ । अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् । (६-१-५९)

**अनुदात्तेषु य ऋदुपधस्तस्य धातोश्च झलादावकित्यमागमो वा—**

तृप प्रीणने—रधादित्वाद्वेट्; इडभावे तासिर्झलादिर्भवति । तदा अम्, त्रप्ता, त्रप्तारौ । इट्पक्षे तु झलादित्वाभावात् अम् न । गुणः—तर्पिता—तर्पितारौ; तर्प्ता—तर्प्तारौ ।

**स्यप्रत्ययेऽप्येते विशेषा यथासंभवं उदाहार्याः । यथा—**

स्रक्ष्यति, द्रक्ष्यति, त्रप्स्यति, तर्प्स्यति, तर्पिष्यति इत्यादि ।

(८) **मस्ज**, (९) **नश**—संयोगादिलोपादिप्रक्रियार्थं मस्ज इति सोपधः पाठः। 'झलां जश् झशि' इति जश्त्वेन जकारे च मज्ज इत्येव श्रूयते । 'मस्जिनशोर्झलि' (५२०) इति नुम्, मन्ज्ज् + ता—'झरो झरि सवर्णे' इति एकस्य जस्य लोपः, कुत्वम्, अनुस्वारपरसवर्णौ, **मङ्क्ता** । एवम **मङ्क्ष्यति** इति लृटि । **नंष्टा नङ्क्ष्यति**। रधादित्वेन वेट्त्वात् **नशिता नशिष्यती**त्यपि ।

---

## लुङ्—सिजादिसंस्करणकः ॥

लुङि (१) सिच् (२) सिज्लुक (३) क्सः (४) अङ् (५) चङ् इति च्लेरादेशभेदैः पञ्च संस्करणानि भवन्ति । तत्रौत्सर्गिकत्वात् शप्स्थानीयः सिच् । अन्ये श्यनादिवत् अपवादरूपाः ॥

(१) सिच् संस्करणम्—

चकार इत्, इकार उच्चारणार्थ इत्यनयोर्लोपे स् इत्येव प्रत्ययः। आर्धधातुकत्वात् सेट्केषु धातुष्विट् । इडागमे च इण्पूर्वत्वात् षत्वम् । 'धि च' (६८०) इत्युक्तेन सूत्रेण सिचो ध्वमि लोपो भवति । अन्येऽपि लोपा उच्यन्ते—

६८४ । झलो झलि । (सस्य लोपः) । (८-२-२६)

झलः परस्य सस्य लोपो झलि परे । अनेन अनिटां झलन्तानां धातूनां तां—तं—त—त—थास् प्रत्ययेषु सिज्लोपो भवति ॥

६८५ । ह्रस्वादङ्गात् । (८-२-२७)

ह्रस्वादङ्गात् परस्य सस्य लोपो झलि परे । अनेन ह्रस्वान्तधातूनां तथासो[1]: सिज्लोपस्यावकाशः ॥

६८६ । इट ईटि । (८-२-२८)

इटः परस्य सस्य लोप ईटि परे । 'अस्तिसिचोऽपृक्ते' (५७५) इत्यपृक्तप्रत्ययस्य ईड्विधानात् सेड्धातूनां तिप्सिपोरनेन सिज्लोपः प्रसज्यते । सूत्रत्रयेणोक्तः सलोपः सिच्सकारस्यैवेष्यते ॥

(१) दिवु क्रीडादौ, सेट्—धातोरट्, सिच इट् च । अदिव् + इस् + त्—इति स्थिते सिज्निमित्तको लघूपधगुणः, अदेव् + इस् + त्—'अस्तिसिचोऽपृक्ते' (५७५) इति तिप ईट्, अदेव् + इस् + ईत्—सकारस्य इडीटोर्मध्यगतत्वात् 'इट ईटि' (६८६) इति लोपः, तस्य च—

॥ ॐ ॥ सिज्लोप एकादेशे सिद्धो वाच्यः ॥

इति वार्त्तिकेन सिद्धत्वात् सवर्णदीर्घः, **अदेवीत्** इति रूपसिद्धिः । अपृक्तप्रत्ययविरहादलुप्तस्य सिचः षत्वम, **अदेविष्टाम्** । 'सिजभ्यस्तविदिभ्यश्च' (४९८) इति झेर्जुस्—

अदेविषुः । अदेवीः अदेविष्टम् अदेविष्ट । अदेविषम् अदेविष्व अदेविष्म ।

(२) शुभ दीप्तौ सेट्, आत्मनेपदी—सिच इट्, लघूपधगुणः—

अशोभिष्ट अशोभिषाताम् अशोभिषत । अशोभिष्ठाः अशोभिषाथाम् अशोभिध्वम् । ('धि च' इति सलोपः) । अशोभिषि अशोभिष्वहि अशोभिष्महि ।

(३) क्षिप क्षेपे, अनिट्, परस्मैपदी—हलन्तस्यानिटो वक्ष्यमाणो गुणापवादो वृद्धिः, **अक्षैप्सीत्** । 'झलो झलि' (६८४) इति सलोपः—

अक्षैप्ताम् अक्षैप्सुः । अक्षैप्सीः अक्षैप्तम् अक्षैप्त । अक्षैप्सम् अक्षैप्स्व अक्षैप्स्म ।

---

१. तां तं त इति परस्मैपदेषु गुणवृद्धिभ्यां ह्रस्वान्ताङ्गस्यासम्भवान्न तत्र प्रसक्तिः । आत्मनेपदे तु सिचः कित्त्वविधानान्न गुणवृद्धी । अतस्तथासोरित्युक्तम् ।

(४) कृञ् करणे, अनिट्, उभयपदी—आत्मनेपदे वक्ष्यमाणेन सिचः कित्त्वेन गुणनिषेधः, तथासोः 'ह्रस्वादङ्गात्' (६८५) इति, ध्वमि 'धि च' (६८०) इति च सलोपः—

अकृत अकृषातां अकृषत । अकृथाः अकृषाथां अकृढ्वम् । अकृषि अकृष्वहि अकृष्महि । (परस्मैपदे वक्ष्यमाणा वृद्धिः,) अकार्षीत् अकार्ष्टाम् अकार्षुः । अकार्षीः अकार्ष्टम् अकार्ष्ट । अकार्षम् अकार्ष्व अकार्ष्म ।

वृद्ध्या ह्रस्वाङ्गस्याभावान्न सलोपः ॥

अत्र परस्मैपदे सिचि वृद्धिः, आत्मनेपदे सिचः कित्त्वं च वक्तव्यं वर्तते । तयोः प्रथमं कित्त्वं वक्ष्यामः—तत्र चानुवृत्तिप्रदर्शनाय कित्त्वप्रकरणमेवोच्यते—

---

## कित्त्वप्रकरणम् ॥

### ६८७ । असंयोगाल्लिट् कित् । (अपित्) । (१-२-५)

असंयोगान्तात् (केवलहलन्तात् अजन्ताद्वा) धातोः परोऽपिल्लिट् कित् स्यात् । कित्त्वाद्गुणनिषेधादयः । यथा—

| | | | | |
|---|---|---|---|---|
| भिद्—बिभेद | बिभिदतुः | बिभिदुः । | बिभिदे | कित्त्वात् गुणो न । |
| नी —निनाय | निन्यतुः | निन्युः । | निन्ये | |
| यज —इयाज | ईजतुः | ईजुः । | ईजे । संप्रसारणम् । | |

### ६८८ । इन्धिभवतिभ्यां च । (१-२-६)

आभ्यां परो लिट् कित् स्यात् । यथा—

बभूव बभूवतुः बभूवुः । कित्त्वात् गुणाभावः ।

इन्धेः छन्दस्युदाहरणम् ।

### ६८९ । मृडमृदगुधकुषक्लिशवदवसः क्त्वा । (१-२-७)

एभ्यः क्त्वा कित् स्यात् । क्त्वः कित्त्ववचनं, 'न क्त्वा सेट्' इति कित्त्वनिषेधस्य बाधनार्थम् । यथा—

मृडित्वा, मुदित्वा, क्लिशित्वा, उदित्वा, उषित्वा इत्यादि ।

६९० । रुदविदमुषग्रहिस्वपिप्रच्छः संश्च । (१-२-८)

एभ्यः सन् क्त्वा च कितौ स्याताम् । यथा—

| | | | |
|---|---|---|---|
| रुदित्वा, | रुरुदिषति | गृहीत्वा, | जिघृक्षति । |
| विदित्वा, | विविदिषति | सुप्त्वा, | सुषुप्सति । |
| मुषित्वा, | मुमुषिषति | पृष्ट्वा, | पिपृच्छिषति । |

६९१ । इको झल् । (१-२-९)

इगन्तात् परो झलादिः सन् कित् स्यात् । अनिटः सनो ग्रहणार्थं झलादिरिति । यथा—

चि—चिचीषति । स्तु—तुष्टूषति । कृ—चिकीर्षति ।
नी—निनीषति । भू—बुभूषति । तॄ—तितीर्षति ।

६९२ । हलन्ताच्च । (१-२-१०)

इकः इति पञ्चम्यन्तमनुवर्तते । तच्च हलो विशेषणम् । इकः परो यो हल् तदन्तादित्यर्थः । इक्पूर्वकहलन्ताद्धातोः झलादिस्सन् कित् स्यात् । यथा—

भिद्—बिभित्सति । बुध्—बुभुत्सते । दृश्—दिदृक्षते ।
प्रत्यु०—('झलादिः' किम् ?) वृत्—विवर्तिषते । शुभ—शुशोभिषते ।

६९३ । लिङ्सिचावात्मनेपदेषु । (१-२-११)

इक्पूर्वकहलन्ताद्धातोः परौ झलादी लिङ्सिचावात्मनेपदेषु कितौ स्तः । यथा—

(लिङि) भिद्—भित्सीष्ट । बुध्—भुत्सीष्ट ।
(लुङि) भिद—अभित्त, अभित्साताम् । बुध्—अबुद्ध, अभुत्साताम् ।
प्रत्यु०—('झलादिः' किम् ?) वर्तिषीष्ट, अवर्तिष्ट ।
('आत्मनेपदेषु' किम् ?) अद्राक्षीत्, अस्राक्षीत् ।

अत्र अकित्त्वात् 'सृजिदृशोर्झल्यमकिति' (६८२) इति अमागमः ॥

६९४ । उश्च । (१-२-१२)

ऋवर्णान्ताद्धातोः परौ झलादी लिङ्सिचौ आत्मनेपदेषु कितौ स्तः ।

**यथा**—कृ—कृषीष्ट, अकृत, अकृषाताम् । हृ—हृषीष्ट, अहृषाताम् ।

**प्रत्यु०**—('झलादी' किम् ?) वृ—वरिषीष्ट अवरिष्ट-अवरीष्ट ।

६९५ । **वा गमः** । (१-२-१३)

गमः परौ लिङ्सिचावात्मनेपदेषु वा कितौ । गमेः परस्मैपदित्वेऽप्युपसर्गवशात् आत्मनेपदम् । कित्त्वे 'अनुदात्तोपदेश...' (५५९) इत्यनुनासिकलोपः । यथा—सङ्गसीष्ट, सङ्गंसीष्ट । समगत, समगंस्त ।

६९६ । **हनः सिच्** । (१-२-१४)

हन्तेः पर आत्मनेपदसिच् कित् स्यात् । 'आङो यमहन' इत्यात्मनेपदम् । यथा—आहत आहसाताम् आहसत । अत्रापि नलोपः कित्त्वप्रयोजनम् ।

६९७ । **यमो गन्धने** । (१-२-१५)

६९८ । **विभाषोपयमने** । (१-२-१६)

यमधातोरात्मनेपदे सिच् गन्धनार्थे नित्यम्, उपयमनार्थे विकल्पेन च कित् स्यात् । गन्धनं सूचनं परेण प्रच्छाद्यमानस्य दोषस्याविष्करणम् । उपयमनं विवाहः । यथा—उदायत उदायसाताम् उदायसत—सूचनार्थे । अन्यत्र उदायंस्त पादम् उत्क्षेपणमत्रार्थः । उपायंस्त उपायत वा कन्याम् ।

अनुनासिकलोपे ह्रस्वादङ्गादिति सलोपः ।

६९९ । **स्थाघ्वोरिच्च** । (१-२-१७)

स्थाधातोः घुसंज्ञकानां च आत्मनेपदे सिच् कित् स्यात् । तत्संनियोगेन धातोरिकारोऽन्तादेशश्च । यथा—

स्था—प्रास्थित प्रास्थिषाताम् प्रास्थिषत । दा—अदित अदिषाताम् अदिषत । धा—अधित अधिषाताम् अधिषत ।

---

## सिचि वृद्धिः ॥

७०० । **सिचि वृद्धिः परस्मैपदेषु** । (७-२-१)

इगन्ताङ्गस्य वृद्धिः, सिचि परस्मैपदेषु । यथा—

जि—अजैषीत्, अजैष्टाम् । लू—अलावीत्, अलाविष्टाम् ।
नी—अनैषीत्, अनैष्टाम् । कृ—अकार्षीत्, अकार्ष्टाम् ।
हु—अहौषीत्, अहौष्टाम् । तृ—अतारीत्, अतारिष्टाम् ।

### ७०१ । अतो ल्रान्तस्य । (७-२-२)

लकारान्तस्य रेफान्तस्य च धातोरवयवस्याकारस्य परस्मैपदे सिचि वृद्धिः । 'नेटि' इति निषेधस्य, 'अतो हलादेर्लघोः' इति विकल्पस्य च वक्ष्यमाणस्यापवादः । यथा—

ज्वल—अज्वालीत्, अज्वालिष्टाम् । क्षर—अक्षारीत्, अक्षारिष्टाम् ।

### ७०२ । वदव्रजहलन्तस्याचः । (७-२-३)

वदव्रजोर्हलन्तानां च अचो वृद्धिः परस्मैपदे सिचि । 'अतो हलादेः' इति विकल्पं बाधितुं वदव्रजोर्ग्रहणम् । यथा—

वद—अवादीत्, अवादिष्टाम् । व्रज—अव्राजीत् अव्राजिष्टाम् । हलन्त—च्छिद—अच्छैत्सीत् अच्छैत्ताम् । रुध—अरौत्सीत् अरौद्धाम् । तृप—अतार्प्सीत् अतार्प्ताम् ।

### ७०३ । नेटि । (७-२-४)

इडादौ सिचि हलन्तस्य धातोर्वृद्धिर्न स्यात् । यथा—

चित—अचेतीत्, अचेतिष्टाम् । मुष्—अमोषीत्, अमोषिष्टाम् ।
प्रत्यु०—('हलन्तस्य' किम्?) लू—अलावीत् अलाविष्टाम् ।

### ७०४ । ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् । (७-२-५)

ह-म-यान्तानां क्षणादीनां एदितां च धातूनाम् इडादौ परस्मैपदे सिचि वृद्धिर्न स्यात् । ह-म-यान्तानाम् एदितां च 'अतो हलादेः' इति प्राप्तो विकल्पः, जागृणिश्वीनां 'सिचि वृद्धिः......' इति प्राप्तो नित्यविधिश्च अनेन प्रतिषिध्यते । यथा—

| | |
|---|---|
| ह—ग्रह—अग्रहीत् अग्रहीष्टाम् । | क्षण—अक्षणीत् अक्षणिष्टाम् |
| म—स्यम—अस्यमीत् अस्यमिष्टाम् | श्वस—अश्वसीत् अश्वसिष्टाम् |
| य—व्यय—अव्ययीत् अव्ययिष्टाम् | जागृ—अजागरीत् अजागरिष्टाम् । |

णेरुदाहरणं छन्दस्येव ॥

### ७०५ । ऊर्णोतेर्विभाषा । (७-२-६)

वा वृद्धिः । यथा—और्णावीत् और्णवीत् ।

### ७०६ । अतो हलादेर्लघोः । (७-२-७)

**हलादेर्लघोरकारस्य इडादौ परस्मैपदे सिचि वृद्धिर्वा । यथा—**

रण—अराणीत् अरणीत् । भण—अभाणीत् अभणीत् ।

प्रत्यु०—('अतः' किम्?) दिव्—अदेवीत् अदेविष्टाम् ।

('हलादेः' किम्?) अट—मा भवान् अटीत् ।

('लघोः' किम्?) रक्ष—अरक्षीत् अरक्षिष्टाम् ।

('सेटि' किम्?) पच—अपाक्षीत् अपाक्ताम् ।

**इह सङ्ग्रहः—**

सिचि वृद्धिरिगन्तानाम् हलन्तानामचोऽनिटि ।
सेटि तु स्याद्व्रजवदोररन्तालन्तयोरपि ॥
सेट्स्वन्येषु हलन्तेषु वा हलादेर्लघोरतः ।
जागृक्षणश्वसश्वीनां हमयान्तैदितां च न ॥

**(५) वस निवासे,—अनिट्,—परस्मैपदी ।**

अनिट्त्वात् 'वदव्रजहलन्तस्याचः' (७०२) इति नित्यं वृद्धिः, **अवास्सीत्** इति जायते ।

### ७०७ । सः स्यार्धधातुके (तः) । (७-४-४९)

**सस्य तः स्यात् सादावार्धधातुके ।** 'आस्से', 'चकास्से' इत्यादौ मा भूदिति आर्धधातुकग्रहणम् । अनेन तादेशः, **अवात्सीत् अवात्ताम् अवात्सुः** । एवं—वत्स्यति, अवत्स्यत्, जिघत्सति, दित्सति इत्यादावपि तादेशो बोध्यः ॥

**(६) या प्रापणे—अनिट्, परस्मैपदी ॥**

'यमरमनमातां सक्च' (६६७) इति धातोः सक्, सिचश्चेट् । **अयासीत् अयासिष्टाम् अयासिषुः** इत्यादि । एवं 'स्तु सु धूञ्भ्यः...' (६६६) इति इड्विधिरन्ये च प्रक्रियाविशेषाः सिचस्तत्र तत्रोक्ता अत्रानुसंधेयाः ॥

## सिचो लुक् ॥

### ७०८। गाति-स्था-घु-पा-भूभ्यः सिचः परस्मैपदेषु (लुक्)। (२-४-७७)

गा, 'इणो गा लुङि' इति विहित आदेशः, स्था, घु, पा (पाने), भू एभ्यः परस्मैपदेषु सिचो लुक्। सिचो लुकि 'आतः' (४९९) इति झेर्जुस्। यथा—

गा—अगात् अगाताम् अगु। अगाः अगातम् अगात। अगाम् अगाव अगाम।

| | | | | | | |
|---|---|---|---|---|---|---|
| स्था—अस्थात् | अस्थाताम् | अस्थुः | | धा—अधात् | अधाताम् | अधुः |
| दा—अदात् | अदाताम् | अदुः | | पा—अपात् | अपाताम् | अपुः |

भू—अभून्।

अस्य विशेषौ कथ्येते—

### ७०९। भूसुवोस्तिङि (सार्वधातुके न गुणः)। (७-३-८८)

'भू' इत्यस्य, 'षूङ् प्राणिप्रसवे' इत्यादादिकस्य च सार्वधातुके तिङि न गुणः। अनेन भूधातोः सिज्लुकि न गुणः। सू इत्यस्य लोडुत्तमे न गुणः॥

### ७१०। भुवो वुग्लुङ्लिटोः (अचि)। (६-४-८८)

भूधातोर्वुगागमो लुङ्लिटोरचि। उवङादेशस्यापवादः। सिचो लुप्तत्वात् आदन्तत्वाभावाच्च झेर्न जुस्, 'झोऽन्तः'॥

अभूत् अभूताम् अभूवन्। अभूः अभूतम् अभूत। अभूवम् अभूव अभूम।

'गातिस्था........' इति प्रकृतसूत्रे 'परस्मैपदेषु' इत्युक्तेरात्मनेपदे सिच्छ्रूयत एव—

| | | | |
|---|---|---|---|
| स्था—प्रास्थित | प्रास्थिषातां | प्रस्थिषत। | प्रास्थिथाः। |
| दा—अदित | अदिषातां | अदिषत। | अदिथाः। |
| धा—अधित | अधिषाताम् | अधिषत। | अधिथाः। |

एषु 'स्थाघ्वोरिच्च' (६९९) इति इत्वं सिचः कित्त्वं च॥

'गा गाने' 'पा रक्षणे' इत्यनयोरत्राग्रहणात्

अगासीत्, अगासिष्टाम्। अपासीत् अपासिष्टाम्।

इति सगिडागमावेव ॥

७११। विभाषा घ्रा-धेट्-शा-छा-सः। (२-४-७८)

एभ्यः परस्मैपदेषु वा सिचो लुक्। एषु धेटः 'आदेच उपदेशेऽशिति,' इति वक्ष्यमाणेन आत्वेन आदन्तत्वे धारूपत्वात् घुसंज्ञायां पूर्वसूत्रेणैव सिज्लुकि सिद्धे विकल्पार्थमारम्भः। यथा—

घ्रा—अघ्रात् अघ्राताम्। अघ्रासीत् अघ्रासिष्टाम्।
धे—अधात् अधाताम्। अधासीत् अधासिष्टाम्।
शा—अशात् अशाताम्। अशासीत् अशासिष्टाम्।

एवमन्येषामपि ॥

७१२। तनादिभ्यस्तथासोः। (२-४-७९)

तनादिभ्यः सिचो वा लुक् तथासोः परयोः। सिज्लोपे 'अनुदात्तोपदेश......' (५५९) इति नलोपः ॥

तन—अतत, अतनिष्ट अतनिषाताम् अतनिषत।
अतथाः, अतनिष्ठाः अतनिषाथाम् अतनिध्वम्।

एवमन्येषामपि तनादीनाम् ॥

---

## क्सः संस्करणम् ॥

'शल इगुपधादनिटः क्सः' (४५७) इति शलन्तस्य इगुपधस्यानिटो धातोः क्सो विहितः ॥

ईदृशश्च क्रुश, दिश, दृश, मृश, रिश, रुश, लिश, विश, स्पृश—इति शान्तेषु नव। कृष, त्विष, तुष, द्विष, दुष, विष, शुष, श्लिष, पुष्, शिष्—इति षान्तेषु दश। दिह, दुह, मिह, रुह, लिह—इति हान्तेषु पञ्च। इत्येवमाहत्य चतुर्विंशतिर्धातवः सन्ति। तेषु—

### ७१३। श्लिष आलिङ्गने। (३-१-४६)

श्लिष आलिङ्गनार्थे एव क्स इति नियमात्,

### ७१४। न दृशः। (३-१-४७)

इति दृशेर्निषेधाच्च द्वाविंशतेर्धातुभ्यो नित्यं च्लेः क्सादेशः। ककार एव इत्। स इति अकारान्तः प्रत्ययः। क्सस्य चैतौ विशेषावुक्तौ—

### ७१५। क्सस्याचि (लोपः)। (७-३-७२)

क्सस्य अजादौ प्रत्यये परे अन्त्यलोपः स्यात्। अनेन आताम्, आथामित्यनयोः 'आतो ङितः' (५०९) इति इयादेशो न भवति। झप्रत्यये तु 'अन्त' इत्यादेशादनन्तरमेव प्रत्ययस्याजादित्वलाभ इति 'अत' इत्यादेशस्य न प्रसक्तिः॥

### ७१६। लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये। (७-३-७३)

एषां दन्त्यादावात्मनेपदे परे क्सस्य वा लुक्। दन्त्यादयश्च त, थास्, ध्वं, वहि—इति चत्वारः प्रत्ययाः। अथोदाहरामः—

(१) क्रुश, परस्मैपदी॥

'........छशां षः' इति षत्वं, 'षढोः कः सि' इति कत्वं, तस्य मूर्धन्यादेशश्च भवन्ति। कित्त्वात् गुणानिषेधः॥

अक्रुक्षत् अक्रुक्षताम् अक्रुक्षन्। अक्रुक्षः अक्रुक्षतम् अक्रुक्षत। अक्रुक्षम् अक्रुक्षाव अक्रुक्षाम।

(२) लिह—अलिक्षत् अलिक्षतामित्यादि क्रुशादिवदेव॥

| | | | | |
|---|---|---|---|---|
| तङि तु—अलिक्षत, | अलीढ | अलिक्षाताम् | अलिक्षन्त। | |
| अलिक्षथाः, | अलीढाः | अलिक्षाथाम् | अलिक्षध्वम् | अलीढ्वम्। |
| अलिक्षि | अलिक्षावहि, | अलिह्वहि | अलिक्षामहि। | |

एवमेव दिह, दुह, गुहामपि, भष्भावमात्रं विशेषः

अधुक्षत अदुग्ध अधुक्षाताम् अधुक्षन्त इत्यादि।

एषु गुहवर्जितानामादादिकत्वाल्लङि शपो लुकि क्सस्य च लुकि तुल्यमेव रूपम् । गुहस्त्वन्यत्रान्यो विशेषः—

७१७ । ऊदुपधाया गोहः । (६-४-८९)

गोह इति कृतगुणस्य निर्देशः । गुहधातोर्गुणनिमित्ते अजादौ प्रत्यये तदपवाद ऊकारादेशः । शब्विकरणोऽयं धातुः गुहू इत्यूदिच्च ।

**यथा**—गूहति, अगूहत् । अजादावित्युक्तेस्तासि गोढा, इट्पक्षे त्वजादित्वात् गूहिता । एवं गूहिष्यति घोक्ष्यति इत्यादि ।

---

## अङ् संस्करणम् ॥

'अस्यतिवक्तिख्यातिभ्योऽङ्' (४५९) इत्यादिभिश्चतुर्भिः सूत्रैः अङ्विहितः । 'लिपिसिचिह्वश्च' (४६०) इत्यस्मादनन्तरम्

७१८ । आत्मनेपदेष्वन्यतरस्याम् । (३-१-५४)

इति लिपिसिचिह्वेञाम् तङि विकल्पः,

७१९ । सर्तिशास्त्यर्तिभ्यश्च । (३-१ ५६)

इति परस्मैपदेषु नित्यविधिश्च तत्र विशेषविधिरित्युपेक्षितावत्रोपक्षिप्येते । अत्र अस्यतिवक्तिख्यातिभ्यो नित्यं, लिपिसिचिह्वेभ्यो वा चैवात्मनेपदेष्वङ् । अन्येभ्यस्तु परस्मैपदेष्वेवेति विवेकः । 'वक्ति' इत्यनेन 'वच परिभाषणे' इत्ययं 'ब्रुवो वचि'-रादेशश्च गृह्येते । तथा 'ख्या प्रकथने' इत्ययं 'चक्षिङः ख्याञ्' च 'ख्याति' इत्यनेन । पुषादिः दिवादेरन्तर्गणः, द्युतादिर्भूवादेः । लृदितस्तु 'गम्लृ गतौ, शक्लृ शक्तौ, मुच्लृ मोक्षणे' इत्यादयस्तत्र तत्र विक्षिप्ताः । इरितोऽप्येवमेव ॥

अथ केचन धातव उपलक्षणार्थमुदाह्रियन्ते—

पुष—अपुषत् अपुषताम् अपुषन् । अपुषः अपुषतम् अपुषत ।
अपुषम् अपुषाव अपुषाम ।

द्युत—अद्युतत् अद्युतताम् अद्युतन् । रुच—अरुचत् अरुचताम् अरुचन् ।

रुचद्युतोरात्मनेपदित्वेऽपि 'द्युद्भ्यो लुङि' इति वा परस्मैपदम् । आत्मनेपदपक्षे—अरोचिष्ट, अरोचिषाताम् । अद्योतिष्ट, अद्योतिषाताम्—इत्यादीनि रूपाणि ॥

| | | | | | | |
|---|---|---|---|---|---|---|
| गम्लृ—अगमत् | अगमताम् | अगमन् । | | रुधिर्—अरुधत् | अरुधताम् | अरुधन् । |
| शक्लृ—अशकत् | अशकताम् | अशकन् । | | भिदिर्—अभिदत् | अभिदताम् | अभिदन् । |

अङभावे सिचि अरौत्सीत् अरौद्धाम् । अरुद्ध अरुत्साताम् । अभैत्सीत् अभैत्ताम् अभैत्सुः इति च रूपाणि ।

शास—'शास इदङ्हलोः' (५८३) अशिषत् अशिषताम् । ख्या—

### ७२० । आतो लोप इटि च । (६-४-६४)

अचि क्ङित्यार्धधातुके इति पदत्रयमनुवर्तते । आकारस्य लोपः स्यात् अजादौ क्ङित्यार्धधातुके इटि च । इत्याकारलोपः—

| | | | | |
|---|---|---|---|---|
| अख्यत् | अख्यताम् | अख्यन् । | अख्यः | इत्यादि । |
| अख्यत | अख्येताम् | अख्यन्त । | अख्यथाः | ,, |

अनन्तरमङि विशेषविधयः—

### ७२१ । ऋदृशोऽङि गुणः । (७-४-१६)

ऋवर्णान्तानां दृशेश्चाङि गुणः । यथा—अदर्शत्, अदर्शताम्, अदर्शन् । ऋवर्णान्तादङ् च्छन्दस्येवास्ति ।

### ७२२ । अस्यतेस्थुक् । (७-४-१७)

अङि थुगागमः । आस्थत् आस्थताम् आस्थन् । पर्यास्थत ।

### ७२३ । श्वयतेरः । (७-४-१८)

श्वि इत्यस्य अकारोऽन्तादेशः । अश्वत् अश्वताम् ।

### ७२४ । पतः पुम् । (७-४-१९)

पुम् आगमोऽङि । अपप्तत् अपप्तताम् अपप्तन् ।

### ७२५ । वच उम् । (७-४-२०)

उमागमोऽङि । अवोचत्, अवोचत ।

---

## चङ् संस्करणम् ॥

अयं 'णिश्रिद्रुस्रुभ्य.......' (४५८) इति सूत्रेण विधीयते । श्रि, द्रु, स्रु इति केवलधातुभ्यो णिजन्तेभ्यश्च भवति । 'चङि' इति द्वित्वं चोक्तम् । चकारस्य इत्त्वात् 'अ' इत्येव प्रत्ययः ॥

श्रि—द्वित्वम्, अभ्यासकार्यं, गुणाभावादियङ्—

अशिश्रियत् । अशिश्रियताम् अशिश्रियन् । अशिश्रियः इत्यादि ।

एवमेव—

द्रु—अदुद्रुवत् अदुद्रुवताम् । स्रु—असुस्रुवत् असुस्रुवताम् इत्यादि ।

ण्यन्तानां—याच्–णिचि कृते (याच् + इ) याचि इति णिजन्तो धातुः । चङि कृते द्वित्वे अययाचि + अत् इति जाते 'णेरनिटि' (७८१) इति वक्ष्यमाणो णेर्लोपः—

अययाचत् । एवं शास्—अशशासत्, राज्—अरराजत् इत्यादि ।

अथ चङि केषांचिण्णिजन्तानाम् उपधाह्रस्वो विधीयते—

### ७२६ । णौ चङ्युपधाया ह्रस्वः । (७-४-१)

'अङ्गस्य'—इत्यधिकारो वर्तते । णौ परे तस्माच्च चङि परे यदङ्गं (णि प्रयुक्तं) तस्योपधाया ह्रस्वः स्यात् । णौ हि परे लघूपधगुणेन, णित्वप्रयुक्ताभ्यां 'अचो ञ्णिति' (२८२) 'अत उपधायाः' (७३४) इति वृद्धिभ्यां च अङ्गस्य उपधाया दीर्घता भवति । तस्यानेन ह्रस्वो विधीयते । यथा—

चुर्—णिचि लघूपधगुणे चोरि—प्रस्तुतसूत्रेण चङि ह्रस्वः । चुरि + अ—द्वित्वं, चुचुरि + अ—णिलोपः, चुचुर् + अ—सन्वद्भावात् (६३४), 'दीर्घो लघोः, (६३५) इत्यभ्यासदीर्घः ॥

अचूचुरत् अचूचुरताम् अचूचुरन् । अचूचुरः अचूचुरतम् इत्यादि ।

कृ—णिचि 'अचो ञ्णिति' इति वृद्धि—कारि–चङि ह्रस्वः, कारि + अ–द्वित्वमभ्यासकार्यं च—चकरि + अ–णिलोपः, चकर् + अ—सन्वद्भावादित्वं, दीर्घश्च–अची-

**करत् अचीकरत** । पच—णिचि 'अत उपधायाः' इति वृद्धिः, पाचि—णौ चङ्युपधाया ह्रस्वः—पचि + अ—द्वित्वं—पपचि + अ—णिलोपः—पपच् + अ । सन्वद्भावे इत्वदीर्घौ—**अपीपचत्—त** ॥

## ७२७ । नाग्लोपिशास्वृदिताम् । (७-४-२)

अग्लोपिनामङ्गानां शास्तेर्ऋदितां च णौ चङ्युपधाया ह्रस्वो न । अक् प्रत्याहारः, तल्लोपवन्तः अग्लोपिनः । इह हि चुरादौ कथादिरन्तर्गणः । तत्र पठिता धातवः अकारान्ताः । अकारस्य च णिचि कृते 'अतो लोपः' इति लोपो भवति । एवं कथादयोऽग्लोपिनः । किं च 'प्रातिपदिकाद्धात्वर्थे........' इति चुराद्यन्तर्गतगणसूत्रेण प्रातिपदिकेभ्योऽपि णिच् विधीयते । तत्र च टिलोपवचनात् अगन्तानाम् अग्लोपो भवति । ईदृशान्यङ्गान्यत्र 'अग्लोपि'-शब्देन ग्राह्याणि । 'सन्वल्लघुनि चङ्परेऽनग्लोप' इति निषेधश्च ईदृशानां धातूनामेव । तथा च अगन्तनामधातूनां कथादीनां ऋदितां च णौ 'चङ्युपधाया ह्रस्वः, सन्वद्भावः, लघोरभ्यासस्य दीर्घः' इति त्रयं न भवति । इद्रूपस्य तु अको लोपो न पर्याप्तः । अत एव 'ऋदितां' पृथङ्निषेध आरभ्यते । यथा—

अग्लोपिषु (१) कथादि —सूच—असुसूचत् । केत—अचिकेतत् ।
(२) नामधातुः—माला—अममालत् । मातृ—अममातत् ।
शास्—अशशासत् ।
ऋदित्—नाथृ—अननाथत् । ढौकृ—अडुढौकत् ।

## ७२८ । भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् । (७-४-३)

एषां वा णौ चङ्युपधाया ह्रस्वः । यथा—
भ्राज—अबिभ्रजत्, अबभ्राजत् । भास—अबीभसत्, अबभासत् ।
भाष—अबीभषत्, अबभाषत्, इत्यादि ।

## ७२९ । लोपः पिबतेरीच्चाभ्यासस्य । (७-४-४)

पिबतेर्णौ चङ्युपधाया लोपः, अभ्यासस्य ईत्वं च । यथा—
पायि—पीप् य + अत्—अपीप्यत् ।

७३०। **तिष्ठतेरित्।** (७-४-५)

**णौ चङ्युपधाया इत्।** स्था—स्थापि—अतिष्ठिपत्।

७३१। **जिघ्रतेर्वा।** (७-४-६)

जिघ्रतेरिद्वा। घ्रा—घ्रापि—अजिघ्रिपत्, अजिघ्रपत्।

७३२। **उर्ऋत्।** (७-४-७)

**णौ चङ्युपधाया ऋवर्णस्य ऋकारादेशो वा।** 'ऋत इद्धातोः उपधायां च' इति इदादेशस्य, लघूपधगुणस्य मृजेर्वृद्धेश्चायमपवादः। अत उच्यते इररारामपवाद इति। यथा—

इर्—कृत—कीर्ति—अचिकीर्तत्, अचीकृतत्।
अर्—वृत—वर्ति—अववर्तत्, अवीवृतत्।
आर्—मृज—मार्जि—अममार्जत्, अमीमृजत्।

---

## लिट्॥

अयमार्धधातुको लकारः। नास्त्यत्र ततो विकरणम्। नापि संस्करणं विध्यभावात्। अत्र 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' (४७४) 'लिटस्तझयोरेशिरेच्' (४७३) इत्यादेशाः। 'लिटि धातोरनभ्यासस्य' (६०२) इति द्वित्वमभ्यासकार्यसंवलितम्। 'असंयोगाल्लिट् कित्' (६८७) इति कित्त्वम्। तन्निमित्तकः 'आतो लोप इटि च' (७२०) इत्याल्लोपः, 'वचिस्वपि........' (५१५) इति संप्रसारणं, गुणनिषेधश्च, क्रादिनियमात् (६६३) कृता इड्व्यवस्था इत्यादयोऽन्ये विशेषविधयश्चानुसंधेयाः॥

**डुकृञ् करणे** —द्वित्वम्, अभ्यास-ऋकारस्य अत्वं, कोश्चुत्वं च, 'अचो ञ्णिति' (२८२) इति वृद्धिः, **चकार**। द्विबहुवचनयोः पित्त्वाभावेन कित्त्वात् गुणप्रतिषेधे सन्धिकार्यम्। यण्, **चक्रतुः चक्रुः**। 'कृसृभृ......' (६६३) इति सर्वत्र इण्निषेध, **चकर्थ चक्रथुः चक्र**॥

### ७३३। णलुत्तमो वा (णित्)। (७-१-९१)

इति णित्त्वस्य विकल्पनात् णित्त्वपक्षे वृद्धिः, तदभावे गुणः—**चकार चकर; चकृव चकृम।** तङि—**चक्रे चक्राते चक्रिरे। चकृषे चक्राथे चकृढ्वे** ['इणः षीध्वंलुङ्लिटां धोऽङ्गात्' (३८८) इति मूर्धन्यो ढः]। **चक्रे चकृवहे चकृमहे॥**

गद व्यक्तायां वाचि—

### ७३४। अत उपधायाः। (७-२-११६)

'अचो ञ्णिति' इत्यतोऽनन्तरं सूत्रमिदम्। उपधाया अकारस्य वृद्धिः स्यात् ञिति णिति च प्रत्यये परे। इत्यनेन वृद्धिः—

**जगाद जगदतुः जगदुः** सेट्त्वात् क्रादिनियमस्य नावकाशः, **जगदिथ जगदथुः जगद। जगाद जगद जगदिव जगदिम।**

**णीञ् प्रापणे**—**निनाय।** 'एरनेकाच......' (३६७) इति यण्, **निन्यतुः निन्युः।** भारद्वाजनियमादिड्वा। **निनयिथ, निनेथ, निन्यथुः, निन्य। निनाय निनय।** क्रादिनियमान्नित्यमिट्, **निन्यिव निन्यिम।** तङि—**निन्ये निन्याते निन्यिरे। निन्यिषे निन्याथे निन्यिध्वे, निन्यिढ्वे,** 'विभाषेटः' (३८९) इति वा मूर्धन्यो ढः। **निन्ये निन्यिवहे निन्यिमहे॥**

**इष इच्छायां**—द्वितीयस्यैकाचोऽभावात् प्रथमस्यैव द्वित्वं, इ+इष—गुणः, इ+एष।

अत्र अभ्यासस्याङ्गत्वाभावादप्राप्त इयङ् विधीयते—'अचि श्नुधातु...' इत्यतोऽनन्तरं सूत्रम्—

### ७३५। अभ्यासस्यासवर्णे। (६-४-७८)

अभ्यासस्य इवर्णोवर्णयोरियङुवङौ स्तः असवर्णे अचि परे।

अनेन एकवचनेषु इयङ् **इयेष ईषतुः ईषुः। इयेषिथ॥**

**ऋच्छ गतौ**—द्वित्वे—'उरत्' (६१०), 'अत आदेः' (६१४) दीर्घः, 'तस्मान्नुड् द्विहलः', **आनर्च्छ। आनर्च्छतुः।** 'ऋच्छत्यृताम्' (७३८) इति वक्ष्यमाणो गुणः॥

**द्युत—दिद्युते। स्वप—सुष्वाप।** कित्त्वात् 'वचिस्वपि...' इति संप्रसारणं **सुषुपतुः, सुषुपुः। व्यथ—विव्यथे। इण्**—द्वित्वं—वृद्ध्यायादेशौ अभ्यासस्येयङ् **इयाय।** इ + यतुस् इति स्थिते 'दीर्घ इणः किति' (६१३) इत्यभ्यासदीर्घः, **ईयतुः ईयुः। इयेथ, इययिथ ईयथुः ईय। इयाय, इयय ईयिव ईयिम॥**

**गम्लृ गतौ**—(५६०) जगाम जग्मतुः जग्मुः । जगमिथ जगन्थ ।

**हन**—(५६०-१-२) जघान जघ्नतुः जघ्नुः । जघनिथ जघन्थ ।

**भू**—'भवतेरः' (६१७) 'भुवो वुग्लुङ्लिटोः' (७१०) **बभूव बभूवतुः बभूवुः । बभूविथ ॥**

**या**—यया + अ इति स्थिते—

## ७३६ । आत औ णलः । (७-१-३४)

आकारान्ताद्धातोः परस्य णल औ इत्यादेशः ।

**ययौ** । यया + अतुस् इत्यत्र 'आतो लोप इटि च' (७२०) इत्याल्लोप— **ययतुः ययुः** । इटि परे आल्लोपः, **ययिथ, ययाथ ययथुः यय । ययौ ययिव ययिम ॥**

## ७३७ । ऋतश्च संयोगादेर्गुणः (लिटि) । (७-४-१०)

संयोगादेर्ऋदन्तस्याङ्गस्य गुणो लिटि । कित्त्वेन प्रतिषिद्धस्य गुणस्यावसरप्रदानमात्रमेतत् । अतो णलि णित्त्वप्रयुक्ता वृद्धिरेव । गुणानन्तरं 'अत उपधायाः' इति वृद्धिर्वा ॥

**स्मृ**—सस्मार सस्मरतुः सस्मरुः । सस्मर्थ ।

## ७३८ । ऋच्छत्यॄताम् । (७-४-११)

ऋच्छतेः ऋधातोः ॠकारान्तानां च लिटि गुणः ।

ऋच्छ आनर्च्छ आनर्च्छतुः आनर्च्छुः । आनर्च्छिथ ।

ॠ-कॄ—चकार चकरतुः चकरुः । चकरिथ ।

## ७३९ । अत एकहल्मध्येऽनादेशादेर्लिटि । (६-४-१२०)

एदभ्यासलोपः किति इति पदत्रयमनुवर्तते । आदेश आदिर्यस्य न भवति सोऽनादेशादिः । इह लिटि द्वित्वम् अभ्यासस्य जश्त्वचर्त्वे चुत्वं च आदेशा भवन्ति । यस्य जश्त्वचर्त्वचुत्वानामवकाशः सोऽनादेशादिः । जश्त्वचर्त्वयोश्च झशां जशः, खरां चरः इति व्यवस्था कृता । तत्र जश एव स्थाने जश् चय एव स्थाने चय् प्रवर्तमानस्तु आदेशत्वेन न गृह्यते । 'न शशददवादिगुणानाम्' इति शसददोर्निषेधारम्भ एव

अत्र ज्ञापकः। अतोऽत्र रूपभेदकारी प्रतिनिधिरेव आदेशशब्देन गृह्यते। एवं च घोष-अतिखर-कवर्ग-हकारादयो धातवः अनादेशादेरिति पदस्य व्यावर्त्याः। 'धात्वादेः षः सः' 'णो नः' इत्येतौ प्रयोजनान्तरमुद्दिश्य कृतावादेशौ च नात्र गृह्येते। लिट्प्रयोज्य आदेश एवात्रादेश इति फलितम्। असंयुक्तहलोर्मध्ये स्थितस्य अनादेशादेरकारस्य एत्वमभ्यासलोपश्च किति लिटि। यथा—

पच—पेचतुः पेचुः। पेचे पेचाते पेचिरे। रण—रेणतुः रेणुः। मन—मेने मनाते मेनिरे। तन—तेनतुः तेनुः। तेने तेनाते तेनिरे।

प्रत्यु०—('एकहल्मध्ये' किम्?) { रक्ष—ररक्षतुः ररक्षुः। श्रम—शश्रमतुः शश्रमुः।

('अनादेशादेः' किम्?) { खन—चख्नतुः चख्नुः (चर्त्वम्)। गद—जगदतुः जगदुः (चुत्वम्)।

### ७४०। थलि च सेटि। (६-४-१२१)

थलः कित्त्वाभावादप्राप्ते वचनम्। सेटि थलि च एकहल्मध्यस्थस्यानादेशादेरत एदभ्यासलोपश्च। यथा—

पच—पेचिथ पपक्थ। रण—रेणिथ। तन—तेनिथ। जप—जेपिथ।

### ७४१। तॄफलभजत्रपश्च। (६-४-१२२)

एषामप्यत एत्, अभ्यासलोपश्च किति लिटि, सेटि थलि च। तॄधातोरकारस्य गुणनिष्पन्नत्वात्, फलभजोरादेशादित्वात्, त्रपतेः संयोगादित्वाच्च निषेधः प्राप्तः। यथा—

तॄ—ततार तेरतुः तेरुः। तेरिथ। फल—पफाल फेलतुः फेलुः। फेलिथ। भज—बभाज भेजतुः भेजुः। भेजिथ। भेजे। त्रप—त्रेपे त्रेपाते त्रेपिरे।

### ७४२। राधो हिंसायाम्। (६-४-१२३)

हिंसार्थकस्य राधधातोरवर्णस्य एत्वमभ्यासलोपश्च किति लिटि सेटि थलि च।

राध—अपरराध अपरेधतुः अपरेधुः।

७४३ । वा जृ-भ्रमु-त्रसाम् । (६-४-१२४)

एषाम् अत एदभ्यासलोपश्च वा किति लिटि सेटि थलि च । यथा—

जजार जेरतुः जजरतुः जेरुः जजरुः । जेरिथ जजरिथ ।
बभ्राम भ्रेमतुः बभ्रमतुः भ्रेमुः बभ्रमुः । भ्रेमिथ बभ्रमिथ ।
तत्रास त्रेसतुः तत्रसतुः त्रेसुः तत्रसुः । त्रेसिथ तत्रसिथ ।

७४४ । फणां च सप्तानाम् । (६-४-१२५)

एषामप्यवर्णस्य एदभ्यासलोपश्च वा उक्तनिमित्ते । यथा—

फण—पफाण फेणतुः फेणुः । फेणिथ । राज—रराज रेजतुः रेजुः । रेजे ।

पक्षे—पफणतुः, रराजतुः, रराजे इत्याद्यपि । फण, राज, भ्राज, भ्राश, भ्लाश, स्यम, स्वन, फणादिः ।

७४५ । न शसददवादिगुणानाम् । (६-४-१२६)

शसददोर्वकारादीनां चाकारस्य, गुणनिष्पन्नस्य अकारस्य च एत्वमभ्यासलोपश्च न उक्तनिमित्ते । यथा—

| | | | |
|---|---|---|---|
| शस— | (वि) शशसतुः | (वि) शशसुः । | (वि) शशसिथ । |
| दद— | ददद | दददाते | ददादिरे । |
| वादि—वम—ववमतुः | | ववमुः । | ववमिथ । |
| गुणः—शॄ—शशरतुः | | शशरुः । | कृ—चकरतुः चकरुः । |

अथ आम्विधिः—

७४६ । कास्प्रत्ययादाममन्त्रे लिटि । (३-१-३५)

'कासृ शब्दकुत्सायाम्'—इत्यस्मात् प्रत्ययान्तेभ्यश्च धातुभ्यो लिटि आम्प्रत्ययः स्यात् । न तु मन्त्रे (छन्दसि) । अत्र वार्त्तिकम्—

॥ * ॥ कास्यनेकाच आम्वक्तव्यं चुलुम्पाद्यर्थम् ॥

इति । 'प्रत्ययात्' इत्यस्य स्थाने 'अनेकाचः' इति वक्तव्यम् । यथा 'चुलुम्प पाने' इत्यादिभ्योऽपि आम् स्यादित्यर्थः । आमो मकारस्य आस्कासोराम्विधानात् ज्ञापकान्नेत्संज्ञा क्रियते । 'विदांकुर्वन्तु' इत्यादि निपातनेषु मकारः श्रूयते च । आम्प्रत्ययोऽयं लिटि विकरणस्थानं वहति । आम्-विधायकसूत्राणि व्याख्याय प्रक्रियां दर्शयिष्यामः ॥

७४७ । इजादेश्च गुरुमतोऽनृच्छः । (३-१-३६)

इजादिर्यो धातुर्गुरुमान् ऋच्छतिवर्जितस्तस्माच्च लिट्याम् ॥

७४८ । दयायासश्च । (३-१-३७)

दय दानगतिरक्षणेषु, अय गतौ, आस उपवेशने—एभ्यश्च लिट्याम् ।

७४९ । उषविदजागृभ्योऽन्यतरस्याम् । (३-१-३८)

उष दाहे, विद ज्ञाने, जागृ, निद्राक्षये—एभ्यो लिट्याम् वा ।

७५० । भीह्रीभृहुवां श्लुवच्च । (३-१-३९)

एभ्यो लिट्याम् वा । तदा श्लाविव कार्यं च । आमि धातोर्द्वित्वमपि स्यादित्यर्थः ।

आमि कृते लिट एव लोप उक्तः । यथा—

७५१ । आमः (लेर्लुक्) । (२-४-८१)

आमः परस्य लेः (लिटः) लुक् स्यात् । लिटि लुप्ते आमन्तं मान्तकृदन्तमित्यव्ययम् । तस्मात् सुपि लुकि पदसंज्ञा । अथ कथमस्य पुरुषवचनव्यक्तिरित्यत आह—

७५२ । कृञ्चानुप्रयुज्यते लिटि । (३-१-४०)

लिटि कृञ् = लिट्परः कृञ् = लिडन्तः कृञ् इत्यर्थः । पुरुषवचनविवेचनाय आमन्तात् पराणि कृञ्धातोर्लिटि रूपाण्यनुप्रयुज्यन्ते । कृञ उभयपदित्वात् कतरत्पदं ग्राह्यमित्याकाङ्क्षायाम्—

७५३ । आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य । (१-३-६३)

आम्प्रत्यय आम्प्रत्ययान्तः । तस्येव तद्वत् । आम्प्रत्ययान्तस्य धातोरिवानुप्रयोगस्य कृञः पदं बोध्यम् । इति पदव्यवस्थोक्ता । इह कृञ्ग्रहणादनुप्रयोगोऽन्यस्याप्यस्तीति ज्ञायते । कस्यान्यस्येति पर्यालोचनायां 'कृञ्च' इति चकारादनुक्तसमुच्चयार्थकात्, यथा कृञ् तथा सामान्यवाची धातुरन्योऽपि अनुप्रयुज्यत इति गम्यते । सामान्यवाचिषु च कृभ्वस्तयः प्रधानम् । 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' (१५४०)

इति सूत्रे तेषां साहचर्यं च दृश्यते । अतः आमन्तात् कृभ्वस्तीनां लिडन्तरूपाण्यनुप्रयोज्यानि । सामान्यवाचिनामनुप्रयोगाणां विशेष-वाचिभिरामन्तैः सहाभेदेनान्वयः ॥

अथ सूत्राण्युदाह्रियन्ते—

कास् + आम् + लिट्—लिटो लुक्, कासाम्—कृभ्वस्तीनामानुप्रयोगः,

**कासाञ्चक्रे कासाञ्चक्राते** इत्यादि ।

**कासाम्बभूव कासाम्बभूवतुः** „

**कासामास कासामासतुः** „

अनेकाच्—चकास्—चकासाञ्चकार, —आस,—बभूव ।

कारि —कारयाञ्चकार —(णेरयादेशो विधास्यते)

जिगमिष—जिगमिषाञ्चकार — „ „

इजादिगुरुमत्—एध —एधाञ्चक्रे — „ „

ईह —ईहाञ्चक्रे — „ „

उज्झ—उज्झाञ्चकार — „ „

दय—दयाञ्चक्रे — —आस — —बभूव ।

अय – अयाञ्चक्रे — „ — „

आस—आसाञ्चक्रे — „ — „

उष—ओषाञ्चकार —उवोष —आम्निमित्तको लघूपधगुणः ।

विद—विदाञ्चकार —विवेद —'विदाङ्कुर्वन्तु' इति निपातनाभ गुणः ।

जागृ—जागराञ्चकार —जजागार —इगन्तगुणः ।

भी—बिभयाञ्चकार —बिभाय —श्लुवद्भावाद्द्वित्वम् ।

ह्री—जिह्रयाञ्चकार, —जिह्राय — „

भृ—बिभराञ्चकार, —चक्रे, बभार, बभ्रे । „

हु—जुहवाञ्चकार, —जुहाव ।

जागृधातोरामभावे द्विबहुवचनयोः कितोरपि गुणो विहितः । यथा—

७५४ । जाग्रोऽविचिण्णल्ङित्सु । (७-३-८५)

जागर्तेर्गुणः स्यात् विन्, चिण्, णल्, ङितः एभ्योऽन्येषु प्रत्ययेषु। अनेन जजागरतुः, जजागरुः इत्यादि॥

अत्र पदान्तरव्यवधानं विनैवानुप्रयोगः कार्य इति व्याख्यातारः। प्राचीनाः कवयस्तु व्यवहितमपि अनुप्रयोगं कुर्वते। यथा—

'तं पातयां प्रथममास पपात पश्चात्' 'प्रभ्रंशयां यो नहुषं चकार'

इति क्वचित् प्रयुक्तवान् कालिदासः। अश्वघोषस्त्वसकृत् प्रायुङ्क्त। अतो मन्यामहेऽव्यवहितप्रयोगनिर्बन्धोऽर्वाचीन इति। किञ्च 'अनुप्रयुज्यते' इति साम्प्रदायिकतां शंसता लटा निर्देशेनानुप्रयोगसंप्रदायस्य स्वजीवितकाले अव्यवस्थितत्वं ज्ञापयति पाणिनिः। अष्टाध्याय्यामव्यवस्थितेष्वेव कार्येषु लट्प्रयोगो दृश्यते। यथा 'अन्येभ्योऽपि दृश्यते' इति। 'विदांकुर्वन्तु' इति लोटि, 'प्रजनयामकः' 'विदामक्रन्' 'पावयांक्रियात्' इति च्छन्दसि लुङ्लिङोरपि विरलमुपलभ्यमानोऽयम् आम्प्रयोगश्छान्दसभाषायाश्चरमदशायां लब्धजन्मा प्रथमं कृञैव बाहुल्येनानुप्रयुक्तो लौकिकभाषायामपि प्रवेशमासाद्य लिण्मात्रे व्यवस्थित आदौ शिथिलमनुप्रयोगेणोपष्टब्धः प्रथमं प्रत्ययान्तेषु व्युत्पन्नधातुष्वेवोपयुक्तस्ततोऽनेकाक्षरेषु गुरुस्वरादिष्वपि लाघवाद्व्याप्नुवन्नस्तिभवतिभ्यामपि गाढतरसंहिताभ्यां यथेच्छमनुप्रयोक्तव्यतां प्राप्य दृढप्रतिष्ठः संवृत्त इति प्रतिभाति॥

## ७५५। विदांकुर्वन्त्वित्यन्यतरस्याम्। (३-१-४१)

लोट्यपि विदधातोः कृञानुप्रयोगेण संवलित आम् वा भवति। प्रथमपुरुषबहुवचननिर्देशः प्रयोगबाहुल्यानुसारेणोपलक्षणार्थः। अत्र आमि लघूपधगुणाभावनिबन्धनेन लिट्यपि विदधातोर्गुणाभावं ज्ञापयत्याचार्यः। तेन विदाञ्चकार, विदामास, विदांबभूव इत्येवं लिट्यपि॥

अनेकाच आम् विधिमुपदिशन् कात्यायन ऊर्णोतेराम् प्रतिषेधमप्युक्तवान् । 'ऊर्णु' इति णत्वस्यासिद्धत्वात् ऊर्नु इति स्थितस्य द्वित्वप्रसङ्गे 'अजादेर्द्वितीयस्य' 'न न्द्राः संयोगादयः' इति च नियमात् 'नु' इत्येकाच् द्विरुच्यते । **ऊर्णुनाव, ऊर्णुनुवतुः ऊर्णुनुवुः** । 'विभाषोर्णोः' (इट् ङित्) इति इडादिप्रत्ययस्य ङित्त्वविकल्पनात् **ऊर्णुनविथ, ऊर्णुनुविथ** ॥

दरिद्रातेरप्याम्निषेधो विकल्पेनेष्यते । आमभावे "दरिद्रातेरार्धधातुके विवक्षित आलोपो वाच्यः । लुङि वा । सनि ल्युटि ण्वुलि च न ।" इति वार्त्तिकेन आलोपे **ददरिद्रौ ददरिद्रतुः** इत्यादि । **दरिद्रिता । दरिद्रिष्यति । अदरिद्रीत्, अदरिद्रासीत्** ॥

---

## आशीर्लिङ् ॥

'लिङाशिषि' (४५२) इत्यार्धधातुकं, 'किदाशिषि' (४९०) इति किद्यासुड्युक्तश्चायं लिङ् । आर्धधातुकत्वादस्य सलोपो नास्ति ॥

**भू सत्तायां**—भू + यास्त् इति स्थिते कित्त्वान्न गुणः । आर्धधातुकत्वेऽपि वलादित्वाभावान्नेट् । यासुडागमयोगेन प्रत्ययस्यापृक्तत्वाभावान्न हल्ङ्यादिलोपः । 'स्कोः संयोगाद्योरन्ते च' (४९५) इति संयोगादिलोपः, **भूयात् भूयास्तां भूयासुः । भूयाः भूयास्तं भूयास्त । भूयासं भूयास्व भूयास्म ।**

**एध वृद्धौ** ।—तङि सीयुटि प्रत्ययानां सादित्वादिट् । **एधिषीष्ट एधिषीयास्ताम् एधिषीरन् । एधिषीष्ठाः एधिषीयास्थाम् एधिषीध्वम् । एधिषीय एधिषीवहि एधिषीमहि** । (४९४)–तमे सूत्रे सुट्सीयुड्भ्यां निष्पादिताः प्रत्यया दृश्यन्ताम् ।

**भिद**—(६९३)–तम सूत्रेण कित्त्वं—**भित्सीष्ट** ।

**बुध**— " " " —**भुत्सीष्ट** । अत्र भष्भावश्च ।

**कृ** —'उश्च' (६९४) इति कित्त्वं—**कृषीष्ट कृषीयास्ताम्** ।

'रिङ् शयग्लिङ्क्षु' (५२९) **क्रियात् क्रियास्ताम्** ।

कॄ —'ॠत इद्धातोः' (५२६), 'हलि च' (५३१) इति दीर्घः—**कीर्यात्**।
पॄ —'उदोष्ठ्यपूर्वस्य' (५२८) „ „ „ —**पूर्यात्**।
**वच, स्वप**—'वचिस्वपि...' (५१५) इति सम्प्रसारणम्—**उच्यात्, सुप्यात्**।

आशीर्लिङः प्रयोगेष्वनतिप्राचुर्याद्विशिष्य प्रक्रिया नोच्यते । प्रकरणान्तरेषु प्रसङ्गादुक्ता वक्ष्यमाणाश्च प्रक्रिया अत्रानुसन्धेयाः ॥

---

## खिलधातवः ॥

यथा सार्वधातुकेषु पाघ्रादीनां पिबजिघ्रयादय आदेशा उक्तास्तथा आर्धधातुकेष्वपि केषांचिदादेशाः सन्ति । पिबादयः सार्वधातुकसामान्ये परतो भवन्ति । वक्ष्यमाणास्तु प्राय आर्धधातुकविशेष एवेति भेदः । त इदानीमुच्यन्ते—

### ७५६ । आर्धधातुके । (२-४-३५)

इत्यधिकृत्य । विषयसप्तमी चेयम् । तेनार्धधातुकविवक्षायामादेशेषु कृतेषु पश्चाद्यथाप्राप्तं कार्यं भवति । यथा—भव्यम्, आख्येयं जघास । परसप्तमीत्वे तु आद्ययोर्ण्यत् स्यात्; तृतीये घस्ऌ येननाप्राप्तिन्यायेन द्वित्वापवादः स्यात् ॥

### ७५७ । अदो जग्धिर्ल्यप्ति किति । (२-४-३६)

अदो जग्धिरादेशः स्यात् ल्यपि तकारादौ किति च प्रत्यये । यथा—

ल्यप्—प्रजग्ध्य । क्त—जग्धः । क्त्वा—जग्ध्वा ।

### ७५८ । लुङ्सनोर्घस्ऌ । (२-४-३७)

लुङि सनि च अदो घस्ऌ इत्यादेशः । ऌकारोऽङर्थः । यथा—

अघसत् अघसताम् अघसन् । सनि—जिघत्सति ।

### ७५९ । घञपोश्च । (२-४-३८)

अनयोः कृत्प्रत्यययोरपि अदो घस्ऌ । यथा—घञ्—घासः । अप्—प्रघसः ।

### ७६० । लिट्यन्यतरस्याम् । (२-४-४०)

अदो वा घस्ऌ । यथा—जघास—जक्षतुः, जक्षुः । 'गमहन...' (५६०) इत्युपधालोपः । आद आदतुः आदुः ।

**७६१ । वेञो वयिः । (२-४-४१)**

लिटि वा वेञो वयिरादेशः । वय् + अ—द्वित्वं, वय् वय् अ "लिट्यभ्यासस्य..." इति यकारस्य संप्रसारणे प्राप्ते 'लिटि वयो यः'। (न संप्रसारणं) (६-१-३८) वयो यकारस्य न संप्रसारणमिति निषेधेन यकारस्य न। वकारस्य तु भवत्येव। उवाय ऊयतुः ऊयुः 'वश्चास्यान्यतरस्यां किति' (६-१-३९) इति यकारस्य किति पक्षे वकारः। ऊवतुः ऊवुः। वयादेशाभावे, 'वेञः' (६-१-४०) लिटि सम्प्रसारणं न इति ववौ ववतुः ववुः।

**७६२ । हनो वध लिङि । (२-४-४२)**

हन्तेर्वधादेशः आर्धधातुके लिङि। यथा—वध्यात् वध्यास्तां वध्यासुः।

**७६३ । लुङि च । (२-४-४३)**

हनो वधादेशः। अवधीत् अवधिष्टाम्।

**७६४ । आत्मनेपदेष्वन्यतरस्याम् । (२-४-४४)**

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। यथा—

आवधिष्ट आवधिषाताम्। आहत आहसाताम्।

**७६५ । इणो गा लुङि । (२-४-४५)**

अगात् अगाताम् अगुः। 'गातिस्था' (७०८) इति सिचो लुक्।

**७६६ । णौ गमिरबोधने । (२-४-४६)**

णौ परे इणोऽबोधार्थस्य गमिरादेशः। यथा—गमयति। बोधने तु प्रत्याययति।

**७६७ । सनि च । (२-४-४७)**

अबोधनार्थस्य इणो गमिरादेशः। यथा–जिगमिषति। बोधनार्थे तु प्रतीषिषति।

**७६८ । इङश्च । (२-४-४८)**

सनि परे गमिरादेशः। यथा—अधिजिगांसते। अध्येतुमिच्छति।

**७६९ । गाङ् लिटि । (२-४-४९)**

इङो गाङादेशो लिटि। यथा—अधिजगे।

**७७० । विभाषा लुङ्लृङोः । (२-४-५०)**

इङो वा गाङ्। यथा—अध्यगीष्ट, अध्यैष्ट। अध्यगीष्यत, अध्यैष्यत।

**७७१ । णौ च संश्चङोः । (२-४-५१)**

इङो गाङ् वा। यथा—णौ सनि—अधिजिगापयिषति। अध्यापिपयिषति। चङि—अध्यजीगपत्। अध्यापिपत्।

**७७२ । अस्तेर्भूः । (२-४-५२)**

**आर्धधातुके अस्तेर्भूरादेशः । यथा—**

भविता, भविष्यति, बभूव, अभूत्, भूयात् ।

**७७३ । ब्रुवो वचिः । (२-४-५३)**

**ब्रुवो वचिरादेशः आर्धधातुके । यथा—**

वक्ता, वक्ष्यति उवाच अवोचत् उच्यात् ।

वक्ता, वक्ष्यते ऊचे अवोचत वक्षीष्ट ।

**७७४ । चक्षिङः ख्याञ् । (२-४-५४)**

**चक्षिङः ख्याञादेशः आर्धधातुके । यथा—**

ख्याता ख्यास्यति चख्यौ अख्यत् ख्येयात् ।

ख्याता ख्यास्यते चख्ये अख्यत ख्यासीष्ट ।

**७७५ । वा लिटि । (२-४ ५५)**

**चक्षिङः ख्याञ् वा । यथा—**चचक्षे चख्यौ चख्ये ।

**७७६ । अजेर्व्यघञपोः । (२-४-५६)**

अजेर्धातोः वीत्यादेशः आर्धधातुके, न तु घञपोः । **वलादावार्धधातुके विकल्प इष्यते** । यथा—वेता, अजिता । वेष्यति, अजिष्यति । वलादौ किम्? प्रवयणीयम् । घञपोस्तु समाजः, समजः ।

**७७७ । वा यौ । (२-४-५७)**

यु इति ल्युटो ग्रहणम् । तत्र अजेर्वी वा । यथा—प्रवयणम् प्राजनम् ।

**सार्वधातुकमात्रविषयाणाम् असब्रूप्रभृतीनां खिलत्वं परिजिहीर्षुर्भूवचादीनेषामादेशान् करोत्याचार्यः ॥**

---

## व्युत्पन्ना धातवः ॥

**व्याख्याता अव्युत्पन्नाः केवला धातवो ये 'भूवादयो धातवः' (१२५) इति दशभिर्गणैः परिगणिताः । अथ व्याख्यायन्ते व्युत्पन्नधातवो ये 'सनाद्यन्ता धातवः' (१२७) इत्युक्तलक्षणाः । सनादयश्च—**

संश्च क्यच्-क्यङ्-क्यषः काम्यच् णिङ्णिचौ यग्यङौ तथा ।
आय ईयङिति प्रोक्ता एकादश सनादयः ॥

इति परिगणिताः एकादश प्रत्ययाः । एषु सन्णिचौ सर्वेभ्योऽपि धातुभ्यो भवतः । यङ् हलाद्येकाज्भ्य एव । णिङीयङायाः निर्दिष्टधातुभ्य एव । यक् कण्ड्वादिभ्य इति व्यवच्छिन्नः । किञ्च, सन्णिचौ स्वार्थिकौ सार्थकौ चेति द्विविधौ । यङ्-क्यच्-क्यङ्-क्यष्-काम्यचः सार्थका एव । शेषा यगीयङायणिङः स्वार्थिका एव । एषु सन्णिचोरेव बहुलः प्रयोग इति तावेव सविशेषमत्र व्याख्यायेते ॥

---

## सार्थको णिच् ।

### ७७८ । स्वतन्त्रः कर्ता । (१-४-५४)

क्रियासिद्धौ स्वातन्त्र्येण, प्राधान्येन, विवक्षितं कारकं कर्तृसंज्ञं स्यात् ॥

### ७७९ । तत्प्रयोजको हेतुश्च । (१-४-५५)

तस्य कर्तुः प्रयोजकः, प्रेरको योऽर्थस्तत् कारकं हेतुसंज्ञं स्यात् कर्तृसंज्ञं च । यदा हि कर्ता परप्रेरणया क्रियां करोति तदा स्वयं क्रियानिर्वाहकः परप्रेर्यत्वात् प्रयोज्यकर्ता, अन्यः प्रेरकत्वात् प्रयोजककर्ता । प्रयोजककर्तुरेव हेतुरिति संज्ञा विहिता ॥

### ७८० । हेतुमति च । (३-१-२६)

हेतुः प्रयोजककर्ता । तदीयो व्यापारः प्रेरणादिलक्षणो हेतुमान् । तस्मिन्नर्थे धातोर्णिच् प्रत्ययः । देवदत्तः कटं करोति । तं यदा यज्ञदत्तः कटकरणक्रियायां प्रेरयति तदा कृधातोर्णिच् । णकारचकारावितौ । 'कृ + इ' इति स्थिते णित्त्वादिगन्ताङ्गस्य वृद्धिः । 'कारि' इति णिजन्तो धातुः । तस्मात् लकारः । कर्तरि लटि शप् । तत्प्रयुक्त

इगन्तस्य 'कारि' इति धातोर्गुणः, 'कारय' इति विकरणप्रत्ययान्तं लट्-लङ्-लोट्-लिङामङ्गम्। ततः—

कारयति कारयतः कारयन्ति। कारयसि कारयथः कारयथ। कारयामि कारयावः कारयामः। इति नयतिवद्रूपाणि। तङि—कारयते कारयेते कारयन्ते। कारयसे कारयेथे कारयध्वे। कारये कारयावहे कारयामहे।

इति नयतिवदेव रूपाणि। णिजन्ताः सामान्येनोभयपदिनः॥

लङि—अकारयत् अकारयताम्। अकारयत अकारयेताम् इत्यादि।

लोटि—कारयतु–ताम्। कारयेत्–त इत्यादि।

एकाचामेव (६७२) इण्निषेधात् व्युत्पन्ना धातवः सेट एव॥

लृटि—कारयिष्यति–ते। लृङि—अकारयिष्यत्–त। लुटि—कारयितासि–से।

लुङि—'णिश्रि.......' (४५८) इति चङ्। चङि परे—

## ७८१। णेरनिटि (लोप आर्धधातुके)। (६-४-५१)

अनिडादावार्धधातुके परे णेर्लोपः॥

## [७८२। निष्ठायाम् सेटि। (६-४-५२)

सेटि निष्ठायामपि णेर्लोपः। निष्ठा नाम क्तक्तवतू कृत्प्रत्ययौ। कारि + इत = कारित। कारि + इतवत् = कारितवत्। इति णिलोपः।]

प्रकृते णौ लुप्ते अचीकरत्-त। लुङ्प्रक्रिया दृश्यताम्॥

लिटि अनेकाच्त्वादामेव। आमि परे—

## ७८३। अयामन्ताल्वाय्येत्न्विष्णुषु। (६-४-५५)

आम्, अन्त, आलु, आय्य, इत्नु, इष्णु एषु परेषु णेरयादेशो लोपापवादः। इति णेरयादेशः॥ कारयाञ्चकार,–चक्रे,–बभूव,–आस।

## [७८४। ल्यपि लघुपूर्वात्। (६-४-५६)

लघुपूर्वात् परस्य णेरयादेशो ल्यपि। क्त्वादेशो ल्यप् वक्ष्यते।

प्रशमि + य = प्रशमय्य। विगणि + य = विगणय्य।

प्रत्यु०—('लघुपूर्वात्' किम्?) प्रपाति + य = प्रपात्य इति लोप एव।

## ७८५ । विभाषापः । (६-४-५७)

**आप्नोतेर्ल्यपि णेरयादेशो वा । प्रापय्य । प्राप्य ।] णेः प्रकृतत्वात् तस्यादेशाः सर्वेऽप्यत्रैवोक्ताः । आशीर्लिङि परस्मैपदानाम् इडभावात् 'णेरनिटि' इति णिलोपः ॥**

कार्यात् कार्यास्ताम् । तङि—कारयिषीष्ट ।

**पच**—'अत उपधायाः' (७३४) इति उपधावृद्धिः, पाचयति–ते पाचयिता । पाचयिष्यति–ते । पाचयामास अपीपचत्–त ।

**रभ**—'रभेरशब्लिटोः' (५२१) इति नुम् । आरम्भयति–ते । इत्यादि । एवं लभेः लम्भयति–ते इत्यादि ।

## ७८६ । अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुक् णौ । (७-३-३६)

**अर्त्यादीनामाकारान्तानां च पुगागमो णौ । यथा—**

ऋ—अर्पि अर्पयति आर्पिपत् ।
ह्री—ह्रेपि ह्रेपयति अजिह्रिपत् ।
आत्—या—यापि —यापयति । (७३०)
स्था—स्थापि—स्थापयति अतिष्ठिपत् ।

### ७८७ । शा - छा - सा - ह्वा - व्या - वेपां - युक् । (७-३-३७)

एषामादन्तत्वात् पुकि प्राप्ते युक् । यथा—

शा—निशाययति
छा—छाययति
सा—अवसाययति
ह्वा—ह्वाययति
व्या—संव्याययति ।
वे —वाययति ।
पा पाने —पाययति । अपीप्यत् ।
पा रक्षणे—पालयति । [(७२९)

पातेर्लुग्वक्तव्य इति वार्त्तिकाल्लुगागमः । वेञः 'आदेच......' (७९४) वक्ष्यमाण आदादेशः ।

### ७८८ । वो विधूनने जुक् । (७-३-३८)

वा वाने इत्यस्य कम्पनेऽर्थे जुक् । अन्यत्र पुगेव । यथा—
पक्षेणोपवीजयति, अन्यत्र तु केशानावापयति ।

### ७८९ । लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने । (७-३-३९)

लीयतेर्लातेश्च क्रमात् नुग्लुकावागमौ वा णौ स्नेहद्रवेऽर्थे । यथा—
विलीनयति, विलाययति, विलालयति । विलापयति वा घृतम् ।

७९० । **भियो हेतुभये षुक्** । (७ ३-४०)

'भी भये' इत्यस्य षुगागमो णौ । हेतोः (प्रयोजककर्तुः) चेत् भयं द्योत्यते । अत्रात्मनेपदं च विधास्यते । यथा—जटिलो भीषयते । मुण्डो भीषयते ।

प्रत्यु०—कुञ्चिकया बालं भाययति । अत्र कुञ्चिकातो भयम् ॥

७९१ । **स्फायो वः** । (७-३-४१) स्फावयति ॥

७९२ । **शदेरगतौ तः** । (७-३-४२)

पुष्पाणि शातयति (कृन्तति) । गतौ—गाः शादयति गोपः ॥

७९३ । **रुहः पोऽन्यतरस्याम्** । (७-३-४३)

व्रीहीन् रोपयति, रोहयति वा ॥

**अथान्येष्वपि आर्धधातुकेषूपयुक्त आत्वविधिरुच्यते—**

## ७९४ । आदेच उपदेशेऽशिति । (६-१-४५)

**एजन्तो यो धातुरुपदेशे, तस्य आकारादेशः स्यान्न तु शिति प्रत्यये । यथा—**

ह्वे—ह्वाता । ह्वास्यति । ह्वाययति (७८७)

सो—साता । सास्यति । साययति ,,

ग्लै—ग्लाता । ग्लास्यति । ग्लापयति (७८६)

म्लै—म्लाता । म्लास्यति । म्लापयति ,,

प्रत्यु०—शिति तु ह्वयति, स्यति, ग्लायति, म्लायति ॥

७९५ । **न व्यो लिटि** । (६-१-४६)

लिटि व्येञ आत्वं न । विव्याय ॥

७९६ । **स्फुरतिस्फुलत्योर्घञि** । (६-१-४७)

अनयोरेच आत्वं स्यात् घञि । गुणनिष्पन्नस्य ओकारस्य आत्वम् । विस्फारः, विष्फालः ॥

७९७ । **क्रीङ्जीनां णौ** । (६-१-४८)

क्रीञ्, इङ्, जि एषामेच आत्वं णौ । णिचि वृद्ध्या निष्पन्नस्य ऐकारस्य आत्वम् । आदन्तत्वे पुक् । यथा—क्रापयति, अध्यापयति, जापयति ॥

७९८ । **सिध्यतेरपारलौकिके** । (६-१-४९)

ऐहलौकिकेऽर्थे सिधुधातोरेच आत्वं णौ । यथा—

अन्नं साधयति (निष्पादयति) देवदत्तः।

प्रत्यु०—तापसः सिध्यति (=तत्वं निश्चिनोति) तं तपः प्रयुङ्क्ते। सेधयति तापसं तपः॥

७९९। **मीनातिमिनोतिदीङां ल्यपि च**। (६-१-५०)

एषां ल्यपि अशित्येचश्च विषये आत्वम्। यथा—

निमाता, निमास्यति, निमाय। उपदाता, उपादास्यत, उपदाय॥

८००। **विभाषा लीयतेः**। (६-१-५१)

विलाता विलेता विलास्यते विलेष्यते विलाय विलीय॥

८०१। **अपगुरो णमुलि**। (६-१-५३)

एच आत्वं वा णमुलि। अस्यपगारम् अस्यपगोरं वा युध्यते—

८०२। **चिस्फुरोर्णौ**। (६-१-५४)

एच आत्वं वा णौ। चापयति, चाययति, स्फारयति, स्फोरयति॥

८०३। **प्रजने वीयतेः**। (६-१-५५)

णावित्येव। पुरोवातो गाः प्रवापयति–प्रवाययति वा। गर्भं ग्राहयतीत्यर्थः॥

८०४। **बिभेतेर्हेतुभये**। (६-१-५६)

हेतुभयं प्रयोजककर्तुः सकाशात् भयम्। यथा—

मुण्डो भापयते भीषयते वा। अन्यतो भये कुञ्चिकया बालं भाययति॥

८०५। **नित्यं स्मयतेः**। (६-१-५७)

हेतुभये इत्येव। जटिलो विस्मापयते। हेतुभयाभावे पिञ्छेन विस्माययति॥

---

## सार्थकः सन्॥

८०६। **धातोः कर्मणः समानकर्तृकादिच्छायां वा (सन्)** (३-१-७)

इषधातोः कर्मभूतात्तेनैवैककर्तृकाच्च धातोरिच्छायामर्थे सन् प्रत्ययः स्यात्। वाग्रहणं वाक्येनापि प्रयोगस्य सिद्ध्यर्थम्। स इत्यकारान्तः प्रत्ययः। देवदत्तः स्वयं पातुमिच्छतीति विवक्षायां पाधातोः

सन्। 'सन्यङोः' (६०३) इति द्वित्वं, 'सन्यतः' (६२१) इत्यभ्यासस्य इत्वं 'पिपास' इति सन्नन्तो धातुरुत्पन्नः। लडादिषु शप्। तस्य 'अतो गुणः' इति पररूपं च।

पिपासति पिपासतः पिपासन्ति। पिपाससि पिपासथः पिपासथ। पिपासामि पिपासावः पिपासामः।

लङ्—अपिपासत्। लोट्—पिपासतु। लिङ्—पिपासेत्। आर्धधातुकेषु—

### ८०७। अतो लोपः (आर्धधातुके)। (६-४-४८)

अकारस्य धात्वन्तस्य लोपः स्यादार्धधातुके॥

### ८०८। यस्य हलः। (६-४-४९)

हलः परस्य 'य' इत्यस्य लोप आर्धधातुके। 'आदेः परस्य' इति यो लोपः। अकारस्य तु 'अतो लोपः' इति साच्को यकारो लुप्यते। यङन्तधातौ (लुटि) बेभिदिता, (लृटि) बेभिदिष्यते इत्युदाहरणम्॥

### ८०९। क्यस्य विभाषा। (६-४-५०)

क्यप्रत्ययकारस्य तु वा लोप उक्तनिमित्ते। इति धात्वन्तलोपविधीनां मध्ये 'अतो लोपः' इत्यनेन अकारस्य लोपः—

पिपासिता। पिपासिष्यति। अपिपासिष्यत्।

अपिपासीत् अपिपासिष्टाम् अपिपासिषुः॥

अपवादाभावात् सर्वधातुभ्योऽपि सिजेव। लिट्याम्—

पिपासाञ्चकार,–बभूव,–आस। आशिषि—पिपास्यात् पिपास्याताम्।

सन्प्रकृतिधातोः पदमेव सन्नन्तस्यापि पदमिति पदव्यवस्था।

**एध**—सन्, तस्येट्, अजादित्वात् द्वितीयस्यैकाचो द्वित्वम्। एदिधिषते एदिधिषेते एदिधिषन्ते। ऐदिधिषत ऐदिधिषताम् ऐदिधिषत। एदिधिषिष्यते। ऐदिधिषिष्यत। एदिधिषिता। ऐदिधिषिष्ट। एदिधिषाञ्चक्रे,–आस–बभूव। एदिधिषिषीष्ट॥

---

१. सन्नन्ताच्छप्करणं 'पिपासन्ती' इति शीनद्योर्नित्यं नुमर्थमेव।

भू—'सनि ग्रहगुहोश्च' (६७४) इतीण्निषेधः, 'इको झल्' (६९१) इति कित्त्वं, बुभूषति। तॄ—तितीर्षति तितरिषति। तितरीषति। भिद—बिभित्सति। बुध—बुभुत्सते। 'सनि ग्रहगुहोश्च' (६७४) इतीण्निषेधः। मृ—मुमूर्षति 'हलन्ताच्च' (६९१) इति कित्वम्। ग्रह—जिघृक्षति।

एवमादय इड्व्यवस्थादिषूक्ता विशेषविधयोऽत्रानुसंधेयाः॥

## ८१०। सनि मी-मा-घु-रभ-लभ-शक-पत-पदामच इस् (सि)। (७-४-५४)

सकारादौ (अनिटि) सनि परे मीमादीनामचः स्थाने इसादेशः। अ, आ, ई इति त्रयोऽच एषु विद्यन्ते। इस् इति सान्त एवादेशः॥

## ८११। आप्ज्ञप्यृधामीत्। (७-४-५५)

एषामच ईकार आदेशः सादौ सनि॥

## ८१२। दम्भ इच्च। (७-४-५६)

दम्भेरच ईकार इकारश्चादेशः सि सनि॥

## ८१३। मुचोऽकर्मकस्य गुणो वा। (७-४-५७)

अकर्मकस्य मुञ्चतेः गुणो वा सि सनि॥

## ८१४। अत्र लोपोऽभ्यासस्य। (७-४-५८)

'सनि मीमा....' इत्यादि चतुस्सूत्र्या विहितेषु इसादिषु कृतेष्वभ्यासस्य लोपः स्यात्। अथोदाह्रियन्ते—

मी—मी + स = मिस् + स 'सः स्यार्धधातुके' (७०७) इति सस्य तः मित्सति।

| | |
|---|---|
| माङ्—मित्सते। | लभ—लिप्सते। |
| घु —दित्सति–ते। | शक—शिक्षति। |
| ,, —धित्सति–ते। | पत—पित्सति। |
| रभ —प्रारिप्सते। | पद—प्रपित्सते। |

---

१. 'म्रियतेर्लुङ्लिङोश्च' इति लुङ्लिङ्शित्सु एव मृङ आत्मनेपदमिति नियमात् सनि चोक्तनिमित्ताभावात् 'पूर्ववत्सनः' इत्यात्मनेपदं न।

प्रारिप्सते इत्यादिषु रिस् भ् + स इति स्थिते 'स्कोः संयोगाद्योः' (४९५) इति संयोगादिलोपे चर्त्वेन रूपसिद्धिः । अत्र पतधातोर्वेट्त्वात् इट्पक्षे सनः सादित्वाभावादिसादेशाभ्यासलोपौ न । पिपतिषति ।

आप्—ईप्सति ।　　　　ऋध—ईर्त्सति, अर्दिधिषति ।

ज्ञपि—ज्ञीप्सति ।　　　　'सनीवन्त...' इति वेट् । जिज्ञपयिषति ।

दम्भ—धीप्सति, धिप्सति ।　　इट्पक्षे दिदम्भिषति ।

मुच[1]—मोक्षते { मुमुक्षते वा वत्सः स्वयमेव । मुमुक्षति वत्सं कृष्णः (सकर्मकः) ॥

## ८१५ । अज्झनगमां सनि (दीर्घः) । (६-४-१६)

अजन्तानां हन्तेरजादेशगमेश्च दीर्घः स्यात् झलादौ सनि । यथा—

अजन्त—कृ–कॄ–चिकीर्षति　(ॠत इद्धातोः)

,,　—हृ–हॄ–जिहीर्षति　(　,,　)

,,　—वि–वी–विवीषति ।

,,　—स्तु–स्तू–तुष्टूषति ।

हन—जिघांसति (अभ्यासाच्चेति कुत्वम्)

गम—अधिजिगांसते ॥

## ८१६ । तनोतेर्विभाषा । (६-४-१७)

तितांसति, तितंसति, तितनिषति । 'तनिपति' इत्यादिना तनोतिर्वेट् ।

## ८१७ । सन्लिटोर्जेः (कु) । (७-३-५७)

सनि लिटि च जिधातोरभ्यासात् परस्य कुत्वम् । यथा—

जिगाय जिग्यतुः । जिगीषति ।

## ८१८ । विभाषा चेः । (७-३-५८)

यथा—चिकाय, चिचाय । चिकीषति, चिचीषति ॥

## ॥ * ॥ आशङ्कायां सन् वाच्यः ॥

यथा—कूलं पिपतिषति । श्वा मुमूर्षति । आशङ्क्यमानपतनम् आशङ्क्यमानमृतिश्च भवतीत्यर्थः ॥

---

१. मुचेः कर्मकर्तर्येवाकर्मकता । कर्मकर्तरि चात्मनेपदमेव । तदेव हि पदं सन्नन्तादपि ।

"शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥"

इति वचनात् चिकीर्षितुमिच्छतीति सन्नन्तात् सन् न भवति । इच्छासन्नन्तादेव प्रतिषेधः । स्वार्थिकसन्नन्तात्तु भवत्येव । यथा—
मीमांसिषते, [1]चिकित्सिषति ॥

---

## यङ्यङ्लुकौ ॥

### ८१९ । धातोरेकाचो हलादेः क्रियासमभिहारे यङ् । (३-१-२२)

पौनःपुन्यं भृशार्थश्च क्रियासमभिहारः । तस्मिन्नर्थे एकाचो हलादेर्धातोर्यङ्प्रत्ययः । ङित्त्वादात्मनेपदी । पुनः पुनः, भृशं वा भवतीत्यर्थे विवक्षिते भू + य इति यङ् । 'सन्यङोः' (६०३) इति द्वित्वं, 'गुणो यङ्लुकोः' (६२३) इत्यभ्यासस्य गुणः, उत्तरखण्डस्य तु यङो ङित्त्वान्न गुणः—

बोभूयते बोभूयेते बोभूयन्ते इत्यादि । अबोभूयत । बोभूयताम् । बोभूयेत । बोभूयिष्यते । ['अतो लोपः' (८०७)] अबोभूयिष्यत् । बोभूयिता । अबोभूयिष्ट । बोभूयाञ्चक्रे,–बभूव,–आस । बोभूयिषीष्ट ॥

भिद्—बेभिद्यते । 'यस्य हलः' (८०८) इति यलोपः । बेभिदिता बेभिदिष्यते इत्यादि ॥

### ८२० । नित्यं कौटिल्ये गतौ । (३-१-२३)

गत्यर्थकादेकाचो हलादेर्धातोः कौटिल्येऽर्थे एव यङ्, न तु क्रियासमभिहारे । यथा—व्रज—कुटिलं व्रजति वाव्रज्यते ॥

### ८२१ । लुप-सद-चर-जप-जभ-दह-दश-गृभ्यो भावगर्हायाम् । (३-१-२४)

---

१. कितधातुः परस्मैपदी 'य एवं विद्वान् विचिकित्सति' 'तच्छुश्रुवानृषिर्व्यचिकित्सत्' इत्यादि प्रयोगदर्शनात् ।

एभ्यो धात्वर्थगर्हायामेव यङ्। यथा—

गर्हितं लुम्पति = लोलुप्यते। सासद्यते। 'चरफलोश्च' (६२८) इत्यभ्यासस्य नुक्। 'उत्परस्यातः' (६२९) इति अत उत्त्व 'हलि च' इति दीर्घः चञ्चूर्यते। 'जपजभ......' (६२७) इति नुक्, जञ्जप्यते। जञ्जभ्यते। दन्दह्यते। दन्दश्यते। जेगिर्यते इत्यत्र 'ग्रो यङि' (८२४) इति रेफस्य लत्वेन जेगिल्यते।

लत्वप्रसङ्गान्मध्ये लत्वविधिरुच्यते—

## ८२२। कृपो रो लः। (८-२-१८)

कृपधातो रेफस्य लकार आदेशः स्यात्। 'र' इति 'ल' इति च श्रुतिसामान्यमुपादीयते। तेन यौ व्यञ्जनरूपौ रेफलकारौ यौ च ऋकारऌकारयोः अवयवौ श्रूयेते तयोर्द्वयोरपि ग्रहणम्। तथा च कृपधातोर्ऋकारस्य ऌकारः, रेफस्य लकारश्चानेन विधीयेते। 'रषाभ्यां नो णः....' इति णत्वविधावप्येवमेव रेफश्रुतिमात्रमाचार्यस्य विवक्षितम्। अत एव ऋवर्णस्तत्रोपेक्षितः। वार्त्तिककारस्तु सूत्रकारस्य विवक्षितमेव 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति स्पष्टीकृतवान्। किञ्च स्वमतमिदं पाणिनिरेव ज्ञापयति 'तासि च क्लृपः' (६५९) इति कृपधातोर्ऌदुपधपाठेन। कृपधातोः क्ङित्प्रत्ययान्तरूपेष्वेव ऌकार उपलभ्यते, क्लृप्तं, क्लृप्तवत्, क्लृप्तिः, प्रक्लृप्य इति। अतो यथा विसर्गानुस्वारौ रेफमकारयोरुच्चारणभेदौ तथा ऌकारोऽपि लकारस्य स्वरभक्तिसंवलित उच्चारणभेद एवेति कल्पयितुं शक्यते। मन्ये पाणिनेरप्येतदभिप्रेतं स्यात्। अन्यथा 'क्लृप' इति ऌकारोपधमेव[1] धातुमपठिष्यदाचार्यः। रप्रत्याहारवादिनां[2] च ऌकारस्य गुणे लपरत्वं सुलभमेव। एवं च

---

१. 'अचीक्लृपत्' इत्यत्राभ्यासे ऌकारस्य अत्त्वं, 'चलीक्लृप्यते' इत्यत्र लीगागमं च पृथगन्वशासिष्यत्।

२. रप्रत्याहारो नाम 'लण्' इति प्रत्याहारसूत्रे लकारोपरिश्रूयमाणस्य अकारस्यानुनासिकत्वप्रतिज्ञानेन इत्संज्ञां सम्पाद्य 'हयवरट्' इति रेफे तद्योजनेन निर्वर्तितो रेफलकारग्राही 'र' इति प्रत्याहारः।

विसर्गादेरिव ऌकारस्य चाक्षरसमाम्नायात् बहिष्करणेऽपि न महती क्षतिः। अथ प्रकृतं सूत्रमुदाह्रियते—

क्ऌप— कर्पते = कल्पते। कर्प्ता = कल्प्ता। क्ऌप्तः = क्लृप्तः॥

८२३। उपसर्गस्यायतौ। (८-२-१९)

अयतौ परे उपसर्गरेफस्य लकारः। यथा—

प्रायते = प्लायते। परायते = पलायते। पर्ययते = पल्ययते॥

८२४। ग्रो यङि। (८-२-२०)

गॄधातो रेफस्य लकारो यङि। यथा—जेगिर्यते = जेगिल्यते। 'हलि च' इति दीर्घस्य दृष्ट्या लत्वस्य सिद्धत्वान्न दीर्घस्यावसरः।

८२५। अचि विभाषा। (८-२-२१)

अजादौ प्रत्यये परे गॄधातो रेफस्य वा लकारः। यथा—

गिरति, गिलति। निगरणं, निगलनम्।

८२६। परेश्च घाङ्कयोः। (८-२-२२)

परि इत्युपसर्गे स्थितस्य रेफस्य लो वा घशब्दे अङ्कशब्दे च परे। यथा—

परिघः, पलिघः। पर्यङ्कः, पल्यङ्कः॥

अथ प्रस्तुता यङ्-यङ्लुक्प्रक्रिया—तत्र यङो लुगुच्यते—

८२७। यङोऽचि च (लुक् बहुलम्)। (२-४-७४)

यङोऽच्प्रत्यये अन्यत्रापि बहुलं लुक्। लुप्तेऽपि यङि प्रत्ययलक्षणेन यङन्तत्वाद्धातुत्वं, द्वित्वं च॥

"श्तिपा शपानुबन्धेन निर्दिष्टं यद् गणेन च।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि॥"

इति वचनात् 'अनुदात्तङित....' इत्यात्मनेपदस्याप्रवृत्तौ 'शेषात् कर्तरि परस्मैपदम्' एव। 'चर्करीतं च' इत्यदादिगणे पाठात् शपो लुक्। चर्करीतमिति यङ्लुगन्तस्य प्राचां संज्ञा। 'गुणो यङ्लुकोः' (६२३) इत्यभ्यासस्य गुणः, 'यङो वा' (५७३) इति पितः सार्वधातुकस्य वा ईट्–

**बोभवीति,** 'भूसुवोस्तिङि' इति गुणनिषेधो यङ्लुकि भाषायां नेष्यते 'बोभूतुतेतिक्ते...' इति च्छन्दसि गुणाभावनिपातनात्। **बोभोति। बोभूतः बोभुवति। बोभवीषि, बोभोषि** इत्यादि। लङि—**अबोभवीत् अबोभोत् अबोभूताम् अबोभवुः।** (अत्र जुसि चेति गुणः) लुङि—'गातिस्था...' इति सिचो लुकि नित्यत्वाद्वुकि च। **अबोभूवीत्, अबोभोत् अबोभूनाम् अबोभूवुः। बोभविता, बोभविष्यति, बोभूयात्।** इत्यादि।

जप—जञ्जपीति, जञ्जप्ति। दह—दन्दहीति, दन्दग्धि इत्यादि।

पच—पापच्यते। पापचीति। पापक्ति। [दीर्घोऽकितः] (६२४)

वञ्च—वनीवच्यते। वनीवञ्चीति। वनीवङ्क्ति। [नीग्वञ्चु] (६२५)

अत्र नलोपस्य विधिं मिश्रप्रकरणे वक्ष्यामः।

गम—जङ्गम्यते। जङ्गमीति। जङ्गन्ति। ['नुगतो...' (६२६)]

वृत—वरीवृत्यते। वरीवर्ति। वरिवर्ति, वर्वर्ति, वरीवृतीति, वरिवृतीति, वर्वृतीति। ['रुग्रिकौ च लुकि' (६३२) इति रुग्रिग्रीकाम् ईटश्च विकल्पनात् रूपषट्कम्।]

कृ—चेक्रीयते, चर्कर्ति, चरिकर्ति, चरीकर्ति, चर्करीति, चरिकरीति, चरीकरीति। चेक्रीयते इत्यत्र प्रक्रिया अनुपदं वक्ष्यते—

## ८२८। अकृत्सार्वधातुकयोर्दीर्घः (यि क्ङिति)। (७-४-२५)

अकृद्यकारे असार्वधातुकयकारे च क्ङिति परे अजन्ताङ्गस्य दीर्घः।

स्तु—तोष्टूयते। आशीर्लिङि स्तूयात्। कर्मणि यकि स्तूयते।

जि—जेजीयते। „ जीयात्। „ जीयते।

एवं विष्णूयति—ते इत्यादि क्यच्क्यङोः।

प्रत्यु०—('अकृत्' किम्?) ल्यपि—प्रकृत्य।

('असार्वधातुके' किम्?) चिनुयात्। वृणुयात्।

## [८२९। च्वौ च। (७-४-२६)

च्विप्रत्यये परे अजन्ताङ्गस्य दीर्घः। च्विप्रत्ययः सर्वलोपी तद्धितः।

शुचिं करोति = शुचीकरोति।]

## ८३०। रीङृतः। (७-४-२७)

ऋकारान्तस्याङ्गस्य अकृद्यकारेऽसार्वधातुकयकारे च्वौ च परे रीङादेशः। क्ङितीति नानुवर्तते। यथा—

यङि—कृ—चेक्रीयते। क्यच्क्यङोः पित्रीयति—ते। च्वौ—मात्रीकरोति धात्रीम्।

यकि लिङि चोत्तरसूत्रेण 'रिङ्शयग्लिङ्क्षु' इत्यनेन रीङपवादो रिङ्। तच्च सूत्रं शविकरणे व्याख्यातम् ॥

**८३१ । घु-मा-स्था-गा-पा-जहाति-सां हलि । (६-४-६६)**

ईत् क्ङित्यार्धधातुके इत्यनुवर्तेते । घुसंज्ञानां मास्थादीनां च हलादौ क्ङित्यार्धधातुके ईकारोऽन्तादेशः । यथा—

दा—देदीयते । मा—मेमीयते । पा—पेपीयते । हा—जेहीयते ।
धा—देधीयते। स्था—तेष्ठीयते । गा—जेगीयते। सा—सेसीयते ।

---

## स्वार्थिकप्रत्ययाः ॥

**८३२ । गुप्तिज्किद्भ्यः सन् । (३-१-५)**

**८३३ । मान्-बध-दान्-शान्भ्यो दीर्घश्चाभ्यासस्य । (३-१-६)**

गुपादिभ्यः स्वार्थे सन्, मानादीनामभ्यासदीर्घश्च । अत्रार्थनियमं करोति कात्यायनः—**गुपेर्निन्दायाम् । तिजेः क्षमायाम् । कितेर्व्याधिप्रतीकारे, निग्रहेऽपनयने, नाशने, संशये च । मानेर्जिज्ञासायाम् । बधेश्चित्तविकारे । दानेरार्जवे । शानेर्निशाने** इति । यथा—

जुगुप्सते । तितिक्षते । चिकित्सति विचिकित्सति ।
मीमांसते । बीभत्सते । दीदांसते दीदांसति । शीशांसते शीशांसति ।

**८३४ । सत्याप-पाश-रूप-वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यो णिच् । (३-१-२५)**

सत्यादिभ्यः प्रातिपदिकेभ्यः उचितधात्वर्थे, चुरादिगणात् स्वार्थे च णिच् । सत्यादिभ्यः 'प्रातिपदिकाद्धात्वर्थे...' इति गणसूत्रेणैव सिद्धे इह ग्रहणं निदर्शनार्थम् । सत्यादीन् उक्तगणसूत्रव्याख्याने उदाहरिष्यामः ॥

चुर—स्तेये—चोरयति—ते । चोरयाञ्चकार—चक्रे—बभूव—आस । अचूचुरत्—त। इत्यादि ।

हेतुमण्णिचि दर्शितैव प्रक्रिया । कथ वाक्यप्रबन्धे, गण संख्याने, कल गतौ—संख्याने च, मह पूजायां, ध्वन शब्दे इत्यादयः केचिद्धातवोऽत्र अदन्ताः पठ्यन्ते । तेषां णिचि 'अतो लोपः' (८०७) इत्यकारो लुप्यते च । लुप्तस्य तस्य स्थानिवद्भावात् पूर्वस्य अकारस्य उपधात्वासम्भवेन 'अत उपधायाः' (७३४) इति वृद्धिर्न भवति । अग्लोपात् ह्रस्वसन्वद्भावयोर्निषेधः इत्यादि प्रयोजनमदन्तत्वकल्पनस्य ।

कथयति, अचकथत् । गणयति, अजीगणत् [अत्र 'ई च गणः' (६३८) इत्यभ्यासस्य ईत्वम्] । महयति, अममहत् । ध्वनयति । अदध्वनत् । इत्यादि । अन्येषां तु श्रण दाने—विश्राणयति । व्यशिश्रणत् । तुल उन्माने—तोलयति—अतूतुलत् इत्यादि ॥

अथ केचिच्चुरादावन्यत्रापि मित्संज्ञकाः सन्ति धातवः । तेषामपि णिचि ह्रस्वो विधीयते । यथा—

चुरादौ 'ज्ञप मिच्च' । भूवादौ (१) घटादयो मितः । (२) जनी-जॄष्-क्नसु-रञ्जोऽमन्ताश्च । (३) ज्वलह्वलह्मलनमामनुपसर्गाद्वा । (४) ग्ला-स्ना-वनु-वमां च । (५) न कम्यमिचमां । (६) शमो दर्शने । (७) यमोऽपरिवेषणे । (८) स्खदिरवपरिभ्यां च इति गणसूत्राणि पठ्यन्ते ॥

## ८३५ । मितां ह्रस्वः (णौ) । (६-४-९२)

मितां धातूनां णौ परे उपधाया ह्रस्वः । यथा—

ज्ञप—ज्ञपयति—अजिज्ञपत् [अग्लोपाभावात् सन्वद्भाव]
(१) घट—घटयति—अजीघटत् । घटादिः हेतुमण्णिच् ।
„ त्वरा सम्भ्रमे—त्वरयति—अतत्वरत् । „
(२) जनी प्रादुर्भावे—जनयति—अजीजनत् „
„ जॄष्—जरयति—अजीजरत् „

---

१. स्थानिवद्भावविधिनिषेधौ मिश्रप्रकरणे वक्ष्यामः ।

(२) दम—दमयति—अदीदमत्। अमन्तः
„ रम—रमयति—अरीरमत्। „
(३) ज्वल—ज्वलयति—ज्वालयति।
„ नम—नमयति—नामयति।

उपसृष्टात्तु नमेरमन्तत्वान्नित्यं मित्त्वं, ज्वलतेश्च घटादित्वात्।

(२) परिणमयति। प्रज्वलयति।
(५) कमु—कान्तौ—कामयते। मित्त्वनिषेधान्न ह्रस्वः।
(६) शमु—निशमयति (शृणोति) निशामयति (पश्यति)।
(४) ग्लै=ग्ला—ग्लपय ग्लापयति अजिग्लपत्, आदन्तत्वात् पुक् ततो ह्रस्वः।
„ स्ना—स्नपयति—स्नापयति—असिष्णपत्। इत्यादि।

'मितां ह्रस्वः' इति सूत्रे 'वा चित्तविरागे' इति पूर्वसूत्रात् 'वा'-कारमनुवर्त्य व्यवस्थितविभाषाश्रयणेन—

'[1]विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः'—शाकुन्तलम्।
'विश्रामो हृदयस्य यत्र......'—उत्तररामचरितम्।
'कक्ष्यावृत्तज्या उच्चनीचवृत्ते परिणाम्यते'—गणितम्।

इत्यादिप्रयोगाः साधूक्रियन्ते॥

चुरादौ 'ज्ञप मिच्च' इत्यतः परं 'यम च परिवेषणे' 'चह परिकल्कने' 'रह त्यागे' 'बल प्राणने' 'चिञ् चयने' इति धातून् पठित्वा 'नान्ये मितोऽहेतौ' इति सूत्रितम्। तेन (अहेतौ) स्वार्थणिचि ज्ञपादिषट्कमेव मित्। अमन्तत्वप्रयुक्तं मित्त्वं न विद्यते। अतः 'शम' इति चौरादिकस्य शामयतीत्येव रूपम्॥

'प्रातिपदिकाद्धात्वर्थे......' इत्यादीनि गणसूत्राणि नामधातुप्रकरणे व्याख्यास्यामः। स्वार्थिकप्रत्ययप्रसङ्गे ह्यत्र तेषां नावसरः॥

---

१. निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिचि घञ्। एवं कल्पनायां निष्प्रयोजना भागत्यागलक्षणा स्वीकर्तव्या। शुद्धधातोर्घञि तु नोदात्तोपदेशस्येति वृद्धिर्निषिध्यते। 'वौ श्रमेर्घञि वा' इति वर्धमानव्याकरणरीत्या वृद्धिविकल्पे तु "विश्राम इत्यपाणिनीयम्" इति भट्टोजिः।

## ८३६ । कण्ड्वादिभ्यो यक् । (३-१-२७)

कण्ड्वादिभ्यो धातुभ्यो यक् स्वार्थे । कण्ड्वादिगणे प्रातिपदिकान्येव धातुत्वेन पठ्यन्ते । तेभ्यो धात्वर्थ एव यक् ।

कण्डूञ् गात्रविघर्षणे—कण्डूयति,–ते। कण्डूयिता। कण्डूयाञ्चकार,–चक्रे इत्यादि।
मन्तु अपराधे—'अकृत्सार्वधातुकयोः...' (८२८) इति दीर्घः, मन्तूयति ।
असु उपतापे—असूयति । पूर्ववद्दीर्घः ।
सुख दुःख तत्क्रियायाम्—'अतो लोपः' सुख्यति, दुःख्यति ।
सपर पूजायां—सपर्यति, सपराञ्चकार ।
भिषज् चिकित्सायाम्—भिषज्यति, भिषजाञ्चकार ।
हृणीङ् लज्जायां—हृणीयते ।  महीङ् पूजायां—महीयते ।
उषस् प्रभातीभावे—उषस्यति, उषसाञ्चकार ।

आकृतिगणोऽयम् । तेनापठिता अपि धातवो ग्राह्याः ॥

## ८३७ । गुपू-धूप-विच्छि-पणि-पनिभ्य आयः । (३-१-२८)

गुपू रक्षणे, धूप सन्तापे, विच्छ गतौ, पण पन व्यवहारे स्तुतौ च इत्येतेभ्यो भौवादिकेभ्यः स्वार्थे आयप्रत्ययः । यथा—

गोपायति, अगोपायत्, गोपायतु, गोपायेत् इत्यादि । एवं धूपायतीत्यादयः ॥

## ८३८ । ऋतेरीयङ् । (३-१-२९)

ऋतिः सौत्रो धातुर्घृणाद्यर्थकः । तस्य स्वार्थे ईयङ् । ङित्वात् तङ्—ऋतीयते इत्यादि ॥

## ८३९ । कमेर्णिङ् । (३-१-३०)

कमु कान्तौ इति भौवादिकस्य स्वार्थे णिङ् । णिजन्तवत् प्रक्रिया । ङित्वात्तङेवेति भेदः । कामयते इत्यादि ॥

## ८४० । आयादय आर्धधातुके वा । (३-१-३१)

आर्धधातुकविवक्षायां आय, ईयङ्, णिङ् इत्येते त्रयो विकल्पेनैव स्युः ।

गुपू—गोपायिता, गोपिता गोप्ता । गोपायाञ्चकार, जुगोप । अगोपायीत् अगौप्सीत् अगोपीत् इत्यादि । एवं—कामयिता, कमिता । कामयाञ्चक्रे, चकमे । अचीकमत । णिङभावेऽपि 'कमेश्च्लेश्चङ्क्तव्यः' इति वार्तिकाच्चङ्, णेरभावाच्च सन्वद्भावः, अचकमत ॥

---

## नामधातुप्रत्ययाः ॥

### ८४१ । सुप आत्मनः क्यच् । (३-१-८)

'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इत्यतोऽनन्तरं सूत्रमिदम् । इषिकर्मण एषितुरेवात्मसम्बन्धिनः सुबन्तादिच्छायामर्थे वा क्यच्-प्रत्ययः । देवदत्तः पुत्रमात्मन इच्छति इति विवक्षायां कर्मभूतात् द्वितीयान्तात् पुत्रशब्दात् क्यच् । पुत्रं + य इति स्थिते—

### ८४२ । सुपो धातुप्रातिपदिकयोः । (२-४-७१)

धातुप्रातिपदिकयोरवयवभूतस्य सुपो लुक् । इत्यनेन पुत्रं+य इति क्यजन्तधातोरवयवस्य द्वितीयैकवचनस्य निवृत्तौ पुत्र + य इति क्यजन्तो धातुः । अकारस्य ईकारोऽनुपदं वक्ष्यते—पुत्रीय । अस्मात् शप्-तास्-स्यादियोगेन रूपाणि—

पुत्रीयति, अपुत्रीयत्, पुत्रीयेत्, पुत्रीयिता, पुत्रीयिष्यति, पुत्रीयाञ्चकार, अपुत्रीयीत् इत्यादि ।

अथाकारस्य ईकारविधिरुच्यते—

### [८४३ । अस्य च्वौ (ई) । (७-४-३२)

अवर्णान्तस्याङ्गस्य ईकारोऽन्तादेशश्च्वौ परे । च्विरिति सर्वलोपी तद्धितः । शुक्लीभवति, शुक्लीकरोतीत्याद्युदाहरणम् ॥]

### ८४४ । क्यचि च । (७-४-३३)

क्यचि परे च अवर्णान्तस्याङ्गस्य ईकारोऽन्तादेशः । यथा—

पुत्रमिच्छति = पुत्रीयति । मालामिच्छति = मालीयति ।

८४५ । अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु । (७-४-३४)

अशन, उदक, धन इत्येतेषां यथासंख्यं बुभुक्षादिष्वर्थेषु इत्वापवाद आत्वम्, उदकस्योदन्नादेशश्च निपात्यते । यथा—

अशनमात्मन इच्छति = अशनायति । उदकम्...उदन्यति । धनं...धनायति ।

प्रत्यु०—('बुभुक्षादिषु' किम् ?) स्नानार्थमात्मन उदकमिच्छति = उदकीयतीत्येव । पय आत्मन इच्छतीत्यत्र सुबन्तत्वेऽपि 'नः क्ये' (१९०) इति नान्तस्यैव क्ये पदसंज्ञेति नियमात् पदत्वाभावेन न उत्वादयः, पयस्यति इत्येव । नान्तस्य तु पदत्वात् राजानमिच्छति = राजीयति इति नलोपो भवत्येव ।

कविमिच्छति = कवीयति—'अकृत्सार्वधातुकयोर्दीर्घः' ।

'क्यस्य विभाषा' (८०९) इति विकल्पात् समिधमिच्छति = समिध्यति इत्यस्य लुटि समिध्यिता, समिधिता इति रूपद्वयम् । समिधितेत्यत्र अल्लोपस्य स्थानिवद्भावात् न लघूपधगुणः ॥

८४६ । अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि । (असुक्) [(७-१-५१)

एषां क्यचि असुगागमः । यथा—

अश्वस्यति, क्षीरस्यति, वृषस्यति, लवणस्यति ।

॥ * ॥ सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ ॥

तृष्णातिरेको लालसा । यथा—

दधिस्यति, दध्यस्यति ; मधुस्यति, मध्वस्यति ।

क्यच्प्रत्ययमुदाहर्तुम् एताः प्रक्रियाः उक्ताः ॥

अथ नामधातुप्रत्यया एवोपादीयन्ते—

८४७ । काम्यच्च । (३-१-९)

क्यच्प्रत्ययविषये काम्यच्प्रत्ययश्च । यथा—

पुत्रमात्मन इच्छति, पुत्रकाम्यति, भार्याकाम्यति, वस्त्रकाम्यति इत्यादि ॥

८४८ । उपमानादाचारे । (३-१-१०)

क्यजेवानुवर्तते न तु काम्यच् । एतदर्थमेव 'काम्यच्च' इति

पृथक् सूत्रं कृतवानाचार्यः । उपमानात् कर्मणः सुबन्तादाचारेऽर्थे वा क्यच् । आचारक्रियायाः प्रत्ययार्थत्वात् तदपेक्षयैव उपमानस्य कर्मता । अतश्च आचरतिरत्र सकर्मकः । यथा—

| | |
|---|---|
| पुत्रमिवाचरति पुत्रीयति छात्रम् । | राजानमिवाचरति राजीयति वल्लभम् । |
| प्रावारमिवाचरति प्रावारीयति कम्बलम् । | पितरमिवाचरति पित्रीयति गुरुम् । |

'रीङृतः' (८३०) इति रीङादेशेन पित्रीयति इति रूपसिद्धिः ॥

॥ * ॥ अधिकरणाच्चेति वक्तव्यम् ॥

अधिकरणात् सुबन्तादप्याचारे क्यज्वक्तव्यः । यथा—
प्रासादे इवाचरति प्रासादीयति कुट्यां भिक्षुः ।

## ८४९ । कर्तुः क्यङ् सलोपश्च । (३-१-११)

उपमानात् कर्तुः सुबन्तादाचारेऽर्थे वा क्यङ् । प्रकृतेः सान्तत्वे सकारलोपश्च । ङित्त्वात्तङ् । 'क्याचि च' इति अनुबन्धविशिष्टस्य निर्देशात् क्यङि अवर्णस्य ईत्वं न भवति । अकृत्सार्वधातुकयोर्दीर्घः—

पुत्र इवाचरति = पुत्रायते छात्रः । कपिरिवाचरति = कपीयते वटुः । विष्णुरिवाचरति = विष्णूयते द्विजः । पितेवाचरति = पित्रीयते गुरुः । अप्सरा इवाचरतीत्यत्र सलोपे, अप्सरायते वेश्या । ओज इवाचरति = ओजायते ।

अत्र ओजःशब्दो लक्षणया ओजस्विपरः । सलोपनियमं करोति कात्यायनः—

**ओजसोऽप्सरसो नित्यमितरेषां विभाषया** । पय इवाचरति = पयायते पयस्यते वा जलम् ।

॥ ❀ ॥ सर्वप्रातिपदिकेभ्य आचारे क्विब्वा वक्तव्यः ॥

क्विपि ककारपकारावितौ । इकार उच्चारणार्थः । शेषस्य 'व्' इत्यस्य लोपश्च । तथा च सूत्रम्—

## ८५० । वेरपृक्तस्य (लोपः) । (६-१-६७)

वि इत्यपृक्तस्य लोपः स्यात् ।

'प्रातिपदिकेभ्य' इत्युक्तेर्न पदकार्यम्। कृष्ण इवाचरति = **कृष्णति** । अत्र 'अतो गुणे' इति शपा सह पररूपम्। मालेवाचरति = **मालाति** । कविरिवाचरति = **कवयति**—शब्निमित्तको गुणः। **कवयिता**—तासिप्रयुक्तो गुणः। 'अनुनासिकस्य क्वि झलोः क्ङिति' (८८०) इति वक्ष्यमाणोऽनुनासिकान्तेषूपधादीर्घः। राजेवाचरति = **राजानति** । पन्था इवाचरति = **पथीनति** । अयमिवाचरति = **इदामति** । 'प्रत्ययोत्तरपदयोश्च' (३५२) इति त्वद्-मदादेशौ । त्वमिवाचरति = **त्वदति** । अहमिवाचरति = **मदति** । यूयमिवाचरति = **युष्मदति** । वयमिवाचरति=**अस्मदति** ।

## ८५१ । भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः । (३-१-१२)

**भृशादिभ्यः प्रातिपदिकेभ्योऽच्व्यन्तेभ्यो भवत्यर्थे क्यङ्। एषु हलन्तानां तदा अन्तलोपश्च । यथा—**

अभृशो भृशो भवति—भृशायते। 'अकृत्सार्वधातुकयोः' इति दीर्घः।

| | |
|---|---|
| चपल—चपलायते । | विमनस्—विमनायते । |
| पण्डित—पण्डितायते । | दुर्मनस्—दुर्मनायते । |
| ओजस्—ओजायते । | सुमनस्—सुमनायते । इत्यादि । |

**प्रत्यु०**—('अच्वेः' किम्?) भृशीभवति ।

## ८५२ । लोहितादिडाज्भ्यः क्यष् । (३-१-१३)

**लोहितादिभ्यो डाच्प्रत्ययान्तेभ्यश्च भवत्यर्थे क्यष्। 'वा क्यषः' इत्यात्मनेपदं वा । अत्र वार्त्तिकम्—**

**॥ * ॥ लोहितडाज्भ्यः क्यष्वचनं, भृशादिष्वितराणि ॥**

**आदिशब्दग्राह्येभ्यः क्यङेवेष्यते, अतस्तान् भृशादावेव पठित्वा आदिपदं विना सूत्रयितव्यमित्यर्थः। क्यष्-क्यङोः पदे विशेषः। यथा—**

लोहितं भवति लोहितायति,-ते ।

**अव्यक्तानुकरणे डाच्प्रत्ययस्तद्धितः ।**

पटपटत् इत्येवं भवति पटपटायति,-ते । चकचकायति,-ते । घुरुघुरायति,-ते । इत्यादि । निद्रा—निद्रायति,-ते । करुणा—करुणायति,-ते । मन्द मन्दायते ।

फेन—फेनायते। इत्यादिर्लोहितादिराकृतिगणः[1]।

८५३। कष्टाय क्रमणे। (३-१-१४)

चतुर्थ्यन्तात् कष्टशब्दात् उत्साहेऽर्थे क्यङ्। यथा—कष्टाय क्रमते—कष्टायते।

८५४। कर्मणो रोमन्थतपोभ्यां वर्तिचरोः। (३-१-१५)

यथा—रोमन्थं वर्तयति—रोमन्थायते। तपश्चरति—तपस्यति। अत्र परस्मैपदं वार्तिकविहितम्।

८५५। बाष्पोष्मभ्यामुद्वमने। (३-१-१६)

बाष्पमुद्वमति—बाष्पायते। ऊष्माणम्......ऊष्मायते।

८५६। शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे। (३-१-१७)

शब्दं करोति—शब्दायते। एवं वैरायते, कलहायते, इत्यादि।

८५७। सुखादिभ्यः कर्तृवेदनायाम्। (३-१-१८)

कर्तृवेदना कर्तुः संवेदनम्। सुखं वेदयते—सुखायते। दुःखायते।

८५८। नमोवरिवश्चित्रङः क्यच्। (३-१-१९)

करणे इत्यनुवृत्तेः क्रियाविशेषे (पूजायां परिचर्यायामाश्चर्ये च) क्यच्। नमस्यति, वरिवस्यति, चित्रीयते।

८५९। पुच्छभाण्डचीवराण्णिङ्। (३-१-२०)

पुच्छमुदस्यति—उत्पुच्छयते। भाण्डं समाचिनोति—सम्भाण्डयते। चीवरं परिधत्ते—सञ्चीवरयते।

अथ चुरादौ पठितानि गणसूत्राणि—

१. प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च।

प्रातिपदिकात् धात्वर्थे बहुलं णिच् स्यात्। इष्ठप्रत्यये इव कार्याणि च स्युः। पुंवद्भाव-रभाव-टिलोप-विन्मतुब्लोप-यणादिलोप-

---

१. लोहित—नील—हरित—पीत—मद्र—फेन—मन्द—इति सप्तशब्दाः गणे पठ्यन्ते। पठितेभ्यो नीलादिभ्यः क्यङ्। अपठितेभ्य आकृत्या गृहीतेभ्यः श्यामादिभ्यः क्यष्। इतीदं काशिकाकृन्मतम्। लोहितडाज्भ्य एव क्यष्, अन्येभ्यः क्यङेवेति भाष्यकृन्मतम्। पक्षयोः पदे भेदः। यथाप्रयोगं प्रामाण्यम्।

**प्रस्थस्फाद्यादेश-भसंज्ञाः इष्ठप्रत्यये परे भवेयुः । तानि कार्याण्यत्राप्यति-दिश्यन्ते । यथा—**

| | |
|---|---|
| पटुमाचष्टे पटयति । टिलोपः । | बलवन्तं करोति बलयति। मतुब्लोपः। |
| हस्तिनातिक्रामति हस्तयति । ,, | मेधाविनं करोति मेधयति। विन्लोपः । |

**२. तत्करोति तदाचष्टे ।**
**३. तेनातिक्रामति......** } पूर्वस्य प्रपञ्चावेतावुदाहृतौ च ।

**४. धातुरूपं च ।**

णिच्प्रकृतिः धातुरूपं प्रतिपद्यते । चकारेण कार्यान्तराणि च । तानि वार्त्तिककारो व्याचष्टे ।

**आख्यानात् कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् ।** यथा—

कंसवधमाचष्टे इत्यर्थे कंसवधशब्दादाख्यानवाचकात् कृदन्ताण्णिचि कृते घञ्प्रत्ययस्य लोपः । हन इति वधप्रकृतेः प्रत्यापत्तिः । हनधातुकर्मणः प्रकृतिनिष्ठं कारकं द्वितीया च भवति—कंसं + हन् + इ = कंसं, घातयति । घातयतीति हनो णिचि तादेशो मिश्रप्रकरणे वक्ष्यते । बलिबन्धमाचष्टे—बलिं बन्धयति । राजागमनमाचष्टे—राजानमागमयति ।

**आङ्लोपश्च कालात्यन्तसंयोगे मर्यादायाम् ।** यथा—आरात्रि विवासमाचष्टे—रात्रिं विवासयति ।

**चित्रीकरणे प्रापि ।** यथा—उज्जयिन्याः प्रस्थितो माहीष्मत्यां सूर्योद्गमनं संभावयति—सूर्यमुद्गमयति ।

**नक्षत्रयोगे ज्ञि ।** यथा—पुष्ययोगं जानाति—पुष्येण योजयति । 'सत्याप...' (८३४) इत्यादिः 'प्रातिपदिकाद्धात्वर्थे' इत्यस्यैव प्रपञ्चः—सत्यमाचष्टे—सत्यापयति ।

**अर्थवेदयोरापुग्वक्तव्यः ।** अर्थमाचष्टे—अर्थापयति । वेद—वेदापयति ।

**क्षमाशब्दादपि आपुग्दृश्यते—यथा—**क्षमापयति । एवं वर्धापयतीत्यपि ।

विपाशयति । निरूपयति । उपवीणयति । अनुतूलयति । उपश्लोकयति । अभिषेणयति । अनुलोमयति । त्वचयति । संवर्मयति । वर्णयति । अवचूर्णयति ॥

# मिश्रप्रकरणम् ॥

पाणिनिस्तावत् पदे पदे व्यत्यस्तान्यनुधावति, तानि च तत्तत्सङ्केतानुरोधेन तत्र तत्र विप्रकीर्णानि निर्दिशति । तेष्वानुपूर्व्या द्वित्रसूत्रव्यापका ये विधयो दृष्टास्तेऽस्माभिरुचितेषु प्रकरणेषु, प्रायशो व्याख्याता एव । शेषेषु कतिचन [1]विरलप्रयोगा इत्युपेक्षिताश्च । अपरे तु कतिपये दृष्टप्रयोगा अपि विस्मरणेनाश्रद्धया प्रकरणोपरोधभिया विक्षिप्तत्वेन चानुक्ताः सन्ति । प्रतिज्ञाताश्च केचिद्विधयो मिश्रप्रकरणे वक्ष्याम इति । तानेतानुच्चित्यात्र मिश्रप्रकरणमारभ्यते—

लोके हि प्रतिनिधिना कार्यनिर्वाहो दृश्यते । तद्वदिह शास्त्रेऽपीत्याह—

## ८६० । स्थानिवदादेशोऽनल्विधौ । (१-१-५६)

आदेशः स्थानिना तुल्यं वर्तेत न तु स्थान्यलाश्रयविधौ । स्थानिसम्बन्धिवर्णाश्रयकार्याणि वर्जयित्वा अन्यानि सर्वाणि कार्याणि आदेशो लभेत अन्यस्य प्रवर्तयति चेत्यर्थः । स्थानिगता जातिधर्मा आदेशेषु संक्रामन्ति, व्यक्तिधर्मास्तु नेति यावत् । लोकेऽपि किलैवमेव । यथा—राज्यतन्त्रे तत्तदधिकारेषु नियुक्ता धुर्याः पुरुषपरिवर्तने अधिकारधर्मानेव प्राप्नुवन्ति, न तु पुरुषधर्मान् । तद्वत् इह शास्त्रेऽपि धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदानामादेशाः स्थानिधर्मान् धातुत्वादीन् लभन्ते । यथा—

**धातु**—'ब्रुवो वचिः'—धातुत्वात् वक्ता वक्तव्यमिति लुडादयः । ऊकारान्तत्वप्रयुक्ता गुणादयस्तु न भवन्ति ।

**अङ्ग**—'किमः क'—अदन्ताङ्गत्वात् इनादयो भवन्ति । 'केन काभ्यां कैः' इति । मान्तत्वप्रयुक्तं तु न भवति ।

**कृत्**—'क्त्वो ल्यप्'—प्रकृत्य इति 'ह्रस्वस्य पिति कृति' इति तुक् ।

---

१. प्रयोगवैरल्येऽपि कतिचिद्रूपाणि सौकर्यसद्भावे व्युत्पादितानि च ।

**तद्धित**—'ठस्येकः'—वार्षिकं -- तद्धितत्वेन प्रातिपदिकसंज्ञा ।

**अव्यय**—'क्त्वो ल्यप्'—प्रकृत्य—क्त्वादेशत्वादव्ययत्वम् ।

**सुप्**—'ङेर्यः'—वृक्षाय इति 'सुपि च' इति दीर्घः ।

**तिङ्**—'तस्थस्थमिपां तान्तन्तामः'—अकुरुताम् इत्यस्य तिङन्तत्वात् पदसंज्ञा ।

**पद**—'बहुवचनस्य वस्नसौ'—ग्रामो वः स्वम् इति पदत्वाद्रुत्वम् ।

## ८६१ । अचः परस्मिन् पूर्वविधौ । (१-१-५७)

**अल्विधावपि क्वचित् स्थानिवद्भावविध्यर्थमारम्भः । परस्मिन्निति निमित्तसप्तमी । (परस्मिन्नच आदेशः) परनिमित्तकोऽजादेशः । स्थानिवत् स्यात् । (पूर्वविधौ) स्थानिभूतादचः पूर्वस्य विधौ कर्तव्ये । यथा—**

कथयति—अत्र 'कथ' इत्यकारान्ताद्धातोर्णिचि 'अतो लोपे' तस्य स्थानिवद्भावात् ककारोपरिगताकारस्य उपधात्वाभावेन 'अत उपधायाः' इति वृद्धिर्न भवति । अत्र लुप्तोऽकारोऽन्त्यः उपधायाश्च विधिः कर्तव्य इति पूर्वस्यैव विधिः । आर्धधातुके परे विहित इति परनिमित्तकश्चायमल्लोपः । अदर्शनरूपो लोपोऽप्यादेशत्वेन गण्यते । शून्यादेशो हि लोपो नाम ।

**प्रत्यु०**—('अचः' किम् ?) अक्राष्टाम्—अत्र 'झलो झलि' इति सिचो लोपः परनिमित्तक कृषेः षकारस्य 'षढोः कः सि' इति कत्वे कर्तव्ये न स्थानिवत् ।

('परस्मिन्' किम् ?) वैयाघ्रपद्यः—अत्र पादस्यान्तलोपो न परनिमित्तक इति पद्भावं न प्रतिबध्नाति ।

('पूर्वविधौ' किम् ?) हे गौः—अत्र वृद्धिरजादेशः सम्बुद्धिलोपे कर्तव्ये न स्थानिवत् ।

## ८६२ । न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वार-दीर्घजश्चर्विधिषु । (१-१-५८)

**पूर्वेणातिप्रसक्तः स्थानिवद्भावः पदान्तादिविधिषु प्रतिषिध्यते । यथा—पदान्त**—कानि सन्ति—अत्र असन्तीत्यकारस्य 'क्ङिति सार्वधातुक' इति परनिमित्तः 'श्नसोरल्लोपः' इति लोपः पूर्वस्य 'कानि' इति इकारस्य यणादेशं प्रति न स्थानिवत् ।

**द्विर्वचन**—मध्वरिः—अत्र परनिमित्तको यणादेशो वकारः पूर्वस्य धकारस्य 'अनचि च' इति द्वित्वे कर्तव्ये न स्थानिवत् । एवमन्येऽप्युदाहार्याः ।

॥ * ॥ पूर्वत्रासिद्धे न स्थानिवत् संयोगादिलोपलत्वणत्ववर्जम् ॥

आदित्यो देवतास्येत्यर्थे आदित्यं हविः । ण्यप्रत्यये सति 'यस्येति च' इति प्रकृत्यन्त्यस्याकारस्य लोपो न स्थानिवत् हलो यमां यमीति लोपे कर्तव्ये । संयोगादिलोपादिषु तु स्थानिवद्भवत्येव—चक्र्यत्र, निगार्यते, माषवपनी ॥

अनेन सिद्धत्वात् द्विर्वचनादिग्रहणं भाष्ये प्रत्याख्यातम् ॥

## ८६३ । द्विर्वचनेऽचि । (१-१-५९)

द्वित्वनिमित्तेऽचि परे अजादेशः स्थानिवत्स्यात् द्वित्व एव कर्तव्ये । स्थानिवद्भावविधिद्वारा द्वित्वे कर्तव्ये परनित्यत्वादिभिर्बलीयसामप्यजादेशानां प्रतिषेधफलकमिदं सूत्रम् । यथा—

जग्मतुः—अत्र द्वित्वात् परत्वात् 'गमहन...' इति उपधालोपः प्राप्तोऽनेन प्रतिषिध्यते । लोपः प्रथमं क्रियते चेत् स्वरनाशात् 'एकाच...' इति द्वित्वस्य न प्रसक्तिः ।

अथ प्रकीर्णकाः केचिद्विधयः—तत्र (१) ईत्वम्—

## ८६४ । ईद्यति (आतः) । (६-४-६५)

आदन्तस्य धातोरीकारोऽन्तादेशो यत्प्रत्यये परे । यथा—

ग्ला—ग्लेयम् । दा—देयम् । हा—हेयम् । स्था—स्थेयम् । कृत्प्रत्ययोऽयम् ।

(८३१) 'घुमास्थागापाजहातिसां हलि' (६-४-६६) व्याख्यातम् ॥

## ८६५ । एर्लिङि । (६-४-६७)

घुमास्थादीनामाकारस्य क्ङिति लिङि परे एकार आदेशः । **यथा**—देयात् । स्थेयात् । पेयात् । **प्रत्यु०**—('क्ङिति' किम् ?) दासीष्ट । पासीष्ट ॥

## ८६६ । वान्यस्य संयोगादेः । (६-४-६८)

घुमास्थादिभ्योऽन्यस्य संयोगादेर्धातोरन्त्याकारस्य वा एत्वं क्ङिति लिङि । यथा—ग्लेयात्, ग्लायात् । म्लेयात्, म्लायात् ॥

### ८६७ । न ल्यपि । (६-४-६९)

घुमास्थादीनामात ईत्वं ल्यपि न । यथा—

प्रदाय । प्रमाय । प्रस्थाय इत्यादि ।

### ८६८ । मयतेरिदन्यतरस्याम् । (६-४-७०)

ल्यपि वा इत्वम् । यथा—अपमित्य । अपमाय ।

## (२) गुणविधिः—

### ८६९ । गुणोऽर्तिसंयोगाद्योः । (७-४-२९)

'रिङ्शयग्लिङ्क्षु' इत्यतोऽनन्तरं सूत्रम् । ऋत इति, असार्वधातुक इति, ये इति च वर्तते । अर्तेः संयोगादीनामृदन्तानां च यकि असार्वधातुकलिङि च गुणः । यथा—

ऋ—अर्यते, अर्यात् । स्मृ—स्मर्यते, स्मर्यात् ।

### ८७० । यङि च । (७-४-३०)

अर्तिसंयोगाद्योर्गुणो यङि च स्यात् । यथा—ऋ—अरार्यते । स्मृ—सास्मर्यते । अर्तेरजादित्वेऽपि 'अश्यर्त्यशूर्णोतीनामुपसंख्या'-तत्वात् यङ् । यङि द्वित्वे—'न न्द्राः...' इति रेफस्य द्वित्वनिषेधाभावश्च वार्त्तिकेन ।

॥ ॐ ॥ हन्तेर्हिंसायां यङि घ्नीभावः ॥

भृशं हिनस्ति—जेघ्नीयते । अहिंसार्थे तु भृशं गच्छति—जङ्घन्यते ।

### ८७१ । ई घ्राध्मोः । (७-४-३१)

घ्राध्मोर्यङि इकारोऽन्तादेशः । जेघ्रीयते । देध्मीयते ।

## (३) नलोपः—

### ८७२ । अनिदितां हल उपधायाः क्ङिति (नलोपः) । (६-४-२४)

अनिदितां धातूनां मध्ये हलन्तस्योपधाया नकारस्य लोपः क्ङिति प्रत्यये परे । यथा—

| धातुः | क्तः | यक् | यङ् |
|---|---|---|---|
| स्रन्सु | स्रस्तम् | स्रस्यते | सनीस्रस्यते । |
| ध्वन्सु | ध्वस्तम् | ध्वस्यते | दनीध्वस्यते । |
| भञ्ज | भक्तम् | भज्यते | बाभज्यते । |

| | | | |
|---|---|---|---|
| प्रत्यु०—('अनिदिताम्' किम्?) नदि | नन्दितं | नन्द्यते | नानद्यते । |
| ('हलः' किम्?) | नीतम् | नीयते | नेनीयते । |
| ('उपधायाः' किम्?) | नद्धम् | नह्यते | नानह्यते । |

**८७३ । दंशसञ्जस्वञ्जां शपि । (६-४-२५)**

एषां शपि उपधानकारस्य लोपः । यथा—दशति, सजति, परिष्वजते ।

**८७४ । रञ्जेश्च । (६-४-२६)**

उपधानकारस्य लोपः शपि । यथा—रजति, रजतः, रजन्ति ।

**८७५ । घञि च भावकरणयोः । (६-४-२७)**

भावकरणार्थके घञि च रञ्जेरुपधानलोपः । यथा—
रञ्जनं रागः । रज्यतेऽनेनेति च रागः ।
अन्यत्र तु—रज्यन्तेऽस्मिन्नित्यधिकरणार्थे रङ्गः ।

**८७६ । स्यदो जवे । (६-४-२८)**

स्यन्दतेर्घञि नलोप उपधादीर्घाभावश्च निपात्यते । जवभिन्ने त्वर्थे घृतस्यन्दः प्रवाह इत्यर्थः ।

**८७७ । नाञ्चेः पूजायाम् । (६-४-३०)**

'अञ्चु गतिपूजनयोः' इत्यनिदितो धातोः पूजायामर्थे न नलोपः । यथा—
अञ्चितं = पूजितम् । क्विपि—प्राञ्चा, प्राङ्भ्यामित्यादि ।
प्रत्यु०—('पूजायाम्' किम्?) उदक्तमुदकं कूपात् । उद्धृतमित्यर्थः ।

**८७८ । क्त्वि स्कन्दिस्यन्दोः । (६-४-३१)**

क्त्वाप्रत्ययेऽनयोर्नोपधानलोपः । स्कन्दित्वा । स्यन्दित्वा ।

**८७९ । जान्तनशां विभाषा । (६-४-३२)**

जकारान्तानां नशेश्च वा नलोपः क्त्वाप्रत्यये । यथा—
रञ्ज—रक्त्वा, रङ्क्त्वा । नश—नष्ट्वा, नंष्ट्वा ।

---

(४) दीर्घः—

**८८० । अनुनासिकस्य क्विझलोः क्ङिति । (६-४-१५)**

अनुनासिकान्तस्योपधाया दीर्घः क्वौ झलादौ क्ङिति च । यथा—

| धातुः । | क्वि । | क्त । | क्ति । | क्त्वा । |
|---|---|---|---|---|
| प्रशम | —प्रशान् (८८२) | शान्त । | शान्ति । | शान्त्वा । |
| वम | — ... | वान्त । | वान्ति । | वान्त्वा । |

---

(५) हनस्तादेशः—

८८१ । हनस्तोऽचिण्णलोः । (७-३-३२)

ञ्णितीत्यनुवर्तते । हन्तेस्तकारोऽन्तादेशो ञिति णिति च प्रत्यये परे । यथा—णिचि—

'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वेन हकारस्य घः, नस्य तादेशः, घातयति, अजीघतत् इत्यादि ।

(६) मान्तस्य नत्वम्—

८८२ । मो नो धातोः । (८-२-६४)

मकारान्तस्य धातोर्नकारोऽन्तादेशः पदान्ते । यथा—

प्रशाम्यतेः क्विपि प्रशान् । प्रताम्यतेः प्रतान् ।

८८३ । म्वोश्च । (८-२-६५)

मकारवकारयोः परयोः मान्तस्य धातोर्नकारोऽन्तादेशः । यथा—

क्षमूष् सहने—चक्षण्वहे, चक्षण्महे । वेट्त्वात् चक्षमिवहे, चक्षमिमहे ।

---

## भावकर्मप्रक्रिया ॥

उक्ता धातूनां व्युत्पन्नानामव्युत्पन्नानां च कर्तरिप्रयोगे लकाराः । अथ भावकर्मणोर्लकारा उच्यन्ते । सुगमात्र प्रक्रिया सामान्यविधीनामुभयसाधारण्यात् भावकर्मणोः प्रयोगे पदविकरणभेदयोरभावाच्च । भावकर्मणोर्हि 'सार्वधातुके यक्' (४५३) इति यगेक एव लट्-लङ्-लोट्-लिङ्क्षु विकरणम् । स्यतासादीनि च संस्करणानि साधारणानि ।

'भावकर्मणोः' इति आत्मनेपदविधानात् तयोः सर्वेऽपि धातव आत्मनेपदिन एव। अकर्मकेभ्य एव भावे प्रयोगः ॥

भू—सत्तायां—यग्विकरणं, तस्य कित्त्वात् गुणप्रतिषेधः, **भूयते**। पुरुषवचनयोरभावात् लकारेष्वेकमेव रूपम्। **अभूयत - भूयतां - भूयेत**। संस्करणानां सीयुटश्च णित्त्वविकल्पो वक्ष्यते। तेन वा वृद्धिरिगन्तानां—**भाविता, भविता। भाविष्यते, भविष्यते। अभाविष्यत, अभविष्यत**। लुङि तप्रत्यये चिण् संस्करणं प्रत्ययलोपश्चानुपदमुच्येते, **अभावि, भाविषीष्ट, भविषीष्ट**।

अनुभूयते, अनुभूयेते, अनुभूयन्ते। अनुभूयसे, अनुभूयेथे, अनुभूयध्वे। अनुभूये, अनुभूयावहे, अनुभूयामहे। अन्वभूयत अन्वभूयेताम् इत्याद्यन्येषामपि लकाराणाम्।

त्वया युवाभ्यां युष्माभि-र्वा, मया आवाभ्याम् अस्माभि-र्वा, तेन ताभ्यां तै-र्वा भूयते। कर्मणि तु—

| | | |
|---|---|---|
| सोऽनुभूयते, | तावनुभूयेते | तेऽनुभूयन्ते। |
| त्वमनुभूयसे, | युवामनुभूयेथे, | यूयमनुभूयध्वे। |
| अहमनुभूये, | आवामनुभूयावहे, | वयमनुभूयामहे। |

इति कर्मानुरोधेन पुरुषवचने। कर्तुस्तु न निर्बन्धः पुरुषवचनयोर्लकारवाच्यकारकानुरोधित्वात्, अत्र च कर्मणो लकारवाच्यत्वात्। लकारवाच्यमेव हि कारकं समानाधिकरणं भवति। युष्मदादीनां सामानाधिकरण्य एव हि पुरुषवचने च प्रवर्तेते ॥

अथ प्रक्रिया—लुङि किल चिण्संस्करणमुक्तम्। तत् पुनः कर्तरिप्रयोगेऽपि पञ्चषेभ्यो धातुभ्यो भवति। पाणिनिश्च कर्तरि चिण्विधिं प्रथममुक्त्वैव भावकर्मणोस्तद्विधिमारभत इति सूत्राण्यानुपूर्व्या व्याख्यायन्ते—

**८८४। चिण् ते पदः। (३-१-६०)**

'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेरादेशविधिप्रकरणस्थमिदं

सूत्रम् । पद्धातोः कर्तरि लुङस्तप्रत्यये (आत्मनेपदप्रथमपुरुषैकवचने) परे च्लेः चिणादेशः । सिचोऽपवादः ॥

## ८८५ । दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् । (३-१-६१)

दीपादिभ्यः पूर्वोक्तं वा पक्षे सिच् ॥

## ८८६ । अचः कर्मकर्तरि । (३-१-६२)

अजन्ताद्धातोः कर्मकर्तरि लुङश्च्लेश्चिण् वा तप्रत्यये । कर्मकर्ता व्याख्यास्यते । प्राप्तविभाषेयम् । कर्मकर्तरि हि कर्मवद्भावातिदेशाच्चिण् भावकर्मणोरिति नित्यं प्राप्तम् ।

### ८८७ । दुहश्च । (३-१-६३)

कर्मकर्तरि लुङश्च्लेश्चिण् वा तप्रत्यये । न दुहस्नुनमामिति कर्मवत्कार्य-निषेधादप्राप्ते विभाषेयम् ।

### ८८८ । न रुधः । (३-१-६४)

रुधः कर्मकर्तरि लुङश्च्लेश्चिण्न ।

### ८८९ । तपोऽनुतापे च । (३-१-६५)

तप्यतेः कर्मकर्तरि (भावे) अनुतापेऽर्थे च च्लेश्चिण्न ।

## ८९० । चिण् भावकर्मणोः । (३-१-६६)

नेत्यस्य निवृत्त्यर्थं पुनश्चिण्ग्रहणम् । भावकर्मणोर्लुङश्च्लेश्चिण् तप्रत्यये ।

अथ चिण्कार्यम्—

## ८९१ । चिणो लुक् । (६-४-१०४)

'चिण्' इति पञ्चम्यन्तम् । चिणः परस्य प्रत्ययस्य लुक् । इति तप्रत्ययो लुप्यते । णित्त्वादजन्तानामदुपधानां च वृद्धिः । इगुपधानां तु लघूपधगुणः । अथ सूत्राण्युदाह्रियन्ते—

**पद**—उदपादि सस्यम् । समपादि भैक्षम् —कर्तरि ।
अपादि अपत्साताम् अपत्सत इत्यादि ,,
**दीप**—अदीपि, अदीपिष्ट अदीपिषाताम् अदीपिषत ,,
**जन**—[1]अजनि, अजनिष्ट अजनिषाताम् अजनिषत ,,
**बुध**—अबोधि, अबुद्ध अभुत्साताम् ।
**लू**—अलावि, अलाविष्ट वा वृक्षः स्वयमेव—कर्मकर्तरि ।
**कृ**—अकारि, अकृत, वा घटः स्वयमेव--- ,,
**दुह**—अदोहि, अदुग्ध वा गौः ,, ,,
**रुध**—अरुद्ध गौः ,, ,,
**तप**—अतप्त तपस्तापसः। अनुतापि अन्वतप्त पापेन ,,
**भू**—अभावि—भावे । अनुभू—अन्वभावि कर्मणि ।

## ८९२ । आतो युक् चिण्कृतोः (ञ्णिति) । (७-३-३३)

आदन्तस्य धातोर्युगागमश्चिणि, ञ्णिति कृति च । यथा—

| धातुः | | चिण् | | ण्वुल् | | घञ् |
|---|---|---|---|---|---|---|
| दा | — | अदायि | — | दायकः | — | दायः |
| पा | — | अपायि | — | पायकः | — | पायः |
| स्था | --- | अस्थायि | — | स्थायकः | — | स्थायः |

## ८९३ । नोदात्तोपदेशस्य मान्तस्यानाचमेः । (७-३-३४)

उदात्तोपदेशस्य मकारान्तस्य आचमिवर्जितस्य चिणि ञ्णिति कृति च उपधाया अतो वृद्धिर्न स्यात् । सेटो धातव उदात्तोपदेशाः । यथा—

शमु—अशमि। दमु—अदमि। **प्रत्यु०**—('उदात्तोपदेशस्य' किम्?) अगामि ।

## ८९४ । जनिवध्योश्च । (७-३-३५)

अनयोश्च नोपधावृद्धिश्चिणि, ञ्णिति कृति च । यथा—

अजनि, जनकः, प्रजनः । अवधि, वधकः, वधः ।

---

१. 'जनिवध्योश्च' इति वक्ष्यमाण उपधावृद्धिप्रतिषेधः ।

**८९५ । स्य-सिच-सीयुट्-तासिषु भावकर्मणोरुपदेशेऽज्झन-ग्रहदृशां वा चिण्वदिट् च । (६-४-६२)**

चिण्वत् = चिणि इव कार्यम् । भावकर्मणोः प्रयोगे उपदेशे अजन्तानां हनग्रहदृशां च स्यसिच्सीयुट्तासिषु संस्करणेषु परेषु चिणीव कार्यं वा स्यात् । चिण्वद्भावसंनियोगेन स्यसिजादीनामिट् च । चिण्कार्याणि च—

"चिण्वद्वृद्धिर्युक् च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति" इति परिगणितानि । एषु वृद्धिर्णित्त्वप्रयुक्ता । 'आतो युक् चिण्कृतोः' इत्यत्रैवोक्तो युक् । घत्वमपि 'हो हन्ते....' इति णित्त्वप्रयुक्तम् । दीर्घः परं वक्तव्योऽस्ति । स यथा—

**८९६ । चिण्णमुलोर्दीर्घोऽन्यतरस्यां (णौ) । (६-४-९३)**

'मितां ह्रस्वः' इत्यतोऽनन्तरस्तदपवादश्चायं दीर्घः । चिण्परे णमुल्परे च णौ मितामुपधाया वा दीर्घः । यथा—

दमयतेर्लुङि चिणि 'णेरनिटि' इति णिलोपे अदम् + इ इति जाते अनेन वा दीर्घः । **अदामि–अदमि** । एवं शमयतेर्लुङि **अशामि–अशमि** । केवलाभ्यां तु उपधावृद्धिनिषेधात् **अदमि–अशमि** इत्येव ।

क्रमादुदाहरणानि—

**अजन्तेषु कृ**—कारिष्यते, करिष्यते । चिण्वदभावे 'ऋद्धनोः स्ये' इति इट् ।

**जि**—जायिष्यते, जेष्यते ... ...

**दा**—दायिष्यते, दास्यते ... ... युक् ।

**हन**—घानिष्यते, हनिष्यते... ... हन्तेर्घत्वम् ।

**ग्रह**—ग्राहिष्यते, ग्रहीष्यते .. ...

**दृश**—दर्शिष्यते, द्रक्ष्यते ... ...

शमिर्णिजन्तोऽमन्तः—शामिष्यते, शमिष्यते । शमयिष्यते । दीर्घविकल्पः । एवं सिजादिष्वपि, अकारिषाताम्, अकारिषत । अकृषताम् अकृषत । कारिता कर्ता । कारिषीष्ट, कृषीष्ट इत्यादि । आर्धधातुके इत्यधिकारादाशीर्लिङः सीयुडेव गृह्यते ।

अथ पूर्वमेव प्रत्ययान्तरसाहचर्येणोक्ताः कतिचिद्यकः प्रक्रियाः सुखार्थमनुसन्धीयन्ते—

| | | |
|---|---|---|
| 'रिङ्शयग्लिङ्क्षु' | (५२९) | कृ—क्रियते । भृ—भ्रियते । |
| 'ॠत इद्धातोः' | (५२६) | कॄ—कीर्यते । तॄ—तीर्यते । |
| 'उदोष्ठ्यपूर्वस्य' | (५२८) | पॄ—पूर्यते । |
| 'अकृत्सार्वधातुकयोर्दीर्घः' | (८२८) | जि—जीयते । स्तु—स्तूयते । |
| 'घुमास्था............' | (८३१) | दा—दीयते । मा—मीयते । स्था—स्थीयते । |
| 'गुणोऽर्तिसं.........' | (८६९) | ऋ—अर्यते । स्मृ—स्मर्यते । |

---

## कर्मकर्तृप्रक्रिया ॥

इह किल कर्तरि, कर्मणि, भावे चेति लकाराणां त्रिविधः प्रयोगः । यत्र कर्तृकारकावलम्बिनी क्रिया प्रतिभासते तत्र कर्तरि प्रयोगः । यत्र कर्मकारकावलम्बिनी तत्र कर्मणि प्रयोगः । यत्र पुनः कारकसंसर्गं विनैवावभासते तत्र भावे प्रयोग इति । एषु कर्तरिप्रयोगो द्विविधः संभवति, कर्तुर्विवक्षाधीनत्वात् । तथा हि—स्वतन्त्रं कारकं किल कर्ता । स्वातन्त्र्यं च विवक्षाधीनम् । यथा—देवदत्तस्तूलिकया लिखतीति वाक्ये लेखनक्रियायां स्वातन्त्र्याद्देवदत्तः कर्ता । तूलिका च तस्य लेखनसाधनमिति करणम् । अथ पुनर्लाघवातिशयद्योतनाय तूलिकैव स्वयं लेखनक्रियां निर्वहतीति विवक्ष्यते चेत्तर्हि तूलिका कर्ता भवति । वस्तुतोऽत्र देवदत्त एव यद्यपि जडां तूलिकामुचितरेखोत्पादनानुकूलं चालयति तथापि तूलिका देवदत्तोपदिष्टवर्त्मना यदि नाचलिष्यत्तर्हि देवदत्तो लिखितुं नाशक्ष्यदिति तूलिकाया अपि स्वव्यापारे स्वातन्त्र्यमस्त्येव । इदं स्वातन्त्र्यमवलम्ब्य तूलिका लिखतीति करणं

कर्ता संपद्यते । एवं स्थाली पचतीत्यधिकरणस्य कर्तृत्वं संभवति इत्यादि । तथा च कारकान्तराणामपि स्वस्वव्यापारे स्वातन्त्र्यात् कर्तृत्वं विवक्षितुं शक्यते । लक्षणावृत्त्यस्पृष्टे तत्त्वाख्यानवाक्ये यानि करणादीनि कारकाणि तानि लाक्षणिके चमत्कृतवाक्ये कर्तारो भवन्ति । करणस्य कर्तृत्वविवक्षायां करणकर्तरि प्रयोगः । अधिकरणस्य कर्तृत्वविवक्षायाम् अधिकरणकर्तरि प्रयोगः । कर्मणः कर्तृत्वविवक्षायां कर्मकर्तरि प्रयोगः । इत्यादयस्तेषां व्यपदेशाः । एषु करणकर्तरि प्रयोगादयः कर्तरिप्रयोगसमाना एव । कर्मकर्तरिप्रयोगे परं रूपभेद आपततीति तत्प्रक्रिया वक्तव्या जाता ॥

### ८९७ । कर्मवत् कर्मणा तुल्यक्रियः । (३-१-८७)

कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत् स्यात् । कर्मकर्ता व्याख्यातरूपः कर्मणा तुल्यः स्यादित्यर्थः । कर्मकर्तरिप्रयोगे कर्मणिप्रयोग इव कार्याणि भवन्तीति कार्यातिदेशोऽयम् । तेन यक्चिण्चिण्वदिडात्मनेपदानि भवन्ति । यथा—

| कर्तरि । | कर्मकर्तरि । |
|---|---|
| देवदत्तस्तण्डुलं पचति । | पच्यते तण्डुलः—अपाचि । |
| काचिच्छक्तिर्घटं भिनत्ति । | भिद्यते घटः —अभेदि । |
| वयं शब्दं शृणुमः । | श्रूयते शब्दः —अश्रावि । |
| योद्धा लक्ष्यं विध्यते । | विध्यते लक्ष्यम्—अवेधि । |

'कर्मणा तुल्यक्रियः' इत्युक्तेः कर्मस्थक्रियाणामेव धातूनामयं विधिः, न तु कर्तृस्थक्रियाणाम् । यस्मिन् कर्मकारके क्रियाकृतो विकारो दृश्यते स एव कर्तृत्वं प्राप्तः कर्मवत् स्यात् । पचनक्रियायां तण्डुलस्य, भेदनक्रियायां घटस्य च विकारो जायते न तु कर्तुः । अनेन ज्ञानगमनादीनां कर्तृनिष्ठफलानां क्रियाणां कर्मकर्तरिप्रयोगे न कर्मवद्भावः । कर्तरिप्रयोगतुल्यमेव तत्र रूपम् । यथा—

'अधिगच्छति शास्त्रार्थः स्मरति श्रद्धाति च'

शास्त्रार्थः स्वयमेवाधिगमनस्मरणश्रद्धाविषयो भवतीत्यर्थः ॥

## ८९८ । तपस्तपःकर्मकस्यैव । (३-१-८८)

तप सन्तापे इत्यस्य कर्ता कर्मवत् स्यात्, तप इति कर्म प्रयुज्यते चेदेव । 'सुखासिकामास्ते' 'सुखशायिकाः शय्यन्ते' इत्यादिवन्निजभावार्थकस्य कर्मस्थाने प्रयोगमात्रमिदम् । सकर्मकाणामितरेषां कर्मकर्तरि कर्मवद्भावः प्रतिषिद्धो वार्त्तिककारेण । 'तपोऽनुतापे च' (८८९) इति चिण्निषेधोऽप्यत्रोक्तः । यथा—

तप्यते तपस्तापसः—अतप्त ।

प्रत्यु०—('तपःकर्मकस्य' किम् ?) उत्तपति सुवर्णं सुवर्णकारः ।

## ८९९ । न दुहस्नुनमां यक्चिणौ । (३-१-८९)

एषां कर्मकर्तरि यक्चिणौ न । दुहः परं चिण् 'दुहश्च' (८८७) इति विकल्पितः । यथा--

दुग्धे । अदोहि, अदुग्ध, (लुग्वा दुहेति पक्षे लुक्) अधुक्षत वा गौः स्वयमेव प्रस्नुते । प्रास्नोष्ट गौः स्वयमेव । नमते । अनंस्त दण्डः स्वयमेव ।

## ९०० । कुषिरञ्जोः प्राचां श्यन् परस्मैपदं च । (३-१-९०)

कुष निष्कर्षे, रञ्ज रागे इत्यनयोः कर्मकर्तरि श्यन् परस्मैपदं च प्राचां मते । यथा—

कुष्यति पादः स्वयमेव । कुष्यते वा । रज्यति वस्त्रं स्वयमेव । रज्यते वा ।

यग्विषय एव परस्मैपदं विधेः सन्नियोगशिष्टत्वात् । तेन अकोषि पाद इत्येव लुङादिषु ।

'अचः कर्मकर्तरि' (८८६) इति चिण्विकल्पः—अकारि, अकृत वा घटः स्वयमेव । 'न रुधः' (८८८) इति चिण्निषेधः—अवारुद्ध गौः स्वयमेव ।

# पदव्यवस्था ।

लकारार्थोपसर्गाणां तथा विकरणस्य च ।
इतां च बहुधा भेदाद् धातूनां भिद्यते पदम्—
यथा वर्त्स्यर्त्यत्यद्युतच्च, यथा भुङ्क्ते च तिष्ठते,
यथाहते च संविक्ते, यथा बोधति बुध्यते,
यथास्त्यास्ते, लेढि लीढे, भ्रियते, स्तौति च स्तुते ॥

इति नानोपाधिभिर्भिद्यमानस्य धातोः पदस्य काचिद्व्यवस्था क्रियते—

## आत्मनेपदविधिः ॥

### अनुदात्तङित आत्मनेपदम् । (१-३-१२)

व्याख्यातम्— (४१९) आस—आस्ते । शीङ्—शेते ।

### ९०१ । भावकर्मणोः । (१-३-१३)

यथा —भूयते । अनुभूयते ।

### ९०२ । कर्तरि कर्मव्यतीहारे । (१-३-१४)

कर्मव्यतीहारः क्रियाविनिमयः । यत्रान्यसम्बन्धिनीं क्रियामन्यः करोति, इतरसंबन्धिनीं चेतरः स कर्मव्यतीहारः । तस्मिन् द्योत्ये धातोः कर्तर्यात्मनेपदम् । भावकर्मणोस्तु पूर्वेण सिद्धमेव सर्वत्रात्मनेपदम् । 'व्यति' इत्युपसर्गद्वयं कर्मव्यतीहारं द्योतयति । यथा—

रामकृष्णौ व्यत्यश्नाते—रामस्य भोज्यं कृष्णः, कृष्णस्य भोज्यं रामश्चाश्नातीत्यर्थः ।
रामकृष्णौ व्यतितिष्ठेते—स्थानविनिमयेन तिष्ठत इत्यर्थः ।

### ९०३ । न गतिहिंसार्थेभ्यः । (१-३-१५)

कर्मव्यतीहारे विहितमात्मनेपदं गतिहिंसार्थेभ्यो न । यथा—

बाला व्यतिगच्छन्ति । योधा व्यतिघ्नन्ति ।

### ९०४ । इतरेतरान्योन्योपपदाच्च । (१-३-१६)

अत्र वार्त्तिकं—परस्परोपपदाच्चेति वक्तव्यम् । इतरेतरादिपद-प्रयोगेऽपि न । यथा—

इतरेतरस्यान्योन्यस्य परस्परस्य वा व्यतिलुनन्ति ।

**९०५ । नेर्विशः । (१-३-१७)**

निपूर्वाद्विशतेरात्मनेपदम् । यथा—निविशते ।

**९०६ । परिव्यवेभ्यः क्रियः । (१-३-१८)**

ञित्त्वात् कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम् अकर्त्रभिप्रायेऽपि यथा स्यादित्यारम्भः । यथा—परिक्रीणीते । विक्रीणीते । अवक्रीणीते ॥

**९०७ । विपराभ्यां जेः । (१-३-१९)**

विजयते, पराजयते ।

**९०८ । आङो दोऽनास्यविहरणे । (१-३-२०)**

आङ्पूर्वाद्ददातेर्मुखविकासनादन्यत्रार्थे तङानौ ।

आदत्ते विद्याम् । गृह्णाति । मुखं व्याददाति—विकासयति ।

**९०९ । क्रीडोऽनुसंपरिभ्यश्च । (१-३-२१)**

अनुसंपरिभ्यः आङश्च क्रीडः तङानौ ।

अनुक्रीडते, संक्रीडते, परिक्रीडते, आक्रीडते ।

**॥ * ॥ समोऽकूजने इति वक्तव्यम् ॥**

संक्रीडन्ति शकटानि—सशब्दं चलन्तीत्यर्थः ।

**॥ * ॥ आगमेः क्षमायाम् आत्मनेपदं वक्तव्यम् ॥**

क्षमा = उपेक्षा, कालहरणमिति यावत् । आगमयस्व तावत् माणवकम् । क्षमस्व कञ्चित् कालम् । मा त्वरिष्ठा इत्यर्थः ।

॥ * ॥ **शिक्षेर्जिज्ञासायाम्** । शिक्षते विद्यासु । शक्तो भवितुमिच्छतीत्यर्थः ।

**॥ * ॥ आङि नुपृच्छयोरुपसंख्यानम् ॥**

आनुते सृगालः । आपृच्छते गुरुम् ।

**॥ * ॥ शप उपलम्भने ॥**

वाचा शरीरस्पर्शनमुपलम्भनम् । तव पादाभ्यां शपे ।

९१०। समवप्रविभ्यः स्थः। (१-३-२२)

सन्तिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते।

९११। प्रकाशनस्थेयाख्ययोश्च। (१-३-२३)

स्वाभिप्रायप्रकटनं प्रकाशनम्। विवादपदनिर्णेता स्थेयः। तस्याख्यानं स्थेयाख्या। अनयोः स्थस्तङानौ। यथा—

गोपी कृष्णाय तिष्ठते—स्वाभिप्रायं प्रकाशयतीत्यर्थः।

'संशय्य कर्णादिषु तिष्ठते यः'—कर्णादीन् निर्णेतृत्वेन आश्रयतीत्यर्थः।

९१२। उदोऽनूर्ध्वकर्मणि। (१-३-२४)

उत्साहादावर्थे उत्तिष्ठतेस्तङानौ। यथा—

'उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता'। उत्तिष्ठमान उत्साहीत्यर्थः। कुटुम्बे उत्तिष्ठते—तदर्थं यतत इत्यर्थः।

९१३। उपान्मन्त्रकरणे। (१-३-२५)

उपतिष्ठते सूर्यं—सेवत इत्यर्थः।

९१४। अकर्मकाच्च। (१-३-२६)

यावद्भुक्तमुपतिष्ठते सन्निधीयत इत्यर्थः।

९१५। उद्विभ्यां तपः। (१-३-२७)

अकर्मकादित्येव। उत्तपते, वितपते—दीप्यत इत्यर्थः।

९१६। आङो यमहनः। (१-३-२८)

अकर्मकादित्येव। आयच्छते—दीर्घीभवति। आहते।

॥ * ॥ स्वाङ्गकर्मकाच्चेति वक्तव्यम् ॥

आयच्छते पाणिम्। आहते शिरः।

९१७। समो गमृच्छिभ्याम्। (१-३-२९)

अकर्मकादित्येव। सङ्गच्छते, समृच्छते।

॥ * ॥ अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्। विदिप्रच्छिस्वरतीनामुपसंख्यानम् ॥

सम्पृच्छते, संश्रृणुते, संवित्ते इत्यादि।

९१८ । **निसमुपविभ्यो ह्वः** । (१-३-३०)

अकर्मकादिति निवृत्तम् । निह्वयते, संह्वयते इत्यादि ।

९१९ । **स्पर्धायामाङः** । (१-३-३१)

स्पर्धा सङ्घर्षः । मल्लो मल्लमाह्वयते ।

९२० । **गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः** । (१-३-३२)

गन्धनम् अपकारप्रयुक्तं हिंसात्मकं सूचनम् । अवक्षेपणं भर्त्सनम् । सेवनमनुवृत्तिः । प्रतियत्नः सतो गुणान्तराधानम् । प्रकथनं प्रकर्षेण कथनम् । उपयोगो धर्मादिप्रयोजने विनियोगः यथा—

गन्धने—उत्कुरुते उदाकुरुते सूचयतीत्यर्थः ।

अवक्षेपणे—श्येनो वर्तिकामुदाकुरुते—भर्त्सयतीत्यर्थः ।

सेवने—महामात्रानुपकुरुते—सेवत इत्यर्थः ।

साहसिक्ये—परदारान् प्रकुरुते—तेषु सहसा प्रवर्तत इत्यर्थः ।

प्रतियत्ने—काण्डं गुडस्योपस्कुरुते—गुणान्तरमादधातीत्यर्थः ।

प्रकथने—जनापवादान् प्रकुरुते—प्रकर्षेण कथयतीत्यर्थः ।

उपयोगे—शतं प्रकुरुते—धर्मार्थं विनियुङ्क्त इत्यर्थः ।

९२१ । **अधेः प्रसहने** । (१-३-३३)

प्रसहनमभिभवः शत्रुमधिचक्रे—अभिबभूवेत्यर्थः ।

९२२ । **वेः शब्दकर्मणः** । (१-३-३४)

क्रोष्टा विकुरुते स्वरान् । अन्यत्र विकरोति पयः ।

९२३ । **अकर्मकाच्च** । (१-३-३५)

वेः कृञ अकर्मकात् आत्मनेपदम् । विकुर्वते सैन्धवाः । वल्गन्तीत्यर्थः ।

९२४ । **सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः** । (१-३-३६)

उत्सञ्जनज्ञानविगणनव्यया नयतेर्वाच्याः । सम्माननाचार्यकरणभृतयस्तु प्रयोगोपाधयः । सम्मानानं = पूजनम् । नयते चार्वाको लोकायते । तन्मतसिद्धान्तमुपपत्त्योपदिश्य शिष्यांस्तत्र मेलयतीत्यर्थः । तेन च शिष्याणां तत्पूजा फलिता । उत्सञ्जनमुत्क्षेपणम्—दण्डमुन्नयते ।

आचार्यकरणमाचार्यत्वसम्पादनम्। माणवकमुपनयते—स्वसमीपं प्रापय्य संस्कारपूर्वं वेदमुपदिशतीत्यर्थः। ज्ञानं निश्चयः—तत्वं नयते। भृतिर्वेतनम्। कर्मकरानुपनयते। भृतिदानेन स्वसमीपं प्रापयतीत्यर्थः। विगणनमृणादेर्निर्यातनम्। करं विनयते—देयशेषं परिशोधयतीत्यर्थः। व्ययो धर्मादिषु विनियोगः। शतं विनयते—विनियुङ्क्ते इत्यर्थः।

९२५। कर्तृस्थे चाशरीरे कर्मणि। (१-३-३७)

नियो यः कर्ता लकारवाच्यः तत्स्थं चेत् नयतेः कर्म तदा आत्मनेपदं स्यात्। तच्च कर्म शरीरावयवभिन्नं चेत्। यथा—मन्युं विनयते। शरीरावयवे तु गडुं विनयति। अपनयतीत्यर्थः॥

९२६। वृत्तिसर्गतायनेषु क्रमः। (१-३-३८)

वृत्तिरप्रतिबन्धः।—शास्त्रे क्रमते बुद्धिः। सर्ग उत्साहः। अध्ययनाय क्रमते। तायनं—स्फीतता। अस्मिन् शास्त्राणि क्रमन्ते।

९२७। उपपराभ्याम्। (१-३-३९)

उपक्रमते—चिकित्सितुं प्रवर्तते इत्यर्थः। पराक्रमते।

९२८। आङ उद्गमने। (१-३-४०)

'ज्योतिरुद्गमन' एवेति कात्यायनः। आक्रमते सूर्यः॥

९२९। वेः पादविहरणे। (१-३-४१)

साधु विक्रमते वाजी।

९३०। प्रोपाभ्यां समर्थाभ्याम्। (१-३-४२)

समर्थौ तुल्यार्थौ। प्रारम्भेऽनयोस्तुल्यार्थता। प्रक्रमते—उपक्रमते॥

९३१। अनुपसर्गाद्वा। (१-३-४३)

क्रामति, क्रमते।

९३२। अपह्नवे ज्ञः। (१-३-४४)

शतमपजानीते—अपलपतीत्यर्थः।

## ९३३ । अकर्मकाच्च । (१-३-४५)

सर्पिषो जानीते—सर्पिषा उपायेन प्रवर्तत इत्यर्थः ।

## ९३४ । संप्रतिभ्यामनाध्याने । (१-३-४६)

**आध्यानमुत्कण्ठापूर्वकं स्मरणम् ।**

शतं सञ्जानीते—अवेक्षत इत्यर्थः । शतं प्रतिजानीते—अङ्गीकरोतीत्यर्थः ।
आध्याने तु—मातरं संजानाति—उत्कण्ठया स्मरतीत्यर्थः ।

## ९३५ । भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः । (१-३-४७)

१. वदते—शास्त्रे—भासमानः प्रवक्तीत्यर्थः ।
२. कर्मकरानुपवदते—उपसान्त्वयतीत्यर्थः ।
३. वदते शास्त्रे—जानाति वदितुमित्यर्थः ।
४. क्षेत्रे वदते—क्षेत्रविषयकमुत्साहमाविष्करोतीत्यर्थः ।
५. क्षेत्रे विवदते—वैमत्येन कलहायते इत्यर्थः ।
६. परदारान् उपवदते—रहस्युपच्छन्दयतीत्यर्थः ।

## ९३६ । व्यक्तवाचां समुच्चारणे । (१-३-४८)

**मनुष्यादीनां संभूयोच्चारणे वदेस्तङानौ । यथा—**

सम्प्रवदन्ते ब्राह्मणाः । अव्यक्तवाचां तु सम्प्रवदन्ति कुक्कुटाः ।

## ९३७ । अनोरकर्मकात् । (१-३-४९)

अनुवदते कठः कलापस्य ।

## ९३८ । विभाषा विप्रलापे । (१-३-५०)

विप्रवदन्ते, विप्रवदन्ति वा मौहूर्तिकाः । परस्परप्रतिषेधेन विरुद्धं वदन्तीत्यर्थः ।

**९३९ । अवाद् ग्रः । (१-३-५१)** अवगिरते ।

**९४० । समः प्रतिज्ञाने । (१-३-५२)**

प्र इत्येव । शब्दं नित्यं सङ्गिरते ।

## ९४१ । उदश्चरस्सकर्मकात् । (१-३-५३)

धर्ममुच्चरते–उल्लङ्घ्य गच्छतीत्यर्थः । अकर्मकात्तु बाष्पमुच्चरति–उद्गच्छतीत्यर्थः ।

## ९४२ । समस्तृतीयायुक्तात् । (१-३-५४)

रथेन सञ्चरते ।

### ९४३ । दाणश्च सा चेच्चतुर्थ्यर्थे । (१-३-५५)

सा = तृतीया । 'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया' इति वार्तिकम् । तद्विषय एव आत्मनेपदं च । दाणः शिति यच्छादेशः ।

दास्या संयच्छते कामुकः—अन्याय्यं दास्यै धनं यच्छतीत्यर्थः ।

### ९४४ । उपाद्यमः स्वकरणे । (१-३-५६)

स्वकरणं परिग्रहः । भार्यामुपयच्छते ॥

### ९४५ । ज्ञाश्रुस्मृदृशां सनः । (१-३-५७)

सन्नन्तानामेषामात्मनेपदम् । यथा—

जिज्ञासते, शुश्रूषते, सुस्मूर्षते, दिदृक्षते ।

### ९४६ । नानोर्ज्ञः । (१-३-५८)

पूर्वेण प्राप्तस्य निषेधः । पुत्रमनुजिज्ञासति ।

### ९४७ । प्रत्याङ्भ्यां श्रुवः । (१-३-५९)

सन्नन्तान्नेत्येव । आशुश्रूषति । प्रतिशुश्रूषति ।

### ९४८ । शदेः शितः । (१-३-६०)

शदेः शिति शीयादेश उक्तः । शीयते—अन्यत्र शत्स्यति ॥

### ९४९ । म्रियतेर्लुङ्लिङोश्च । (१-३-६१)

मृङो ङित्त्वप्रयुक्तमात्मनेपदमनेन नियम्यते । लुङ्लिङोः शिति प्रत्यये चैवेति ।

म्रियते, अम्रियत, म्रियताम् । म्रियेत । मृषीष्ट । अमृत ।

### ९५० । पूर्ववत्सनः । (१-३-६२)

सन्नन्तात् प्रकृतिधातोरिव पदम् ।

भू—बुभूषति । एध—एदिधिषते ।

७५३ । आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य (१-३-६३) व्याख्यातम् ।

### ९५१ । प्रोपाभ्यां युजेरयज्ञपात्रेषु । (१-३-६४)

प्रयुङ्क्ते, उपयुङ्क्ते, । यज्ञपात्रसम्बन्धे तु—द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति ।

९५२ । **समः क्ष्णुवः** । (१-३-६५) संक्ष्णुते शस्त्रम् ।

## ९५३ । भुजोऽनवने । (१-३-६६)

भुज पालनाभ्यवहारयोः । तत्र पालनभिन्नेऽर्थे आत्मनेपदम् । **यथा**—ओदनं भुङ्क्ते । भोगान् भुङ्क्ते । पालने तु—राजा महीं भुनक्ति ।

'बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्' ।

इति कालिदासप्रयोगे तु अनुभोगोऽर्थो न तु रक्षणम् ।

'कृतसीतापरित्यागः स रत्नाकरमेखलाम्' ।

इति पूर्वार्धेन तस्यैवार्थस्य तत्र विवक्षा स्पष्टीकृता ॥

## ९५४ । णेरणौ यत्कर्म णौ चेत् स कर्तानाध्याने । (१-३-६७)

णिचश्चेति कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम् । अकर्त्रभिप्रायार्थमारम्भः । ण्यन्तादात्मनेपदं स्यात् अणौ यत् कर्मकारकं स एव णौ कर्ता भवति चेत् । न तु उत्कण्ठापूर्वकस्मरणे । यथा—

आरोहन्ति हस्तिनं हस्तिपकाः । आरोहयते हस्ती स्वयमेव । उपसिञ्चन्ति हस्तिनं हस्तिपकाः । उपसेचयते हस्ती स्वयमेव । पश्यन्ति भृत्याः राजनम् । दर्शयते राजा स्वयमेव ।

**प्रत्यु०**—('अनाध्याने' किम् ?) स्मरति वनगुल्मस्य शुकः । स्मरयत्येनं वनगुल्मः स्वयमेव ।

ननु सिद्धमिदं 'कर्मवत् कर्मणा तुल्यक्रियः' इति कर्मद्भावेन इति चेत्, न । कर्मस्थक्रियाणां कर्मस्थभावानां चैव कर्मवद्भावो भवति । कर्तृस्थक्रियाणां कर्तृस्थभावानां च सिद्ध्यर्थमिदम् ॥

## ९५५ । भीस्म्योर्हेतुभये । (१-३-६८)

णेरित्येव । अत्रैव विषये षुक् आत्वं च विहितम् । यथा—

मुण्डो भीषयते, भापयते । जटिलो विस्मापयते ।

**प्रत्यु०**—('हेतुभये' किम् ?) कुञ्चिकया बालं भाययति । जटाभिर्विस्माययति ।

९५६ । **गृधिवञ्च्योः प्रलम्भने** । (१-३-६९)

णेरित्येव । प्रलम्भनं प्रतारणम् । तत्र ण्यन्तयोरनयोस्तङानौ । यथा—

माणवकं गर्धयते । वञ्चयते ।

प्रत्यु०—('प्रलम्भने' किम्?) श्वानं गर्धयति—अभिकाङ्क्षामुत्पादयतीत्यर्थः। अहिं वञ्चयति। वर्जयतीत्यर्थः।

९५७। **लियः सम्माननशालीनीकरणयोश्च**। (१-३-७०)

जटाभिरालापयते—पूजां लभत इत्यर्थः। श्येनो वर्तिकामुल्लापयते—न्यग्भावयतीत्यर्थः। कस्त्वामुल्लापयते—वञ्चयतीत्यर्थः।

९५८। **मिथ्योपपदात् कृञोऽभ्यासे**। (१-३-७१)

पदं मिथ्या कारयते—स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः।

'**स्वरितञितः कर्त्रभिप्राये क्रियाफले**' (१-३-७२) व्याख्यातम्॥

## ९५९। अपाद्वदः। (१-३-७३)

**कर्त्रभिप्राये क्रियाफले आत्मनेपदम्। यथा—**

धनकामो न्यायमपवदते—न्यायापवादेन धनमर्जयामीति मन्यत इत्यर्थः।

## ९६०। णिचश्च। (१-३-७४)

**कर्त्रभिप्राये क्रियाफले आत्मनेपदम्। यथा—**

(स्वयं) भोक्तुमोदनं पाचयते। ब्राह्मणान् भोजयितुं पाचयति।

## ९६१। समुदाङ्भ्यो यमोऽग्रन्थे। (१-३-७५)

व्रीहीन् संयच्छते। भारमुद्यच्छते। ग्रन्थे तु उद्यच्छति वेदं—अधिगन्तुमुद्यमं करोतीत्यर्थः।

## ९६२। अनुपसर्गाज् ज्ञः। (१-३-७६)

गां जानीते। अश्वं जानीते, उपसृष्टात्तु 'स्वर्गं लोकं न प्रजानाति मूढः' **कर्त्रभिप्राये इत्येव। देवदत्तस्य गां जानाति॥**

## ९६३। विभाषोपपदेन प्रतीयमाने। (१-३-७७)

**'स्वरितञितः' इत्यादिपञ्चसूत्र्या विहितमात्मनेपदं समीपप्रयुक्तेन पदेन क्रियाफलस्य कर्तृगामित्वे द्योतिते वा स्यात्। यथा—**

स्वं यज्ञं यजति, यजते वा। स्वं कटं करोति, कुरुते वा। स्वं पुत्रमपवदति, अपवदते वा इत्यादि।

---

## अथ परमस्मैपदविधिः ॥

### शेषात् कर्तरि परस्मैपदम् । (१-३-७८)

व्याख्यातं (४२१)। उक्तान्यात्मनेपदनिमित्तानि यत्र न विद्यन्ते तत्र परस्मैपदम् ॥

### ९६४ । अनुपराभ्यां कृञः । (१-३-७९)

कर्त्रभिप्राये क्रियाफले गन्धनादिषु च करोतेरात्मनेपदं विहितम् । तत्राप्यनुपराभ्यां परस्मैपदार्थमिदम् । यथा—

अनुकरोति, पराकरोति ।

### ९६५ । अभिप्रत्यतिभ्यः क्षिपः । (१-३-८०)

अभिक्षिपति, प्रतिक्षिपति, अतिक्षिपति ।

### ९६६ । प्राद्वहः । (१-३-८१)

### ९६७ । परेर्मृषः । (१-३-८२)

प्रवहति, परिमृष्यति ।

### ९६८ । व्याङ्परिभ्यो रमः । (१-३-८३)

### ९६९ । उपाच्च । (१-३-८४)

विरमति, आरमति, परिरमति, उपरमति । योगविभाग उत्तरार्थः ।

### ९७० । विभाषाकर्मकात् । (१-३-८५)

उपाद्रमतेरकर्मकाद्विकल्पः । यथा—

उपरमति--उपरमते वा । निवर्तत इत्यर्थः ।

### ९७१ । बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः । (१-३-८६)

ण्यन्तेभ्य एभ्यः कर्तृगामिन्यपि क्रियाफले परस्मैपदम् । यथा—

बोधयति, योधयति, नाशयतीत्यादि ।

### ९७२ । निगरणचलनार्थेभ्यश्च । (१-३-८७)

भक्षणार्थेभ्यश्चलनार्थेभ्यश्च ण्यन्तेभ्यः परस्मैपदम् । यथा—

निगारयति, आशयति, भोजयति । चलयति, कम्पयतीत्यादि ।

९७३ । अणावकर्मकाच्चित्तवत्कर्तृकात् । (१-३-८८)

अण्यन्तो यो धातुरकर्मकश्चेतनकर्तृकश्च तस्माण्ण्यन्तात् परस्मैपदम् । यथा—

आस्ते देवदत्तः, देवदत्तमासयत्यन्यः । शेते बालः, तं माता शाययति ।

९७४ । न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ।
(१-३-८९)

एभ्यो ण्यन्तेभ्यो न परस्मैपदम् । पूर्वसूत्रद्वयेन प्राप्तं निषिध्यते । यथा—पाययते, दमयते इत्यादि ।

९७५ । वा क्यषः । (१-३-९०)

लोहितायति,—लोहितायते । पटपटायति, पटपटायते ।

९७६ । द्युद्भ्यो लुङि । (१-३-९१)

द्युतादिभ्यो लुङि परस्मैपदं वा । परस्मैपदे 'पुषादिद्युतादि....' (४६१) इति च्लेरङ् । यथा—अद्युतत्, अद्योतिष्ट ।

९७७ । वृद्भ्यः स्यसनोः । (१-३-९२)

वृतु, शृधु, स्यन्दू, वृधु इत्येतेभ्यो वृतादिभ्यः स्यसनोर्वा परस्मैपदम् । परस्मैपदे एषामिण्निषेधश्चोक्तः 'न वृद्भ्यश्चतुर्भ्यः' (६५८) । यथा—वर्त्स्यति, अवर्त्स्यत्, विवृत्सति । वर्तिष्यते, अवर्तिष्यत, विवर्तिषते ।

९७८ । लुटि च क्लृपः । (१-३-९३)

लुटि स्यसनोश्च क्लृपेः परस्मैपदं वा । 'तासि च क्लृपः' (६५९) इति परस्मैपदे इण्निषेधश्चास्ति । यथा—

कल्प्ता, कल्प्स्यति अकल्प्स्यत्, चिक्लृप्सति ।
कल्पिता, कल्पिष्यते, अकल्पिष्यत, चिकल्पिषते ।

(प्रचारलोपात् प्रचुराच्च कालात् पदव्यवस्थाविधयोऽत्र केचित् ।
कृच्छ्रात् समुन्नेयविवक्षितार्था जाताः, कथञ्चिद्विवृतास्तथापि ॥)

# ॥ कृत्प्रकरणम् ॥



धातुभ्य: किल द्विविधा: प्रत्यया उत्पद्यन्ते—तिङ: कृतश्चेति। तथा च सूत्रम्—

### ९७९ । धातो: । (३-१-९१)

अधिकारोऽयं तृतीयाध्यायसमाप्तौ 'लस्य' इत्यधिकारपर्यन्तम् ॥

### ९८० । तत्रोपपदं सप्तमीस्थम् । (३-१-९२)

तत्र एतस्मिन् धात्वधिकारे यत् सप्तमीनिर्दिष्टं तद्वाचकमुपपदसंज्ञं स्यात् । समीपे प्रयोक्तव्यं समर्थं[1] पदमुपपदमित्युच्यते । तच्च धात्वधिकारे सप्तम्या निर्दिश्यत इति सूत्रस्यार्थ: । तत्र च कृत्प्रत्ययविधिषु उपपदानां धातुभि: सह समासो वक्ष्यते 'उपपदमतिङ्' इति । तिङा तु वाक्यमेव ॥

### ९८१ । कृदतिङ् । (३-१-९३)

धात्वधिकारे तिङ्वर्जित: प्रत्यय: कृत्संज्ञ: स्यात् । तिङ्शब्देन च तत्स्थानिनो लकारा विवक्षिता: । एवं च धात्वधिकारे लकारा कृत्प्रत्ययाश्चैव विधीयन्ते। अधिकारात् बहिस्तु धातोर्धात्वन्तरनिष्पादका 'संश्च क्यच्क्यङ्क्यष........' इति परिगणिता एकादश प्रत्यया:, शबादीनि विकरणानि, स्यतासादीनि संस्करणानि च विहितानि ॥

### ९८२ । वासरूपोऽस्त्रियाम् । (३-१-९४)

वा असरूप इति च्छेद:, । सरूप: समानरूप: । केनेत्याकाङ्क्षायाम् अर्थादुत्सर्गेणेति सिध्यति । अस्मिन् धात्वधिकारे भिन्नरूपोऽपवाद प्रत्ययो विकल्पेनैव उत्सर्गं बाधते 'स्त्रियाम्' इत्यधिकारं वर्जयित्वा

---

१. समर्थं = सङ्गतार्थं = सान्वयम् ।

प्रक्रियाकार्यसम्पादनार्थं समानाकृतिरेवापवादः कदाचिदनुबन्धभेदेन यत्र निबध्यते तत्रैवोत्सर्गापवादन्यायः सञ्चारणीयो न तु भिन्नाकाराणां प्रत्ययानां विधिष्वित्यर्थः । यथा—अत्र धात्वधिकारे कृत्यसंज्ञकाः तव्य, अनीयर्, यत्, ण्यत्, क्यप् इति पञ्च प्रत्यया एकस्मिन्नेव निमित्ते विधीयन्ते । तत्र तव्यानीयरौ (भिन्नरूपौ) यत् - ण्यत् - क्यप्सु (सरूपेषु) यथाप्राप्तमेकतमश्च सर्वेभ्योऽपि धातुभ्यो भवेयुः । तव्यस्यानीयर् न बाधकः, नापि तयोर्यत् - ण्यत् - क्यप्स्वेकः, एकैकस्यापि भिन्नरूपत्वात् । यत् - ण्यत् - क्यपस्तु सरूपत्वादुत्सर्गस्य बाधका एव । तथा च कृधातोः—कर्तव्य, करणीय, कार्य (ण्यत्) इति त्रयः कृत्यप्रत्यया भवन्ति । नीधातोः नेतव्य, नयनीय, नेय (यत्) इति त्रयः इत्यादि । यथा सिद्धाश्रमेष्वहिनकुलादयो नैसर्गिकं विरोधमुत्सृज्य सहैकत्र समाविशन्ति तथा धात्वधिकारे उत्सर्गापवादावपीति फलितम् ॥

इह किल क्रियाया अवस्थाभेदा भवन्ति । यथा—

१. पश्याश्वो धावति ।
२. पश्य धावन्तमश्वम् ।
३. पश्याश्वो धावित्वा मुद्गमश्नाति ।
४. पश्याश्वो धावितुं कर्णपुटमायच्छते ।
५. पश्य धावनमश्वस्य ।
६. पश्य धावितुरश्वस्य गतिवेगम् ।

एषु प्रथमवाक्ये धावनक्रिया प्राधान्येन स्वातन्त्र्येण च विशेष्यतया अवभासते । द्वितीयतृतीयचतुर्थेष्वपि प्राधान्यस्य न महती क्षतिः, किन्तु न स्वातन्त्र्येण प्रतिभानम् । द्वितीये 'अश्वम्' इति नामपदस्य, तृतीयचतुर्थयोः 'अश्नाति' 'आयच्छते' इति क्रियापदस्य च विशेषणीभावेन तदर्थे न्यग्भावात् । पञ्चमषष्ठयोः पुनः धावनक्रियायाः क्रियात्वमेव तिरोहितम् । वाक्ययोरनयोः श्रवणे पूर्ववाक्यानां श्रवण इव अश्वेन कृतं पादानामायमनं, तेषां पुरःपुरः प्रक्षेपः, तेन च व्यापारेण क्रमशो देशाक्रमणं च प्रत्यक्षमुपलभ्यमानमिव मनसि प्रत्यायकमनुभवं नाङ्कुरयति, किंतु सिद्धां पूर्वानुभवसंस्काररूपिणीं धावनक्रिया-

स्मृतिमेवोत्थापयति । उक्तदृष्टान्तानुरोधेन क्रियाया द्वे अवस्थे भवतः—धावति, धावन्तं, धावित्वा, धावितुं इतिवत् निष्पाद्यमानताप्रतीतिकारिणी एका । 'धावनं' 'धावितुः' इतिवत् सिद्धवस्तुप्रतीतिकारिणी अन्या । अनयोः प्रथमा साध्या, द्वितीया सिद्धा चेत्युच्यते । उक्तं च हरिणा—

"यावत् सिद्धमसिद्धं वा साध्यत्वेन प्रतीयते ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥"

इति । सिद्धं = निष्पन्नं = भूतकालसंयोगि । असिद्धम् = अनिष्पन्नं = भाविकालसंयोगि । साध्यं = निष्पाद्यमानावस्थम् । भूतं वा भविष्यद्वा भवतु यावत् किञ्चित् कर्म निष्पाद्यमानावस्थायां ज्ञानविषयीभवति, तावत्पर्यन्तं तत् (कर्म) क्रियाव्यपदेशमर्हति । तत्र च हेतुः 'आश्रितक्रमरूपत्वात्' इति । तावत्पर्यन्तमेव हि जले वीचीतरङ्गाणामिव पुरःपुरः प्रसरतामवान्तरव्यापाराणां परम्परात्मकतया तस्य (कर्मणः) प्रतीतिर्भवति ॥

एवं साध्या सिद्धा चेति क्रियाया भेदद्वये साध्यायाः द्वौ प्रभेदौ । 'धावन्तम्' इतिवत् नामपदानां, 'धावित्वा,' 'धावितुम्' इतिवत् क्रियान्तरस्य वा विशेषणमेकः । 'धावति' इतिवत् विशेष्यमन्य इति । सिद्धाया अपि द्वौ प्रभेदौ । 'धावनम्' इतिवत् भावात्मना प्रतीतिरेकस्य । 'धावितुः' इतिवत् कारकमुखेन प्रतीतिरन्यस्येति । एतावता लब्धः क्रियाविभागः पट्टिकया संगृह्यते—

- क्रिया
  - साध्या
    - विशेष्यम् = आख्यातम्
    - विशेषणम् = आख्यातकम्
      - नामविशेषणम्
      - क्रियाविशेषणम्
  - सिद्धा
    - भावरूपा
    - कारकाङ्गरूपा

एषु प्रभेदेषु साध्यविशेष्यक्रियावाचकस्य पदस्य 'आख्यातम्' इति पूर्वैः संज्ञा कृता । साध्यविशेषणक्रियावाचकस्य 'आख्यातकम्' इति संज्ञा क्रियते । आख्यातवर्जमन्ये कृत्संज्ञाः । यस्यां वाक्यार्थविश्रान्तिः, सैव क्रिया स्वतन्त्रविशेष्यत्वेन प्रतिभायादिति साध्यविशेष्यक्रियावाचिनो लकाराः सर्वेऽपि । आख्यातमिवाख्यातकम् इति व्युत्पत्त्या नामक्रियाविशेषणीभूतमाख्यातमेवाख्यातकम् । तथा च एकैकस्याप्याख्यातस्य आख्यातकरूपमस्ति । यथा—

| आख्यातम् । | आख्यातकम् । | | | |
|---|---|---|---|---|
| अश्वो धावति | धावन्नश्वः | — | कर्तरि | लट् । |
| अश्व आरुह्यते | आरुह्यमाणोऽश्वः | — | कर्मणि | |
| अश्वो धाविष्यति | धाविष्यन्नश्वः | — | कर्तरि | लृट् । |
| अश्व आरोक्ष्यते | आरोक्ष्यमाणोऽश्वः | — | कर्मणि | |
| अश्व आससाद | आसेदिवानश्वः | — | कर्तरि | लिट् । |
| अश्वोऽधावीत् | धावितवानश्वः | — | कर्तरि | लुङ् । |
| अश्वेन रथोऽभञ्जि | अश्वेन भग्नो रथः | — | कर्मणि | |
| अश्व आरुह्येत | आरोढव्योऽश्वः | — | कर्मणि | लिङ् । |
| सुखं तीर्यतां नदी | सुतरा नदी | — | कर्मणि | लोट् । |

एवं नवसु लकारेषु षण्णामाख्यातकरूपाणि सन्ति । लङ्-लुट्-लृङां त्रयाणां परं न सन्ति । लिटः कर्मणि, लिङ्लोटोः कर्तरि चाख्यातकानि न सन्ति । भावे तु विरलमेवाख्यातकरूपम् । एषु लट्-लिट्-लृटामाख्यातकानि तेषां लकाराणामादेशा एव । अन्येषां लुङ्-लिङ्-लोटां तु आख्यातकानि तेषां लकाराणां स्थानमात्रं वहन्ति ॥

उक्तो विभागो नामविशेषणानामाख्यातकानाम् । क्रियाविशेषणानां तु लुङ्स्थानीयं लट्स्थानीयमिति द्विविध एव भेदः । यथा—

| आख्यातम् । | आख्यातकम् । | |
|---|---|---|
| भोक्ष्य इति व्रजति । | भोक्तुं व्रजति । | कर्तरि । |
| पूर्वम् अभुक्त ततो व्रजति । | भुक्त्वा व्रजति । | |
| अश्व आरोक्ष्यते इत्यलंक्रियते । | अश्व आरोढुमलंक्रियते | कर्मणि । |
| अश्वः पूर्वमलमकारि तत आरुह्यते । | अश्वोऽलंकृत्यारुह्यते । | |

तेषां कर्तरिप्रयोगे कर्मणिप्रयोगे च रूपभेदोऽपि नास्तीत्युदाहरणे स्पष्टम् ।

आख्यातकानि कृत्प्रत्ययान्तत्वेन प्रातिपदिकत्वात् सुबन्तानि । तेषु नामविशेषणानां विशेष्यभूतनामानुरोधेन लिङ्गविभक्तिवचनानि भवन्ति । क्रियाविशेषणानि तु विशेष्यभूतायाः क्रियाया लिङ्गाद्ययोगादव्ययानि, अव्ययत्वे च सुपां लुग्भवति ॥

एवमनेकधा दर्शितविभागान् प्रत्ययान् अक्षरलाघवमात्रदत्तदृष्टिः पाणिनिः 'कृदतिङ्' इति प्रक्रियासम्पादनार्थं एकमेव विभागं परिकल्प्य व्यामिश्रमेव विदधाति धात्वधिकारे । अतोऽत्र सूत्राणामानुपूर्व्या व्याख्यानं सुकरमप्युपेक्ष्य उक्तविभागानुसारेणैव तेषां विवरणमस्माभिरारभ्यते । प्रथमं साध्यक्रियावाचिन आख्यातककृत्प्रत्ययाः । तदनन्तरं सिद्धक्रियावाचिषु कारककृत्प्रत्ययाः । ततश्च भावकृत्प्रत्यया इति क्रमो भविष्यति ॥

आचार्येणाधिकारान्ते कथितामर्थव्यवस्थामप्युक्त्वा यथाप्रतिज्ञातं प्रत्ययान् विधास्यामः ॥

---

## कृतामर्थव्यवस्था ॥

### ९८३ । कर्तरि कृत् । (३-४-६७)

कृत्प्रत्ययः कर्तर्यर्थे स्यादित्युत्सर्गः ॥

**९८४ । भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा । (३-४-६८)**

भव्यादयः शब्दाः कृत्यप्रत्ययान्तत्वात् 'तयोरेव कृत्यक्तखलर्थाः' इति वक्ष्यमाणेन सूत्रेण भावकर्मणोरेव प्राप्ताः । ते कर्तर्यर्थेऽपि विकल्पेन स्युरित्यनेन विधीयते । भवनकर्ता भव्यः । गानकर्ता गेय इत्यादि ॥

**लः कर्मणि च भावे चाकर्मकेभ्यः । (३-४-६९)**

व्याख्यातम् (४१४)

**९८५ । तयोरेव कृत्यक्तखलर्थाः । (३-४-७०)**

तयोर्भावकर्मणोरेव कृत्यप्रत्ययाः, क्तप्रत्ययः, खलर्थप्रत्ययाश्च । लिङ्स्थानीयाः कृत्यप्रत्ययाः, लुङ्स्थानीयः क्तप्रत्ययः, लोट्स्थानीयाः खलर्थाः । एषां कर्तरिप्रयोगो न । तथा च दर्शितमाख्याताख्यातकयोर्भेद-कथने 'आरोढव्योऽश्व' इत्यादि ॥

**९८६ । आदिकर्मणि क्तः कर्तरि च । (३-४-७१)**

आदिकर्मणि विहितः क्तप्रत्ययः कर्तर्यपि स्यात् । विधिस्थल एवोदाहरिष्यामः ॥

**९८७ । गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च । (३-४-७२)**

गत्यर्थेभ्योऽकर्मकेभ्यः श्लिषादिभ्यश्च क्तप्रत्ययः कर्तर्यपि स्यात् । यथा—

| | |
|---|---|
| गतो रामं देवदत्तः—कर्तरि । | ग्लानं कुसुमम्......कर्तरि । |
| गतो ग्रामो देवदत्तेन—कर्मणि । | ग्लानं कुसुमेन......भावे । |

स्थासवसादयोऽकर्मका अपि उपसर्गयोगेन सकर्मका अपि भवेयुरिति तेषां पृथग्ग्रहणम् ।

| | |
|---|---|
| उपस्थितो गुरुं शिष्यः—कर्तरि । | उपस्थितो गुरुः शिष्येण—कर्मणि । |

एवमन्येऽप्युदाहार्याः ।

९८८ । **दाशगोघ्नौ संप्रदाने** । (३-४-७३)

एतौ संप्रदानकारकेऽर्थे स्याताम् । यथा—

दाशन्त्यस्मै इति दाशः । गौर्हन्यते अस्मै इति गोघ्नोऽतिथिरुच्यते ।

९८९ । **भीमादयोऽपादाने** । (३-४-७४)

भीमादयोऽपादाने कारके स्युः । यथा—बिभ्यत्यस्मादिति भीमः, भयानकः, भीष्मः । भवन्त्यस्मा इति भूमिः । संक्रन्दन्त्यस्माच्छत्रव इति सक्रन्दनः इत्यादि ॥

## ९९० । ताभ्यामन्यत्रोणादयः । (३-४-७५)

ताभ्यां संप्रदानापादानाभ्यामन्यत्र कारके उणादयः प्रत्ययाः स्युः। नामानि सर्वाण्यपि धातोरुत्पन्नानीति वदतां शाकटायनादीनां मते 'उण्'-प्रभृतिभिः प्रत्ययैर्नामानि निरुच्यन्ते। ते प्रत्ययाः संप्रदानापादान-भिन्नेषु कर्तृकर्मकरणाधिकरणेषु कारकेष्वेव भवेयुः । संप्रदानापादानयो-र्दूरान्तरितः सम्बन्ध इति तयोर्विरला एव प्रत्यया इत्यभिप्रायः ॥

## ९९१ । क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः । (३-४-७६)

ध्रौव्यार्थाः = अकर्मकाः । प्रत्यवसानार्थाः भुक्त्यर्थाः । अकर्मके-भ्यो गत्यर्थेभ्यो भुक्त्यर्थेभ्यश्च क्तप्रत्ययोऽधिकरणेऽपि स्यात् । पक्षे यथा-प्राप्तमकर्मकेभ्यः कर्तृभावयोः, गत्यर्थेभ्यः कर्तृकर्मभावेषु, भुक्त्यर्थेभ्यो भावकर्मणोश्च । यथा—

"मुकुन्दस्यासितमिदं—यत्रास्ते मुकुन्दस्तत् स्थलम् ।
इदं यातं रमापतेः—यत्र गच्छति ,, ,,
भुक्तमेतदनन्तस्य—यत्र भुङ्क्ते ,, ,,
इत्यूचुर्गोप्यो दिदृक्षवः" ।

## आख्यातकानि ॥

वर्तमाने लट् (३-२-१२३) इति लड्विधानानन्तरमेव तस्यादेशमपि विदधात्याचार्यः—

९९२ । लटः शतृशानचावप्रथमासमानाधिकरणे । (३-२-१२४)

'अप्रथमासमानाधिकरणे' इत्यस्य विशेष्यं 'लड्वाच्यकारके' इत्यध्याह्रियते । लटः शतृ इति शानच् इति चादेशौ स्तः । लड्वाच्ये कारके (कर्तरि कर्मणि वा) अप्रथमान्तेन (युष्मदा अस्मदा शेषेण वा) समानाधिकरणे सति । स्ववाच्यकारकस्य प्रथमान्तसामानाधिकरण्ये लटः तिङो विहिताः । तदन्यसामानाधिकरण्ये शतृशानचौ विधीयेते । 'युष्मद्युपपदे........' इत्यादित्रिसूत्र्या उपपदभूतेनैव प्रथमान्तेन सामानाधिकरण्ये तिङां प्रवृत्तिः । तादृगेव सामानाधिकरण्यमत्रापि निषिध्यते । अतोऽनुपपदभूतेन प्रथमान्तेनापि सामानाधिकरण्ये शतृशानचौ प्रवर्तेते एव । अथोपपदत्वं प्रथमान्तस्य कदा स्यादिति विचारयामः । समीपे साकाङ्क्षमवश्यं प्रयोक्तव्यं पदं ह्युपपदमित्युच्यते । लकारेण सामान्यत एव कर्ता कर्म वा कारकमभिधीयते । तद्विशेषप्रतिपत्तये पुनः समानाधिकरणं प्रथमान्तमपेक्षितम् । यथा 'देवदत्तः पचति' इत्यत्र लड्वाच्यस्य कर्तुः 'देवदत्तः' इति प्रथमान्तस्य च सामान्यविशेषभावेनाभेदान्वयः । अतश्च 'देवदत्त' इति प्रथमान्तेन सामानाधिकरण्ये पचतीति लटस्तिङ् । 'पचन् देवदत्तः स्थालीमभाङ्क्षीत्' इत्यादौ तु 'देवदत्त' इति प्रथमान्तस्य 'अभाङ्क्षीत्' इति लुङ्वाच्यकर्त्रा सहैव सामान्यविशेषभावेन सामानाधिकरण्यम्, न तु 'पचन्' इत्यनेन । तस्य 'देवदत्त' इत्यनेन सह 'नीलमुत्पलम्' इत्यादिवत् विशेषणविशेष्यभावेनैव सामानाधिकरण्यम् । यस्य सामान्यविशेषभावेन लकारवाच्यकारकेण सह सामानाधिकरण्यं तदेव प्रथमान्तमुपपदं भवति ।

तत्रैव च लटस्तिङादेशः । अन्यत्र विशेषणविशेष्यभावेन प्रथमान्त-सामानाधिकरण्येऽपि शतृशानजादेशावेव । अस्मिंश्च व्याख्याने—

### ९९३ । संबोधने च । (३-२-१२५)

इति सम्बोधनविषयेऽपि शतृशानज्विधायकमुत्तरसूत्रम् 'ब्रूहि विद्वन्' इत्यादिवत् समानाधिकरणं पदं विनापि शतृशानजन्तानां क्वचित् प्रयोग-सिद्ध्यर्थम् । 'सम्बोधने' इत्यस्योपलक्षणार्थकत्वात् 'विद्वानेव विजानाति' इत्यादिवत् अन्यत्रापि प्रयोगः । 'विदेः शतुर्वसुः' इति वक्ष्यमाणोऽत्र शतृप्रत्ययस्य वस्वादेशः ॥

शतृशानचोः शकार इत् सार्वधातुकत्वार्थः । ऋकार उगित्त्वेन 'उगिदचाम्........' इति सर्वनामस्थाने नुमः, 'उगितश्च' इति स्त्रियां ङीपश्च सिद्ध्यर्थः । इतां लोपे 'अत्' 'आन' इति प्रत्ययस्वरूपम् । 'तङानावात्मनेपदम्' इत्युक्तः 'शानच्' आत्मनेपदं, शेषत्वात् शता परस्मैपदं च । प्रथमासामानाधिकरण्याभावात् पुरुषविभागस्य नावकाशः । शतृशानचोः स्थानिवद्भावेन लटत्त्वादनलाश्रयाणि सर्वाणि लट्-कार्याणि भवन्ति ॥

भू—परस्मैपदित्वात् शतृप्रत्ययः, कर्तरि शप्, 'अतो गुणे' इति पररूपं, गुणावादेशौ—'भवत्' इति शत्रन्तरूपसिद्धिः । अस्य पुंस्त्वविवक्षायाम् 'उगिदचाम्....' इति सर्वनामस्थाने नुम् । भवन् भवन्तौ भवन्तः । भवन्तं भवन्तौ भवतः इत्यादि विशेष्यानुरोधेन विभक्तयः । स्त्रियाम् 'उगितश्च' इति ङीप्, आच्छीनद्योर्नुम् 'शप्श्यनोर्नित्यम्' इति नित्यं भवति । भवन्ती भवन्त्यौ भवन्त्यः इत्यादि । क्लीबे भवत् भवती भवन्ति इत्यादि । एवं पचन्नित्यादि—

पचन्नास्ते देवदत्तः ।
पचन्तं पश्य देवदत्तम् ।
पचता भग्ना स्थाली देवदत्तेन ।
पचते देहि भृतिं देवदत्ताय ।
पचतो लब्धमन्नं देवदत्तात् ।
पचतः शृणु गानं देवदत्तस्य ।
पचति रज्यते कन्या देवदत्ते ।
पचन्नोदनं देहि देवदत्त ।

इत्यादिवदूह्यमप्रथमासामानाधिकरण्यम् ॥

आचक्षाण (अदादि), जुह्वत् (जुहोत्यादि), रुन्धत् रुन्धान (रुधादि), कुर्वत् कुर्वाण (तनादि), इत्यादि विकरणभेदा उदाहार्याः । अनुक्तचरी परं प्रक्रिया प्रदर्श्यते—

९९४ । आने मुक् (अतः) । (७-२-८२)

अदन्ताङ्गस्य मुगागम आनप्रत्यये परे । अनेन शप्श्यन्शविकरणेषु अङ्गस्यादन्तत्वान्मुक् । यथा—

एध—एधमानः । व्याप्रि—व्याप्रियमाणः । पच—पचमानः इत्यादि ।

९९५ । ईदासः । (७-२-८३)

आसधातोः परस्य आनस्य ईदादेशः । 'आदेः परस्य' इति आकारस्य ईत्वम् । आस्—आसीनः ।

९९६ । विदेः शतुर्वसुः (वा) । (७-१-३६)

विद ज्ञाने इत्यस्माच्छतृप्रत्ययस्य वस् इत्यादेशो वा ।

विद्वस्—विद्वन्, विद्वान्—विदती, विदुषी ।

कर्मणि लट आत्मनेपदत्वात् शानजेव ।

पच्यमान, क्रियमाण, रुध्यमान, उच्यमान इत्यादीनि रूपाणि ।

९९७ । लक्षणहेत्वोः क्रियायाः । (३-२-१२६)

क्रियाया लक्षणे हेतौ वा द्योत्येऽपि लटश्शतृशानचौ । अधिकार्थद्योतनविधानार्थमारम्भः । यथा—

लक्षणे—शयाना भुञ्जते यवनाः—अत्र शयनं लक्षणं भोजनस्य । हेतौ अर्जयन् वसति—अत्रार्जनं हेतुर्वासस्य ।

९९८ । तौ सत् । (३-२-१२७)

तौ शतृशानचौ सत्संज्ञौ स्तः ॥

अथ लृडादेशः—"लटश्लेषे च" इति लड्विध्यनन्तरं सूत्रम्—

९९९ । लृटः सद्वा । (३-३-१४)

लृटः सदाख्यौ शतृशानचौ वा स्तः । व्यवस्थितविभाषेयम् । तेन लडादेशवत् अप्रथमासामानाधिकरण्ये लक्षणहेत्वोश्च नित्यम् । लृडादेशत्वात् स्यप्रत्ययो विकरणम् ।

पठिष्यन् गच्छति देवदत्तः । पठिष्यन्तमानय देवदत्तम् । पठिष्यन् वसति नगरे देवदत्तः । एधिष्यमाणं पश्य वृक्षं, छेत्स्यमानमित्यादि ।

अथ लिडादेशः—

**१००० । छन्दसि लिट् । (३-२-१०५)**

**१००१ । लिटः कानज्वा । (३-२-१०६)**

**१००२ । क्वसुश्च । (३-२-१०७)**

भूतसामान्ये धातोर्लिट् छन्दसि तस्य पूर्वोक्तवदप्रथमासामानाधिकरण्ये क्वसुकानचौ । तत्र 'तङानावात्मनेपदम्' इति कानजात्मनेपदम् । क्वसुस्तु शेषत्वात् परस्मैपदम् । एष लिट् तदादेशौ च छन्दस्येव पाणिनेरभिमतौ । कवयस्तु लोकेऽपि क्वसुं यथेच्छं प्रयुञ्जते—

'तं तस्थिवांसं नगरोपकण्ठे'—'श्रेयांसि सर्वाण्यधिजग्मुषस्ते' इत्यादि ।

लिडादेशत्वात् द्वित्वम्, इट्, एत्वाभ्यासलोपौ च । यथा—

कृ—चकृवस् चक्राणः चकृवान् चक्रुषी चकृवत् चक्राणा ।
भू—बभूवस् बभूवान् बभूवुषी बभूवत् ।
पच—पेचिवस् पेचिवान् पेचुषी पेचिवत् ।
सु—सुषुवाणः । चि—चिक्यानः ।
दा—ददिवस्—ददिवान् ददुषी ददिवत् ददानः ददाना ।

**१००३ । भाषायां सदवसश्रुवः । (३-२-१०८)**

एभ्यो लिटि भाषायां क्वसुः । सेदिवस्, ऊषिवस्, शुश्रुवस् । उक्तमेव ह्यन्येभ्योऽपि कवयः प्रयुञ्जत इति ॥

**१००४ । उपेयिवाननाश्वाननूचानश्च । (३-२-१०९)**

एते प्रक्रियाविशेषप्रापणाय निपात्यन्ते । यथा—

उप + इण्—उपेयिवान् । न + अश् = अनाश्वान् ।
अनु + वच्—अनूचानः । वेदानुवचनं कृतवान् अनूचान इत्युच्यते ।

भावकर्मणोर्लिडादेशो न दृश्यते ॥

अथ लुङ्स्थानीया निष्ठा—

१००५। क्तक्तवतू निष्ठा। (१-१-२६)

क्तश्च क्तवतुश्च निष्ठासंज्ञः स्यादिति संज्ञाध्याये निष्ठासंज्ञा विहिता। अथ धात्वधिकारे प्रकृते 'भूते' इत्यनुवर्तमाने—

१००६। निष्ठा। (३-२-१०२)

भूतसामान्यार्थवृत्तेर्धातोः क्त-क्तवतू भवतः। लङ्-लिड्-लट्स्विव विकरणादिकार्याणामनपेक्षया निष्ठां लकारादेशं न कृतवानाचार्यः। लादेशत्वं यद्यपैक्षिष्यत तर्हि लुङादेशत्वमस्य प्राप्स्यदिति लुङ्स्थानीयेयं कल्पितास्माभिः। अप्रथमासामानाधिकरण्य एव निष्ठापि भवति। प्रथमासामानाधिकरण्ये तु लुङ एवावकाशः। अनयोः क्तप्रत्ययः सामान्येन भावकर्मणोः, गत्यर्थेभ्योऽकर्मकेभ्यश्च कर्तर्यपि। क्तवतुस्तु कर्तर्येव इत्याद्यर्थव्यवस्था पूर्वोक्तात्रानुसन्धेयां। यथा—

भू—भूतः,-ता,-तम्। एध—एधितः,-धिता,-धितम्।

| | |
|---|---|
| ग्रन्थं कृतवान् कालिदासः—कर्तरि। | शयितो बालः—कर्तरि। |
| कालिदासेन कृतो ग्रन्थः—कर्मणि। | शयितं बालेन—भावे। |
| ग्रामं गतो देवदत्तः —कर्तरि। | जृम्भितमसूयया— ,, |
| गतो ग्रामो देवदत्तेन —कर्मणि। | |

'श्र्युकः किति' (६७३) इति इण्निषेधः—श्रित, भूत, कृत।
'यस्य विभाषा' (६७६) इति इण्निषेधः—धूत, वृद्ध, गूढ।

इत्यादयः प्रक्रिया अत्र स्मर्तव्याः। नवीना अप्युच्यन्ते—

१००७। द्यतिस्यतिमास्थामित्ति किति। (७-४-४०)

एषाम् इकारोऽन्तादेशः स्यात् तादौ किति प्रत्यये परे। यथा—

| | क्त | क्तवतु | क्त्वा | क्तिन् |
|---|---|---|---|---|
| दो अवखण्डने— | दित, | दितवत् | दित्वा | दितिः। |

| | क्त | क्तवतु | क्त्वा | क्तिन् |
|---|---|---|---|---|
| सो अन्तकर्मणि– | सित, | सितवत् | सित्वा | सितिः । |
| मा माने — | मित, | मितवत् | मित्वा | मितिः । |
| स्था गतिनिवृत्तौ– | स्थित, | स्थितवत् | स्थित्वा | स्थितिः । |

१००८ । शाच्छोरन्यतरस्याम् । (७-४-४१)

अनयोः पूर्वोक्तं वा । यथा—शित, शात । छित, छात ।

१००९ । दधातेर्हिः । (७-४-४२)

ति कितीत्येव । यथा—हित, हितवत् । हित्वा, हिति ।

१०१० । जहातेश्च क्त्वि । (७-४-४३)

हित्वा । जिहीतेस्तु—हात्वा ।

१०११ । दो दद्घोः । (७-४-४६)

घुसंज्ञस्य दाधातोर्दद् इत्यादेशः तादौ किति । यथा—

दत्त, दत्तवत् । दत्त्वा, दत्तिः ।

घोरित्युक्तेः—दाप् लवने इत्यस्य दातं बर्हिः । दैप् शोधने—अवदातं मुखम् इत्येव ।

१०१२ । अच उपसर्गात्तः । (७-४-४७)

अजन्तादुपसर्गात् परस्य घुसंज्ञस्य दाधातोः त इत्यादेशः तादौ किति । ददादेशापवादोऽयम् । अकार उच्चारणार्थः । त् इत्येवादेशः । यथा—प्र + दात = प्रत्त । अव + दात = अवत्त । आ + दात = आत्त ।

"अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥"[1]

अथ नत्वविधिरसिद्धकाण्डोक्तः—

१०१३ । रदाभ्यां निष्ठातो नः पूर्वस्य च दः । (८-२-४२)

---

१. इगन्तोपसर्गस्य तु तादेशे कृते 'दस्ति' (६-३-१२४) इति दीर्घो भवति । नीत्त, सूत्त इत्यादिकमुदाहरणम् ।

रेफदकाराभ्यां परस्य निष्ठातकारस्य नकारः स्यात् निष्ठापेक्षया पूर्वस्य धातुदकारस्य च । स्वतो रेफान्तधातूनां सेट्त्वेन रेफात् परस्य तकारस्य असम्भवात् ॠकारान्तधातव एवात्रोदाहरणम् । ते च 'ॠत इद्धातोः' इति इदादेशे रपरे रेफान्ता भवेयुः । यथा—

कॄ—किर्—कीर्ण　कीर्णवत्　'हलि च' इत्यपधादीर्घः ।
गॄ—गिर्—गीर्ण　गीर्णवत्　"　"
पॄ—पुर्—('उदोष्ठ्यपूर्वस्य') पूर्ण—पूर्णवत् ।
भिद्—भिन्न—भिन्नवत् । छिद्—छिन्न–छिन्नवत् । सेटां तु इटा व्यवधानात्–चर—चरित, मुद—मुदित इत्येव ।

## १०१४ । संयोगादेरातो धातोर्यण्वतः । (८-२-४३)

संयोगादिर्यो धातुराकारान्तो यण्सहितश्च तस्मात् परस्य निष्ठातकारस्य नकारः । यथा—

द्रा—विद्राण—विद्राणवत् ।　ग्लै—ग्लान—ग्लानवत् ।
म्ला—म्लान—म्लानवत् ।　श्या—श्यान—श्यानवत् ।
प्रत्यु०—('यण्वतः' किम् ?)　स्ना—स्नात—स्नातवत् ।
('संयोगादेः' किम् ?)　या—यात—यातवत् ।

## १०१५ । ल्वादिभ्यः । (८-२-४४)

एभ्यो निष्ठातकारस्य नः । यथा—

लू—लून, लूनवत् ।　धू—धून, धूनवत् ।

## १०१६ । ओदितश्च । (८-२-४५)

ओ लज्जी—लग्न, लग्नवत् ।　भुजो —भुग्न, भुग्नवत् ।
ओ विजी—विग्न, विग्नवत् ।　ओ हाक्—हीन, हीनवत् ।
'स्वादय ओदितः' इति गणसूत्रात्
सू—सून, दू—दून, डी—डीन इत्यादि ।

१०१७ । शुषः कः । (८-२-५१)　शुष्कः ।
१०१८ । पचो वः । (८-२-५२)　पक्वः ।

१०१९ । **क्षायो मः** । (८-२-५३) क्षामः ।

१०२० । **वित्तो भोगप्रत्यययोः** । (८-२-५८) अन्यत्र विन्नम् ।

१०२१ । **भित्तं शकलम्** । (८-२-५९) अन्यत्र भिन्नम् ।

१०२२ । **ऋणमाधमर्ण्ये** । (८-२-६०) अन्यत्र ऋतम् ।

अथ लिङ्स्थानीयाः कृत्यसंज्ञाः—

तथा चाधिकारसूत्रम्—

१०२३ । **कृत्याः** । (३-१-९५) इति ।

१०२४ । **तव्यत्तव्यानीयरः** । (३-१-९६)

धातोरेते प्रत्ययाः स्युः, ते च कृत्यसंज्ञाः । 'तयोरेव कृत्यक्तखलर्थाः' (९८५) इति भावकर्मणोरेवैते । 'तव्यत्' इति तकारानुबन्धकस्य पृथग्ग्रहणं स्वरार्थम् । यथा—

भू—भवितव्यम्[1] । भवनीयम् ।

कृ—कर्तव्यः,–व्या,–व्यम् । करणीयः,–या,–यम् ।

दा—दातव्यः,–व्या,–व्यम् । दानीयः,–या,–यम् ।

त्वया विनीतेन भाव्यं, त्वयेदं कर्तव्यमित्यादि भावकर्मणोः ।

१०२५ । **अचो यत्** । (३-१-९७)

अजन्ताद्धातोर्यत्प्रत्ययः स्यात् कृत्यसंज्ञः । 'वाऽसरूप...' (९८२) इति परिभाषया तव्यानीयरौ विकल्पेनैवायं बाधते । यथा—

दा—दा + य इति स्थिते 'ईद्यति' (८६४) इत्याकारस्य ईत्वं, देयः,–या,–यम् इति रूपम् । दातव्यः, दानीयः इत्यपि ।

ग्ला—ग्लेयः । जि—जेयः । नी—नेयः इत्यादि ।

'एचोऽयवायावः' इति संधिविधौ

१०२६ । **वान्तो यि प्रत्यये** । (६-१-७९)

यकारादौ प्रत्यये परेऽपि एचो वकारान्त आदेशः स्यात्

१. भावे कृत्यस्य विशेष्यत्वात्सामान्ये नपुंसकम् ।

वकारान्तश्च अव् आव् इत्येतौ । आन्तरतम्यात् ओदौतावेव स्थानिनौ । यकारादौ प्रत्ययेऽपि ओकारस्य अव्, औकारस्य आव् च आदेशः स्यादित्यर्थः । अनेन—

भू + य—गुणे भो + य = अवादेशे भव्य ।
लू + य ,, लो + य = ,, लव्य ।

१०२७ । **धातोस्तन्निमित्तस्यैव** । (६-१-८०)

यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशस्तर्हि तन्निमित्तस्यैव (यादिप्रत्ययनिमित्तकस्य एच एव) इति नियमात् आङुपसृष्टात् वेञः कर्मणि यकि यङ्निमित्ते संप्रसारणे आद्गुणेन निष्पन्नस्य ओकारस्य अवादेशो न भवति, 'ओयते' इत्येव रूपम् । अतश्च धातोरिगन्तत्वेन गुणवृद्धिभ्यां निष्पन्नस्यैव अवावौ । पूर्वसूत्रं तु गव्यं नाव्यमिति तद्धितार्थम् ।

१०२८ । **क्षय्यजय्यौ शक्यार्थे** । (६-१-८१)

१०२९ । **क्रय्यस्तदर्थे** । (६-१-८२) (तदर्थे = क्रयार्थे)

इति यत्प्रत्यये क्षि-जि-क्रीधातूनाम् अयादेशो निपात्यते । यथा—

क्षेतुं शक्यं = क्षय्यम् । जेतुं शक्यं = जय्यम् ।

क्रयार्थमापणे प्रसारितं क्रय्यम् । क्षेतुं योग्यम् इत्यादौ तु क्षेयं, जेयं, क्रेयम् इत्येव । कृत्यानामर्थविशेषा वक्ष्यन्ते ॥

'अचो यत्' इत्येवोक्तम् । हलन्तेष्वपि केभ्यश्चिदाह—

१०३० । **पोरदुपधात्** । (३-१-९८)

पवर्गान्तादकारोपधादपि यत् । यथा—

शप्—शप्यं, लभ्—लभ्यं, रम्—रम्यम् ।

१०३१ । **शकिसहोश्च** । (३-१-९९) शक्यं, सह्यम् ।

१०३२ । **वदः सुपि क्यप् च** । (३-१-१०६)

सुबन्त उपपदे वदधातोः क्यप् स्यात्, चाद्यच्च । क्यपः पित्त्वम् प्रक्रियाविशेषार्थम् । स चायम्—

१०३३ । ह्रस्वस्य पिति कृति तुक् । (६-१-७१)

ह्रस्वस्य तुगागमः पिति कृत्प्रत्यये परे । यथावसरमिदमुदाहरिष्यामः ।

प्रकृते ब्रह्म + वद् + य इति क्यपि कृते 'उपपदमतिङ्' इति वक्ष्यमाणेन सूत्रेण उपपदस्य सुबन्तस्य कृदन्तेन सह समासः । क्यप किक्त्वात् वदतेः प्रसारणं, ब्रह्मोद्यम् इति रूपनिष्पत्तिः । पक्षे यत्प्रत्यये ब्रह्मवद्यम् इत्यपि । एवं सत्यस्य वदनं सत्योद्यं, सत्यवद्यं वा । अत्र क्यप् भावार्थकः सिद्धक्रियावाची च । 'कृत्यल्युटो बहुलम्' (११६१) इति कृत्यानामर्थेष्वव्यवस्था विहिता च ॥

१०३४ । भुवो भावे । (३-१-१०७)

सुप्युपपदे भूधातोः सिद्धभावार्थे क्यप् । यथा—

ब्रह्मभूयं—ब्रह्मात्मना भवनं, ब्रह्मणो भावः ब्रह्मत्वमित्यर्थः ।

इदं नित्यक्लीबं विशेष्यनिघ्नत्वाभावेन नियतलिङ्गत्वात् ॥

१०३५ । हनस्त च । (३-१-१०८)

हन्तेः सुप्युपपदे भावे क्यप्, तकारोऽन्तादेशश्च । यथा—

ब्रह्मणो हननं ब्रह्महत्या ।

अयं नित्यस्त्रीलिङ्गः । सूत्रत्रयोक्तः क्यप् अनुपसर्गादेव धातोर्भवति, अनुपसर्गे इति सर्वत्रानुवृत्तेः ॥

१०३६ । एतिस्तुशास्वृदृजुषः क्यप् । (३-१-१०९)

सुप्यनुपसर्ग इति च निवर्तयितुं पुनः क्यब्ग्रहणम् । किक्त्वाद्गुणाभावे 'ह्रस्वस्य पिति कृति तुक्'—

इ—इत्यः । स्तु—स्तुत्यः । शास्—शिष्यः । ('शास् इदङ्हलोः' ५८३) वृ—वृत्यः । दृ—दृत्यः । जुष्—जुष्यः ।

अत्र 'अचो यतो' बाधनार्थम् एतिस्तुवृदृग्रहणम् । 'ऋहलोर्ण्यतो' बाधनार्थम् अन्येषाम् । यत्—क्यप्—ण्यतां सरूपत्वादुत्सर्गापवादन्यायो न प्रवर्तत एव ॥

१०३७ । ऋदुपधाच्चाक्लृपिचृतेः । (३-१-११०)

यथा—वृतु—वृत्यम् । वृधु—वृध्यम् । मृग—मृग्यम् । क्लृपेस्तु कल्प्यम् ।

१०३८ । ऋहलोर्ण्यत् । (३-१-१२४)

ऋवर्णान्ताद्धलन्ताच्च ण्यत् । 'अचो यत्' अनेन बाध्यते । यथा—

ऋ—हृ—हार्यः,-र्या,-र्यम् । णित्त्वाद्वृद्धिः ।

हल्—चल—चाल्यः,-ल्या,-ल्यम् । „

१०३९ । ओरावश्यके । (३-१-१२५)

आवश्यकेऽर्थे द्योत्ये उवर्णान्तादपि ण्यत् । यतोऽपवादः । यथा—

भू—भाव्यम्—अवश्यं भवितुं योग्यम् । भव्यमन्यत्र ।

श्रु—श्राव्यम्— „ श्रोतुं „ श्रव्यमन्यत्र ।

उभयत्रापि 'वान्तो यिप्रत्यये' (१०२६) इत्यवावादेशौ ॥

अथ ण्यति कुत्वमुच्यते—

१०४० । च-जोः कु घिण्ण्यतोः । (७-३-५२)

चकारजकारयोः कवर्गादेशो घिति प्रत्यये ण्यति च । यथा—

| धातुः | ण्यत् | घित्—घञ् |
|---|---|---|
| पच | पाक्यम् | पाकः |
| सृज | सर्ग्यम् | सर्गः |

१०४१ । न क्वादेः । (७-३-५९)

कवर्गादेर्धातोर्घिण्ण्यतोः परयोश्चजोः कुर्न । यथा—

कूज—कूज्यं, कूजः । गर्ज—गर्ज्यम्, गर्जः ।

१०४२ । अजि-व्रज्योश्च । (७-३-६०)

कुत्वं न । समाजः, परिव्राज्यम् इत्यादि ।

१०४३ । ण्य आवश्यके । (७-३-६५)

आवश्यकार्थे द्योत्ये ण्यति चजोः कुर्न । अवश्यपाच्यम् ।

१०४४ । यजयाचरुचप्रवचर्चश्च । (७-३-६६)

याज्यः, याच्यः, रोच्यः, प्रवाच्यः, अर्च्यः । घिति तु याग इत्यादि ।

**त्यजिपूज्योश्च**—त्याज्यः, पूज्यः ।

१०४५ । वचोऽशब्दसंज्ञायाम् । (७-३-६७)

नेत्येव । अन्वितपदसाङ्गतो वाक्यम् । अन्यत्र वाच्यम् ॥

१०४६ प्रयोज्यनियोज्यौ शक्यार्थे । (७-३-६८)

योग्यार्थे तु प्रयोग्यः, नियोग्य इत्येव ॥

१०४७ । भोज्यं भक्ष्ये । (७-३-६९)

भोज्यमन्नम् । भोग्यं सुखम् ॥

अथ लोट्स्थानीयाः—

१०४८ । ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल् । (३-३-१२६)

कृच्छ्राकृच्छ्रार्थेषु ईषद्दुस्सुषु निपातेषूपपदेषु धातोः खल् प्रत्ययः । 'तयोरेव कृत्यक्तखलर्थाः' (९८५) इति भावकर्मणोरेव । खकार इत् ह्रस्वमुमागमाद्यर्थः । ते चानुपदं वक्ष्यन्ते । यथा—

ईषत्करः, –रा, –रम्—अनायासेन कर्तुं शक्यः

दुष्करः, –रा, –रम्—आयासेन ,,

सुकरः, –रा, –रम्—अनायासेन ,,

एवं जि—ईषज्जयः, दुर्जयः, सुजयः इत्यादि ।

१०४९ । कर्तृकर्मणोश्च भूकृञोः । (३-३-१२७)

ईषद्दुस्सुभिः सह भवतेः कर्तृवाचिनि सुबन्ते, कृञः कर्मवाचके चोपपदेऽपि खल् । अभूततद्भाव एवेदमिति वार्त्तिककारो नियमं कृतवान् ।

ईषदाढ्यंभवं व्यवसायिना—अनाढ्यो व्यवसायी सुखमाढ्यो भवितुं शक्नोतीत्यर्थः

स्वाढ्यंकरः सेवको राज्ञा । दुराढ्यंकरोऽलसः ।

एषु मुमागमोऽनुपदं विधास्यते ॥

१०५० । आतो युच् । (३-३-१२८)

खलोऽपवादः । 'यु' इत्यक्षरम् 'अन' इत्यस्य प्रतिनिधिः क्रियते यथा 'झ' इति 'अन्त' इत्यस्य । एवं फ ढ घ छ ठ ख इति वर्णा अपि तद्धितेषु प्रतिनिधित्वेनोपयुज्यन्ते । तथा च सूत्राणि—

### १०५१ । युवोरनाकौ । (७-१-१)

प्रत्ययावयवस्य 'यु' इत्यस्य 'अन' इति 'वु' इत्यस्य 'अक' इत्यप्यादेशौ । युच्, ल्युट्, टच्यु, ण्वुल्, वुञ्, वुन् इत्यादिष्वनुबन्धासज्जनसौकर्यार्थम् आदेशकल्पनमिति प्रतिभाति ॥

### [१०५२ । आयनेयीनीयियः फ-ढ-ख-छ-घां प्रत्ययादीनाम् । (७-१-२)

प्रत्ययादिभूतानां फादीनाम् आयनादय आदेशाः । यथा—

फ = आयन ।　ढ = एय ।　ख = ईन ।　छ = ईय ।　घ = इय ।

कृत्सु ख-घयोः 'लशक्वतद्धिते' इतीत्संज्ञया 'खल्' 'घञ्' इत्यादिषु नैते आदेशाः ]

अनेन युचो युकारस्य अनादेशः । पा—ईषत्पानः, सुपानः दुष्पानः इत्यादि ॥

अथ स्वाढ्यम्भवं इत्यादौ मुमागमविधानाय खित्त्वप्रयोजनान्युच्यन्ते—

### १०५३ । खित्यनव्ययस्य । (ह्रस्वः) (६-३-६६)

खिदन्ते उत्तरपदे अव्ययभिन्नस्य पूर्वपदस्य ह्रस्वः । यथा—

या कालीमात्मानं मन्यते सा कालिंमन्या । अत्र 'मन्य' इति खिदन्तम् ।

### १०५४ । अरुर्द्विषदजन्तस्य मुम् । (६-३-६७)

अरुस्, द्विषत् इत्यनयोरजन्तानां च खिदन्ते उत्तरपदे मुमागमः । यथा—

| | |
|---|---|
| अरुस् + तुद = अरुन्तुदः । | ईषदाढ्यम्भवम् । |
| द्विषत् + तप = द्विषन्तपः । | स्वाढ्यङ्करः । |
| काली + मन्या= कालिम्मन्या । | दुराढ्यङ्करः । |

### १०५५ । इच एकाचोऽम्प्रत्ययवच्च । (६-३-६८)

इजन्तस्यैकाचः पूर्वपदस्य खिदन्ते उत्तरपदे अम् स्यात्; स च

अम्प्रत्ययवत् (अम् इति सुप्प्रत्ययवत्) स्यात्। अतिदेशात् 'अमि पूर्वः', 'औतोऽम्शसोः' इत्यादयो विधयः प्रवर्तन्ते। यथा—

गो + मन्यः = गाम्मन्यः। स्त्री + मन्यः = स्त्रीम्मन्यः, स्त्रियम्मन्यः।

१०५६। **वाचंयमपुरन्दरौ च**। (६-३-६९)

१०५७। **कारे सत्यागदस्य**। (६-३-७०)

वाचंयमः। पुरन्दरः। सत्यङ्कारः। अगदङ्कारः।

१०५८। **रात्रेः कृति विभाषा**। (६-३-७२)

रात्रिंचरः। रात्रिचरः। रात्रिमटः। रात्र्यटः।

उक्तानि नामविशेषणान्याख्यातकानि। अनन्तरं क्रियाविशेषणानि तान्युच्यन्ते—

## क्रियाविशेषणाख्यातकानि॥

१०५९। **समानकर्तृकयोः पूर्वकाले**। (क्त्वा) (३-४-२१)

यदैक एव कर्ता पर्यायेणानेकाः क्रियाः करोति तदा पूर्वकालवर्तिक्रियावाचिनो धातोः क्त्वा। उत्तरकालक्रियानुरोधेन कर्ता कर्म भावो वा क्त्वाप्रत्ययार्थः। विशेष्यवशवर्तीनि हि विशेषणानि। तुमुनोऽपि क्रियाविशेषणाख्यातकस्यैवमेव विशेष्यानुरोधादर्थनिर्णयः। यथा—

देवदत्तः पूर्वं स्नाति, ततो भुङ्क्ते—तत्र स्नात्वा भुङ्क्ते इति स्ना-धातोः क्त्वा।
एवं भुक्त्वा पिबति। पीत्वा स्वपिति। सुप्त्वा व्रजति।
देवदत्तः स्नात्वा भुक्त्वा पीत्वा सुप्त्वा व्रजति इति वा।
देवदत्तस्तण्डुलान् पक्त्वा भुङ्क्ते—कर्तरि क्त्वा।
देवदत्तेन तण्डुलाः पक्त्वा भुज्यन्ते—कर्मणि क्त्वा।
देवदत्तेन भुक्त्वा सुप्यते। —भावे ,,
देवदत्तो भुक्त्वा प्रतिष्ठते। भुक्त्वा प्रस्थितेन देवदत्तेन मार्गे विश्रान्तम् इत्यादि यथायोगं पूर्वकालः।

अव्ययत्वात् क्त्वाप्रत्ययस्य लिङ्गवचनविभक्तिभेदा न भवन्ति।

स्नात्वा गच्छन्तीर्नारीः पश्य।

प्रसङ्गादव्ययत्वविधायकानि सूत्राणि व्याख्यायन्ते—'स्वरादिनिपातमव्ययम्' इत्यस्यानन्तरं सूत्रम्—

१०६० । तद्धितश्चासर्वविभक्तिः । (१-१-३८)

यस्मात् सर्वा विभक्तयो नोत्पद्यन्ते स तद्धितान्तोऽव्ययसंज्ञः। ते च प्रत्यया एवं परिगणिताः—

तसिल्-त्रल्-दा-स्तसि-शसा-वस्तातिः कृत्वसु-ज्वतिः ।
धा-थालौ डाच्-च्वि-साति-त्रा इत्येतेऽव्ययतद्धिताः ॥

| | | | | | |
|---|---|---|---|---|---|
| तसिल् | — | सर्वतः | वतिः | — | हरिवत् |
| त्रल् | — | सर्वत्र | धा | — | शतधा |
| दा | — | सर्वदा | थाल् | — | सर्वथा |
| तसि | — | स्वभावतः | डाच् | — | पटपटाकृत्य |
| शस् | — | शतशः | च्वि | — | शुक्लीकृत्य |
| अस्ताति | — | परस्तात् | साति | — | भस्मसात्कृत्य |
| कृत्वसुच् | — | शतकृत्वः | त्रा | — | ब्राह्मणत्राकृत्य |

एषामपवादा अप्यव्ययानि—

इह—त्रलोऽपवादो ह-प्रत्ययः। दक्षिणेन—अस्तातेरपवाद एनप्।

१०६१ । कृन्मेजन्तः । (१-१-३९)

मकारान्त एजन्तश्च कृत्प्रत्ययोऽव्ययसंज्ञः। यथा—

कर्तुम्—तुमुन् मान्तः। कारंकारम्—णमुल् मान्तः। एजन्ता प्रत्ययाश्छन्दस्येव।

१०६२ । क्त्वातोसुन्कसुनः । (१-१-४०)

एतेऽप्यव्ययसंज्ञाः। कृत्वा। तोसुनकसुनौ छान्दसौ ॥

१०६३ । अव्ययीभावश्च । (१-१-४१)

अयमप्यव्ययसंज्ञः। उपहरि, यथासुखम्, मध्येमार्गम्।

अथ प्रक्रियाः—

१०६४ । न क्त्वा सेट् (कित्) । (१-२-१८)

सेट् क्त्वा किन्न स्यात् । यथा—

शीङ्—शयित्वा, वृतु—वर्तित्वा ।

अनिट् तु किदेव । भू—भूत्वा । कृ—कृत्वा ।

१०६५ । निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः । (१-२-१९)

शीङादिभ्यस्सेट् निष्ठा न कित् । शीङ्—शयितः, शयितवान् ।

स्विदादीनामादित्त्वात् 'विभाषा भावादिकर्मणोः' (६७८) इतीड्विकल्पः । ञिष्विदा—स्वेदितः, स्विन्नः इत्यादि ।

१०६६ । उदुपधाद्भावादिकर्मणोरन्यतरस्याम् । (१-२-२१)

सेण्निष्ठा वा कित् स्यात् । मुदितं मोदितं वा त्वया ।

१०६७ । रलो व्युपधाद्धलादेः संश्च (क्त्वा) । (१-२-२६)

उश्च इश्च वी । रल् प्रत्याहारः । रलन्तात् व्युपधात् हलादेर्धातोः परौ सेटौ क्त्वासनौ वा कितौ स्तः । यथा—

लिख—लिखित्वा,—लेखित्वा । लिलिखिषति, लिलेखिषति ।

द्युत—द्युतित्वा—द्योतित्वा । दिद्युतिषते, दिद्योतिषते ।

अत्र नम—नत्वा—'अनुदात्तो......' (५५९) इत्यनुनासिकलोपः ।

वच—उक्त्वा—'वचिस्वपि......' (५१५) इति सम्प्रसारणम् ।

भ्रमु—भ्रान्त्वा, भ्रमित्वा—'अनुनासिकस्य क्वि झलोः क्ङिति'[1] इति दीर्घः ।

इत्यादयः प्रक्रिया अनुसन्धेयाः ॥

१०६८ । समासेऽनञ्पूर्वे क्त्वो ल्यप् । (७-१-३७)

नञ्भिन्नेन पूर्वपदेन समासे क्त्वाप्रत्ययस्य ल्यबादेशः । यथा—

प्राप्य । प्रदाय । निधाय । विलोक्य । परिभूय इत्यादि ।

ऊरीकृत्य । पाणौकृत्य । शुचीकृत्य । वामनीभूय ,,

प्रत्यु०—(नञ् समासे तु) अदृष्ट्वा, अश्रुत्वा, अकृत्वा ।

---

१. इदं सूत्रं मिश्रप्रकरणे व्याख्यातुं विस्मृतम् । अनुनासिकान्तस्याङ्गस्योपधाया दीर्घः क्विप्रत्यये झलादौ क्ङिति च । इति सूत्रार्थः ।

'ऊरीकृत्य' इत्यादौ 'ह्रस्वस्य पिति कृति तुक्' (१०३३)। 'अनुदात्तोपदेश–' (५५९) इत्यनुनासिकलोपो ल्यपि

### १०६९। वा ल्यपि। (६-४-३८)

इति सूत्रेण विकल्प्यते। तेन–प्रणम्य–प्रणत्य, सङ्गम्य–सङ्गत्य इत्यादि रूपाणि। अनुनासिकलोपे ह्रस्वान्तत्वात् तुक्। प्रक्रियान्तराणि पूर्वमेवोक्तानि॥

### १०७०। अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा। (३-४-१८)

प्रतिषेधवाचिनोरलङ्खल्वोरुपपदयोः प्राचां मते क्त्वा स्यात्। सिद्धभावार्थ एवायमुपपद्यते उपपदानुरोधात्। यथा—

अलमुक्त्वा, खलूक्त्वा—वचनं मास्त्वित्यर्थः। मतान्तरे तु अलं रोदनेन।

### १०७१। परावरयोगे च। (३-४-२०)

परावरौ = दूरसन्निहितौ। तद्योगे च क्त्वा स्यात्। पूर्वकाल एव हि क्त्वा विहितः। अनेन पूर्वदेशेऽपि विधीयते। यथा—

क्रान्त्वा नदीं पर्वतः—नद्याः पारे इत्यर्थः।

अक्रान्त्वा ,, ,, अवारे ,,

समानकर्तृकयोः पूर्वकाले। (३-४-२१) (व्याख्यातम्—१०५९)

### १०७२। आभीक्ष्ण्ये णमुल् च। (३-४-२२)

आभीक्ष्ण्यं = पौनःपुन्यम्। तस्मिन् द्योत्ये समानकर्तृकयोः पूर्वकाले णमुल् क्त्वा च स्याताम्। आभीक्ष्ण्येऽर्थे पदद्वित्वं वक्ष्यते। **यथा**—स्मारं स्मारं—स्मृत्वा स्मृत्वा वा नमति शिवम्।

### १०७३। कर्मण्याक्रोशे कृञः खमुञ्। (३-४-२५)

कर्मण्युपपदे आक्रोशे द्योत्ये कृञः खमुञ्प्रत्ययः। खित्त्वात् उपपदस्य ह्रस्व-मुमागमादयः। यथा—

चोरङ्कारमाक्रोशति। भीरुङ्कारमाक्रोशति। चोरेऽसि, भीरुरसीत्याक्रोशतीत्यर्थः।

### १०७४। अन्यथैवंकथमित्थं सुसिद्धाप्रयोगश्चेत् (णमुल्)। (३-४-२७)

अन्यथादिषूपपदेषु कृञः स्वार्थे णमुल्। यथा—अन्यथाकारम्, इत्थङ्कारमित्यादि।

**१०७५। यथातथयोरसूयाप्रतिवचने। (३-४-२८)**

कृञो णमुल्। यथाकारं मे रोचते तथाकारमहं करिष्ये किं तवानेन। अत्र सासूयं प्रतिवचनं द्योत्यते।

**१०७६। कर्मणि दृशिविदोः साकल्ये। (३-४-२९)**

कर्मण्युपपदे साकल्ये द्योत्ये दृशविदोर्णमुल्। यथा—

ब्राह्मणवेदं भोजयति—यं यं ब्राह्मणं वेत्ति तं तमित्यर्थः।

कन्यादर्शं वरयते—यां यां कन्यां पश्यति तां तामित्यर्थः।

**१०७७। यावति विन्दजीवोः। (३-४-३०)**

यावद्वेदं भुङ्क्ते। यावज्जीवमधीते।

**१०७८। चर्मोदरयोः पूरेः। (३-४-३१)**

चर्मपूरं स्तृणाति। उदरपूरं भुङ्क्ते।

**१०७९। वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्। (३-४-३२)**

गोष्पदपूरं, गोष्पदप्रं वा वृष्टो देवः।

**१०८०। चेले क्नोपेः। (३-४-३३)**

चेलक्नोपं, वसनक्नोपं वा वृष्टो देवः। चेल इत्यर्थग्रहणम्।

**१०८१। निमूलसमूलयोः कषः। (३-४-३४)**

'कषादिषु यथाविध्यनुप्रयोगः' इति वक्ष्यते। तेन इतःप्रभृति णमुल्विधिषु णमुल्प्रकृतिर्धातुरेवानुप्रयोक्तव्यः। तत्रानुप्रयोगस्यैवार्थयोजना। णमुल्प्रकृतिर्निरर्थक एव। यथा—निमूलकाषं, समूलकाषं वा कषति—निमूलं, समूलं वा कषतीत्यर्थः।

**१०८२। शुष्कचूर्णरूक्षेषु पिषः। (३-४-३५)**

शुष्कपेषं, चूर्णपेषं, रूक्षपेषं वा पिनष्टि—शुष्कं पिनष्टीत्यादिरर्थः।

**१०८३। समूलाकृतजीवेषु हन्कृञ्ग्रहः। (३-४-३६)**

समूलघातं हन्ति। समूलं हन्तीत्यर्थः। एवम् अकृतकारं करोति। जीवग्राहं गृह्णाति। जीवतीति जीवः, जीवन्तमित्यर्थः।

**१०८४। करणे हनः। (३-४-३७)**

करणे उपपदे हन्तेर्णमुल्। पादघातं हन्ति—पादेनेत्यर्थः।

**१०८५। स्नेहने पिषः। (३-४-३८)**

स्नेहनवाचिनि करणे उपपदे णमुल्। तैलपेषं पिनष्टि।

१०८६ । **हस्ते वर्तिग्रहोः** । (३-४-३९)

हस्तवर्तं वर्तयति—हस्तेनेत्यर्थः । एवं हस्तग्राहम् ।

१०८७ । **स्वे पुषः** । (३-४-४०)

स्व इत्यर्थग्रहणम् । तेन स्वरूपे पर्याये विशेषे च णमुल् । स्वपोषम्, आत्मपोषं, पितृपोषं वा पुष्णाति ।

१०८८ । **अधिकरणे बन्धः** । (३-४-४१)

चक्रबन्धं बध्नाति । मुष्टिबन्धं बध्नाति ।

१०८९ । **संज्ञायाम्** । (३-४-४२)

मयूरिकाबन्धं, अट्टालिकाबन्धं वा बध्नाति ।

१०९० । **कर्त्रोर्जीवपुरुषयोर्नशिवहोः** । (३-४-४३)

जीवनाशं नश्यति ।—जीवो (जीवन्) नश्यति ।

पुरुषवाहं वहति—पुरुषः प्रेष्यो भूत्वा वहतीत्यर्थः ।

१०९१ । **ऊर्ध्वे शुषिपूरोः** । (३-४-४४)

ऊर्ध्वशोषं शुष्यति वृक्षः । ऊर्ध्वपूरं पूर्यते घटः ।

१०९२ । **उपमाने कर्मणि च** । (३-४-४५)

उपमानभूते कर्तरि कर्मणि वा उपपदे धातोर्णमुल् । यथा—

घृतनिधायं निहितं जलं—घृतमिव निहितम् । अजकनाशं नष्टः—अजक इव नष्टः।

१०९३ । **कषादिषु यथाविध्यनुप्रयोगः** । (३-४-४६)

तथैवोदाहृतम् । इतः परमनुप्रयोगनियमो नास्ति ।

१०९४ । **उपदंशस्तृतीयायाम्** । (३-४-४७)

मूलकोपदंशं भुङ्क्ते—मूलकेनोपदंश्येत्यर्थः ।

१०९५ । **हिंसार्थानां च समानकर्मकाणाम्** । (३-४-४८)

दण्डोपघातं गाः कालयति—दण्डेनोपहत्य ।

१०९६ । **सप्तम्यां चोपपीडरुधकर्षः** । (३-४-४९)

पार्श्वोपपीडं शेते—पार्श्वयोरुपपीड्य इत्यादि ।

१०९७ । **समासत्तौ** । (३-४-५०)

सामीप्ये द्योत्ये तृतीयासप्तम्यन्तयोरुपपदयोर्धातोर्णमुल् । यथा—

केशग्राहं युध्यन्ते । हस्तग्राहम् ।

१०९८ । प्रमाणे च । (३-४-५१)

तृतीयासप्तम्योरित्येव । यथा—द्व्यंगुलोत्कर्षं वस्त्रं छिनत्ति ।

१०९९ । अपादाने परीप्सायाम् । (३-४-५२)

परीप्सा = त्वरा । तस्यां द्योत्यायामपादाने उपपदे धातोर्णमुल् । यथा—शय्योत्थायं धावति -- शय्योत्थानक्षण एवेत्यर्थः ।

११०० । द्वितीयायां च । (३-४-५३)

परीप्सायामित्येव । यष्टिग्राहं युध्यन्ते ।

११०१ । स्वाङ्गेऽध्रुवे । (३-४-५४)

अध्रुवे स्वाङ्गवाचिनि द्वितीयान्ते उपपदे धातोर्णमुल् । यथा—
अक्षिनिकोचं जल्पति — भ्रूविक्षेपं कथयति । 'अध्रुव' इत्युक्तेः शिर उत्क्षिप्य इत्येव । येन विना न जीवनं तद्ध्रुवम् ।

११०२ । परिक्लिश्यमाने च । (३-४-५५)

स्वाङ्गे द्वितीयायामित्येव । उरःप्रतिक्षेपं युध्यन्ते । ध्रुवार्थोऽयमारम्भः ।

११०३ । विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः (३-४-५६)

साकल्येन सम्बन्धो व्याप्तिः, पौनःपुन्यमासेवा । यथा—
गेहानुप्रवेशमास्ते । पीठानुपातमास्ते इत्यादि ।

११०४ । अस्यतितृषोः क्रियान्तरे कालेषु । (३-४-५७)

क्रियान्तरं क्रियाया व्यवधानम् । तस्मिन् द्योत्ये कालवाचिषु द्वितीयान्तेषूपपदेषु अस्यतितृषोर्णमुल् । यथा—
द्व्यहात्यासं वत्सान् पाययति । द्व्यहतर्षम् ।

११०५ । नाम्न्यादिशिग्रहोः । (३-४-५८)

नामादेशमाचष्टे । नामग्राहमाह्वयति—नामादिश्य, गृहीत्वा च ।

११०६ । अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ । (३-४-५९)

अयथाभिप्रेताख्यानं नाम अप्रियस्योच्चैः, प्रियस्य नीचैश्च कथनम् ।
उच्चैःकृत्य, उच्चैःकृत्वा, उच्चैःकारमाचष्टे ।

प्रयोगवैचित्र्यप्रतिपादका इति णमुलो विशेषविधयः प्रायः सर्वेऽप्यत्र व्याख्याताः ॥

अथ तुमुन्— [स्त्यर्थेषु तुमुन् । (३-४-६५)

### ११०७ । शक-धृष-ज्ञा-ग्ला-घट-रभ-लभ-क्रम-सहा-र्हा-

शकादिषु दशसु, अस्त्यर्थेषु चोपपदेषु धातोस्तुमुन् प्रत्ययो भवति भावे । अत्रार्थशब्दोऽस्ति नैव सम्बध्यते अनन्तरत्वात् । शकधृषयोः घटार्हयोश्च पृथगुपादानाच्च । अक्रियार्थोपपदार्थोऽयमारम्भः । यथा—

| उपपदम् | तुमुन् | | | अर्थः | | कारकम् |
|---|---|---|---|---|---|---|
| शक्नोति, धृष्णोति, जानाति | भोक्तुम्—इत्यत्र भोजने प्रावीण्यं गम्यते । | | | | | वैषयिकाधिकरणम् |
| ग्लायति | ,, | ,, | ,, | अशक्तिः | ,, | ,, |
| घटते | ,, | ,, | ,, | योग्यता | ,, | ,, |
| आरभते | ,, | ,, | ,, | आद्यावस्था | ,, | कर्म |
| लभते | ,, | ,, | ,, | सुभिक्षम् | ,, | कर्म |
| क्रमते | ,, | ,, | ,, | अप्रतिहतिः | ,, | अधिकरणम् |
| सहते | ,, | ,, | ,, | उत्साहः | ,, | अधिकरणम् |
| अर्हति | ,, | ,, | ,, | योग्यता | ,, | कर्म |
| अस्ति, भवति, विद्यते | ,, | ,, | ,, | अदारिद्र्यम | ,, | कर्ता |

### ११०८ । पर्याप्तिवचनेष्वलमर्थेषु । (३-४-६६)

पूर्णतावाचिषु सामर्थ्यार्थकेषूपपदेषु धातोस्तुमुन् । यथा—

पर्याप्तो भोक्तुं, प्रवीणः, कुशलः, पटुः, अलं वा ।

### ११०९ । तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् । (३-३-१०)

भविष्यतीत्यनुवर्तते । क्रियार्थायां क्रियायामुपपदे भविष्यति काले धातोस्तुमुन्ण्वुलौ । यथा पूर्वकालक्रियावाचिनो धातोः क्त्वाणमुलावुक्तौ तथा उत्तरकालक्रियावाचिनस्तुमुन्ण्वुलावुच्येते । तत्र तुमुन् मान्तत्वादव्ययम् । तेन च न लिङ्गविभक्त्यादिभेदः । ण्वुलस्तु विशेष्यानुसारेण लिङ्गादयः । 'युवोरनाकौ' (१०५१) इति ण्वुलो वुकारस्य अकादेशः । क्त्वा प्रत्ययवदेव कर्त्राद्यर्थे व्यवस्था । यथा—

भोक्तुं स्नाति—भोजनार्थकं स्नानम् । भोक्तुमागच्छति देवदत्तः, भोजको वा । भोक्तुमागच्छति गार्गी,—भोजिका वा । भोक्तुमागच्छतो देवदत्तस्यान्नं न लब्धं, भोजकस्य वा । भोक्तुमागच्छन्त्या गार्ग्या अन्नं न लब्धं, भोजिकया वा ।

तण्डुलान् पक्तुमानयति—कर्तरि । तण्डुलाः पक्तुमानीयन्ते—कर्मणि ।

स्वप्तुं शेते—कर्तरि । स्वप्तुं शय्यते—भावे ।

अयमेवाभिप्रायः '**अव्ययकृतो भावे**' इति सिद्धान्तस्य । भोक्तुमिच्छति, भोक्तुं कालः इतीच्छार्थेषु कालपर्यायेषु चोपपदेषु तुमुन् विधास्यते ॥

---

## कर्त्रर्थककृत्प्रत्ययाः ॥

कर्त्रर्थककृत्सु क्रिया सिद्धा । आख्याताख्यातकयोः क्रिया साध्येति भेदः । आख्यातसंज्ञा, आख्यातकसंज्ञाः, कृत्संज्ञाः वा भवन्तु कर्तृकर्मभावेष्वेव धातोः प्रत्यया विधीयन्ते । क्रियायाः सिद्धत्वसाध्यत्वाभ्यामेव भेदोपलब्धिः । आख्याताख्यातकाभ्यां यद्यपि कर्तृकर्मणी अभिधीयेते तथापि आख्याते अव्ययाख्यातके च भाव एव विशेष्यम् । यथा—'देवदत्तः पचति' इत्यत्र देवदत्तकर्तृकं वर्तमानकालिकं पचनमित्येव बोधः । न तु वर्तमामकालिकपचनकर्ता देवदत्त इति । तथा च भर्तृहरिः—

'फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः ।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥'

फलानुकूलो व्यापारो धात्वर्थः । व्यापारफलयोराश्रयभूतं कारकं कर्ता कर्म वा तिङाभिधीयते । फलापेक्षया व्यापार एव प्रधानम् । तिङर्थभूतं कारकं तु विशेषणमेव । इदमेवाभिप्रेत्योच्यते—'**भावप्रधानमाख्यातम्**' इति । अनव्ययाख्यातकानां कारककृतां च कारकं प्रधानम् । भावार्थकानां सिद्धात्मा भावश्च ॥

## ११११० । ण्वुल्तृचौ । (३-१-१३३)

धातोः कालसामान्ये कर्तर्येतौ । ण्वुल् = अक । णित्त्वाद्वृद्धिः । आदन्तेषु 'आतो युक् चिण्कृतोः' (८९२) इति युक् । यथा—

करोतीति—कर्ता कर्त्री कर्तृ । कारकः कारिका कारकम् ।
भवतीति—भविता भवित्री भवितृ । भावकः भाविका भावकम् ।
ददातीति—दाता दात्री दातृ । दायकः दायिका दायकम् ।

## ११११ । नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः । (३-१-१३४)

नन्द्यादिभ्यो ल्युः, ग्रह्यादिभ्यो णिनिः, पचादिभ्योऽच् । यथा—

नन्दयतीति—नन्दनः,–ना,–नम् । मदनः, दूषणः, साधनः इत्यादि ।
गृह्णातीति—ग्राही,–हिणी,–हि । उत्साही, स्थायी, मन्त्री ,,
पचतीति—पचः,–चा,–चम् । पतः, वदः, चलः, जरः ,,

त्रयोऽपि गणा आकृतिगणाः ॥

## १११२ । इगुपधज्ञाप्रीकिरः कः । (३-१-१३५)

इगुपध—बुध्यत इति बुधः । विलिखः । विक्षिपः । ज्ञा—ज्ञः ।
प्री—प्रियः, कॄ—किरः । कित्त्वाद्गुणाभावः । प्रिय इति संयोगादित्वादियङ् ।

## १११३ । आतश्चोपसर्गे । (३-१-१३६)

आदन्तादुपसर्गे उपपदे कः । प्रदः, प्रस्थः, प्रपः इत्यादि ।

## १११४ । पाघ्राध्माधेड्दृशः शः । (३-१-१३७)

उपसर्गे सत्यसति च । शित्त्वात् पिबाद्यादेशाः । यथा—

प्रपिबः, जिघ्रः, विधमः, धयः, उत्पश्यः इत्यादि ।

## १११५ । कर्मण्यण् । (३-२-१)

कर्मण्युपपदे धातोरण् । वृत्त्यादौ द्योत्य एवोपयुज्यते । यथा—

कुम्भं करोतीति कुम्भकारः, काण्डलावः, वेदाध्यायः ।

## १११६ । आतोऽनुपसर्गे कः । (३-२-३)

कर्मण्युपपदे । यथा—

गोदः, धनदः । कर्मणोऽन्यत्राप्ययं दृश्यते । आतपत्रं, करस्थं, नदीष्णः ।

११९७। **प्रियवशे वदः खच्।** (३-२-३८)

खित्त्वान्मुमागमः—प्रियंवदः, वशंवदः।

१११८। **सर्वकूलाभ्रकरीषेषु कषः।** (३-२-४२)

खशित्येव—सर्वंकष इत्यादि।

११९९। **त्यदादिषु दृशोऽनालोचने कञ् च।** (३-२-६०)

त्यदादिषूपपदेषु अदर्शनार्थाद् दृशः कञ्, क्विन् च। यथा—

तादृक्, तादृशः। त्वादृक्, त्वादृशः। ईदृक्, ईदृशः। **समानान्ययोश्च दृशेः क्विन्-कञाविति** कात्यायनः।

अत्र प्रक्रिया—'समान' इत्यस्य सादेशविधिप्रस्तावे—

११२०। **दृग्दृशवतुषु।** (६-३-८९)

एषु परेषु समानशब्दस्य 'स' इत्यादेशः। सदृक् सदृशः।

११२१। **इदंकिमोरीश्की।** (६-३-९०)

दृग्दृशवतुष्वित्येव—ईदृक् ईदृशः।

११२२। **आ सर्वनाम्नः।** (६-३-९१)

सर्वनाम्न आकारोऽन्तादेशो दृग्दृशवतुषु। यथा—

तादृशः, मादृशः। तावत, यावत् इति वतुप्रत्यये। स च तद्धिते वक्ष्यते॥

११२३। **क्विप् च।** (३-२-७६)

सोपपदान्निरुपपदाद्वा धातोः क्विप् स्यात्। पित्त्वात् 'ह्रस्वस्य पिति कृति तुक्' (१०३३)। यथा—

कृ—कृत्। विद्, विश्वपाः। विश्वजित्। पर्णध्वत्।

११२४। **सुप्यजातौ णिनिस्ताच्छील्ये।** (३-२-७८)

अजातिवाचिनि सुबन्ते उपपदे ताच्छील्ये द्योत्ये धातोर्णिनिः स्यात्।

**यथा**—उष्णं भोक्तुं शीलमस्येति उष्णभोजी,–जिनी,–जि। शीतपायी। उपजीवी, विसारी। विलासी।

**प्रत्यु०**—('अजातौ' किम्?) ब्राह्मणवन्दी इति न।

११२५ । कर्तर्युपमाने । (३-२-७९)

कर्तृवाचिन्युपमाने उपपदे धातोर्णिनिः । यथा—

उष्ट्र इव क्रोशतीत्युष्ट्रक्रोशी । गजगामिनी ।

११२६ । व्रते । (३-२-८०)

व्रते द्योत्ये सुप्युपपदे धातोर्णिनिः । यथा—

स्थण्डिलशायी । मासोपवासी । अश्राद्धभोजी ।

११२७ । मनः । (३-२-८२)

पण्डितं (आत्मानमन्यं वा) मन्यते पण्डितमानी ।

११२८ । आत्ममाने खश्च । (३-२-८३)

आत्मानं मन्यते इत्यर्थे मन्यतेर्णिनिः खश्च । खित्त्वादजन्तस्योपपदस्य मुम् । शित्त्वात् श्यन् विकरणप्रत्ययश्च । यथा—

आत्मानं सुभगं मन्यत इति सुभगम्मन्यः, सुभगमानी ।

११२९ । सप्तम्यां जनेर्डः । (३-२-९७)

११३० । अन्येष्वपि दृश्यते । (३-२-१०१)

डित्त्वाट्टिलोपः—पङ्कजं, द्विजः, अनुजः ।

११३१ । आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु । (३-२-१३४)

इत्यधिकृत्य—

११३२ । तृन् । (३-२-१३५)

**यथा**—कर्ता कटान्—कटकरणशीलस्तद्धर्मा, तत्साधुकारी वा ।

११३३ । अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् । (३-२-१३६)

अलङ्करिष्णुः, निराकरिष्णुः, प्रजनिष्णुः, उत्पचिष्णुरित्यादि ।

११३४ । लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् । (३-२-१५४)

अभिलाषुकः, प्रपातुकः, उपपादुकः, स्थायुकः, भावुकः, कामुक इत्यादि ।

११३५ । जल्पभिक्षकुट्टलुण्टवृङः षाकन् । (३-२-१५५)

जल्पाकः, भिक्षाकः इत्यादि ।

**११३६ । स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् । (३-२-१५८)**

स्पृह्यादयस्त्रयश्चुरादयः । 'अयामन्ताल्वाय्येत्न्विष्णुषु' । स्पृहयालुरित्यादि ।

**११३७ । भञ्जभासमिदो घुरच् । (३-२-१६१)**

'चजोः कु घिण्ण्यतोः'—भङ्गुरः इत्यादि ।

**११३८ । विदिभिदिच्छिदेः कुरच् । (३-२-१६२)**

विदुरः, भिदुरः, छिदुरः । भिदिच्छिद्योः कर्मकर्तर्येव[1] प्रयोगः ।

**११३९ । सनाशंसभिक्ष उः । (३-२-१६८)**

सन्नन्तेभ्य आशंसभिक्षतिभ्यां च उः । यथा—

चिकीर्षुः, जिगीषुः, चिकित्सुः, आशंसुः, भिक्षुः ।

'तच्छीलतद्धर्मतत्साधुकारिषु' इत्यधिकारो वृत्तः ॥

**११४० । ञीतः क्तः । (३-२-१८७) (वर्तमाने)**

ञीतो धातोर्वर्तमानकाले कर्तरि क्तः । यथा—

ञि धृषा—धृष्टः । ञि स्विदा—स्विन्नः ।

**११४१ । मतिबुद्धिपूजार्थेभ्यश्च । (३-२-१८८)**

मतिरिच्छा । बुद्धिर्ज्ञानम् । पूजा सत्कारः । एभ्योऽपि वर्तमाने क्तः । यथा—

सतां मतो विदितः पूजितो वा—सद्भिर्मन्यमानो वेद्यमानः पूज्यमानो वेत्यर्थः ।

---

## भावकृत्प्रत्ययाः ॥

**११४२ । भावे । (३-३-१८)**

**११४३ । अकर्तरि च कारके संज्ञायाम् । (३-३-१९)**

अधिकारो विधिश्च सूत्रद्वयम् । इत ऊर्ध्वं भावे कर्तृभिन्नकारके च प्रत्ययाः । उभयत्रापि सिद्धावस्थापन्नैव क्रिया गृह्यते । सिद्धावस्था-

---

१. "प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयादुरयाचितमङ्गना:" इति माघः शुद्धे कर्तर्यपि प्रयुङ्क्ते ।

पन्ना क्रिया द्रव्यवत् प्रकाशत इति द्वित्वादियोगे द्विवचनबहुवचने अपि सम्भवतः । देवदत्तश्चेत्त्रिवारं सम्यक् पचति तदा देवदत्तस्य पाकाः समीचीनाः इति प्रयोगस्यावसरः । भावार्थककृत्प्रत्ययाः कर्तृभिन्नेषु कारकेष्वपि भवन्ति, तदा ते द्रव्यवाचकाश्च स्युः । संज्ञाशब्देनात्र द्रव्यनामैवोच्यते, न तु यदृच्छाशब्दः । घञित्यनुवृत्त्या सूत्रद्वयेन भावकर्तृभिन्नकारकयोर्घञ्प्रत्ययो विधीयते च । घित्त्वाच्चजोः कुत्वम् । ञित्त्वादजन्तादुपधयोर्वृद्धिश्च । यथा—

पच—पाकः—सिद्धा पचनक्रियेत्यर्थः । भावे घञ् पुल्लिङ्गनियतः । एवं भू—भावः । वद—वादः । दा—दायः । प्रान—प्राणः । आहरन्त्यस्माद्रसमित्याहारः । व्यस्यतेऽनेन वृत्तमिति व्यासः । प्रकाश्यतेऽनेनेति प्रकाशः । आरमन्त्यस्मिन्नित्यारामः ।

## ११४४ । परिमाणाख्यायां सर्वेभ्यः । (३-३-२०)

अजपोर्वक्ष्यमाणयोः पुरस्तादपवादो घञ् । यथा—

तण्डुलनिचायः, शूर्पनिष्पावः ।

## ११४५ । कर्मव्यतीहारे णच् स्त्रियाम् । (३-३-४३)

कर्मविनिमये गम्ये धातोर्णच्, स्त्रीलिङ्गश्चायं प्रत्ययः 'णचः स्त्रियामञ्' इति तद्धितविधानादञन्त एवायं प्रयुज्यते । अत एव च ङीप् । यथा—

व्यावक्रोशी, व्यावहासी, व्यात्युक्षी । अन्योन्यस्य क्रोश इत्यादिरर्थः ।

## ११४६ । अभिविधौ भाव इनुण् । (३-३-४४)

अभिविधिः क्रियागुणाभ्यां कार्त्स्न्येन सम्बन्धः । 'अणिनुणः' इति सूत्रेण अणन्त एव इनुणन्तः प्रयोक्तव्यः । यथा—

सं + रु—सांराविणं वर्तते । संभूय कृतो रवं इत्यर्थः ।

## ११४७ । एरच् । (३-३-५६)

इवर्णान्ताद्धातोरच् भावे अकर्तरि कारके च । घञोऽपवादः । यथा—चि—चयः । जि—जयः । इ—अयः । नी—नयः । भी—भयम् ।

१९४८ । ऋदोरप् । (३-३-५७)

ऋदन्तेभ्य उवर्णान्तेभ्यश्च अप् । स्वरे एव भेदः । यथा—

कॄ—करः । गॄ—गरः । शॄ—शरः । क्षु—क्षवः । लू—लवः । पू—पवः ।

११४९ । ड्वितः क्त्रिः । (३-३-८८)

'क्त्रेर्मम्नित्यम्' इति मप्प्रत्ययान्त एवायं सर्वदा । यथा—

डु कृञ् करणे—कृत्रिमः,–मा,–मम् । डु पच—पक्त्रिमम् ।

११५० । ट्वितोऽथुच् । (३-३-८९)

टु णदि समृद्धौ—आनन्दथुः । टु ओश्वि—श्वयथुः ।

११५१ । उपसर्गे घोः किः । (३-३-९२)

विधिः । व्याधिः । अन्तर्धिः, सन्धिः, प्रधिः, निधिः ।

११५२ । स्त्रियां क्तिन् । (३-३-९४)

भावे अकर्तरि च कारके धातोः क्तिन् । तदन्तश्च स्त्रियाम् । यथा

कृ—कृतिः । मन—मतिः । सृज—सृष्टिः । वच—उक्तिः ।

॥ * ॥ ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः ॥

इति वार्तिकात् तकारस्य नत्वं—कॄ—कीर्णिः । लू—लूनिः ।

॥ * ॥ ग्ला-म्ला-ज्या-हा-भ्यो निः ॥ ग्लानिः, म्लानिः, ज्यानिः, हानिः ।

॥ * ॥ सम्पदादिभ्यः क्विप् ॥ सम्पद्, विपद्, रुच्, भास् इत्यादि ।

वासरूपविधिना—सम्पत्तिः । विपत्तिरित्याद्यपि ।

११५३ । अ प्रत्ययात् । (३-३-१०२)

प्रत्ययान्तेभ्यः (सनाद्यन्तेभ्यः) धातुभ्यः अप्रत्ययः स्त्रियाम् ।

यथा—चिकीर्षा, पुत्रकाम्या, अटाट्या, कण्डूया ।

११५४ । गुरोश्च हलः । (३-३-१०३)

हलन्तो यो धातुर्गुरुमान् ततः स्त्रियामप्रत्ययः । यथा—

ईहा, ऊहा, कुण्डा ।

वासरूपविधेः 'अस्त्रियाम्' इति निषेधात् क्तिनोऽपवादोऽयम् ॥

## ११५५ । षिद्भिदादिभ्योऽङ् । (३-३-१०४)

षिद्भ्यो भिदादिभ्यश्च क्तिनोऽपवादोऽङ् । यथा—

क्षमूष्—क्षमा । जॄष्—जरा । त्रपूष्—त्रपा । भिद्—भिदा । छिदा, मेधा, धारा, रेखा, चूडा, पीडा इत्यादि ।

## ११५६ । आतश्चोपसर्गे । (३-३-१०६)

आदन्तेभ्यश्च सोपसर्गेभ्योऽङ् स्त्रियाम् । यथा—

उपधा, उपदा, श्रद्धा, प्रतिष्ठा, उपमा, प्रमा ।

## ११५७ । ण्यासश्रन्थो युच् । (३-३-१०७)

ण्यन्तेभ्य आसश्रन्थाभ्यां च युच् 'अ प्रत्ययात्' इत्यस्यापवादः । यथा—कारणा, चोरणा, भावना, आसना, श्रन्थना ।

## ११५८ । रोगाख्यायां ण्वुल् बहुलम् । (३-३-१०८)

यथा—प्रच्छर्दिका, प्रवाहिका, विचर्चिका । बहुलग्रहणात् शिरोऽर्तिरित्येव ।

॥ * ॥ धात्वर्थनिर्देशे ण्वुल् वक्तव्यः ॥

स्त्रियामित्येव । यथा—

आसिका, शायिका, भञ्जिका, खादिका इत्यादि ।

## ११५९ । संज्ञायाम् । (३-३-१०९)

स्त्रियां ण्वुल् । यथा—

उद्दालकपुष्पभञ्जिका,—क्रीडाविशेषस्य संज्ञेयम् । वरणपुष्पचायिका । अभ्यूषखादिका ।

## ११६० । आक्रोशे नञ्यनिः । (३-३-११२)

आक्रोशे गम्ये नञ्युपपदे धातोरनिः । यथा—

'तस्याजननिरेवास्तु'—जननाभावः—एवम् अरमणिः ।

## ११६१ । कृत्यल्युटो बहुलम् । (३-३-११३)

भावे अकर्तरि च कारके इति निवृत्तम् । कृत्यप्रत्यया ल्युट् च बहुलमर्थेषु स्युः । अविहितेष्वर्थेष्वपि द्रष्टव्याः । यथा—

कृत्याः—स्नानीयं चूर्णम्—स्नान्त्यनेनेति करणे ।

दानीयो विप्रः—दीयतेऽस्मै इति सम्प्रदाने ।

ल्युट्—राजभोजनाः शालयः—राज्ञा भुज्यन्त इति कर्मणि ।

११६२। नपुंसके भावे क्तः। (३-३-११४)

११६३। ल्युट् च। (३-३-११५)

सिद्धावस्थापन्ने भावे क्तो ल्युट् च स्यात्, क्लीबता चानयोः। यथा—जल्पितं, जल्पनम्। विलोकितम्, विलोकनम्। चेष्टितम्, चेष्टनम्।

११६४। करणाधिकरणयोश्च। (३-३-११७)

ल्युडेवानुवर्तते योगविभागात्। यथा—इध्मव्रश्चनः कुठारः। गोदोहनी स्थाली।

११६५। पुंसि संज्ञायां घः प्रायेण। (३-१-११८)

करणाधिकरणयोरित्येव। यथा—दन्तच्छदः। उरश्छदः। आलयः।

---

## लकारार्थप्रकरणम्॥

इह सुबन्ततिङन्तप्रकरणयोः सुपां तिङां च प्रक्रिया एव कथिताः। अर्थविचारो न कृतः। स इदानीं प्राप्तावसर आरभ्यते। तत्र प्रथमं तिङामर्थविचारः, तेषां धात्वधिकारान्तर्गतत्वात्, धात्वधिकारस्य च प्रकृतत्वात्। तिङो लकारा आख्यातानीत्यनर्थान्तरम्। सन्निष्ठाकृत्यादयश्चाख्यातानामादेशाः स्थानीया वा। अत आख्यातानामाख्यातकानां चार्थविशेषा एकस्मिन्नेव प्रकरणे मिलिताः प्रदर्श्यन्ते। 'कर्तरि कृत्' इत्यादिः कृतां सामान्यतोऽर्थव्यवस्था प्रतिपादितैव॥

११६६। भविष्यति गम्यादयः। (३-३-३)

गम्यादयो भविष्यति काले स्युः। यथा—

ग्रामं गमी। प्रस्थायी। प्रतियोधी। भावी इत्यादि।

११६७। यावत्पुरानिपातयोर्लट्। (३-३-४)

निपातयोर्यावत्पुराशब्दयोरुपपदयोर्भविष्यति लट्। यथा—

यावत् भुङ्क्ते। पुरा भुङ्क्ते—भोक्ष्यत इत्यर्थः।

भविष्यत्कालद्योतकत्व एवानयोर्निपातत्वम् । तेन 'यावल्लभ्यते तावद्भोक्ष्यत' इत्येव ॥

११६८ । विभाषा कदाकर्ह्योः । (३-३-५)

अनयोर्योगे भविष्यति वा लट् । यथा—

कदा भुङ्क्ते । कर्हि भुङ्क्ते—भोक्ष्यते वा ।

११६९ । किंवृत्ते लिप्सायाम् । (३-३-६)

किंशब्दनिष्पन्नः किंवृत्तः । किंकतरकतमशब्दाः । लिप्सायां गम्यायां किंवृत्ते उपपदे भविष्यति लट् । यथा—

कः, कतरः, कतमो वा भिक्षां ददाति, दास्यति वा ।

तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् । (३-३-१०) (व्याख्यातम्)

११७० । भाववचनाश्च । (३-३-११)

तुमुना बाधो मा भूदिति भावार्थका घञादयश्च विधीयन्ते ॥

११७१ । अण् कर्मणि च । (३-३-१२)

भविष्यति काले कर्मण्युपपदे अण् च ॥

लृट् शेषे च । (३-३-१३) (व्याख्यातम्)

उक्तसूत्रचतुष्टयस्य युगपदुदाहरणम्—

अन्नं भोक्तुम्, अन्नं भोजको, अन्नस्य भोजनाय, अन्नभोजः, अन्नं भोक्ष्ये इति वा व्रजति देवदत्तः ।

११७२ । वर्तमानसामीप्ये वर्तमानवद्वा । (३-३-१३१)

वर्तमानसन्निहिते भूते भविष्यति च वर्तमाने इव प्रत्यया वा स्युः । यथा—

कदा त्वमागतोऽसि ?—अयमागच्छामि—भूते ।

कदा ग्रामं गमिष्यसि ?—एष गच्छामि—भविष्यति ।

पक्षे उभयत्रापि लट् ।

## ११७३। आशंसायां भूतवच्च। (३-३-१३२)

अप्राप्तस्य प्रियार्थस्य प्राप्तुमिच्छा आशंसा। तस्याश्च भविष्यत्कालो विषयः। तत्र भविष्यति काले आशंसायां द्योत्यायां भूतकाले इव प्रत्यया वा। चकाराद्वर्तमानवच्च। यथा—

यदि परीक्षायामुदतारिष्म नूनमधिकारमलप्स्महि।
,, उत्तरिष्यामः ,, लप्स्यामहे।
,, उत्तराम ,, लभामहे।
,, उत्तीर्णाः ,, लब्धवन्तः।

## ११७४। क्षिप्रवचने लृट्। (३-३-१३३)

क्षिप्रवाचिन्युपपदे आशंसायां लृडेव। यथा—

यदि परीक्षायां क्षिप्रमुत्तरिष्यामः क्षिप्रमधिकारं लप्स्यामहे।

## ११७५। आशंसावचने लिङ्। (३-३-१३४)

**यथा**—परीक्षायां चेदुत्तरेम, आशंसेऽधिकारं लभेय।

## लिङ्निमित्ते लृङ् क्रियातिपत्तौ (भविष्यति)। (३-३-१३९)

व्याख्यातं—(४३६) किं तु नोदाहृतम्। क्रियातिपत्तिर्नाम क्रियाया अनिष्पत्तिः। कुतश्चित् कारणात् क्रिया न निर्वृत्तेति प्रतीयते चेत् हेतुहेतुमद्भावादौ लिङर्थे लृङ्। हेतुः कारणम्, हेतुमत् फलम्।

**यथा**—नास्तिकोऽयं गिरां देवीमवन्दिष्यत चेन् परीक्षायामुदतरिष्यत्—

नास्तिकत्वान्न वन्दिष्यते अतश्च नोत्तरिष्यतीति गम्यते।

## ११७६। भूते च। (३-३-१४०)

उक्तेऽर्थे भूतेऽपि लृङ्। योगविभाग उत्तरार्थः। यथा—

सुवृष्टिश्चेदभविष्यत् धान्यमवप्स्याम—वृष्टिर्नाभूद्धान्यं च नोप्तमिति गम्यते।

## ११७७। वोताप्योः। (३-३-१४१)

इत ऊर्ध्वम् 'उताप्योः समर्थयोर्लिङ्' (३-३-१५२) इति सूत्रं यावद्यानि यानि लकारनिमित्तानि कथ्यन्ते तेषु तेषु भूते लिङ्निमित्ते लृङ् क्रियातिपत्तौ वा स्यादित्यधिकारोऽयम्॥

## ११७८ । गर्हायां लडपिजात्वोः । (३-३-१४२)

**गर्हायां गम्यायां अपिजात्वोरुपपदयोः कालत्रये लट् । यथा—**

अपि (जातु वा,) युधिष्ठिरोऽनृतं वदति—भूते ।

जातु मन्दोऽयं परीक्षायामुत्तरति—भविष्यति ।

अपि नृपोऽदण्ड्यान् दण्डयति—वर्तमाने ।

## ११७९ । विभाषा कथमि लिङ् च । (३-३-१४३)

**गर्हायामित्येव । चाल्लट् । विभाषाग्रहणात् पक्षे यथाप्राप्तं लकारः ।**

**यथा**—कथं नाम नृपोऽधर्ममाचरेत्, आचरति वा । पक्षे यथाकालम् आचरिष्यति, आचारीत् इति च ।

**अत्र क्रियातिपत्तिश्चेत् 'वोताप्योः' इत्यधिकारात् भूते लङ् वा । भविष्यति नित्यम् ।**

## ११८० । किंवृत्ते लिङ्लृटौ । (३-३-१४४)

**गर्हायां कालसामान्ये लिङ्लृटौ किंवृत्तः शब्द उपपदं चेत् ।**

**यथा**—को नाम नृपोऽधर्मं चरेच्चरिष्यति वा ।

**अत्रापि लङ्ह्यः । एवमग्रेऽपि लिङ्प्रसक्तौ ।**

## ११८१ । अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि । (३-३-१४५)

**अनवक्लृप्तिरसम्भावना । अमर्षोऽक्षमा । एतदर्थयोर्धात्वोरुपपदयोर्लिङ्लृटौ कालसामान्ये । यथा—**

नावकल्पयामि, न सम्भावयामि, न श्रद्दधे, न मर्षयामि, न सम्प्रधारयामि वा नृपोऽधर्मं चरेच्चरिष्यति वा ।

## ११८२ । किंकिलास्त्यर्थेषु लृट् । (३-३-१४६)

**अनवक्लृप्त्यमर्षार्थे 'किंकिल' इति निपातसमुदाये अस्त्यर्थे धातौ चोपपदे कालसामान्ये लृडेव । यथा—**

किंकिल त्वमसत्यं वक्ष्यसि । अस्ति भवति विद्यते वा अस्तिमान् भवान् परान्नं भोक्ष्यते ।

**११८३ । जातुयदोर्लिङ् । (३-३-१४७) (यदायद्योरुपसंख्यानम् ।)**

**अनवक्लृप्त्यमर्षयोरित्येव । लटोऽपवादः । यथा—**

जातु यद्यदा यदि वा त्वादृशो हरिं निन्देत् नावकल्पयामि ।

**११८४ । यच्चयत्रयोः । (३-३-१४८)**

**यथा**—यच्च यत्र वा त्वमेवं कुर्याः न श्रद्दधे न मर्षयामि ।

**११८५ । गर्हायां च । (३-३-१४९)**

**यच्चयत्रयोरुपपदयोर्लिङ् । यथा—**

यच्च यत्र वा परदारान् गच्छेः—गर्ह्यमेतत् ।

**११८६ । चित्रीकरणे च । (३-३-१५०)**

यच्च यत्र वा वामनस्त्रिभिः पदैर्जगन्मिमीत—चित्रमेतत् ।

**११८७ । शेषे लृडयदौ । (३-३-१५१)**

**यच्चयत्राभ्यामन्यत्र चित्रीकरणं शेषः । तत्र लृट् यदिशब्दस्य प्रयोगाभावे । यथा—**

आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति ।

**यदिप्रयोगे तु**—आश्चर्यं यदि मन्दः परीक्षायामुत्तरेत् ।

**११८८ । उताप्योः समर्थयोर्लिङ् । (३-३-१५२)**

**बाढमित्यर्थे अनयोः समानार्थता । यथा—**

उतायमधीयीत । अप्ययमधीयीत—बाढमध्येष्यत इत्यर्थः ।

**११८९ । कामप्रवेदनेऽकच्चिति । (३-३-१५३)**

**स्वाभिप्रायाविष्करणं कामप्रवेदनम् । तस्मिन् गम्यमाने कच्चिद्भिन्ने उपपदे धातोः कालत्रये लिङ् । यथा**—कामो मे भुञ्जीत भवान् ।

**कच्चिति तु**—'कच्चिज्जीवति ते माता कच्चिज्जीवति ते पिता ।'

**११९० । सम्भावनेऽलमिति चेत् सिद्धाप्रयोगे । (३-३-१५४)**

**सम्भावनं क्रियासु योग्यताध्यवसानम् । शक्तिश्रद्धानम् ।**

तस्मिन्नर्थे अलंशब्दप्रयोगं विनैव द्योत्ये धातोः कालत्रये लिङ् । यथा—अलमयं शिरसा गिरिं भेत्तुं इत्यर्थे

अपि गिरिं शिरसा भिन्द्यात् । अपि द्रोणमन्नं भुञ्जीत ।

## ११९१ । विभाषा धातौ सम्भावनवचनेऽयदि । (३-३-१५५)

सम्भावनावाचिनि धातावुपपदे पूर्वोक्तं वा । न तु यच्छब्दप्रयोगे ।

सम्भावयामि भुञ्जीत भोक्ष्यते वा भवान् । यत्प्रयोगे तु पूर्वेण नित्यं लिङ्—सम्भावयामि यद् भुञ्जीत भवान् ।

## ११९२ । हेतुहेतुमतोर्लिङ् । (३-३-१५६)

कार्यकारणभावे द्योत्ये धातोर्वा लिङ् । क्रियातिपत्तौ लृङ् । **यथा**—कृष्णं नमेच्चेत् सुखं यायात् । नमति चेत् सुखं याति । नंस्यति चेत् सुखं यास्यति ।

## ११९३ । इच्छार्थेषु लिङ्लोटौ । (३-३-१५७)

(कामप्रवेदने इति वाच्यम्)

इच्छार्थेषु धातुषूपपदेषु सर्वलकारापवादौ लिङ्लोटौ । यथा—

इच्छामि भुञ्जीत भवान् । भुङ्क्तां वा ।

## ११९४ । समानकर्तृकेषु तुमुन् । (३-३-१५८)

इच्छार्थकेषु धातुषु समानकर्तृकेषु उपपदेषु तुमुन् । यथा—

इच्छामि भोक्तुम् । भिन्नकर्तृके तु—इच्छामि भुञ्जीत भवान्, भुङ्क्तां वा इति पूर्वसूत्रेण लिङ्लोटावेव ।

## ११९५ । लिङ् च । (३-३-१५९)

तुमुन्विषये लिङ् च । यथा—इच्छामि भुञ्जीयेति ।

## ११९६ । इच्छार्थेभ्यो विभाषा वर्तमाने । (३-३-१६०)

पक्षे यथाप्राप्तो लट् । इच्छति, इच्छेत् । वाञ्छति, वाञ्छेत् ।

विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् । (३-३-१६१)

लोट् च । (३-३-१६२)

व्याख्यातं सूत्रद्वयमत्रोदाह्रियते—

विधिः शास्त्रचोदना—अहरहः सन्ध्यामुपासीत । उपास्तां वा ।
निमन्त्रणमावश्यके कार्ये नियोगः—श्राद्धं भुञ्जीत भवान्, भुङ्क्तां वा ।
आमन्त्रणं कामचारानुज्ञा—इहासीत भवान्, आस्तां वा ।
अधीष्टः सत्कारपूर्वो व्यापारः—मम पुत्रं भवानुपनयेत्, उपनयतु वा ।
संप्रश्नः संप्रधारणम्—किंनु भो व्याकरणमधीयीय, अध्ययै वा ।
प्रार्थना याच्ञा ।—पुत्रमहं लभेय, लभै वा ।

विध्यादयः प्रवर्तनाभेदा इत्येव ।

**११९७ । प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च । (३-३-१६३)**

एषु धातोः कृत्यप्रत्यया लोट् च । यथा—

विधिभेदः प्रैषः—त्वया कटः कार्यः कर्तव्यः, क्रियतां वा ।
कामचाराभ्यनुज्ञातिसर्गः—यष्टव्यं त्वया, इज्यतां वा ।
अवसरप्राप्तिबोधनं प्राप्तकालः—अथ भोक्तव्यं त्वया, भुज्यतां वा ।
'यजतां पाण्डवः स्वर्गमवत्विन्द्रस्तपत्विनः—अतिसर्गः ।
वयं हनाम द्विषतः सर्वः स्वार्थं समीहते'—प्राप्तकालः ।

**११९८ । कालसमयवेलासु तुमुन् । (३-३-१६७)**

प्रैषाद्यर्थे द्योत्ये कालार्थकेषूपपदेषु तुमुन् । यथा—

कालः समयो वेलानेहा वा भोक्तुम् ।

**११९९ । लिङ् यदि । (३-३-१६८)**

कालादिष्वित्येव । कालो यद्भुञ्जीत भवान् ।

**१२०० । अर्हे कृत्यतृचश्च । (३-३-१६९)**

योग्यार्थे कृत्याः, तृच्, लिङ् च । यथा—

भवता कन्या वोढव्या । भवान् कन्याया वोढा । भवान् कन्यां वहेत् ।

**१२०१ । आवश्यकाधमर्ण्ययोर्णिनिः । (३-३-१७०)**

अवश्यङ्कारी, शतं दायी ।

**१२०२ । कृत्याश्च । (३-३-१७१)**

अवश्यकार्यम् । अवश्यकृत्यम् । शतं देयम् ।

'लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि' इति वचनात् समासे अवश्यकार्यम् । अवश्यकर्तव्यमित्यादि । एवं कर्तुकामः, कर्तुमनाः इत्याद्यपि ।

## १२०३ । शकि लिङ् च । (३-३-१७२)

शक्यर्थे लिङ्, कृत्यप्रत्ययाश्च । यथा—

भवान् भारं वहेत् । भवता भारो वोढव्यः—भारवहने भवान् शक्त इत्यर्थः ।

आशिषि लिङ्लोटौ (३-३-१७३) व्याख्यातम् । भूयात्, भवतात् ।

## १२०४ । माङि लुङ् । (३-३-१७५)

माङ् इति निपाते उपपदे धातोर्लुङ् सर्वलकारापवादः । 'न माङ्योगे' (४७०) इत्यडाटोः प्रतिषेधः । यथा—

मा त्वं भैषीः । मैवं भाषिष्ठाः । मा पीडा भूत् ।

लोडपि दृश्यते—मास्तु, अनृतं मा वद ।

## १२०५ । स्मोत्तरे लङ् च । (३-३-१७६)

चाल्लुङ्—मास्म करोत्, कार्षीद्वा ।

## १२०६ । धातुसम्बन्धे प्रत्ययाः । (३-४-१)

धात्वर्थसम्बन्धो धातुसम्बन्धः । स च विशेषणविशेष्यभावः । तदनुसारेण यथाकालोक्ताः प्रत्ययाः स्युः । कालस्यापेक्षिकत्वात् विशेष्यक्रियाकालापेक्षया विशेषणक्रियाया भूतभविष्यद्वर्तमानव्यवहार इत्यर्थः । प्रत्यया इति सामान्यग्रहणात् न केवलं कृत्सु लकारेषु च, अपि तु तद्धितेष्वप्ययमेव नियमः । यथा—

सीतां परिणीयागच्छन् रामो जामदग्न्येनाधर्षि

अत्र आगच्छन्निति वर्तमानकालो धर्षणापेक्षया ।

"कदा वाराणस्याममरतटिनीरोधसि वसन्
प्रसीदेति क्रोशन् निमिषमिव नेष्यामि दिवसान्"

अत्र वसन् क्रोशन् इति लटः शता नेष्यामीति भविष्यदपेक्षया ।

अयं ग्रन्थो मासादर्वाक् पूर्णो भविष्यति

अत्र भविष्यदपेक्षया पूर्ण इति भूते निष्ठा ।

गतवानस्मि काशीम्—अत्रास्मीति कथनकालापेक्षया गतवानिति भूते क्तवतुः।

कीर्तिमानासीन्नलो राजा—अत्र कीर्तिरस्यास्तीति कीर्तिमान् इति तद्धिते अस्तीति वर्तमानकालः आसीदिति भूतापेक्षया ।

**१२०७। क्रियासमभिहारे लोड् लोटो हिस्वौ वा च तध्वमोः। (३-४-२)**

पौनःपुन्यं भृशार्थश्च क्रियासमभिहार इत्युक्तम्। तस्मिन् द्योत्ये धातोः सर्वलकारापवादो लोट्। लोटश्च सर्वतिङपवादो हिस्वौ। (आन्तरतम्यात् परस्मैपदिनां हिः आत्मनेपदिनां स्वः)। तध्वमोर्विषये परं हिस्वौ विकल्पेनैव। 'क्रियासमभिहारे द्वे वाच्ये' इति वार्त्तिकात् द्वित्वम्। यथा—

लुनीहि लुनीहीत्ययं लुनाति—इमे लुनन्ति इत्यादि।

लोटः सर्वलकारापवादत्वात्—

लुनीहि लुनीहीत्ययमलुनात्, लविष्यति वा। एवमधीष्वाधीष्वेत्ययमधीते—अध्यगीष्ट, अध्येष्यते वा।

**१२०८। समुच्चयेऽन्यतरस्याम्। (३-४-३)**

अनेकक्रियासमुच्चये लोट्, लोटो हिस्वौ वा च तध्वमोरिति सर्वं वा स्यात्। पक्षे यथाप्राप्तं लकाराः। यथा—

गजान् बधान, अश्वानुच्चाटय, रथानुत्पाटय, पदातींस्ताडयेति युध्यते वीरः। पक्षे—गजान् बध्नाति, अश्वानुच्चाटयति, रथानुत्पाटयति, पदातींस्ताडयति।

बन्धनोच्चाटनोत्पाटनताडनानि विशेषभूतानि सामान्ये युद्धक्रियायां सामान्यविशेषभावेन सम्बध्यन्ते।

"पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः।
विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्दिवं दिवः॥"

अत्रानुप्रयोगे नियमं करोति—

**१२०९। यथाविध्यनुप्रयोगः पूर्वस्मिन्। (३-४-४)**

पूर्वस्मिन् क्रियासमभिहारे लोड्विधौ लोट्प्रकृतिरेव धातुरनुप्रयोक्तव्यः॥

१२१० । समुच्चये सामान्यवचनस्य । (३-४-५)

समुच्चये लोड्विधौ सामान्यवाची धातुरनुप्रयोक्तव्यः । तथैव उभयमप्युदाहृतम् ॥

१२११ । अभिज्ञावचने लृट् । (३-२-११२)

भूत इत्यनुवर्तते । अभिज्ञा स्मृतिः । तद्वाचिनि धातावुपपदे भूते लृट् । यथा—स्मरसि कृष्ण गोकुले वत्स्यामः ।

१२१२ । न यदि । (३-२-११३)

यच्छब्दसहितेऽभिज्ञावचने उपपदे भूते न लृट् । यथा—
अभिजानासि कृष्ण यद् गोकुले अवसाम ।

१२१३ । विभाषा साकाङ्क्षे । (३-२-११४)

लक्ष्यलक्षणभावेन साकांक्षत्वे उक्तविषये लृड्वा स्यात् । यथा—
स्मरसि कृष्ण गोकुले वत्स्यामः, तत्र गाश्चारयिष्यामः ।
अत्र वासो लक्षणम् । चारणं लक्ष्यम् । पक्षे लङपि ॥

१२१४ । लट् स्मे । (३-२-११८)

स्मशब्दे उपपदे भूते लट् । लिटोऽपवादः । यथा—
यजति स्म युधिष्ठिरः ।

---

एवं परिसमाप्ते धात्वधिकारे धातूनां नानाविधानुबन्धकरणस्य विकृतैर्वर्णैः पाठस्य च फलं प्रक्रियासर्वस्वादुद्धृत्य प्रदर्श्यते—

" उदात्तेत्त्वानुदात्तेत्त्वस्वरितेत्त्वविभागकृत् ।
एधादीनामकारोऽन्त्यः कथादीनां त्ववृद्धिकृत् ॥

एध वृद्धौ—एधते । गद व्यक्तायां वाचि—गदति । लिह आस्वादने—लेढि, लीढे ।

आदिर्दीदिच्च निष्ठायामनिट्त्वार्थं कृतावुभौ ।
भावादिकर्मणोर्वेट् स्यादादितामिति भिद्यते ॥

ञि ष्विदा—प्रस्वेदितः प्रस्विन्नो वा चैत्रः । स्विन्नं स्वेदितं वा चैत्रेण । मदी हर्षग्लेपनयोः—मत्तः, मत्तवान् ।

इदित्त्वं हि नुमर्थं स्यादुदित्त्वं क्त्वीड्विकल्पकृत् ।
ऊदित्त्वं हीड्विकल्पार्थमृदिच्चङ्ह्रस्वबाधकः ॥

णिदि कुत्सायां—निन्दति । असु क्षेपे— असित्वा, अस्त्वा ।
त्रपूष् लज्जायां—त्रपिष्यते, त्रप्स्यते । नाथृ याच्ञायां—अननाथत् ।

ऌदित्त्वं लुङ्यङर्थं स्यादेदित्त्वं सिच्यवृद्धिकृत् ।
निष्ठानत्वार्थमोदित्त्वं ङित्त्तङर्थौ द्वयाय ञित् ॥

शक्लृ शक्तौ—अशकत् । कटे वर्षावरणयोः—अकटीत् । ओ हाक् त्यागे—हीनः, हीनवान् । डीङ् विहायसा गतौ—डयते । णीञ् प्रापणे—नयति, नयते ।

इरित्त्वमङ्विकल्पार्थं षित्त्वं भावेऽङ्विधायकम् ।
ञि वर्तमाने क्तार्थोऽयं डुटुशब्दौ क्त्रिथुच्फलौ ॥

रुधिर् आवरणे—अरुधत्, अरौत्सीत् । क्षमूष् सहने—क्षमा । ञि ष्विदा—स्विन्नः । डु कृञ् करणे—कृत्रिमम् । टु णदि समृद्धौ—नन्दथुः ।

नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजश्शकारश्चे षाट्टवर्गस्तवर्गजः ॥

स्रन्सु = स्रंसु । अन्चु = अञ्चु । व्रस्चू = व्रश्चू । ष्थिवु = ष्ठिवु ।

अनुदात्तात्मता धातोरिण्निषेधार्थमुच्यते ।
उदात्तत्वं च सेट्त्वार्थमिति सर्वत्र दृश्यताम् ॥"

शक्लृ—शक्ष्यति । वद—वदिष्यति ।

## विभक्त्यर्थप्रकरणम् ॥

प्रसङ्गवशात् पूर्वमेव कारकस्य सामान्यलक्षणमुक्तम् । निरुक्ते प्रधानकारके कर्तृकर्मणी; शेषाणि च हेतु-सम्प्रादना-पादान-करणाधिकरणाख्यानि नामतः परिगणितानि । एवमत्र विभक्त्यर्थप्रकरणे भारो लघूकृतो वर्तते। विभक्तेस्तावत् कारकविभक्तिरुपपदविभक्तिरित्यर्थोपाधिको द्विविधो भेदः । तत्र कारकविभक्तिर्व्यापकं, निरुक्तस्वरूपं, तत्तत्कारकात्मकं सम्बन्धमाह । अन्या व्याप्यस्वरूपं तत्तदुपपदानुरोधात् भिन्नभिन्नं सम्बन्धमभिदधाति । अत्र सूत्रक्रमानुरोधेन प्रथमं कारकाणि लक्षयित्वा तदर्थे उपपदयोगे च विभक्तीर्विधास्यामः । अमुकस्मिन् कारकेऽमुका विभक्तिः प्रयोक्तव्येति व्यवस्थायामकृतायां कारकाणामुदाहरणमशक्यमिति सा व्यवस्था वृत्तेनात्र पूर्वमेव संगृह्यते—

तेजोवत् प्रथमा स्थितं प्रकटयत्यर्थं, द्वितीया पुनः
स्यात् कर्मण्यथ हेतुकर्तृकरणेष्वेवं तृतीया भवेत् ।
तुर्यार्थः किल सम्प्रदानक,-मपादानार्थिका पञ्चमी,
सप्तम्या ह्यभिधीयतेऽधिकरणं, शेषेषु षष्ठी मता ॥

### १२१५ । कारके । (१-४-२३)

इतः परं कारके (क्रियायां) विषये संज्ञा विधीयन्ते । इत्यधिक्रियते ॥

### १२१६ । ध्रुवमपायेऽपादानम् । (१-४-२४)

अपायो विश्लेषः, तत्र कारके ध्रुवं (स्थिरं) अपादानसंज्ञं स्यात् । विश्लेषे साध्ये तद्युक्तमवधिभूतं अपादानमित्यर्थः । अपादानं पञ्चमी वक्तीत्युक्तं हि । यथा—

वृक्षात् पर्णं पतति । रथादवरोहति सूतः । ग्रामादागच्छति वटुः । मार्गात् भ्रश्यति पान्थः ।

धावतोऽश्वात् पततीत्यादौ चलतोऽप्यश्वस्य पतनक्रियापेक्षं स्थिरत्वमादायापादानसंज्ञा प्रवर्तते । बुद्धिकृतमपि सम्बन्धं पुरस्कृत्य कारकाणि भवन्ति । तेन—

| | |
|---|---|
| आचार्याद्वेदमधीते । | पापात् विरमति । |
| हिमवतो गङ्गा प्रवहति । | चोरात् बिभेति । |

इत्यादिषु बौद्धं विश्लेषमवलम्ब्यापादानत्वम् । अत उपलक्षणार्थकैः 'भीत्रार्थानाम्........' इत्यादिभिरुत्तरसूत्रैः प्रकृतसूत्रस्य प्रपञ्च एव क्रियत इति बोध्यम् ।

॥ * ॥ **जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्** ॥

जुगुप्सादीनां विषयभूतं कारकमपादानम् । अत्रापि बौद्धो विश्लेषः सम्भवतीति प्रपञ्चार्थमेव वार्तिकमिदम् । यथा—पापाज्जुगुप्सते, विरमति, स्खलति वा ।

१२१७ । **भीत्रार्थानां भयहेतुः** । (१-४-२५)

एषां प्रयोगे भयहेतुरपादानम् । यथा—चोरात् बिभेति । चोरात् त्रायते ।

१२१८ । **पराजेरसोढः** । (१ ४-२६)

असोढः असह्य इत्यर्थः । यथा—

अध्ययनात् पराजयते—अध्ययनस्यासह्यत्वात् ग्लानो भवतीत्यर्थः ।

१२१९ । **वारणार्थानामीप्सितः** । (१-४-२७)

यथा—यवेभ्यो गां वारयति । निवर्तयतीत्यर्थः ।

१२२० । **अन्तर्धौ येनादर्शनमिच्छति** । (१-४-२८)

यत्कर्तृकमदर्शनमिच्छतीत्यर्थः । यथा—मातुर्निलीयते बालः, अन्तर्धत्ते वा ।

१२२१ । **आख्यातोपयोगे** । (१-४-२९)

नियमपूर्वकविद्यास्वीकारे गुरुरपादानम् । यथा—उपाध्यायादधीते, पठति वा ।

१२२२ । **जनिकर्तुः प्रकृतिः** । (१-४-३०)

जायमानस्य हेतुरपादानं स्यात् । थया—गोमयाद्वृश्चिको जायते ।

१२२३ । **भुवः प्रभवः** । (१-४-३१)

हिमवतो गङ्गा प्रभवति ।

अथ सम्प्रदानम्—

## १२२४ । कर्मणा यमभिप्रैति स सम्प्रदानम् । (१-४-३२)

कर्ता कर्मणा यत् प्राप्तुमिच्छति तत् कारकं सम्प्रदानसंज्ञम् ।

यथा— विप्राय गां ददाति | शिष्याय शास्त्रमुपदिशति ।
राज्ञे करमर्पयति | अतिथये पाद्यमुपनयति ।

### १२२५ । रुच्यर्थानां प्रीयमाणः । (१-४-३३)

प्रीयमाणस्तर्प्यमाणः, प्रीतिभाक् इत्यर्थः । अन्यकर्तृकोऽभिलाषो रुचिः । रुच्यर्थानां प्रयोगे प्रीतिभाक् सम्प्रदानं स्यात् । यथा—

वालाय रोचते स्वदते वा मोदकः—बालकं तर्पयतीत्यर्थः ।

### १२२६ । श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः । (१-४ ३४)

यथा—गोपी कृष्णाय श्लाघते, स्वकृतां श्लाघां कृष्णो जानीयादिति श्लाघत इत्यर्थः । एवं ह्नुते, शपते, तिष्ठते इति ।

### १२२७ । धारेरुत्तमर्णः । (१-४-३५)

यथा—देवदत्ताय शतं धारयति-शतमितमृणं देवदत्ताय प्रत्यर्पणीयं वहतीत्यर्थः ।

### १२२८ । स्पृहेरीप्सितः । (१-४-३६)

स्पृहयतेः प्रयोगे आप्तुमिष्टः संप्रदानम् । 'कर्तुरीप्सिततमं कर्म' इतीप्सिततमत्वे कर्मसंज्ञा विधास्यते । यथा—

पुष्पेभ्यः स्पृहयति—पुष्पविषयकां स्पृहां करोति ।

पुष्पाणि स्पृहयति—अत्र सप्रकर्षा स्पृहा ।

### १२२९ । क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः । (१-४-३७)

क्रोधोऽमर्षः, द्रोहोऽपकारः, ईर्ष्या अक्षमा, असूया गुणेषु दोषाविष्करणम् । एतदर्थकानां प्रयोगे कोपविषयः संप्रदानम् । क्रोधस्तावत् कोप एव । द्रोहादयः कोपप्रभवा एव विवक्षिताः । अत उक्तं सामान्येन 'यं प्रति कोपः' इति । यथा—

चैद्यो हरये क्रुध्यति, द्रुह्यतीर्ष्यत्यसूयति वा ।

प्रत्यु०—('यं प्रति कोपः' किम्?) भार्यामीर्ष्यति-मैनामन्यो द्राक्षीदिति कोपोऽत्रान्य विषयकः ।

### १२३० । क्रुधद्रुहोरुपसृष्टयोः कर्म । (१-४ ३८)

सोपसर्गयोस्तु क्रुधद्रुहोः प्रयोगे यं प्रति कोपः तत्कारकं कर्मसंज्ञं स्यात् । यथा-

देवदत्तमभिक्रुध्यति, अभिद्रुह्यति वा ।

१२३१ । राधीक्ष्योर्यस्य विप्रश्नः । (१-४-३९)

राधीक्ष्योरत्र शुभाशुभपर्यालोचनमर्थः । तत्र यस्य शुभाशुभे पर्यालोच्येते स संप्रदानम् । विप्रश्नः शुभाशुभसम्बन्धी विविधः प्रश्नः । यथा—

गर्गः कृष्णाय राध्यतीक्षते वा — नन्देन पृष्टः कृष्णस्य शुभाशुभरूपं दैवं पर्यालोचयतीत्यर्थः ।

१२३२ । प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता । (१-४-४०)

पूर्वस्य = पूर्वव्यापारस्य । प्रतिश्रवाश्रवावभ्युपगमार्थकौ । येन प्रथमं प्रार्थितः कर्ता अभ्युपगच्छति स संप्रदानम् । यथा—विप्राय गां प्रतिशृणोति आशृणोति वा विप्रेण प्रार्थितः प्रतिजानीत इत्यर्थः ।

१२३३ । अनुप्रतिगृणश्च । (१-४-४१)

पूर्वस्य कर्तेत्यनुवर्तते । अनुगरः प्रतिगरश्च शंसितुः प्रोत्साहनमभिधत्ते । यथा—होत्रे प्रतिगृणाति, अनुगृणाति वा—शंसन्तं होतारं प्रोत्साहयतीत्यर्थः ।

अथ करणम्—

१२३४ । साधकतमं करणम् । (१-४-४२)

क्रियासिद्धौ यत् प्रकृष्टोपकारकं तत्कारकं करणसंज्ञं स्यात् ।

यथा— दण्डेन ताडयति | हस्तेन गृह्णाति ।
परशुना छिनत्ति | मुष्टिना हन्ति ।

१२३५ । दिवः कर्म च । (१-४-४३)

दिवुधातोः प्रयोगे तु साधकतमं कर्मसंज्ञं स्यात्, चकारात् करणसंज्ञं च । यथा अक्षान् अक्षैर्वा दीव्यति ।

१२३६ । परिक्रयणे सम्प्रदानमन्यतरस्याम् । (१-४-४४)

नियतकालं वेतनादिना भृत्यादेरात्यन्तिकः क्रय एव परिक्रयणम् । तत्र क्रियायां साधकतमं सम्प्रदानं करणं वा स्यात् । यथा—

शताय शतेन वा परिक्रीतो भृत्यः ।

अथाधिकरणम्—

१२३७ । आधारोऽधिकरणम् । (१-४-४५)

कर्तुः कर्मणो वा क्रियाश्रयभूतस्य धारणक्रियां प्रत्याधारभूतं कारकमधिकरणसंज्ञं स्यात् । यथा—

कटे आस्ते—कर्तुराधारः । स्थाल्यां पचति तण्डुलान्—कर्मण आधारः ।

औपश्लेषिकः, अभिव्यापकः, वैषयिकश्चेति त्रिविध आधारः, संभवति। यथा—

ग्रामे वसति—ग्रामस्यैकदेश एव वसतीत्यौपश्लेषिक आधारः।
तिले तैलं वर्तते—सर्वत्र व्याप्यं तैलमित्यभिव्यापकः।
मोक्षे इच्छास्ति—इच्छाया मोक्षविषयत्वाद्वैषयिकः।

१२३८। अधिशीङ्स्थासां कर्म। (१-४-४६)

अधिपूर्वत्वे शीङ्स्थासामाधारः कर्मसंज्ञः। यथा—
तल्पमधिशेते, अधितिष्ठति, अध्यास्ते वा।

१२३९। अभिनिविशश्च। (१-४-४७)

आधारः कर्म स्यात्। प्रायिकश्चायं विधिः। 'एष्वर्थेष्वभिनिविष्टानाम्' इति भाष्य एव प्रयोगदर्शनात्। यथा—सन्मार्गमभिनिविशते।

१२४०। उपान्वध्याङ्वसः। (१-४-४८)

यथा—ग्राममुपवसति, अनुवसति, अधिवसति, आवसति वा सेना।

अथ कर्म—

## १२४१। कर्तुरीप्सिततमं कर्म। (१-४-४९)

कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञम्। यथा—

ग्रामं गच्छति। ओदनं भुङ्क्ते। कटं करोति। हरिं भजति।

प्रत्यु० ('कर्तुः' किम्?) माषेष्वश्वं बध्नाति—अत्र कर्मण ईप्सिता माषाः, न तु कर्तुः।
('तमब्ग्रहणं' किम्?) पयसा ओदनं भुङ्क्ते—पयोऽपेक्षया ओदनस्य ईप्सिततमत्वात् करणत्वमेव।

"त्रिविधं कर्म निर्वर्त्यविकार्यप्राप्यभेदतः।
घटं करोति, तक्ष्णोति वृक्षम्, आदित्यमीक्षते॥"

## १२४२। तथायुक्तं चानीप्सितम्। (१-४-५०)

अनीप्सितमीप्सितवत् क्रियया युक्तं कर्म स्यात्। यथा—

विषं भुङ्क्ते। ग्रामं गच्छंस्तृणं स्पृशति।

## १२४३। अकथितं च। (१-४-५१)

अपादानादिविशेषैरविवक्षितं च कारकं कर्मसंज्ञम्। ईदृश्यः क्रिया एता एवेति व्याख्यातृभिः परिगणिताः—

**दुह्-याच्-पच्-दण्ड्-रुधि-प्रच्छि-चिञ्-ब्रू-शासु-जि-मथ्-मुषाम् ।**
**कर्मयुक्स्यादकथितं तथा स्यान्नी-हृ-कृष्-वहाम् ।**

**यथा**—गां दोग्धि पयः—गोरित्यपादानमविवक्षितम् ।
बलिं ययाचे वसुधां—बलेः ,, ,,
तण्डुलानोदनं पचति—तण्डुलैरिति करणम् ,,
देवदत्तं शतं दण्डयति—देवदत्तादित्यपादानम् ,,
व्रजमवरुणद्धि गाः—व्रजे इत्यधिकरणम् ,,
माणवकं पन्थानं पृच्छति—माणवकायेति सम्प्रदानम् ,,
वृक्षमवचिनोति फलानि—वृक्षादित्यपादानम् ,,
माणवकं धर्मं ब्रूते शास्ति वा—माणवकायेति सम्प्रदानम् ,,
शतं जयति देवदत्तं (द्यूते)—देवदत्तादित्यपादानम ,,
सुधां क्षीरनिधिं मथ्नाति—क्षीरनिधेरित्यपादानम् ,,
पान्थं शतं मुष्णाति चोरः—पान्थात् ,, ,,
ग्राममजां नयति, हरति, कर्षति, वहति वा—ग्रामे इत्यधिकरणम् ।

**अर्थनिबन्धनेयं परिगणना । तेन**

बलिं भिक्षते, प्रार्थयते वसुधाम् इत्याद्यूह्यम् ।

**१२४४ । गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ । (१-४-५२)**

**अणौ अण्यन्तावस्थायां केवलक्रियायां कर्ता अणिकर्ता । (स इति कर्ता परामृश्यते) स णौ णिसहितायामवस्थायाम् । गतिबुद्धि-भुक्त्यर्थानां शब्दकर्मकाणाम् अकर्मकाणां च धातूनाम् अण्यन्तावस्थायां कर्ता ण्यन्तावस्थायां कर्म स्यात् । उक्तानां क्रियाणां प्रयोज्यकर्ता कर्म स्यादित्यर्थः । यथा—**

"शत्रूनगमयत् स्वर्गं वेदार्थं स्वानवेदयत् ।
आशयच्चामृतं देवान्वेदमध्यापयद्विधिम् ॥
आसयत् सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः ।"

**गत्यर्थादिभिन्नानां तु कर्तरि तृतीयैव । यथा—**

पाचयत्योदनं देवदत्तेन ।

धात्वन्तरेष्वपि अणिकर्तुः कर्मत्वं दृश्यते। यथाह प्रक्रियासर्वस्वकारः—

"श्रुदृशोर्णेर्द्विकर्मत्वमाह भोजश्च कौमुदी[1]—
मां वेणुं श्रावयेत् कृष्णो, रूपं मां दर्शदेदसौ॥
तारेर्ग्राहेस्तथा मोचेस्त्याजेर्दापेश्च संग्रहः।
इत्युक्तं माधवेनापि—भवाब्धिं तारयेत् स माम्॥
ग्राहयेन्मां निजं रूपं रागादीन्मां विमोचयेत्।
मां पापं त्याजयेत् सद्यो धनं मां दापयेद्धरिः॥"

तथा हि प्रयोगाश्च—

'अयाचितारं न हि देवमद्रिः सुतां प्रतिग्राहयितुं शशाक'—कुमारसम्भवम्।
'त्याजितैः फलमुत्खातैः'—रघुवंशम्।

## १२४५। हृक्रोरन्यतरस्याम्। (१-४-५३)

अणिकर्ता णौ वा कर्म स्यात्। यथा—

हारयति भारं भृत्यान्, भृत्यैर्वा। कारयति कटं देवदत्तं, देवदत्तेन वा।

**॥*॥ अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्॥** यथा—

देशः कुरुपाञ्चालादिः—कुरून् स्वपिति। कालो मुहूर्तमासादिः—निशां जागर्ति। भावः क्रियोपयुक्तः कालः—गोदोहं विहरति बालः। गन्तव्योऽध्वा क्रोशयोजनादिः—क्रोशं धावति रथी।

**॥ * ॥ क्रियाविशेषणानां कर्मसंज्ञा वाच्या॥** यथा—

मन्दं गच्छति। मृदु हसति। व्यक्तमाह—

अथ कर्ता—

## स्वतन्त्रः कर्ता। (१-४-५४) (व्याख्यातं ७७८)। यथा—

| | | |
|---|---|---|
| देवदत्तेन पच्यते। | देवो वर्षति। | तूलिका लिखति। |
| वृक्षेण स्थीयते। | स्थाली पचति। | कालिदासेन कृतो ग्रन्थः। |

---

१. प्राचीना प्रक्रियाकौमुदी न तु सिद्धान्तकौमुदी।

**तत्प्रयोजको हेतुश्च।** (१-४-५५) (व्याख्यातम् ७७९)। यथा—

पाचयत्योदनं देवदत्तेन यज्ञदत्तः। गुरुः शिष्यान् शास्त्रमध्यापयति।

नाम्नां क्रियया संबन्धो हि कारकव्यपदेशस्य निमित्तम्। स च दूर आसन्नो वा भवति। तत्र अपादानस्य दविष्ठः संबन्धः, ततः संप्रदान-करण-अधिकरण-कर्म-कर्तॄणाम् इति दूरताया अवरोहेण, आसत्तेरारोहेण वा क्रमः। अत्र प्रथमं क्रममुपात्तवानाचार्य एकसंज्ञाधिकारे 'विप्रतिषेधे परं कार्यम्' इति परिभाषाया अनुरोधात्। एवं च यथा यथा संबन्ध आसन्नस्तथा तथा बलीयः कारकमिति सिद्धम्॥

अथ कारकाणामर्थे उपपदयोगे च विभक्तयो विधीयन्ते—

कारकाणि तावद्विभक्तिभिन्नानां प्रत्ययानामन्येषां चार्थतया दृश्यन्ते। यथा—लकाराः कर्तृकर्मकारकयोर्विहिताः। कृत्प्रत्ययास्तयोः, 'करणाधिकरणयोश्च (ल्युट्)' 'भीमादयोऽपादाने' इत्यन्येष्वपि कारकेषु दृश्यन्ते। तद्धिताः 'तेन क्रीतं' 'तत आगतः' इति नानाकारकार्थेषु भवन्ति। समासाः 'प्राप्तमुदकं यं स प्राप्तोदको ग्राम' इत्यादौ कारकार्थेषूपलभ्यन्ते। निपाताश्च सन्ति कर्माद्यर्थेषु साम्प्रतं (युक्तम) इत्यादयः। एवमन्यथासिद्धे कारकार्थे विभक्तीनां नावसर इति स्पष्टीकर्तुम् अधिकरोत्याचार्यः—

**१२४६। अनभिहिते।** (२-३-१)

इति। तिङ्कृत्तद्धितसमासनिपातैरनुक्त एव कारके विभक्तयो विधीयन्त इत्यर्थः। उक्ते पुनः कारके प्रथमा विधास्यते। इह हि पदमेव प्रयोगार्हम्। पदं च सुप्तिङ्प्रत्ययान्यतरान्तम्। अत एव विभक्तियोगानर्हेष्वप्यव्ययेषु प्रथमां विभक्तिमुत्पाद्य लोपयन्ति पाणिनीयाः। उक्तसिद्धान्तानुरोधेनाभिहिते कारके प्रथमा भवति। यथा—

देवदत्त ओदनं पचति—लटाभिहिते कर्तरि प्रथमा।

देवदत्तेनौदनः पच्यते— ,, कर्मणि ,,

## १२४७ । कर्मणि द्वितीया । (२-३-२)

अनभिहिते कर्मणि द्वितीया स्यात् । इह त्रिविधं कर्म संभवति निर्वर्त्त्यं, विकार्यं, प्राप्यं चेति पूर्वमेवोक्तम् । यथा—

कटं करोति—निर्वर्त्यम् । वृक्षं तक्ष्णोति विकार्यम् । सूर्यमीक्षते—प्राप्यम् ।

द्विकर्मकेषु कतरस्य कर्मणोऽभिधानमिति व्यवस्था क्रियते—

**(१) गौणे कर्मणि दुह्यादेः । (२) प्रधाने नीहृकृष्वहाम् ।**
**(३) बुद्धिभक्षार्थयोः शब्दकर्मणां च निजेच्छया ।**
**(४) प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः ।**

(१) दुहादीनां द्वादशानाम् 'अकथितं च' इति विहितेऽप्रधाने कर्मणि लकाराः क्तादयश्च भवन्ति । अतस्तत् कर्माभिहितम् । यथा—

गौः पयो दुह्यते । बलिर्वसुधां याच्यते ।

(२) नीहृकृष्वहां चतुर्णां प्रधानं कर्माभिहितम् । यथा—

अजो ग्रामं नीयते, ह्रियते, कृष्यते, उह्यते वा ।

(३) 'गतिबुद्धि......' इति विहिते कर्मणि बुद्धिप्रत्यवसानार्थशब्दकर्मणां प्रधानमप्रधानं वा यथाविवक्षितमभिहितम् । यथा—

वटुर्वेदमध्याप्यते । वेदो वटुमध्याप्यते वा ।

(४) अन्येषां गत्यर्थाकर्मकहरतिकरोतीनां प्रयोज्यकर्माभिहितम् । यथा—देवदत्तो ग्रामं गम्यते ।

**॥ * ॥ उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।**
**द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥**

उभयतः सर्वतः धिक् एषां, द्विरुक्तानाम् उपरि, अधि, अधस् एषां च उपपदानां योगे द्वितीया वक्तव्या । अन्येषामपि निपातानां योगे द्वितीया दृश्यते इति वार्त्तिकार्थः । यथा—

उभयतो नदीं शाद्वलः—नद्या उभयोः पार्श्वयोरित्यर्थः । सर्वतः कृष्णं गोप्यः—कृष्णस्य समन्तादित्यर्थः । धिक्कृष्णाभक्तं—कृष्णाभक्तो निन्द्य इत्यर्थः । भुवमुपर्युपरि भुवरादयो लोकाः । भुवमध्यधि प्रवाहादयो वायवः । भुवमधोऽधोऽतलादयो लोकाः ।

॥ * ॥ अभितःपरितःसमयानिकषाहाप्रतियावद्ऋतेयोगेऽपि ॥ यथा—

अभितः परितो वा कृष्णं गोप्यः—कृष्णस्य समन्तात् । ग्रामं समया निकषा वा नदी—ग्रामस्य समीपे । हा कृष्णाभक्तं—तस्य शोच्यतेत्यर्थः । बुभुक्षितं न प्रति भाति किञ्चित्—बुभुक्षितस्येत्यर्थः । नदीं यावत्—नदीपर्यन्तमित्यर्थः । श्रद्धामृते—श्रद्धां विनेत्यर्थः ।

## १२४८ । अन्तरान्तरेण युक्ते । (२-३-४) यथा—

'अङ्गनामङ्गनामन्तरा माधवो माधवं माधवं चान्तरेणाङ्गना' } अङ्गनयोर्माधवयोश्च मध्ये ।

'अथ त्वामन्तरेण कीदृशी तस्या दृष्टिः'—त्वामधिकृत्य ।

अन्तरेण हरिं न सुखं—हरिं विनेत्यर्थः ।

## १२४९ । कालाध्वनोरत्यन्तसंयोगे । (२-३-५)

द्रव्यगुणक्रियाभिः साकल्येन सम्बन्धोऽत्यन्तसंयोगः । तस्मिन् द्योत्ये कालवाचिभ्योऽध्ववाचिभ्यश्च द्वितीया । यथा—

| | | |
|---|---|---|
| मासम् अधीते—मासव्यापकमध्ययनम् । | कालस्य क्रियया | अत्यन्तसंयोगः । |
| ,, कल्याणी ,, कल्याणत्वविशिष्टा | ,, गुणेन | ,, |
| ,, गुडधानाः मासव्यापिन्यः | ,, द्रव्येण | ,, |

एवमध्वनोऽपि—क्रोशमधीते । क्रोशं कुटिला नदी । क्रोशं गिरिः ।

## १२५० । अपवर्गे तृतीया । (२-३-६)

अपवर्गः फलप्राप्तौ सत्यां क्रियापरिसमाप्तिः । तस्मिन् द्योत्ये कालाध्वनोरत्यन्तसंयोगे तृतीया स्याद् द्वितीयापवादः । यथा—

मासेनानुवाकोऽधीतः क्रोशेनानुवाकोऽधीतः } अधीतो ज्ञातश्चेत्यर्थः ।

## १२५१ । सप्तमीपञ्चम्यौ कारकमध्ये । (२-३-७)

'अत्यन्तसंयोगे' इति निवृत्तम् । 'कालाध्वनोः' इति परमनुवर्तते । कारकयोर्मध्ये यौ कालाध्वानौ तद्वाचिभ्यः सप्तमीपञ्चम्यौ स्तः । यथा—

अद्य भुक्त्वा देवदत्तः त्र्यहात् त्र्यहे वा भोक्ता—अत्र भुक्तिकर्त्रोर्मध्यकालो विभक्त्यर्थः ।

अत्रस्थो धानुष्कः क्रोशात् क्रोशे वा लक्ष्यं विध्येत्—अत्र कर्तृकर्मणोर्मध्येऽध्वा विभक्त्यर्थः।

**१२५२। कर्मप्रवचनीययुक्ते द्वितीया। (२-३-८)**

प्रादिषु केचिदर्थविशेषे कर्मप्रवचनीयसंज्ञाः। तान् प्रकरणान्ते निरूपयिष्यामः। तेषां योगे द्वितीया स्यात्। वृक्षं प्रति विद्योतते विद्युत् इत्याद्युदाहरणम्॥

**१२५३। यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी। (२-३-९)**

कर्मप्रवचनीययोगे द्वितीयापवादः सप्तमी विधीयते। अधिकमित्यर्थे यतोऽधिकं तस्मात् सप्तमी। यन्निष्ठमीश्वरत्वं तस्मादपि सप्तमी। यथा—

उप परार्धे हरेर्गुणाः—परार्धादधिका इत्यर्थः। अधि रामे भूः—रामाधीना भूरित्यर्थः।

**१२५४। पञ्चम्यपाङ्परिभिः (२-३-१०)**

एभिः कर्मप्रवचनीयैर्योगे पञ्चमी। यथा—

अप परि वा त्रिगर्तेभ्यो वृष्टो देवः—त्रिगर्तान् वर्जयित्वेत्यर्थः।

आ पाटलीपुत्राद्वृष्टो देवः—पाटलीपुत्रमभिव्याप्य विहाय वा।

**१२५५। प्रतिनिधिप्रतिदाने च यस्मात्। (२-३-११)**

यदपेक्षः प्रतिनिधिः प्रतिदानं वा अर्थो गम्यते तस्मात् च पञ्चमी। 'प्रतिः प्रतिनिधिप्रतिदानयोः' इति विहितस्य प्रतेर्योगे पञ्चमीति तात्पर्यम्। यथा—अभिमन्युरर्जुनात् प्रति—अर्जुनस्य प्रतिनिधिरित्यर्थः।

तिलेभ्यः प्रति यच्छति माषान्—माषैस्तिलान् क्रीणातीत्यर्थः।

**१२५६। गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि। (२-३-१२)**

अध्वभिन्ने गत्यर्थानां कर्मणि द्वितीयाचतुर्थ्यौ स्तः, चेष्टायां गम्यमानायाम्। चेष्टा चलनम्। यथा—

ग्रामं ग्रामाय वा गच्छति—अध्ववाचकेभ्यस्तु पन्थानं गच्छति।

चेष्टाभावे तु—मनसा हरिं व्रजति।

## १२५७। चतुर्थी संप्रदाने । (२-३-१३)

विप्राय गां ददातीत्याद्युदाहरणम् ।

॥ * ॥ **तादर्थ्ये चतुर्थी वाच्या** ॥ यथा—

यूपाय दारु । कुण्डलाय हिरण्यम् । अवहननायोलूखलम् ।

॥ * ॥ **क्लृपि सम्पद्यमाने च** ॥

क्लृप्त्यर्थकधातुप्रयोगे यः सम्पद्यते तस्मात् चतुर्थीत्यर्थः । यथा—

भक्तिर्मोक्षाय कल्पते, सम्पद्यते, जायते भवति वा ।

प्रकृतिविकृत्योर्भेदविवक्षायामेवेदम् । अभेदविवक्षायां तु प्रथमैव । यथा—

मृद् घटः सम्पद्यते ।

॥ * ॥ **हितयोगे च** ॥ यथा—ब्राह्मणाय हितम् ।

## १२५८। क्रियार्थोपपदस्य च कर्मणि स्थानिनः । (२-३-१४)

क्रियार्था क्रिया उपपदं यस्य सोऽयं क्रियार्थोपपदः, 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इत्यस्य विषयो लक्ष्यते । अर्थसिद्धस्य तुमुन्नन्तस्य कर्मणि चतुर्थी स्यादित्यर्थः । यथा—

पुष्पाय व्रजति—पुष्पमाहर्तुमित्यर्थः ।
नगराय प्रतिष्ठते—नगरं गन्तुम् ,, ।
पत्ये शेते —पतिमनुकूलयितुमित्यर्थः ।

## १२५९। नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च । (२-३-१६)

निपातैरेतैर्योगे चतुर्थी स्यात् । यथा—

नमो देवेभ्यः । | स्वधा पितृभ्यः ।
स्वस्ति प्रजाभ्यः । | दैत्येभ्यो हरिरलम्—पर्याप्त इत्यर्थः ।
स्वाहा अग्नये । | वषडिन्द्राय ।

अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यः पर्याप्तः इत्याद्यपि ॥

## १२६०। मन्यकर्मण्यनादरे विभाषाप्राणिषु । (२-३-१७)

मन्यतेः कर्मणि प्राणिवर्जिते चतुर्थी वा स्यादनादरे गम्यमाने । यथा—न त्वां तृणाय मन्ये, तृणं मन्ये वा । न त्वां लोष्टाय मन्ये, लोष्टं मन्ये वा ।

॥ * ॥ अप्राणिष्वित्यपनीय नौकाकान्नशुकसृगालवर्जमिति वाच्यम् ॥

न त्वां शुने मन्ये, श्वानं वा । नावादिभ्यस्तु द्वितीयैव—न त्वां सृगालं मन्ये ।

## १२६१ । कर्तृकरणयोस्तृतीया । (२-३-१८) यथा—

रामेण बाणेन हतो वाली ।

॥ * ॥ प्रकृत्यादिभ्य उपसंख्यानम् ॥ यथा—

| | |
|---|---|
| प्रकृत्या चारुः । | समेन धावति |
| प्रायेण याज्ञिकः । | विषमेण धावति |
| गोत्रेण गार्ग्यः । | द्विद्रोणेन धान्यं क्रीणाति |
| 'नाम्ना सुतीक्ष्णः- | —चरितेन दान्तः' |

## १२६२ । सहयुक्तेऽप्रधाने । (२-३-१९)

सहार्थेकेन युक्ते अप्रधाने तृतीया स्यात् । अप्रयुक्तेऽपि सहार्थके तृतीयेष्यते । पाणिनिरेव हि 'वृद्धो यूना' इति प्रयुक्तवान् । यथा—

पुत्रेण सहागतः पिता—साकं, सार्धं वा । शिष्यैर्गतो गुरुः—शिष्यैः सहेत्यर्थः ।

## १२६३ । येनाङ्गविकारः । (२-३-२०)

येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया । यथा—

अक्ष्णा काणः । पाणिना कुणिः । पादेन खञ्जः ।

## १२६४ । इत्थंभूतलक्षणे । (२-३-२१)

कञ्चित् प्रकारं प्राप्त इत्थंभूतः । तस्य लक्षणमित्थंभूतलक्षणम् । तस्मात् तृतीया स्यात् । यथा—

जटाभिस्तापसः—जटारूपलक्षणज्ञापिततापसत्वविशिष्टः ।
पुस्तकेन विद्वान्—पुस्तकरूप ,, विद्वत्व ,,
काषायेण यती—काषाय ,, यतित्व ,,

## १२६५ । हेतौ । (२-३-२३)

फलसाधनयोग्यः पदार्थः फलं चात्र हेतुशब्देन विवक्ष्यते । क्रियामात्रसाधकं करणमिति करणे तृतीयाया अप्राप्तौ हेतौ तृतीयाविधिरयमारभ्यते । यथा—

दण्डेन घटः । धनेन कुलम् । कन्यया शोकः । विद्यया यशः ।
अध्ययनेन वसति । आशया धावति ।

॥ * ॥ **वारणार्थकालंयोगे पूर्वावरोनार्थकादियोगे च तृतीयेष्यते** ॥
अलं भयेन—भयं मास्त्वित्यर्थः । मासेन पूर्वः, मासेनावरः, भयेन हीनः, पञ्चभिरूनः, गुडैर्मिश्रः इत्यादि ।

॥ * ॥ **अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया** ॥ यथा—
दास्या धनं संयच्छते कामुकः । शिष्टव्यवहारे तु—भार्यायै धनं यच्छति ।

## १२६६ । अकर्तर्यृणे पञ्चमी । (२-३-२४)

**कर्तृभिन्नादृणवाचिनो हेतुभूतात् पञ्चमी तृतीयापवादः । यथा—**
शतात् बद्धः—शतमितर्णहेतुको बन्धः ।

## १२६७ । विभाषा गुणेऽस्त्रियाम् । (२-३-१५)

**गुणरूपे हेतावस्त्रीलिङ्गे विभाषा पञ्चमी स्यात् । यथा—**
जाड्यात्, जाड्येन वा बद्धः । पाण्डित्यात्, पाण्डित्येन वा मुक्तः ।

**व्यवस्थितविभाषाश्रयणादगुणे स्त्रियामपि वा पञ्चमी । यथा—**
पर्वतो वह्निमान् धूमात् । नास्ति घटोऽनुपलब्धेः ।

## १२६८ । षष्ठी हेतुप्रयोगे । (२-३-२६)

**हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये षष्ठी स्यात् । यथा—**
अन्नस्य हेतोर्वसति । अध्ययनस्य हेतोर्वसति ।

## १२६९ । सर्वनाम्नस्तृतीया च । (२-३-२७)

**सर्वनाम्ना विशेषितस्य हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये षष्ठी तृतीया च** यथा—कस्य हेतोः, केन हेतुना वा वसति ।

॥ * ॥ **निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्** ॥ यथा—
किं निमित्तम्, कस्मै निमित्ताय । कस्मिन् निमित्ते वा वसति ।

## १२७० । अपादाने पञ्चमी । (२-३-२८)

**ग्रामादागच्छतीत्याद्युदाहरणं दत्तमेव ।**

**॥ * ॥ ल्यब्लोपे कर्मण्यधिकरणे चोपसंख्यानम् ॥**

उचितस्य ल्यबन्तधातोरर्थसिद्धस्य कर्मण्यधिकरणे च पञ्चमी'। **यथा**—प्रासादात् प्रेक्षते—प्रासादमारुह्येत्यर्थः । आसनात् प्रेक्षते—आसने उपविश्य।

**॥ * ॥ यतश्चाध्वकालनिमानं तत्र पञ्चमी, तद्युक्तादध्वनः प्रथमासप्तम्यौ, कालात् सप्तमी च वक्तव्या ॥** यथा—

वनात् ग्रामो योजनं योजने वा । कार्तिक्या आग्रहायणी मासे ।

## १२७१ । अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते (२-३-२९)

एषां योगे पञ्चमी । अन्य इत्यर्थग्रहणम्, इतरस्य पृथग्ग्रहणं तु प्रपञ्चार्थम्, 'आरात्' 'ऋते' इत्येतौ निपातौ । दिशि दृष्टः शब्दो दिक्छब्दः,—पूर्वपश्चिमदक्षिणोत्तराः । अञ्चूत्तरपदाः प्राक्प्रत्यगुदगवाञ्चः, आजाही तद्धितप्रत्ययौ । यथा—

कृष्णादन्यं परमितरं वा न भजे ।
ग्रामादारान्नदी ।
ऋते मोक्षान्न सुखम् ।
पूर्व उत्तरो वा ग्रामात् पर्वतः ।
उदक् पर्वतान्नदी ।
दक्षिणा ग्रामात् मम गृहम् ।
उत्तराहि „ श्वशुरस्य „

दिक्छब्दस्य कालवाचिनोऽपि योगे पञ्चमीष्यते ।

चैत्रात् पूर्वः फाल्गुनः ।

## १२७२ । षष्ठ्यतसर्थप्रत्ययेन । (२-३-३०)

'दक्षिणोत्तराभ्यामतसुच्' इति तद्धिते अतसुच् विधीयते । स च "दिग्देशकालेष्वस्तातिः" इति प्रकरणे वर्तते । अस्तातिः, अतसुच्, सुच् एते अतसर्था दिक्छब्देभ्यश्च विहिताः । तेषां योगे पञ्चम्यपवादः षष्ठी । यथा—ग्रामस्य दक्षिणतः, पुरः पुरस्ताद्वा पर्वतः ।

## १२७३ । एनपा द्वितीया । (२-३-३१)

एनबन्तयोगे तु द्वितीयैव । यथा—

'दक्षिणेन वृक्षवाटिकामालाप इव श्रूयते' ।

१२७४। पृथग्विनानानाभिस्तृतीयान्यतरस्याम्। (२-३-३२)

एभिर्योगे तृतीया, पञ्चमी, द्वितीया च स्यात्। यथा—

पृथग्देवदत्तात्, देवदत्तेन, देवदत्तं वा।
विना ,, ,, ,, । इत्यादि।

१२७५। सप्तम्यधिकरणे च। (२-३-३६)

अधिकरणे कारके सप्तमी। चकारेण दूरान्तिकार्थेभ्योऽसत्त्ववाचिभ्यः सप्तमी स्वार्थे विधीयते। अत्रोपेक्षितेन पूर्वसूत्रेण दूरान्तिकार्थेभ्यः षष्ठीद्वितीयापञ्चम्यो विधीयन्ते। तेन एभ्यः शब्देभ्यः षष्ठी द्वितीया पञ्चमी सप्तमीति चतस्रो विभक्तयो भवन्ति। यथा—

दूरस्य, दूरं, दूरात्, दूरे वा ग्रामस्य नदी।

एवं समीपार्थका अप्युदाहार्याः। असत्ववाचिनामेवेत्युक्तेरव्ययसाधारण्यात् एते विभक्तिप्रतिरूपकाण्यव्ययानीत्यपि कल्पयितुं शक्यन्ते। अधिकरणे कारके सप्तम्युदाहृतैव।

॥ * ॥ क्तस्येन्विषयस्य कर्मणि सप्तम्या उपसंख्यानम्॥

क्तप्रत्ययान्तेभ्यः 'इष्टादिभ्यश्च' इति इनिप्रत्ययो विधीयते। तदन्तस्य कर्मणि सप्तमीत्यर्थः। यथा—

इष्टी सर्वमखे, श्रुती श्रुतिशते, तत्त्वे गृहीत्यर्चती,
गोविन्दे, पठिती तथानुपठिती शास्त्रेषु सर्वेष्वपि।
शत्रौ व्याकुलिती, तथा खलजने दूरं निराकृत्यसौ,
मित्रेषूपकृती, विभाति नृपतिर्दीनेषु संरक्षिती॥

॥ * ॥ निमित्तात् कर्मयोगे॥ यथा—

'चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।
वालेषु चमरीं हन्ति सीम्नि पुष्कलको हतः॥'

चर्मादिनिमित्तकं द्वीप्यादिहननमर्थः। निमित्तमिह फलम्, अतश्च हेतौ तृतीयां बाधितुमयमारम्भः। 'कर्मयोगे' इत्यत्र कर्मणा सह संश्लेषरूपो योगो विवक्षितः। अतो योगा—(सम्बन्धा)—न्तरेषु तृतीयैव। यथा—

वेतनेन धान्यं लुनाति इत्यादौ।

**१२७६ । यस्य च भावेन भावलक्षणम् । (२-३-३७)**

भावः क्रिया । यस्य क्रियाश्रयस्य कारकस्य क्रियया क्रियान्तरं लक्ष्यते तस्मात् सप्तमी । यत्र एकस्याः क्रियायाः कालः क्रियान्तरपरामर्शेन परिच्छिद्यते तत्र लक्षणक्रियाया आश्रयभूतात् कारकात् (कर्तृकर्मणोरन्यतरस्मात्) सप्तमी स्यादित्यर्थः । यथा—

भुञ्जानेष्वस्मास्वतिथिरागतः—कर्तृनिष्ठा क्रिया अत्र लक्षणम् ।

गोषु दुह्यमानासु वृष्टो देवः—कर्म ।

**१२७७ । षष्ठी चानादरे । (२-३-३८)**

अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ । यथा—

रुदतो बन्धुजनस्य प्राव्राजीत्—रुदति बन्धुजने वा । रुदन्त बन्धुजनमनादृत्येत्यर्थः ।

मिषतां पार्थिवानामहरद्रुक्मिणीं कृष्णः । जाग्रतो मे प्रभाता रजनी ।

**१२७८ । स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च । (२-३-३९)**

एभिर्योगे षष्ठीसप्तम्यौ । षष्ठ्यामेव प्राप्तायां पक्षे सप्तमीविधानार्थं वचनम् । यथा—

गवां गोषु वा ईश्वरः, स्वामी इत्यादि ।

गवां गोषु वा प्रसूतः—गा अनुभवितुं जात इत्यर्थः ।

**१२७९ । आयुक्तकुशलाभ्यां चासेवायाम् । (२-३-४०)**

आभ्यां योगे षष्ठीसप्तम्यौ तात्पर्येऽर्थे द्योत्ये । आयुक्तो व्यापारितः । कुशलः समर्थः । यथा—

आयुक्तः कटकरणे, कटकरणस्य वा—एवं कुशलः ।

तात्पर्यभिन्ने त्वर्थे—आयुक्तो गौः शकटे—ईषद्युक्त इत्यर्थः ।

**१२८० । यतश्च निर्धारणम् । (२-३-४१)**

जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम् । यतो निर्धारणं ततः षष्ठीसप्तम्यौ । यथा—

मनुष्याणां क्षत्रियः शूरतमः । मनुष्येषु वा—जातौ ।

गवां कृष्णा बहुक्षीरा । गोषु वा —गुणे ।

अध्वगानां धावन् शीघ्रतमः । अध्वगेषु वा—क्रियायाम् ।
शिष्याणां मैत्रः पटुः । शिष्येषु वा —संज्ञायाम् ।

## १२८१ । पञ्चमी विभक्ते । (२-३-४२)

विभागो विभक्तं, भेद इत्यर्थः । यत्र निर्धारणावधिर्निर्धार्यमाणं च भिन्नं वस्तुद्वयं तत्र पञ्चम्येव । गुणक्रिययोर्भिन्नद्रव्यनिष्ठयोस्तोलने अवधिभूतादपादानत्वेन प्राप्ताया एव पञ्चम्याः प्रतिप्रसवोऽयम् । यथा—

मनुष्येभ्यः श्वापदाः शूरतराः—गुणस्य तोलनम् ।
कृष्णादश्वाच्छ्वेतो धावतितरां—क्रियायाः ।

## १२८२ । साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः । (२-३-४३)

॥ * ॥ अप्रत्यादिभ्य इति वक्तव्यम् ॥

आभ्यां योगे सप्तमी, प्रत्यादयो यदि न प्रयुज्यन्ते । पूजार्थश्च यदि द्योत्यते । तत्त्वकथनमात्रे कर्मप्रवचनीययोगे च न स्यादित्यर्थः । यथा—

साधुः कृष्णो मातरि, असाधुर्मातुले—एवं निपुणः ।
तत्त्वकथने तु—साधुर्निपुणो वा राज्ञो भृत्यः ।
प्रत्यादियोगे च—साधुः कृष्णो मातरं प्रति, अनु वा ।

## १२८३ । प्रसितोत्सुकाभ्यां तृतीया च । (२-३-४४)

चात्सप्तमी । प्रसितः आसक्तः, उत्सुक उत्कण्ठितः । यथा—

केशेषु केशैर्वा प्रसितः—केशविषयकसक्तिमान् ।
केशेषु केशैर्वा उत्सुकः— „ औत्सुक्यवान् ।

## १२८४ । नक्षत्रे च लुपि । (२-३-४५)

'नक्षत्रेण युक्तः कालः' इति तद्धितस्य यो लुब्विधीयते तदन्ताच्छब्दात्तृतीयासप्तम्यौ स्याताम् । यथा—

'मूलेनावहयेद्देवीं श्रवणेन विसर्जयेत्'—मूले श्रवणे वा—मूलयुक्ते श्रवणयुक्ते च काले इत्यर्थः ।

लुबन्तस्य कालवाचिनोऽधिकरणे सप्तम्यामेव प्राप्तायां पक्षे तृतीयाविधानार्थमारम्भः । तेन 'अद्य पुष्यः' इत्यादौ नातिप्रसङ्गः । 'पुष्ये शनिः' इत्यादौ लुबभावान्न तृतीया प्रवर्तते ।

१२८५ । प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा । (२-३-४६)

प्रातिपदिकार्थः सत्ता । लिङ्गं - पुंस्त्रीक्लीबानि । परिमाणं - द्रोणखार्यादिमानम् । वचनं एकद्विबहूनि । द्वन्द्वान्ते श्रूयमाणो मात्रशब्दः प्रत्येकमन्वेति । एष्वेकैकमात्रे प्रथमा स्यादित्यर्थः । इहानभिहित एव कर्मादौ कारके द्वितीयादिर्विभक्तिर्विहिता । अभिहिते तु कारके न कापि विभक्तिः प्राप्नोति । 'न केवला प्रकृतिः प्रयोक्तव्या' इति सिद्धान्ताच्च काचिद्विभक्तिरवश्यं कर्तव्या च वर्तते । ततः 'प्रातिपदिकार्थमात्रे' इत्यंशेन स्वार्थे प्रथमा विधीयते । यथा—

देवदत्तस्तण्डुलं पचति—कर्तरि तृतीयाया अप्राप्तौ स्वार्थे प्रथमा ।
देवदत्तेन तण्डुलः पच्यते—कर्मणि द्वितीयाया ,, ,,

किञ्च, असत्ववाचिभ्यो निपातेभ्यो न कस्याश्चित् विभक्तेः प्रसक्तिरिति तेभ्योऽपि प्रातिपदिकार्थमात्रे प्रथमा । तत्रापि वचनायोगात् सामान्यमेकवचनम् । तस्य च 'अव्ययादाप्सुपः' इति लोप इति कल्प्यते । क्लेशश्चायं 'धिगनात्मज्ञम्' इत्यादौ पदान्तकार्याणां जश्त्वादीनां साधनाय सोढव्यो वर्तते ।

'भित्तं शकलखण्डे वा पुंस्यर्धोऽर्धं समेंऽशके' इत्यादि नामलिङ्गानुशासनवाक्यानि लिङ्गमात्रे प्रथमाया उदाहरणम् । अत्र हि अर्धशब्दः पुमान् खण्डवाची, क्लीबः समांशवाचीति प्रथमाविभक्तिरूपमेव दर्शयति ॥

परिमेयं व्रीह्यादि कियद्दत्तमिति प्रश्ने, द्रोण इत्युत्तरवाक्यं परिमाणमात्रस्योदाहरणम् । अत्र हि मानपात्रं प्रातिपदिकार्थो न वक्तृ-

तात्पर्यविषयः । द्रोणपरिमितो व्रीहिरित्यर्थे द्रोणो व्रीहिरित्यादिप्रयोगस्तु लक्षणया । एवं सिंहसदृशो माणवक इत्यर्थे सिंहो माणवकः इत्यादिः प्रयोगोऽपि सिध्यति ॥

एकं, द्वे, त्रीणि, चत्वारि इति संख्यानवाक्ये संख्यामात्रं विवक्षितं न तु प्रातिपदिकार्थभूतं संख्येयमिति तद्वचनस्योदाहरणम् । प्रवृत्तिनिमित्तमात्रे प्रथमार्थे परिमाणवचनग्रहणमिति फलति । इदं च परिमाणसंख्याशब्दानां प्रवृत्तिनिमित्तमात्रवृत्तितास्तीति शिक्षणपरम् । तेन यथायोगं विभक्त्यन्तराण्यपि । पणं प्रस्थस्य मूल्यम् । द्वाभ्यां गुणितानि त्रीणि षट् भवन्ति । भावप्रधानाः सर्वे निर्देशा इदमेवानुकुर्वन्ति ॥

## १२८६ । सम्बोधने च । (२-३-४७)

सम्बोधनमाभिमुख्यकरणम् । तदधिके प्रातिपदिकार्थे च प्रथमा स्यात् । यथा—

हरे कृपालो नः पाहि । सर्वे जनाः शृणुत मे वचः ।

## १२८७ । सामन्त्रितम् । (२-३-४८)

सम्बोधने या प्रथमा तस्या आमन्त्रितमिति संज्ञा ॥

## एकवचनं संबुद्धिः । (२-३-४९) (व्याख्यातम्)

## १२८८ । षष्ठी शेषे । (२-३-५०)

कर्मादिभ्यः प्रातिपदिकार्थाच्च व्यतिरिक्तः स्वस्वाभिभावादिसम्बन्धः शेषः । तत्र षष्ठी । यथा—

राज्ञः पुरुषः —स्वस्वामिभावः सम्बन्धः ।
दशरथस्य पुत्रः —पितृपुत्रभावः ,,
मर्कटस्य लाङ्गूलम्—आङ्गाङ्गिभावः ,,
व्यासस्य शिष्यः —गुरुशिष्यभावः ,,

इह हि सम्बन्धविशेषा एव कारकाणि । सम्बन्धाश्च विवक्षाधीनाः । अतो विवक्षातः कारकाणि भवन्ति । कर्मणः कर्मत्वरूपेण

विशेषेणाविवक्षायां शेषत्वात् षष्ठी भवति । एवं करणादीनामपि सम्बन्धसामान्यविवक्षायां षष्ठ्येव । तत्र 'अकथितं च' (१२४३) इति सूत्रेण दुहियाच्यादीनामविवक्षितस्यापादानादेः कारकस्य कर्मसंज्ञा विहिता । तद्व्यतिरिक्तानां 'शेषे षष्ठी' भवेत् । यथा—

'कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे'—कस्मात् ।
रजकस्य वस्त्रं ददाति—रजकाय ।
फलानां तृप्यति—फलैः । भजे शम्भोश्चरणयोः—चरणौ ।

अथ कारकार्थे प्रवर्तमानां 'शेषे षष्ठीं' मार्गप्रदर्शनाय प्रपञ्चयत्यष्टभिः सूत्रैः—

१२८९ । ज्ञोऽविदर्थस्य करणे । (२-३-५१)

करणस्य शेषत्वविवक्षायां षष्ठ्यनेन विधीयते । प्रयोगवैरल्यादस्पष्टमुदाहरणम् ।

१२९० । अधीगर्थदयेशां कर्मणि । (२-३-५२)

स्मरणार्थकानां दयेशोश्च शेषत्वेन विवक्षिते कर्मणि षष्ठी । यथा
मातुः स्मरति बालः—मातरमित्यर्थः ।
भीरोर्दयते वीरः —भीरुम् ,,
राजा प्रजानामीष्टे —प्रजाः ,,
शेषत्वाविवक्षायां यथाप्राप्ता द्वितीयैव । मातरं स्मरति बालः ।

१२९१ । कृञः प्रतियत्ने । (२-३-५३)

प्रतियत्नो गुणाधानम् । अत्र कृञः सुडात्मनेपदं च विहितम् । यथा—[१]तेमनान्यन्नस्योपस्कुर्वते—गुणमादधतीत्यर्थः ।

१२९२ । कृत्वोऽर्थप्रयोगे कालेऽधिकरणे । (२-३-६४)

'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' 'द्वित्रिचतुर्भ्यः सुच्'

---

१. 'रुजार्थाना......' इत्यादिसूत्रदशकं नात्यन्तोपयुक्तमित्युपेक्षितम् । शेषषष्ठ्या उपलक्षणानि विहितानि कतिचिच्छान्दसानि च ।

'एकस्य सकृच्च' एते कृत्वोऽर्थाः । एषां प्रयोगे कालरूपेऽधिकरणे शेषत्वेन विवक्षिते षष्ठी । यथा—

दिनस्य पञ्चकृत्वो भुङ्क्ते । वत्सरस्य सकृद्यजति ।
वारस्य त्रिरभ्यनक्ति । मासस्य द्विरायुष्कर्म करोति ।

अथ द्वितीयादीनामपवादः षष्ठीविधिः—

१२९३ । कर्तृकर्मणोः कृति । (२-३-६५)

कृदन्तप्रयोगे कर्तृकर्मणोः षष्ठी, तृतीयाद्वितीययोरपवादः । यथा

नृपस्यागमनम् । ब्रह्मणः सृष्टिः—कर्तरि ।
उत्सवस्य दर्शनं, जगतः सृष्टिः, जगतः स्रष्टा—कर्मणि ।

प्रत्यु०—('कर्तृकर्मणोः' किम् ?) शस्त्रेण भेदनं, पुरे वासः ।
('कृति' किम् ?) कृतपूर्वी कटम्—अत्र इनिप्रत्ययस्तद्धितः ।

॥ * ॥ गुणकर्मणि वेष्यते ॥

द्विकर्मकेष्वप्रधाने कर्मणि वा षष्ठी । यथा—

मोक्षस्य याचको विष्णोः विष्णुं वा ।

१२९४ । उभयप्राप्तौ कर्मणि । (२-३-६६)

उभयोः प्राप्तिर्यस्मिन्निति बहुव्रीहिः । कर्तुः कर्मणश्च यत्र प्रसक्तिः तस्य कृदन्तस्य योगे कर्मण्येव षष्ठीति नियमः । यथा—

आश्चर्यो गवां दोहोऽगोपेन । विचित्रं समुद्रस्य पानं कुम्भोद्भवेन ।

॥ * ॥ अककारयोः स्त्रीप्रत्यययोर्नेति वक्तव्यम् ॥ यथा—

रामस्य भेदिका धनुषः, अकवेः काव्यस्य चिकीर्षोपहासाय ।

॥ * ॥ शेषे विभाषा ॥

यथा—शब्दानामानुशासनमाचार्येणाचार्यस्य वा ।

१२९५ । क्तस्य च वर्तमाने । (२-३-६७)

१२९६ । अधिकरणवाचिनश्च । (२-३-६८)

'ञीतः क्तः' 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमानार्थे विहितस्य, 'क्तोऽधिकरणे च....' इति अधिकरणार्थे विहितस्य च क्तप्रत्ययस्य

योगे कर्तृकर्मणोः षष्ठी । 'न लोक....' इत्यनन्तरसूत्रेण प्राप्तं निषेधं बाधितुमिदम् । यथा—

सतां मतः, पूजितः, विदितो वा—कर्तरि षष्ठी ।
मुकुन्दस्यासितमिदमिदं यातं रमापतेः ,, ,,

## १२९७ । न लोकाव्ययनिष्ठाखलर्थतृनाम् । (२-३-६९)

लः, उः, उकः, अव्ययं, निष्ठा, खलर्थाः, तृन्—एषां कृतां योगे कर्तृकर्मणोः षष्ठी न स्यात् । लकारः कृत्=लकारादेशः कृत= शतृशानचौ, क्वसुकानचौ च । यथा—

| | |
|---|---|
| ओदनं पचन् पचमानो वा | — लादेशौ शतृशानचौ । |
| गृहमासेदिवान् | — लादेशः क्वसुः । |
| कन्यामलङ्करिष्णुः, ओदनं बुभुक्षुः | — उः । |
| आगामुकं वाराणसीं रक्ष माम् | — उकः । |
| ओदनं भोक्तुं, ओदनं भुक्त्वा | — अव्ययम् । |
| ओदनं भुक्तवान्, देवदत्तेन कृतम् | — निष्ठा । |
| ईषत्करो घटः कुलालेन | — खलर्थः । |
| कर्ता कटान्, वदिता जनापवादान् | — तृन् (ताच्छीलिकः) । |

## १२९८ । अकेनोर्भविष्यदाधमर्ण्ययोः । (२-३-७०)

कर्तृकर्मणोः षष्ठी न । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति (ण्वुल्) । 'आवश्यकाधमर्ण्ययोर्णिनिः' इत्यकेनौ विहितौ । यथा—

सतां पालकोऽवतरति विष्णुः । व्रजं गामी । शतं दायी ।

## १२९९ । कृत्यानां कर्तरि वा । (२-३-७१)

'कर्तृकर्मणोः कृति' इति नित्यं प्राप्ता षष्ठी कर्तरि विकल्प्यते । **यथा**—मया मम वा सेव्यो हरिः । कर्मणि तु—गेयो माणवकः साम्नाम् इत्येव ।

॥ * ॥ **उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्यः** ॥ यथा—
नेतव्या व्रजं गावो गोपेन ।

'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इति न्यायात् 'कर्तृकर्मणोः

कृति' इति विहिता कारकषष्ठ्येवात्र प्रतिषिध्यते, शेषे षष्ठी तु सावकाशैव । तेन—

नरकस्य जिष्णुः । लक्ष्म्याः कामुकः । मुरस्य द्विषन् ।

इत्यादीनि सिद्ध्यन्ति । वस्तुतस्तु 'यावत्सिद्धमसिद्धं वा......' इति निर्वचनानुरोधेन साध्यावस्थायां क्रमात्मना प्रतीयमानायाः क्रियायाः कर्तृकर्मणोस्तृतीयाद्वितीये । सिद्धावस्थापन्नायास्तु नामसाधर्म्यात् षष्ठ्येवेति कारकषष्ठीविधिप्रतिषेधप्रपञ्चस्यास्य रहस्यम् । कृत्सु तावत् लादेशाः लस्थानीयाश्च साध्यक्रियावाचिनः । त एव 'न लोक...' इत्यादिभिः निषेधसूत्रैः परिगणिताः । कर्मापेक्षया कर्तुः प्राधान्यात् 'उभयप्राप्तौ कर्मणि' षष्ठीमाहाचार्यः । कृत्यप्रत्यया यथाविवक्षं साध्यां सिद्धां वा क्रियामभिदध्युरिति 'कृत्यानां कर्तरि वा' इत्युक्तम् । कर्मणि तु कृत्यानां भावकर्मणोर्विहितत्वेन कर्मणोऽभिहितत्वात् बाहुलकेन कर्तरि प्रवृत्तावेव षष्ठ्या अवकाशः । खलर्थानां कर्तरि षष्ठीविकल्पोऽविहितोऽपि प्रयोगेषु दृश्यते । यथा—

'दुष्करं किं महात्मनाम्' । 'श्रिया दुरापः कथमीप्सितो जनः'

तृनः, भविष्यदाधमर्ण्यार्थयोरकेनोश्च षष्ठीप्रतिषेधः 'ण्वुल्तृचौ' 'ग्रह्यादिभ्यो णिनिः' इति सामान्यतो विहितेभ्यस्तेषां व्यावर्तनाय । उक्तमाचार्यस्य षष्ठीप्रतिषेधं ज्ञापकमवलम्ब्यास्माभिः कृत्प्रत्ययानाम् 'आख्यातकम्' इति कोऽपि नवो विभागः कल्पितः । एवञ्च 'कर्तृकर्मणोः कृति' इति सूत्रे 'सिद्धक्रियावाचिनि' इति विशेषणे दत्ते प्रतिषेधकाण्डस्त्यक्तुं शक्यत इति मन्यामहे । अनेन च व्याख्यानेन 'कर्तरि वा' इति योगविभागः, '...खलर्थतृनाम्' इत्यत्र 'तृन्' इत्ययं 'लटः शतृशानचौ...' इति तृकारस्य 'तृन्' इति नकारेण प्रत्याहार इति कल्पनम् इत्यादयः क्लेशाः सर्वेऽप्यपास्ताः ॥

१३०० । तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् । (२-३-७२)

तुलोपमावर्जितैस्तुल्यार्थैर्योगे षष्ठीतृतीये स्तः । यथा—

चन्द्रेण चन्द्रस्य वा तुल्यं मुखम् ।

१३०१ । चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः (२-३-७३)

एतदर्थकैर्योगे षष्ठीचतुर्थ्यौ आशिषि द्योत्यायाम् । यथा—

कृष्णाय कृष्णस्य वा आयुष्यमनामयं, क्षेमं वा भूयात् ।

---

अथ कर्मप्रवचनीया उच्यन्ते—

१३०२ । कर्मप्रवचनीयाः । (१-४-८३)

इत्यधिकृत्य—

१३०३ । अनुर्लक्षणे । (१-४-८४)

लक्षणे द्योत्ये अनुः कर्मप्रवचनीयसंज्ञः । एकसंज्ञाधिकारान्तर्गतत्वात् कर्मप्रवचनीयसंज्ञा गत्युपसर्गसंज्ञे बाधते । यथा—

जपमनु प्रावर्षत्— जपोऽत्र वर्षस्य लक्षणम् ।

१३०४ । तृतीयार्थे । (१-४-८५)

अनोः साहित्यमेव तृतीयार्थः संभवति । तत्र द्योत्ये अनुरुक्तसंज्ञः । यथा—नदीमन्ववसिता सेना—नद्या सह सम्बद्धेत्यर्थः ।

१३०५ । हीने । (१-४-८६)

हीनेऽर्थेऽप्यनुरुक्तसंज्ञः । यथा—अन्वर्जुनं कर्णः—अर्जुनात् न्यून इत्यर्थः ।

१३०६ । उपोऽधिके च । (१-४-८७)

उप इत्ययं हीने अधिके चोक्तसंज्ञः । हीने एव द्वितीया, अधिके सप्तम्युक्ता (१२५३) । यथा—

उप हरिं सुराः—हरेर्न्यूना इत्यर्थः । उप परार्धे हरेर्गुणाः—परार्धादधिका इत्यर्थः ।

१३०७ । अपपरी वर्जने । (१-४-८८)

## १३०८। आङ् मर्यादावचने। (१-४-८९)

वर्जनं परिहरणम्। मर्यादावचनमवधिकथनम्। तच्च द्विविधम्—अवधित्वेन निर्दिष्टं वस्तु क्रोडीकृत्य, परिहृत्य चेति। तत्र पूर्वस्य अभिविधिरिति, परस्य मर्यादेति च संज्ञे प्रसिद्धे। अत्र वचनग्रहणादुभयमपि विवक्षितम्। अपाङ्परियोगे पञ्चम्युक्ता (१२५४)। यथा—

अप परि वा त्रिगर्तेभ्यो वृष्टो देवः—त्रिगर्तान् वर्जयित्वा।

आ मोक्षात् संसारः—मर्यादा।

आ सेतोरा च हिमालयात् भारतखण्डः—अभिविधिः।

## १३०९। लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः (१-४-९०)

लक्षणे— वृक्षं प्रति, परि अनु वा विद्योतते विद्युत्—वृक्षं लक्षीकृत्येत्यर्थः।

इत्थंभूताख्याने—भक्तो विष्णुं प्रति, परि अनु वा।

भागे—यदत्र मां प्रति, परि अनु वा स्यात्तद्देहि—अत्र मत्सम्बन्धिनं भागं देहीत्यर्थः।

वीप्सायां—वृक्षं वृक्षं प्रति, परि अनु वा सिञ्चति—एकैकं वृक्षं सिञ्चतीत्यर्थः।

पदद्वित्वेनैव वीप्सायां द्योतितायां कर्मप्रवचनीयत्वं उपसर्गसंज्ञाबाधेन षत्वनिषेधफलकम्। अतः परिसिञ्चतीति षत्वं न भवति।

## १३१०। अभिरभागे। (१-४-९१)

लक्षणेत्थंभूतवीप्सासु अभिरप्युक्तसंज्ञः। पूर्ववदेवोदाहरणम्।

## १३११। प्रतिः प्रतिनिधिप्रतिदानयोः। (१-४-९२)

उदाहृतम्—१२५५-तमसूत्रे।

## १३१२। अधिपरी अनर्थकौ। (१-४-९३)

## १३१३। सुः पूजायाम्। (१-४-९४)

## १३१४। अतिरतिक्रमणे च। (१-४-९५)

एषां गत्युपसर्गसंज्ञाबाधनार्थं कर्मप्रवचनीयत्वम्। तेन च सुसिक्तम्, अतिसिक्तमिति षत्वनिषेधः।

१३१५ । अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु ।(१-४-९६)

पदस्याप्रयुज्यमानस्यार्थः पदार्थः । यथा—

सर्पिषोऽपि स्यात्—मात्रा, बिन्दुः, स्तोकमित्यर्थे अपिः ।

सम्भावनं शक्त्युत्कर्षमाविष्कर्तुमत्युक्तिः । यथा—

अपि स्तुयाद्विष्णुम् । अपि सिञ्चेद्वृक्षसहस्रम् ।

अन्ववसर्गः कामचारानुज्ञा । यथा—

अपि सिञ्च, अपि स्तुहि ।

गर्हा निन्दा—धिग्देवदत्तम्, अपि सिञ्चेत् स पलण्डुम् ।

समुच्चये—अपि सिञ्च, अपि स्तुहि–सिञ्च स्तुहि चेत्यर्थः ।

इहापि षत्वनिषेध एव संज्ञाप्रयोजनम् । द्वितीया त्वर्थासाङ्गत्यान्न प्रवर्तते ।

१३१६ । अधिरीश्वरे । (१-४-९७)

ईश्वरः स्वामी । स्वस्वामिसम्बन्धे इत्यर्थः । अत्र च '...यस्य चेश्वरवचनम्....' (१२५३) इति सप्तमी विहिता । सा च स्वात् स्वामिनश्चेष्यते । यथा—

अधि रामे भूः । अधि भुवि रामः इति वा—रामाधीना भूरित्यर्थः ।

१३१७ । विभाषा कृञि । (१-४-९८)

अधिः करोतौ कर्मप्रवचनीयो वा । स्वरभेद एव विकल्पप्रयोजनम् ॥

॥ इति विभक्त्यर्थप्रकरणं परिनिष्ठाकाण्डश्च ॥



# ॥ निरुक्तकाण्डः ॥



शब्दव्युत्पत्तिर्हि निरुक्तकाण्डस्य विषयः । सर्वमपि शब्दजातं धातुभ्यो निष्पन्नं मन्यन्ते नैरुक्ताः, वैयाकरणेषु शाकटायनश्च । अत्र तु धातुभ्यः कृत्प्रत्ययैः नामनिष्पत्तिः, नामभ्य एव तद्धितप्रत्ययैर्नामान्तरोत्पत्तिरिति द्विविधः शब्दव्युत्पत्तिक्रम एव निरुक्तपदेन विवक्षितः । तत्र कृत्प्रत्यया आख्यातकैः सह प्रक्रियासाधारण्यादष्टाध्याय्यनुरोधाच्च आख्यातकप्रकरणान्तरमेव निरूपिताः । तद्धिता इदानीं निरूप्यन्ते—

## तद्धितप्रकरणम् ॥

कृतां यथा धातोरुत्पत्तेस्तिङा सह प्रक्रियासाम्यं, तथा तद्धितानां प्रातिपदिकेभ्य उत्पत्तेः सुपा सह प्रक्रियासाम्यं भवति । अतोऽत्र भ-पदसंज्ञे तत्प्रयुक्तकार्याणि चानुसन्धेयानि ॥

कार्यान्तराणि चोच्यन्ते—

'अचो ञ्णिति' 'अत उपधायाः' इति वृद्धिस्तद्धितेषु न भवति तस्या अयमपवादः ।

१३१८ । तद्धितेष्वचामादेः । (७-२-११७)

ञिति णिति च तद्धिते परे अङ्गस्याचामादेरचो वृद्धिः । न त्वन्त्यस्याचः, नाप्युपधाया अतः । यथा—

'तस्यापत्यम्' इत्यर्थे दशरथशब्दात् इञ् इति ञिति प्रत्यये कृते 'दाशरथि' इति अचां मध्ये आद्यस्य वृद्धिः ।

## १३१९ । किति च । (७-२-११८)

**किति तद्धिते चाचामादेरचो वृद्धिः । यथा—**

शक्तिशब्दात् 'ईकक्'-प्रत्यये 'शाक्तीकः' ।

## १३२० । देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् । (७-३-१)

देविकादीनां वृद्धिप्रसङ्गेऽचां मध्ये आद्यस्य आकार एव वृद्धिः । एषां सूत्राणामङ्गाधिकारान्तर्गतत्वात् 'पदाङ्गाधिकारे तस्य च तदन्तस्य च' इति तदन्तानामप्युक्तं भवति । यथा—देविकाकूले भवा इत्यणप्रत्यये दाविकाकूलाः शालयः । एवम् अणप्रत्यये शांशप, दात्यूह इत्यादि ।

## १३२१ । केकयमित्रयुप्रलयानां यादेरियः । (७-३-२)

एषां वृद्धिप्रसङ्गे यकारादेर्भागस्य 'इय' इति आदेशश्च स्यात् । यथा — केकय + अण्—कैकेयः, मित्रयु + वुञ्—मैत्रेयिका, प्रलय + अण्—प्रालेयम् ।

**मलयशब्दस्यापि केरलीया 'इया'-देशमुशन्ति । यथा—**

मलये भवमित्यर्थेऽणप्रत्यये मालेयं चन्दनम् ।

"काले कदाचिदथ कामिजनानुकूले मालेयमारुतविलोलितमालतीके ।
लीलारसेन विचरन् विपिने विनोदलोलां समीरणसुतो रमणीमभाणीत् ॥"

## १३२२ । न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् । (७-३-३)

पदान्ताभ्यां यकारवकाराभ्यां परस्य अचां मध्ये आद्यस्य न वृद्धिः । किंतु ताभ्यां पूर्वौ यथासंख्यम् ऐकार-औकारौ आगमौ स्तः । इवर्ण-उवर्णान्तानामेकाचां पदानामादिवृद्धिप्रसक्तौ यणादेशसंधिं विश्लेष्य इ-उवर्णयोर्यथाप्राप्तं वृद्धिं कृत्वा यणादेशस्थाने यणागमः कार्य इति फलितम् । यथा—

व्याकरण + अण् इत्यत्र वि + आकरण इति सन्धि विश्लेष्य इकारस्य ऐकारं वृद्धिं कृत्वा यकारागमयोजने वैयाकरण इति रूपम् । एवं स्वश्व + अण्—सु + अश्व + अण्—सौ + अश्व + अण्—सौवश्वः । इदं ज्ञापयति अन्यत्र संधिकार्यं कृत्वैव तद्धितः कार्य इति । तेन सूत्थितस्यापत्यं सौत्थितिरित्येव ।

प्रत्यु०—('पदान्ताभ्याम्' किम्?) यष्टि + ईकक्—याष्टिकः ।

## १३२३ । द्वारादीनां च । (७-३-४)

**वृद्धिप्रसङ्गे पूर्वोक्तं स्यात् । एषु यवयोः पदान्तत्वाभावादप्राप्तौ वचनम् ।**
**यथा**—द्वार + इक—दौवारिकः । द्वार,—स्वर,—स्वाध्याय,—व्यल्कश,—स्वस्ति, स्वर स्व इत्यादि ।

### १३२४ । न्यग्रोधस्य च केवलस्य । (७-३-४)

यथा—न्यग्रोध + अण् = नैयग्रोधम् ।

प्रत्यु०—('केवलस्य' किम् ?) न्याग्रोधमूलाः शालयः ।

## १३२५ । न कर्मव्यतीहारे । (७-३-६)

**यथा**—व्यवक्रोश + ण = व्यावक्रोशी ।

## १३२६ । स्वागतादीनां च । (७-३-७)

**नेत्येव**—स्वागत + इक (क्) = स्वागतिकः । एवं व्यावहारिकं, स्वापतेतयम् इत्यादि ।

## १३२७ । उत्तरपदस्य । (७-३-१०)

**अथ पूर्वपदवृद्धेरपवाद उत्तरपदवृद्धिर्विधीयते इत्यधिकारः ।**

### १३२८ । अवयवादृतोः । (७-३-११)

**अवयववाचिनः परस्य ऋतुवाचिन उत्तरपदस्याचां मध्ये आद्यस्य वृद्धिर्ञिति णिति किति च तद्धिते । यथा—पूर्ववर्षा + इक (क्) = पूर्ववार्षिकम् । एवमपरवार्षिकमित्यादि ।**

### १३२९ । सुसर्वार्धाज्जनपदस्य । (७-३-१२)

यथा—सुपञ्चाल + वुञ्—सुपाञ्चालकः ।

### १३३० । संख्यायाः संवत्सरसंख्यस्य च । (७-३-१५)

**संख्यायाः परस्य संवत्सरशब्दस्य संख्यावाचकस्य च वृद्धिर्ञिदादिषु । यथा—**
द्विसंवत्सर + इकक् = द्विसांवत्सरिकः । द्विषष्टि + इकक् = द्विषाष्टिकः ।

### १३३१ । वर्षस्याभविष्यति । (७-३-१६)

यथा—द्विवार्षिकः । भविष्यति तु द्वैवर्षिकः ।

### १३३२ । परिमाणान्तस्यासंज्ञाशाणयोः । (७-३-१७)

यथा—द्विनिष्क + इकक् = द्विनैष्किकम् ।

**१३३३ । हृद्भगसिन्ध्वन्ते पूर्वपदस्य च । (७-३-१९)**

**एतदन्तेऽङ्गे पूर्वोत्तरपदयोर्वृद्धिर्ञिदादौ । यथा—**

सुहृद् + अण् = सौहार्दम् । सुभग + ष्यञ् = सौभाग्यम् । सुरसिन्धु + अण् सौरसैन्धवम् ।

**१३३४ । अनुशतिकादीनां च । (७-३-२०)**

**उभयपदवृद्धिः स्यात् ।**—अनुशतिक + अण् = आनुशातिकः । ऐहलौकिकं, पारलौकिकं, पारस्त्रैणेयः, सार्वभौमः ।

**१३३५ । देवताद्वन्द्वे च । (७-३-२१)**

**उभयपदवृद्धिः ।**—अग्निमरुत् + अण्—आग्निमारुतम् ।

**१३३६ । नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानां** (पूर्वस्य वा) । (७-३-३०)

**नञः परेषां शुच्यादीनामुत्तरपदस्य वृद्धिः, पूर्वपदस्य तु वा । यथा—**

अशुचि + अण्—अशौचम्, आशौचम् । अनीश्वर + ष्यञ्—अनैश्वर्यम्, आनैश्वर्यम् । एवमन्येषामपि ।

**१३३७ । यथातथयथापुरयोः पर्यायेण । (७-३-३१)**

**नञः परयोरनयोः पर्यायेणोभयपदवृद्धिः । यथा—**

आयथातथ्यम्, अयाथातथ्यम् । आयथापुर्यम्, अयाथापुर्यम् ।

---

**अथ भसंज्ञाकार्याणि—**

**एषु 'वसोः सम्प्रसारणम्' 'अल्लोपोऽनः' इत्यादीनि कतिचन पूर्वमेवोक्तानि । 'भस्य' इत्यधिकारे 'अल्लोपोऽनः' इत्यतो लोप इत्यनुवर्तमाने—**

**१३३८ । ति विंशतेर्डिति । (६-४-१४२)**

**डिति प्रत्यये परे भसंज्ञस्य विंशतिशब्दस्य तिकारो लुप्यते । यथा—**

विंशति + डट्—विंशः ।

**१३३९ । टेः । (६-४-१४३)**

**भस्य टेर्लोपः डिति । यथा—**त्रिंशत् + डट्—त्रिंशः ।

डित्वस्य प्रयोजनान्तराभावात् भसंज्ञाभावेऽपि टिलोपो भवति । अतो लुडादेशे 'डा' इत्यस्मिन्परे टिलोपेन 'भविता' इति रूपसिद्धिः ।

### १३४० । नस्तद्धिते । (६-४-१४४)

नकारान्तस्य भस्य टेर्लोपस्तद्धिते परे । यथा—

उडुलोमन् + इञ्—औडुलोमिः । अतद्धिते तु—राज्ञा, ब्रह्मणा ।

॥ ॐ ॥ अव्ययानां प्रायो भमात्रे टिलोपः ॥ यथा—

सायम्प्रातर् + इक—सायम्प्रातिकः ।

पुनः पुनर् + ष्यञ्—पौनःपुन्यम् । एवं बाह्यमित्यादि ।

प्राय इत्युक्तिः शाश्वतिकः इत्यादिसिद्ध्यर्था ॥

### १३४१ । अह्नष्टखोरेव । (६-४-१४५)

नान्तत्वात् सर्वत्र प्राप्ते टिलोपे टखयोरेवेति नियमः । यथा—

द्व्यहः, त्र्यहः—ट । द्व्यहीनः, त्र्यहीनः—ख । अन्यत्र आह्निकम् ।

### १३४२ । ओर्गुणः । (६-४-१४६)

उवर्णान्तस्य भस्य गुणस्तद्धिते । यथा—

पाण्डु + अण्—पाण्डवः । मृदु + अण्—मार्दवम् ।

### १३४३ । ढे लोपोऽकद्र्वाः । (६-४-१४७)

यथा—कमण्डलु + ढक्—कामण्डलेयः । ढ = एय [१०१२]

कद्र्वास्तु काद्रवेय इति गुण एव ।

### १३४४ । यस्येति च । (६-४-१४८)

इश्च अश्च यम् इति समाहारद्वन्द्वः । यस्य ईति इति च्छेदः । इवर्णान्तस्य अवर्णान्तस्य च भस्य लोप ईकारे तद्धिते च परे । यथा—

| | | | | |
|---|---|---|---|---|
| अत्रि + एयः—आत्रेयः<br>दशरथ + इञ् —दाशरथिः | } तद्धितः | सखि + ई—सखी<br>ब्राह्मण + ई—ब्राह्मणी | } ई = ङी । | |

अत्र ईति इत्यनेन स्त्रीप्रत्ययो ङी एव गृह्यते । तथा च वार्त्तिकम्—

॥ * ॥ औङः श्यां प्रतिषेधो वाच्यः ॥

तेन—धन + औ = धन + ई = धने इत्यत्र लोपो न ।

१३४५ । सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः । (६-४-१४९)

एषामुपधाया यकारस्यापि लोपः ईति तद्धिते च । यथा—

तिष्य + अण्—तैषम । मत्स्य + ङी—मत्सी ।

'मत्स्यस्य ङ्यां सूर्यागस्त्ययोश्छे ङ्यां च तिष्यपुष्ययोर्नक्षत्र-अणि' इति शोधितोऽयं लोपविधिर्वार्त्तिककारेण ।

१३४६ । हलस्तद्धितस्य । (६-४-१५०)

हलः परस्य तद्धितयकारस्य लोप ईति तद्धिते च । यथा—

गार्ग्य + ङी—गार्गी ।

१३४७ । तुरिष्ठेमेयस्सु । (६-४-१५४)

इष्ठन्, इमनिच्, ईयसुन् इति तद्धितेषु परेषु 'तृ' प्रत्ययस्य लोपः । यथा—कर्तृ + इष्ठ—करिष्ठः । दोग्धृ + ईयसी—दोहीयसी धेनुः ।

इमनिच् तु तृप्रत्ययान्तान्न भवत्येव । तस्येह ग्रहणमुत्तरसूत्रे अनुवृत्त्यर्थम् ।

१३४८ । टेः । (६-४-१५५)

भस्य टेर्लोप इष्ठेमेयस्सु । यथा—

पटु + इमन्—पटिमन्, + इष्ठ—पटिष्ठः । + ईयस्—पटीयस् ।

१३४९ । स्थूलदूरयुवह्रस्वाक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः । (६-४-१५६)

एषामिष्ठेमेयस्सु यणादिपरं लुप्यते पूर्वस्य गुणश्च । एषु यवरलानामुत्तरस्वरसहकृतानां लोपं कृत्वा तत्पूर्वस्वरस्य गुणः कार्य इत्यर्थः । यथा—

| | | | | | |
|---|---|---|---|---|---|
| स्थूल—स्थविष्ठ । | —स्थवीयस् । | क्षिप्र—क्षेपिष्ठ । | क्षेपीयस् । | —क्षेपिमन् । |
| दूर —दविष्ठ । | —दवीयस् । | ह्रस्व —ह्रसिष्ठ । | ह्रसीयस् । | —ह्रेपिमन् । |
| युवन्—यविष्ठ । | —यवीयस् । | क्षुद्र —क्षोदिष्ठ । | क्षोदीयस् । | —क्षोदिमन् । |

१३५० । प्रिय-स्थिर-स्फिरो-रु-बहुल-गुरु-वृद्ध-तृप्र-दीर्घ-वृन्दारकाणां प्र-स्थ-स्फ-वर्-बंहि-गर्-वर्षि-त्रप्-द्राधि-वृन्दाः । (६-४-१५७)

प्रियस्थिरादीनामिष्ठेमेयस्सु प्रस्थाद्या आदेशाः स्युः । यथा—

प्रिय—प्रेम । प्रेयस् । प्रेष्ठ इत्यादि ।

प्रियोरुगुरुबहुलदीर्घाणामेव पृथ्वादिपाठादिमनिच् । स्फिरः प्रवृद्धः । तृप्र उत्सुकः । अन्ये प्रसिद्धाः ॥

१३५१ । बहोर्लोपो भू च बहोः । (६-४-१५८)

बहोः परेषामिष्ठेमेयसामादिलोपः, प्रकृतेर्भू इत्यादेशश्च । यथा—
भूमन् । भूयस् । इष्ठे तु—

१३५२ । इष्ठस्य यिट् च । (६-४-१५९)

यिडित्यागमः । यथा—भूयिष्ठ ।

१३५३ । ज्यादादीयसः । (६-४-१६०)

ज्यात् परस्य ईयस आदेः आकार आदेशः । यथा—ज्यायस् ।

१३५४ । र ऋतो हलादेर्लघोः । (६-४-१६१)

हलादेर्लघोर्ऋकारस्य रेफादेश इष्ठेमेयस्सु । पृथु-मृदु-भृश-कृश-दृढ-परिवृढानां षण्णामेव रत्वमिष्यते । यथा—

भृश—भ्रशिमन्, भ्रशीयस्, भ्रशिष्ठ इत्यादि ।

१३५५ । प्रकृत्यैकाच् । (६-४-१६३)

एकाच् भसंज्ञकमिष्ठेमेयस्सु न कञ्चिद्विकारं प्राप्नुयात् । यथा—

स्रज् + इष्ठ—स्रजिष्ठ । अत्र स्रग्विन् इति विनो लोपः ।

१३५६ । इनण्यनपत्ये । (६-४-१६४)

इन्नन्तमपत्यार्थकभिन्नेऽणि प्रकृत्या स्यात् । 'नस्तद्धिते' इति टिलोपो न स्यादित्यर्थः । यथा—

संराविन् + अण्—सांराविणम् । अपत्यार्थके तु—मेधाविनोऽपत्यं—मैधावः ।

१३५७ । गाथिविदथिकेशिपणिगणिनश्च । (६-४-१६५)

इन् अणि प्रकृत्या । अपत्यार्थे वचनम् । यथा—गाथिनः, पाणिनः ।

१३५८ । संयोगादिश्च । (६-४-१६६)

शङ्खिनोऽपत्यं—शाङ्खिनः = शार्ङ्गिणः । वाज्रिणः ।

१३५९ । अन् । (६-४-१६७)

अण्यन् प्रकृत्या स्यात् । ब्रह्मन् + अण्—ब्राह्मणः ।

१३६० । ये चाभावकर्मणोः । (६-४-१६८)

यादौ च तद्धिते अन् प्रकृत्या स्यान्न तु भावकर्मार्थके । यथा—

सामसु साधुः—सामन्यः । राज्ञोऽपत्यं—राजन्यः ।

प्रत्यु०—भावकर्मार्थके तु—राज्ञो भावः, कर्म वा राज्यम् ।

१३६१ । आत्माध्वानौ खे । (६-४-१६९)

आत्मनीनः, अध्वनीनः ।

---

## अथ तद्धितप्रत्ययविधिः ॥

१३६२ । तद्धिताः । (४-१-७६)

आ पञ्चमाध्यायपरिसमाप्तेरधिकारोऽयम् । 'प्रत्ययः' 'परश्च' 'ङ्याप्प्रातिपदिकात्' इत्यधिकारत्रयं वर्तते । इतः परं ङ्यन्तादाबन्तात् प्रातिपदिकाच्च तद्धिताख्याः प्रत्यया विधीयन्ते । ते च प्रकृतेः परे स्युरिति फलितम् ॥

१३६३ । समर्थानां प्रथमाद्वा । (४-१-८२)

अयमप्यधिकारः । 'प्राग्दिशो विभक्तिः' (१४८४) इति स्वार्थिकतद्धितविधिं यावत् । समर्थः सङ्गतार्थः, तेषां मध्ये सूत्रे प्रथमनिर्दिष्टाच्छब्दात्तद्धिताः स्युर्वा इत्यर्थः । इह हि 'तस्यापत्यं' 'तेन रक्तं रागात्' 'तदधीते तद्वेद' 'तत आगतः' 'तत्र भवः' इत्याद्यर्थेषु तद्धिता विधीयन्ते । तत्र अर्थसाङ्गत्य एव प्रत्ययोत्पत्तिः । साङ्गत्येऽपि सूत्रे पूर्वमुपात्तेभ्यः 'तस्य' 'तेन' 'तत्' इत्यादितच्छब्दपरामृष्टेभ्यः, 'स्त्रीभ्यो ढक्' 'कालाट्ठञ्' इत्यादौ यथानिर्देशं स्त्रीप्रत्ययान्तेभ्यः कालवाचिभ्य इत्यादिभ्य एव प्रातिपदिकेभ्यः प्रत्ययाः स्युर्न तु 'अपत्यं'

'रक्तम्' इत्यादिभ्योऽर्थवाचिभ्य इत्याशयः । तस्यापत्यम् इति वाक्यतया, तदपत्यम् इति समासतया च प्रयोगसिद्ध्यर्थं 'वा' इति तद्धिता विकल्पिताः ॥

एते व्यापका अधिकाराः । एतन्मध्ये व्याप्याश्च सन्ति बहवोऽवान्तराधिकाराः । एषु 'अण्' 'ठक्' 'यत्' इत्यादयः प्रत्यया सामान्येनाधिक्रियन्ते 'ढक्' 'यञ्' 'इञ्' इत्यादयोऽपवादाश्च प्रतिस्वं विधीयन्ते । एकैकोऽप्यवान्तराधिकारः पुनरर्थनिर्देशाय व्याप्यतरैः क्षुद्रैरधिकारैर्विभज्यते । एवं च यथा भुवस्तलं वर्ष-खण्ड-राज्य-जनपद-ग्रामादिभिर्विभक्तं तथा तद्धिताश्च व्याप्यव्यापकैरधिकारैर्विभक्ताः एषु प्रसिद्धा नित्योपयुक्ताश्च कतिचिदेवात्र निरूप्यन्ते ॥

प्रत्ययार्थो यत्र विशेष्यं स विशेष्यतद्धितः । यत्र विशेषणं, स विशेषणतद्धितः । यत्र प्रकृत्यर्थे, स स्वार्थिकतद्धितः इति तद्धितस्य त्रयो विभागाः सम्भवन्ति । तत्र प्रथमं विशेष्यतद्धिताः—

१३६४ । प्राग्दीव्यतोऽण् । (४-१-८३)

'तेन दीव्यति...' इति यावदण्प्रत्ययाधिकारः । अयं 'तस्यापत्यं' 'तेन रक्तं रागात्' इत्यादीनवान्तरानधिकारान् क्रोडीकरोति ते चैवं परिगणिताः प्रक्रियासर्वस्वे—

"अपत्यं, रक्तयुक्ते, च दृष्टं, परिवृतोद्धृते, ।
संस्कृतं, पौर्णमासी, च देवता–व्यूह-नीवृतः, ॥
आदिः, प्रयोजनं, योद्धा, तथा प्रहरणं, क्रिया, ।
अधीते, वेदास्ति, निर्वृत्तावासादूरसम्भवाः ॥
शेषो, जातः, कृतो, लब्धः, क्रीतः, कुशल, इत्यपि ।
अनित्यभवसम्भूतौ साधुः पुष्यति पच्यते ॥
उप्तं, देयं, रौति, सोढं भवो, व्याख्यान,-मागतः, ।
प्रभवत्ये,-ति, निष्क्रामत्य,-धिकृत्यकृतस्तथा ॥

निवासो, ऽभिजनो, भक्तिः, प्रकर्षेणोक्तमेकदिक्।
उपज्ञातः, कृत, इदं, विकारो, ऽवयवश्च ते ॥"

**१३६५। अश्वपत्यादिभ्यश्च। (४-१-८४)**

अण् प्राग्दीव्यतीयेष्वर्थेषु। उत्तरसूत्रेण ण्यप्रत्यये प्राप्ते वचनमिदम्। **यथा**—अश्वपतेरपत्यादिः आश्वपतः।

**१३६६। दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः। (४-१-८५)**

प्राग्दीव्यतीयेष्वर्थेषु अणोऽपवादो ण्यः। यथा—

दितेरपत्यादिर्दैत्य इत्यादि।

**१३६७। स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्। (४-१-८७)**

'धान्यानां भवने' इति यावत् स्त्रीशब्दात् नञ्, पुंशब्दात् स्नञ् च अधिक्रियते। यथा—स्त्रिया अपत्यादिः स्त्रैणः, पुंसः पौंस्नः।

**१३६८। द्विगोर्लुगनपत्ये। (४-१-८८)**

द्विगुसमासात् प्रवृत्तस्य प्राग्दीव्यतीयस्य तद्धितस्य लुक्, न त्वपत्याधिकारोक्तस्य। यथा—

पञ्चसु कपालेषु संस्कृतः पञ्चकपालः—अत्र 'संस्कृतं भक्षा' इत्यर्थे उत्पन्नस्य प्रत्ययस्य लुक्।

द्वौ वेदावधीते इति द्विवेदः—अत्र 'तदधीते' इत्यर्थे उत्पन्नस्य तद्धितस्य लुक्।

**१३६९। तस्यापत्यम्। (४-१-९२)**

तस्येति षष्ठ्येव विवक्ष्यते न तु लिङ्गवचने। षष्ठीसमर्थात् प्रातिपदिकादपत्येऽर्थे अण्प्रत्ययः, दित्यदित्यादिभ्यो ण्यः, स्त्रीपुंसाभ्यां नञ्स्नञौ च। यथा—

उपगोरपत्यम् इत्यर्थे उपगुशब्दात् अण्। उपगु + अ इति स्थिते 'ओर्गुणः' (१३४२) इति प्रकृत्यन्त–उकारस्य गुणः। 'तद्धितेष्वचामादेः' (१३१८) इति आद्य-उकारस्य वृद्धिश्च, **औपगव** इति तद्धितरूपम्। तद्धितान्तत्वेन प्रातिपदिकत्वात् पुंसि औपगवः औपगवौ इत्यादि विभक्तयः। स्त्रीत्वविवक्षायां 'टिड्ढाणञ्...' इति ङीपि औपगवी औपगव्यौ इत्यादि रूपाणि। एवं अङ्गिरसोऽपत्यम्—आङ्गिरसः।

मरीचेरपत्यम्—मारीचः—'यस्येति च' (१३४४) इतीकारलोपः।

## १३७० । एको गोत्रे । (४-१-९३)

'अपत्यं पौत्रप्रभृति गोत्रम्' इति गोत्रलक्षणम् । तस्मिन् गोत्रापत्ये विवक्षिते प्रत्यपत्यं भेदेन प्रत्ययोत्पत्तिप्रसङ्गे नियमः क्रियते । गोत्रापत्यविवक्षायामेक एव प्रत्यय इति । कूटस्थस्य पौत्रप्रभृतय एकेनैव प्रत्ययेनोच्यन्त इति फलितम् । यथा—

गर्गस्यापत्यं गार्गिः । गार्गेरपत्यं गार्ग्यः । गार्ग्यस्य पुत्रः, पौत्रः, प्रपौत्रः, प्रप्रपौत्रादिरपि गार्ग्य एव ।

## १३७१ । गोत्राद्यून्यस्त्रियाम् । (४-१-९४)

'जीवति तु वंश्ये युवा' इति युवा निरुक्तः । यून्यपत्ये विवक्षिते गोत्रादेव प्रत्ययो न तु कूटस्थात् । स्त्रियां तु कूटस्थादेव । यथा—

गर्गस्यापत्यं युवा गार्ग्यायणः । स्त्रियां तु गार्गी ।

## १३७२ । अत इञ् । (४-१-९५)

अदन्तात्तस्यापत्यमित्यर्थे अणोऽपवाद इञ् । यथा—

दशरथस्यापत्यं दाशरथिः । दक्षस्यापत्यं दाक्षिः ।

## १३७३ । गर्गादिभ्यो यञ् (गोत्रे) । (४-१-१०५)

गर्गस्य गोत्रापत्यं गार्ग्यः । एवं वात्स्यः, आगस्त्यः इत्यादि ।

## १३७४ । शिवादिभ्योऽण् । (४-१-११२)

अत इञोऽपवादः । शिवस्यापत्यं शैव इत्यादि ।

## १३७५ । स्त्रीभ्यो ढक् । (४-१-१२०)

स्त्रीप्रत्ययान्तेभ्यो ढक् । विनता—वैनतेयः ।

## १३७६ । जनपदशब्दात् क्षत्रियादञ् । (४-१-१६८)

जनपदशब्दो यः क्षत्रियवाची तस्मादपत्येऽर्थे अञ् । यथा—

पाञ्चालः, वैदेहः ।

## १३७७ । ते तद्राजाः । (४-१-१७४)

जनपदशब्दात् क्षत्रियवाचिनो विहिताः प्रत्ययास्तद्राजाख्याः ।

## १३७८ । कम्बोजाल्लुक् । (४-१-१७५)

कम्बोजादिभ्यस्तद्राजप्रत्ययस्य लुक् । यथा—

कम्बोजानां राजा कम्बोजः । एवं चोलः, केरलः, शक इत्यादि ।

## १३७९ । नक्षत्रेण युक्तः कालः । (४-२-३)

अस्मिन्नर्थे तृतीयासमर्थादण् । नक्षत्रेण कालस्य योगश्चन्द्रद्वारेण । यथा—पुष्येण (पुष्यस्थेन चन्द्रेण) युक्तं दिनं पौषम् । अत्र 'तिष्य-पुष्ययोर्नक्षत्र-अणि' (१३४५) इति यलोपः ॥

## १३८० । लुबविशेषे । (४-२-४)

कालविशेषवाचिनः पदस्याप्रयोगे 'नक्षत्रेण युक्तः कालः' इति विहितस्याण्प्रत्ययस्य लुप् । लुप्शब्देन लोपे विशेष उक्तः—

## १३८१ । लुपि युक्तवद्व्यक्तिवचने । (१-२-५१)

लुपा लोपे प्रकृतेरेव लिङ्गवचने अवतिष्ठेते । इति । यथा—

अद्य पुष्यः । अद्य पुनर्वसू । अद्य कृत्तिकाः ।

## १३८२ । तस्य समूहः । (४-२-३७)

अण् । यथा—बकानां समूहो बाकम् ।

## १३८३ । भिक्षादिभ्योऽण् । (४-२ ३८)

पृथग्विधानं बाधकबाधनार्थम् ।

भैक्षम् । गार्भिणं, यौवतं, पादातम् इत्यादि ।

## १३८४ । ग्रामजनबन्धुभ्यस्तल् । (४-२-४३)

॥ * ॥ गजसहायाभ्यां चेति वक्तव्यम् ॥

ग्रामाणां समूहो ग्रामता इत्यादि ।

## १३८५ । अचित्तहस्तिधेनोष्ठक् । (४-२-४७)

---

१. युक्त–व्यक्ति–वचनशब्दाः प्रकृति-लिङ्ग-संख्यानां वाचकाः ।

अचेतनेभ्यो हस्तिधेनुभ्यां च समूहार्थे ठक् । प्रत्ययादिठकारस्यादेश उक्तः । यथा—

१३८६ । ठस्येकः । (७-३-५०)

१३८७ । इसुसुक्तान्तात् कः । (७-३-५१)

प्रत्ययादिठकारस्य 'इक' इत्यादेशः । इस्, उस्, उक् (प्रत्याहारः) त् एतदन्ताभ्यस्तु प्रकृतिभ्यः परस्य 'क' इत्येवादेशः । अनेनात्र ठस्य इकादेशः । कित्त्वादादिवृद्धिः ।

अपूपानां समूह आपूपिकम् । शाष्कुलिकम् । हविषां समूहो हाविष्कम् ।—इसन्तत्वात् कादेशः ।

१३८८ । तदधीते तद्वेद । (४-२-५९)

यो निरुक्तमधीते, वेद वा स नैरुक्तः । एवं वैयाकरणः ॥

१३८९ । प्रोक्ताल्लुक् । (४-२-६४)

तेन प्रोक्तमित्यर्थे विहितः प्रत्यय उपचारात् प्रोक्तः । प्रोक्तप्रत्ययान्तादुत्पन्नस्य 'तदधीते तद्वेद' इति प्रत्ययस्य लुक् । यथा—

पाणिनिना प्रोक्तं पाणिनीयम् । पाणिनीयमधीते वेद वा पाणिनीया ब्राह्मणी ।

१३९० । जनपदे लुप् । (४-२-८१)

जनपदेऽर्थे तस्य निवास इति प्रत्ययस्य लुप् । यथा—

पञ्चालानां निवासो जनपदः पञ्चालाः ।

१३९१ । शेषे । (४-२-९२)

अपत्यादिचातुरार्थिकान्ता उक्ताः । तेभ्योऽन्येष्वप्यर्थेषु अण् । 'वृद्धाच्छः' इत्यादि विशेषविध्यर्थं शेषाधिकारः । यथा—

चक्षुषा गृह्यत इति चाक्षुषं रूपम् । दृषदि पिष्टा दार्षदा धानाः । उलूखले क्षुण्ण-औलूखलो यावकः । इत्यादि ।

१३९२ । ग्रामाद्यखञौ । (४-२-९४)

'तत्र जातः' इत्यादौ शेषेऽर्थे ग्रामशब्दाद्यखञौ स्तः । यथा—

ग्रामे जातादिः ग्राम्यः, ग्रामीणः ।

## १३९३ । नद्यादिभ्यो ढक् । (४-२-९७)

**यथा**—नद्यां जातादि—नादेयम् ।

## १३९४ । दक्षिणापश्चात्पुरसस्त्यक् । (४-२-९८)

दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ।

## १३९५ । अव्ययात्त्यप् । (४-२-१०४)

**अमेहक्वतसिलत्रेभ्य एव** । अमात्यः । इहत्यः इत्यादि ।

## १३९६ । वृद्धाच्छः । (४-२-११४)

**वृद्धसंज्ञाच्छब्दाज्जाताद्यर्थे छः (=ईयः, १०५२) । वृद्धसंज्ञा च प्रथमाध्याये विहिता । यथा—**

## १३९७ । वृद्धिर्यस्याचामादिस्तद्वृद्धम् । (१-१-७३)

**यस्य शब्दस्य स्वरेष्वाद्यः आ ऐ औ वा स वृद्धसंज्ञः ।**

**॥ * ॥ वा नामधेयस्य वृद्धसंज्ञा वाच्या ॥**

## १३९८ । त्यदादीनि च । (१-१-७४)

**त्यदादीनि सर्वनामानि च वृद्धसंज्ञानि । इति । यथा—**

भानौ जातादि—भानवीयम् । शैले जातादि—शैलेयम् । देवदत्ते जातादि—देवदत्तीयम् । एवं तदीयं, यदीयं, किमीयम् अदसीयमित्यादि ।

**'युष्मदस्मदोरेकवचने' 'प्रत्ययोत्तरपदयोश्च' (३५२) इति त्वादेशः**—त्वदीयं, मदीयम् । बहुत्वे तु युष्मदीयम्, अस्मदीयम् ।

## १३९९ । भवतष्ठक्छसौ । (४-२-११५)

**छस्यापवादः । छसः सित्त्वात् 'सिति च' (१९१) इति पदसंज्ञायां जश्त्वेन तकारस्य दः, भवदीयम् । तान्तत्वात् 'इसुसुक्तान्तात् कः' (१३८७) इति ठस्य कादेशः, भावत्कम् ॥**

## १४०० । युष्मदस्मदोरन्यतरस्यां खञ्च । (४-३-१)

**चकाराच्छः । अन्यतरस्यामित्युक्तेः पक्षे अण् ॥**

**१४०१ । तस्मिन्नणि च युष्माकास्माकौ । (४-३-२)**

**खञ्यणि च युष्मदस्मदोर्युष्माकास्माकावादेशौ । छे तु यथास्थितं रूपमेव ॥**

**१४०२ । तवकममकावेकवचने । (४-३-३)**

**खञ्यणि चेत्येव । अथ सूत्रत्रयमुदाह्रियते—**

युष्माकं युवयोर्वा इदं—यौष्माकीणं, यौष्माकं, युष्मदीयम् । अस्माकम् आवयोर्वा इदम्—आस्माकीनम्, आस्माकम्, अस्मदीयम् । तवेदं—तावकीनं, तावकं, त्वदीयम् । ममेदं—मामकीनं, मामकं, मदीयम् ।

**१४०३ । कालाट्ठञ् । (४-३-११)**

**कालविशेषवाचकात् शैषिकः ठञ् । यथा—**

प्रभाते जातादि प्राभातिकम् । अह्नि—आह्निकम् ।[1]

**१४०४ । सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् । (४-३-१६)**

**सन्धिवेलादिर्गणः—**

सान्धिवेलं, सान्ध्यम् । शारदं, पौषम् इत्यादि ।

**१४०५ । सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च । (४-३-२३)**

**अव्ययेभ्यः सायंप्रभृतिभ्यः ट्युट्युलौ प्रत्ययौ तुडागमश्च तत्संनियोगेन । ट्युट्युलाविति द्वयोर्ग्रहणं स्वरे भेदार्थम् । टित्त्वं ङीबर्थम् । 'यु' इत्यंशस्य अनादेशः । स तुडागमेन 'तन' इति जायते ।** सायन्तनं, चिरन्तनं, प्रगेतनम् इत्यादि । **एते शेषाधिकारे सामान्यप्रत्ययाः । अथ शैषिकाणामर्थाः समर्थविभक्तयश्च निर्दिश्यन्ते—**

**१४०६ । तत्र जातः । (४-३-२५)**

मथुरायां जातो माथुरः । ग्रामे ग्राम्यो ग्रामीणो वा इत्यादि ।

**१४०७ । तत्र भवः । (४-३-५३)**

मथुरायां भवो माथुरः । ग्राम्यः, ग्रामीण इत्यादि ।

---

१. 'अह्नष्टखोरेव' (१३४१) इति टिलोपनियमादल्लोपः ।

१४०८ । दिगादिभ्यो यत् । (४-३-५४)

दिशि भवं—दिश्यम् । दिश्, पक्ष, पूग, गण, रहस् इत्यादि ।

१४०९ । शरीरावयवाच्च । (४-३-५५)

**भवार्थे यत् ।** कण्ठे भवं—कण्ठ्यम् । मूर्धन्यम्, तालव्यम् इत्यादि ।

१४१० । तत आगतः । (४-३-७४)

मथुराया आगतो माथुरः । ग्राम्यः ग्रामीण इत्यादि ।

१४११ । ऋतष्ठञ् । (४-३-७८)

होतुरागतं हौतृकम् । भ्रातृकम्, मातृकम् इत्यादि ।

१४१२ । पितुर्यच्च । (४-३-७९)

पितुरागतं पित्र्यं, पैतृकम् ।

१४१३ । तस्येदम् । (४-३-१२०)

**षष्ठीसमर्थात् सम्बन्धिसामान्ये अण् । ग्रामादिभ्यो यदादयश्च ।** **यथा**—भगवत इदं—भागवतम् । ग्रामस्येदम्—ग्राम्यं, ग्रामीणम् । देवदत्तस्येदं दैवदत्तं देवदत्तीयं वा । तस्येदं—तदीयम् इत्यादि ।

१४१४ । तस्य विकारः । (४-३-१३४)

सुवर्णस्य विकारः सौवर्णम् इत्यादि ।

१४१५ । अवयवे च प्राण्योषधिवृक्षेभ्यः । (४-३-१३५)

**वक्ष्यमाणेभ्यस्तस्यावयव इत्यर्थेऽपि विकारप्रत्ययाः स्युः । यथा—**

मयूरस्य विकारोऽवयवो वा मायूरः ।
दूर्वाया ,, ,, ,, दौर्वः ।
करीरस्य ,, ,, ,, कारीरः ।

१४१६ । मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः । (४-३-१४३)

**भक्ष्याच्छादनवर्जितयोर्विकारावयवयोः षष्ठीसमर्थात् प्रातिपदिकात् वा मयट् । पक्षे यथाप्राप्तम् । यथा—**

अश्मनो विकारावयवौ आश्मनम् आश्मो वा (अश्मनो विकारे टिलोपो वा) अश्ममयं वा ।

१४१७ । फले लुक् । (४-३-१६३)

फले विवक्षिते विकारावयवप्रत्ययस्य लुक् । यथा—
आम्रस्य फलं आम्रम् ।

१४१८ । लुप् च । (वा) । (४-३-१६६)

'लुपि युक्तवद्व्यक्तिवचने'—जम्ब्वाः फलं—जम्बूः । जाम्बवं वा ।

॥ * ॥ पुष्पमूलेषु बहुलं लुप् । जात्याः पुष्पं मूलं वा जातिः ।

इति प्राग्दीव्यतीयाणधिकारः ।

---

## अथ प्राग्वहतीयष्ठगधिकारः ॥

१४१९ । प्राग्वहतेष्ठक् । (४-४-१)

'तद्वहति......' इत्यतः प्राक् ठगाधिक्रियते । अत्राप्यधिकार-संग्रहः प्रक्रियासर्वस्वे—

"ठक्स्यात् पूर्वं वहत्यर्थाद्दीव्यत्यथ खनन् जयन् ।
जितं च संस्कृततरञ्चरन्तश्चाथ जीवति ॥
हरन् निर्वृत्तसंसृष्टे उपसिक्तं च वर्तते ।
यच्छत्युञ्छन्नवन् कुर्वन् हन्ति तिष्ठति धावति ॥
गृह्णाति च चरत्येति समवैति च पश्यति ।
धर्म्यं चावक्रयः पण्यं शिल्पं प्रहरणं मतिः ॥
शीलं वृत्तं हितं भक्षा दीयते च नियोजितः ।
अध्यायी च व्यवहरन् वसतीत्यर्थसंग्रहः ॥"

१४२० । तेन दीव्यति-खनति-जयति-जितम् । (४-४-२)

अक्षैर्दीव्यति जयति वा आक्षिकः ।

१४२१ । शिल्पम् । (४-४-५५)

तदस्येत्यनुवर्तते । तदस्य शिल्पमित्यर्थे प्रथमासमर्थाट्ठक् ।
मृदङ्गं शिल्पमस्य—मार्दङ्गिकः । वांशिकः इत्यादि ।

## १४२२ । प्रहरणम् । (४-४-५७)

धनुः प्रहरणमस्य—धानुष्कः । पारश्वधिकः ।

इति प्राग्वहतीयष्ठगधिकारः ॥

---

# अथ प्राग्घितीयो यत् ॥

## १४२३ । प्राग्घिताद्यत् । (४-४-७५)

इह 'तत्र साधुः'—इत्येवार्थो बहुविषयकः ॥

## १४२४ । तद्वहति रथयुगप्रासङ्गम् । (४-४-७६)

रथं वहति—रथ्यः । युगं—युग्यः । प्रासङ्गं—प्रासङ्ग्यः ।

## १४२५ । धुरो यड्ढकौ । (४-४-७७) धुर्यः । धौरेयः ।

## १४२६ । नौ-वयो-धर्म-विष-मूल-मूल-सीता-तुला-भ्यस्तार्य-तुल्य-प्राप्य-वध्या-नाम्य-सम-समित-संमितेषु । (४-४-९१)

नावा तार्या नाव्या नदी—'वान्तो यि प्रत्यये' इत्यावादेशः । वयसा तुल्यो वयस्यः इत्यादि ।

## १४२७ । धर्मपथ्यर्थन्यायादनपेते । (४-४-९२)

धर्मादनपेतं—धर्म्यम् । पथः पथ्यम् । अर्थादर्थ्यम् ।

## १४२८ । हृदयस्य प्रियः । (४-४-९५) हृद्यः[1] ।

## १४२९ । तत्र साधुः । (४-४-९८)

## १४३० । पथ्यतिथिवसतिस्वपतेर्ढञ् । (४-४-१०४)

पाथेयम् । आतिथेयः । वासतेयी । स्वापतेयम् ।

इति प्राग्घितीये यदधिकारः ॥

---

१. 'हृदयस्य हृल्लेख-यद्-अण्-लासेषु' । (६-३-५०) । इति हृदादेशः ।

## अथ प्राक्क्रीतीयच्छयतोरधिकारः ॥

१४३१ । **प्राक् क्रीताच्छः** । (५-१-१) तेन क्रीतमित्यतः प्राक् छः ।

१४३२ । **उगवादिभ्यो यत्** । (५-१-२) उवर्णान्तगवादिभ्यां तु यत् ।

१४३३ । **तस्मै हितम्** । (५-१-५)

वत्सेभ्यो हितं वत्सीयम् । गोभ्यो हितं गव्यम् । वटवे हितं वटव्यम् ।

१४३४ । **आत्मन्विश्वजनभोगोत्तरपदात् खः** । (५-१-९)

आत्मने हितमात्मनीयम् । विश्वजनीनम् । राजभोगीणम् ।

इति प्राक्क्रीतीयौ छयतौ ॥

---

## अथ प्राग्वतीयष्ठञधिकारः ॥

१४३५ । **प्राग्वतेष्ठञ्** । (५-१-१८) वतिप्रत्ययविधिं यावत् ठञ् ।

१४३६ । **संख्याया अतिशदन्तायाः कन्** । (५-१-२२)

ठञोऽपवादः कन् ॥

१४३७ । **तेन क्रीतम्** । (५-१-३७) पञ्चकम् ।

सप्तत्या क्रीतं–साप्ततिकम् । विंशत्या तु–विंशतिकम् । त्रिंशता–त्रिंशत्कम् ।[1]

१४३८ । **तदर्हति** । (५-१-६३) श्वेतच्छत्रमर्हति–श्वैतच्छत्रिकः ।

१४३९ । **कालात्** । (५-१-७८) इत्यधिकृत्य ।

१४४० । **तेन निर्वृत्तम्** । (५-१-७९)

अह्ना निर्वृत्तमाह्निकम् मासिकं, वार्षिकमित्यादि ।

इति प्राग्वतीयष्ठञधिकारः ॥

---

१. विंशतित्रिंशद्भ्यां कन् संज्ञायामिष्यते ।

## अथ वतिः ॥

### १४४१ । तेन तुल्यं क्रिया चेद्वतिः । (५-१-११५)

तेन तुल्यमिति तृतीयासमर्थाद्वतिः स्यात्, यत्तुल्यं क्रिया चेत् सा भवति । प्रायिकोऽयं नियमः । गुणद्रव्ययोस्तुल्यत्वेऽपि प्रयोगो दृश्यते । 'तद्धितश्चासर्वविभक्तिः' (१०६०) इत्यव्ययं वतिः । यथा—

गजेन तुल्यं गजवच्चरति—अत्र चरणक्रिया तुल्या । गजवत्स्थूलोऽयमिति गुणतुल्यतायां, गजवदश्वो न महार्घः इति द्रव्यतुल्यतायामपि क्वचित् प्रयोगः ।

### १४४२ । तत्र तस्येव । (५-१-११६)

सप्तमीसमर्थात् षष्ठीसमर्थाच्च इवार्थे वतिः । यथा—

मधुरायामिव मधुरावत् स्रुघ्ने प्राकारः । राज्ञ इव राजवत् भोगा वल्लभस्य ।

### १४४३ । तदर्हम् । (५-१-११७)

द्वितीयासमर्थादर्हार्थे वतिः । अर्हं चेत्क्रिया भवति ।

विधिमर्हति विधिवदिज्यते ।

इति वतिः ॥

---

## अथ भावार्थकाः ॥

### १४४४ । तस्य भावस्त्वतलौ । (५-१-११९)

भवत्यनेन शब्दोऽर्थविशेषे इति भावः । शब्दस्य प्रवृत्तिनिमित्तं भाव इति लक्षितोऽयम् । षष्ठीसमर्थात् भावेऽर्थे त्वतलौ स्तः । तत्र त्वप्रत्ययो नपुंसकम् । तल् तु स्त्रीलिङ्गम् । यथा—

गोर्भावो गोत्वं, गोता वा । घटस्य भावो घटत्वं, घटता वा ।

### १४४५ । आ च त्वात् । (५-१-१२०)

अपवादैः सह पक्षे समावेशार्थं 'ब्रह्मणस्त्वः' इति यावत् त्वतलावधिक्रियेते । तेन प्रथिमा, पार्थवं, पृथुत्वं, पृथुता इत्यादीनि पाक्षिकरूपाणि सिध्यन्ति ॥

१४४६ । न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटबुधकतरसलसेभ्यः । (५-१-१२१)

इत ऊर्ध्वमुपक्रमिष्यमाणा भावकर्मार्थकप्रत्यया नञ्पूर्वात्तत्पुरुषान्न भवेयुः चतुरादीन् वर्जयित्वा । तेन नञ्तपुत्पुरुषात् भावार्थे त्वतलावेव । न तु वक्ष्यमाणाः ष्यञादयः ॥

१४४७ । पृथ्वादिभ्य इमनिज्वा । (५-१-१२२)

वावचनं यथायोगमणादिसमावेशार्थम् । यथा—

पृथोर्भावः प्रथिमा–'रऋतो हलादेर्लघोः' इति रादेशः–पार्थवं, पृथुत्वं, पृथुता वा ।

१४४८ । वर्णदृढादिभ्यः ष्यञ्च । (५-१-१२३)

वर्णविशेषवाचिभ्यो दृढादिभ्यश्च ष्यञ् इमनिच्च । यथा—

शुक्लस्य भावः शौक्ल्यम् । शुक्लिमा, शुक्लत्वं, शुक्लता वा—वर्णवाचि ।
दृढस्य भावः दार्ढ्यं, द्रढिमा, दृढत्वं, दृढता वा—दृढादिः ।

१४४९ । गुणवचनब्राह्मणादिभ्यः कर्मणि च । (५-१-१२४)

गुणवचना गुणवाचिनः, भेदकाः । तेभ्यो ब्राह्मणादिभ्यश्च ष्यञ् । तस्य भावः तस्य कर्म इति चार्थयोः । यथा—

जडस्य भावः कर्म वा जाड्यम् । ब्राह्मणस्य भावः कर्म वा ब्राह्मण्यम् ।

ब्राह्मणादिराकृतिगणः । एवमनन्तरोक्तश्चतुर्वर्णादिरपि ।

॥ * ॥ चतुर्वर्णादीनां स्वार्थ उपसंख्यानम् ॥

चत्वारो वर्णा एव चातुर्वर्ण्यम् । एवं त्रैलोक्यमित्यादि ।

१४५० । हायनान्तयुवादिभ्योऽण् । (५-१-१३०)

द्विहायनस्य भावः कर्म वा द्वैहायनम् । यूनः–भावः, कर्म वा यौवनम् ।

१४५१ । इगन्ताच्च लघुपूर्वात् । (५-१-१३१)

शुचि—शौचम् । मुनि–मौनम् । लघु–लाघवम् । पृथु–पार्थवम् ।

१४५२ । योपधाद्गुरूपोत्तमाद्वुञ् । (५-१-१३२)

त्रिप्रभृतीनामन्तस्य समीपमुपोत्तमम् । यकारोपधात् गुरूपोत्तमाद्वुञ् भावकर्मणोः । यथा—

रमणीय—रामणीयकम् । कमनीय—कामनीयकम् । आचार्य—आचार्यकम् । सहाय—साहायकम् ।

१४५३ । द्वन्द्वमनोज्ञादिभ्यश्च । (५-१-१३३)

शिष्योपाध्याय—शिष्योपाध्यायिका—स्त्रीत्वं लोकात् । मनोज्ञ—मानोज्ञकम् । प्रियरूप—प्रैयरूपकम् इत्यादि ।

इति भावकर्मीयाः नञ्स्नञोरवधिश्च गताः ॥

---

इतः परं प्रत्यया नाधिक्रियन्ते । केचित् प्रकीर्णकाः—

१४५४ । तदस्य सञ्जातं तारकादिभ्य इतच् । (५-२-३६)

तारका अस्य सञ्जाता तारकितं नभः । तारका, पुष्प, मुकुल, कण्टक, सुख, दुःख, कुट्मल, रोग, व्याधि इत्यादि ।

१४५५ । प्रमाणे द्वयसज्दघ्नञ्मात्रचः । (५-२-३७)

तदस्य प्रमाणमित्यर्थे द्वयसजादयः । तत्र द्वयसज्दघ्नचावूर्ध्वमान एव । मात्रच् तु सार्वत्रिक इति विवेकः । यथा—

ऊरुद्वयसं ऊरुदघ्नं वा नद्यां जलम् । अङ्गुष्ठमात्रः पुरुषः । क्रोशमात्रो मार्गः ।

१४५६ । यत्तदेतेभ्यः परिमाणे वतुप् । (५-२-३९)

यत् परिमाणस्य यावत् । तावत् । एतावत् ।—'आ सर्वनाम्नः' (११२२) इत्याकारोऽन्तादेशः ।

१४५७ । किमिदंभ्यां वो घः । (५-२-४०)

आभ्यां वतुप् तस्य च वकारस्य घादेशः । घ = इय । वतुप् = घतुप् = इयतुप् । 'इदंकिमोरीश्की' (११२१) इति इदम ईश् सर्वादेशः । तस्य च 'यस्येति च' इति लोपे प्रत्यय एवावशिष्यते—

ई + इयत् = इयत्। किमः कियत्। इयच्छब्दस्य विचित्रां व्युत्पत्तिमधिकृत्य केनापि श्लेषकविना गीतोऽयं श्लोकः—

"उदितवति परस्मिन् प्रत्यये शास्त्रयोनौ
गतवति विलयं च प्राकृतेऽपि प्रपञ्चे।
सपदि पदमुदीतं केवलप्रत्ययं यत्
तदियदिति मिमीते को हृदा पण्डितोऽपि॥"

**१४५८। किमः संख्यापरिमाणे डति च। (५-२-४१)**

का सङ्ख्या परिमाणमेषां कति, कियन्तो वा ब्राह्मणाः।

**१४५९। संख्याया अवयवे तयप्। (५-२-४२)**

सोऽस्यावयव इत्यर्थे संख्यावाचकात्तयप्। पञ्चावयवा अस्य पञ्चतयम्। दशतयं, चतुष्टयम् इत्यादि।

**१४६०। द्वित्रिभ्यां तयस्यायज्वा। (५-२-४३)**

द्वाववयवावस्य द्वयं, द्वितयं वा। एवं त्रयं, त्रितयम्।

**१४६१। तदस्मिन्नधिकमिति दशान्ताड्डः। (५-२-४५)**

एकादश अधिका अस्मिन्नित्येकादशं शतं, सहस्रं वा। एवं द्वादशं, त्रयोदशमित्यादि। शतसहस्रयोर्विशेष्यत्व एव।

**१४६२। शदन्तविंशतेश्च। (५-२-४६)**

त्रिंशं शतं; विंशं सहस्रम् इत्यादि।

---

## अथ पूरणीप्रत्ययाः॥

**१४६३। तस्य पूरणे डट्। (५-२-४८)**

षष्ठीसमर्थात् संख्यावाचिनो डट् पूरणेऽर्थे। डित्वाट्टिलोपः। यथा—

एकादशानां पूरण एकादशः। द्वादशः, त्रयोदशः इत्यादि।

१४६४। नान्तादसंख्यादेर्मट्। (५-२-४९)

डट्प्रत्ययस्य मडागमः। पञ्चमः, सप्तम इत्यादि।

१४६५। षट्कतिकतिपयचतुरां थुक्। (५-२-५१)

षडादीनां डटि परे थुगागमः। कतिपयशब्दस्य संख्यात्वाभावेऽपि वचनसामर्थ्याड्डुट्। यथा—

षष्ठः, कतिथः, कतिपयथः, चतुर्थः।

॥ * ॥ चतुरश्छयतावाद्यक्षरलोपश्च। तुर्यः, तुरीयः।

१४६६। बहुपूगगणसङ्घस्य तिथुक्। (५-२-५२)

बहूनां पूरणो बहुतिथ इत्यादि।

१४६७। वतोरिथुक्। (५-२-५३)

यावतिथः, तावतिथः, एतावतिथः।

१४६८। द्वेस्तीयः। (५-२-५४)—द्वितीयः।

१४६९। त्रेः संप्रसारणं च। (५-२-५५)—तृतीयः।

१४७०। विंशत्यादिभ्यस्तमडन्यतरस्याम्। (५-२-५६)

डटस्तमडागमः। 'ति विंशतेर्डिति' इति भसंज्ञायां तिकारलोपः।

विंशः, विंशतितमः; त्रिंशः, त्रिंशत्तमः।

१४७१। नित्यं शतादिमासार्धमाससंवत्सराच्च। (५-२-५७)

शतादुत्तरेभ्यश्च नित्यं डटस्तमडागमः। मासादिभ्यश्चैवं विधानसामर्थ्याड्डुट् तस्य च तमट्।—शततमः, सहस्रतमः, लक्षतमः इत्यादि॥

१४७२। षष्ट्यादेश्चासंख्यादेः। (५-२-५८)

केवलेभ्यः षष्टिसप्तत्यशीतिनवतिशब्देभ्यश्च नित्यं तमट्।

षष्टितमः, सप्ततितमः, अशीतितमः, नवतितमः।

संख्यादेस्तु एकषष्टः, द्वासप्तत इत्याद्यपि।

इति पूरण्यः॥

---

## अथ मत्वर्थीयाः ॥

### १४७३ । तदस्यास्त्यस्मिन्निति मतुप् । (५-२-९४)

गावोऽस्य सन्तीति गोमान् देवदत्तः । धनुरस्यास्तीति धनुष्मान् । हविरस्यामस्तीति हविष्मती वेदिः, चरुमती ।

मतुपो मकारस्य क्वचित् वादेशोऽसिद्धकाण्डे विधीयते । यथा—

### १४७४ । मादुपधायाश्च मतोर्वोऽयवादिभ्यः । (८-२-९)

म् च, अश्च मम् इति समाहारद्वन्द्वः । अवर्णमकाराभ्यामित्यर्थः । उपधाभूताभ्याम् अन्तभूताभ्यां वा अवर्णमकाराभ्यां परस्य मतुपो वादेशः । न तु यवादिभ्यः परस्य । 'आदेः परस्य' इति मकारस्यैव वादेशः । यथा—

| | |
|---|---|
| मान्तस्य–किंवान्, शंवान् | अवर्णान्तस्य–धनवान्, भार्यावान् । |
| मोपधस्य–लक्ष्मीवान्, चमूवान्, डाडिमीवान् | अवर्णोपधस्य–पयस्वान्, भास्वान् । |

### १४७५ । झयः । (८-२-१०)

झयन्तान्मतुपो वकारादेशः । यथा—विद्युत्वान् मेघः । दृषद्वान् देशः ।

### १४७६ । संज्ञायाम् । (८-२-११)

अहीवती, कपीवती इत्यादि ।

१४७७ । **उदन्वानुदधौ च** । (८-२-१३) चान्मुनौ ।

१४७८ । **राजन्वान् सौराज्ये** । (८-२-१४) अन्यत्र राजवान् ।

उक्ता वादेशविधयः । अथ प्रकृतेः प्रत्ययविधिरेवानुबध्यते—

### १४७९ । रसादिभ्यश्च । (५-२-९५)

रसादिभ्यश्च मतुप् अपवादबाधनार्थं विधीयते ॥

### १४८० । लोमादिपामादिपिच्छादिभ्यः शनेलचः । (५-२-१००)

यथासंख्यं प्रत्ययाः वा स्युः । यथा—

लोमशः—लोमवान् । पामनः—पामवान् । पिच्छिलः—पिच्छावान् ।

### १४८१ । अत इनिठनौ । (५-२-११५)

**अदन्तादिनिठनौ वा पक्षे मतुप् । यथा—**

दण्डोऽस्यास्तीति—दण्डी, दण्डिकः, अन्यतरस्यामित्यधिकारात् दण्डवान् । छत्रमस्यास्तीति—छत्री, छत्रिकः, छत्रवान् ।

॥ * ॥ १. **एकाक्षरात्**—यथा— स्ववान् ।
२. **कृतो** „ कारकवान् ।
३. **जातेः** „ व्याघ्रवान् ।
४. **सप्तम्यां च न तौ स्मृतौ**—दण्डः अस्यामस्ति दण्डवान् ।

## १४८२ । अस्मायामेधास्रजो विनिः । (५-२-१२१)

**असन्तान्मायादिभ्यश्च विनिः** । यशस्वी, तरस्वी, मायावी ।

## १४८३ । अर्शआदिभ्योऽच् । (५-२-१२७)

अर्शसः, पलितः, कर्दमः इत्यादि । आकृतिगणः ।

'तदस्यास्त्यस्मिन्निति मतुप्' इति सूत्रे इतिशब्दस्य प्रयोजनं व्याख्यातं पूर्वाचार्यैः । यथा—

"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥"

यथा—भूम्नि—गोमान् । निन्दायां—पुण्ड्री माली वा पुरुषः । प्रशंसायां—रूपवती कन्या, बुद्धिमान् बालः । नित्ययोगे—क्षीरिणो वृक्षाः । अतिशायने—उदरिणी कन्या । संसर्गे—छत्री दण्डी पान्थः ॥

इति मत्वर्थीयाः ।

**'समर्थाना'मिति 'प्रथमा'दिति चाधिकारयोर्गतोऽवधिः । वेति तु वर्तते एव ।**

---

# अथ विभक्तितद्धिताः ॥

## १४८४ । प्राग्दिशो विभक्तिः । (५-३-१)

'दिक्छब्देभ्यः सप्तमी........' इत्यतः प्राग्विधास्यमानाः प्रत्यया विभक्तिसंज्ञाः स्युः । 'त्यदादीनामः', 'न विभक्तौ तुस्माः' इत्यादिप्रक्रियासमावेशार्थकः संज्ञाविधिः । अव्ययान्येतानि ॥

१४८५। किंसर्वनामबहुभ्योऽद्व्यादिभ्यः। (५-३-२)

विभक्तितद्धिताः सर्वनामभ्यो बहुशब्दाच्च स्युः। किंशब्दवर्जितेभ्यो द्व्यादिभ्यस्तु न॥

१४८६। इदम इश्। (५-३-३)

विभक्तितद्धिते परे इदम इशादेशः॥

१४८७। एतेतौ रथोः। (५-३-४)

रेफथकाराद्योः प्रत्यययोरिदम 'एत' 'इत्' इत्यादेशौ यथासंख्यं स्तः। इशोऽपवादः॥

१४८८। एतदोऽश्। (५-३-५)—विभक्तितद्धिते परे।

१४८९। सर्वस्य सोऽन्यतरस्यां दि। (५-३-६)

सर्वशब्दस्य 'स' इत्यकारान्त आदेशो वा दादौ विभक्तितद्धिते। एवं प्रक्रियाविशेषानुक्त्वा प्रत्ययान् विदधाति—

१४९०। पञ्चम्यास्तसिल्। (५-३-७)

किंसर्वनामबहुभ्यः पञ्चम्यन्तेभ्यस्तसिल्प्रत्ययो वा। त्यदाद्यत्वम्। तद्—ततः। यद्—यतः। इदम इश्—इतः। एतदोऽश्—अतः, सर्वतः, अन्यतः, पूर्वत इत्यादि। किंशब्दस्य 'किमः कः' इत्यस्यापवादत्वेन

१४९१। कु तिहोः। (७-२-१०४)

१४९२। क्वाति। (७-२-१०५)

इति कु-क्व-आदेशयोर्विधानात्तसिलि कुतः इति रूपम्॥

१४९३। तसेश्च। (५-३-८)

'प्रतियोगे पञ्चम्यास्तसिः' 'अपादाने चाहीयरुहोः' इति वक्ष्यमाणस्य तसेश्च किंसर्वनामबहुभ्यस्तसिलादेशो विधीयते। विभक्तिकार्यप्रापणार्थमयमायासः। कुतः, ततः इत्यादि॥

१४९४। सप्तम्यास्त्रल्। (५-३-१०)

कुत्र, बहुत्र, तत्र, सर्वत्र, अत्र, अमुत्र इत्यादि।

१४९५ । इदमो हः । (५-३-११)

त्रलोऽपवादः । इदम इश्—इह ।

१४९६ । किमोऽत् । (५-३-१२)

अयं विशेषविधिरेव । न तु त्रलोऽपवादः । 'क्वाति' इति किमः क्वादेशः । 'यस्येति च' इत्यकारलोपः—क्व ॥

१४९७ । इतराभ्योऽपि दृश्यन्ते । (५-३-१४)

विभक्त्यन्तरेऽपि उक्ता विभक्तितद्धिता भवन्ति । ततोभवान्, तत्रभवान्, अतोभवान्, अत्रभवान्, इहभवान् इत्यादयः पूजार्थका अनेन सिध्यन्ति ॥

१४९८ । सर्वैकान्यकिंयत्तदः काले दा । (५-३-१५)

सर्वादिभ्यः कालेऽर्थे दाप्रत्ययस्त्रलोऽपवादः । सर्वदा । 'सर्वस्य सोऽन्यतरस्यां दि'—सदा, एकदा इत्यादि ।

१४९९ । इदमो र्हिल् । (५-३-१६) एतर्हि 'एतेतौ रथोः' ।

१५०० । अधुना । (५-३-१७) अधुना—इशादेशे 'यस्येति' लोपः ।

१५०१ । दानीं च । (५-३-१८) इदानीम् ।

१५०२ । तदो दा च । (५-३-१९) तदानीम् । तदा ।

१५०३ । अनद्यतने र्हिलन्यतरस्याम् । (५-३-२१)

किंसर्वनामबहुभ्यः इत्येव । कर्हि, कदा । यर्हि, यदा । तर्हि, तदा ।

१५०४ । सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरितरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः । (५-३-२२)

सप्तम्याः काले एते निपात्यन्ते । यथा—

समानेऽहनि—सद्यः । पूर्वेऽब्दे—परुत् । पूर्वतरे—परारि । वर्तमाने—ऐषमः । परस्मिन् दिने—परेद्यवि । अस्मिन् दिने—अद्य । शेषेषु दिनशब्दस्य द्युरादेशः ।

१५०५ । प्रकारवचने थाल् । (५-३-२३)

किंसर्वनामबहुभ्यः प्रकारेऽर्थे थाल् ।

सर्वेण प्रकारेण—सर्वथा । यथा, तथा ।

१५०६ । इदमस्थमुः । (५-३-२४)

थालोऽपवादः । इत्थम् ‘एतेतौ रथोः’ इति इदादेशः ।

१५०७ । किमश्च । (५-३-२५) कथम् ।

इति विभक्तितद्धिताः ।

---

## अथ केचित् प्रकीर्णकाः ॥

१५०८ । संख्याया विधार्थे धा । (५-३-४२)

विधा प्रकारः । एकधा, द्विधा, त्रिधा इत्यादि[1] । इदमप्यव्ययम् ।

१५०९ । याप्ये पाशप् । (५-३-४७)

याप्यः कुत्सितः । कुत्सितो भिषक्—भिषक्पाशः ।

१५१० । भूतपूर्वे चरट् । (५-३-५३)

पूर्वंभूतो भूतपूर्वः । पूर्वं दृष्टो दृष्टचरः । आढ्यचरः, उपाध्यायचरः, भिषक्चरः ।

१५११ । षष्ठ्या रूप्य च । (५-३-५४)

देवदत्तस्य भूतपूर्वो देवदत्तरूप्यः, देवदत्तचरो वा गौः ।

---

## अथ अतिशायनतद्धिताः ॥

१५१२ । अतिशायने तमबिष्ठनौ । (५-३-५५)

प्रकर्षेऽर्थे प्रातिपदिकात्तमबिष्ठनौ । प्रकर्षेण आढ्यः आढ्यतमः । पटुः पटिष्ठः ।

१५१३ । तिङश्च । (५-३-५६)

तिङन्तादप्यतिशायने तमप् । इष्ठस्तु निषेत्स्यते ।

---

१. द्वेधा, द्वैधं, त्रेधा, त्रैधम्, ऐकध्यम् इति विशेषरूपाण्यपि सन्ति ।

अत्र प्रक्रियोच्यते—

**१५१४ । किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे । (५-४-११)**

किम, एदन्तात्, तिङो,-ऽव्ययाच्च, परो यो घस्तस्य आमुप्रत्ययः स्यात् स्वार्थे । प्रकर्षो घवाच्यो न चेद्द्रव्यस्य । अथ को नाम घः ?—

**१५१५ । तरप्तमपौ घः । (१-१-२२)** एतौ घसंज्ञौ ।

प्रकर्षेण पचति पचतितमाम् । पठतितमाम् । किरतितमां—तिङ् ।
प्राह्णेतमां, प्रगेतमां—एत् । उच्चैस्तमां, सुतमाम्—अव्ययम् ।

**१५१६ । द्विवचनविभज्योपपदे तरबीयसुनौ । (५-३-५७)**

द्वयोः प्रकर्षवचने, 'पञ्चमी विभक्ते' इति विहिते पञ्चम्यन्ते चोपपदे तरबीयसुनौ स्तः । तमबिष्ठनोरपवादौ । अतो बहुषु प्रकर्ष-निर्धारण एव तौ । यथा—

रामकृष्णयोः कृष्णः पटुतरः, पटीयान् वा । माथुराः पाटलीपुत्रेभ्य आढ्यतराः ।
सुकुमारतरः, पचतितराम् । सुतराम्, उच्चैस्तराम् ।

**१५१७ । अजादी गुणवचनादेव । (५-४-५८)**

अतिशायनप्रत्ययेषु इष्ठन्नीयसुनौ अजादी । तौ गुणवाचिभ्य एव । एवमेवोदाहृतम् । इष्ठेमेयस्सु विहिताः प्रक्रिया अत्रानुसन्धेयाः ।

**१५१८ । प्रशस्यस्य श्रः । (५-३-६०)**

इष्ठन्नीयसुनोः । प्रशस्यतरः, श्रेयान् । प्रशस्यतमः, श्रेष्ठः ।

**१५१९ । ज्य च । (५-३-६१)** प्रशस्यतरो ज्यायान्, ज्येष्ठः ।

**१५२० । वृद्धस्य च । (५-३-६२)** वृद्धतरो ज्यायान्, ज्येष्ठः ।

**१५२१ । अन्तिकबाढयोर्नेदसाधौ । (५-३-६३)**

यथासङ्ख्यम् । नेदीयान्, नेदिष्ठः । साधीयान्, साधिष्ठः ।

**१५२२ । युवाल्पयोः कनन्यतरस्याम् । (५-३-६४)**

यवीयान्, यविष्ठः । कनीयान्, कनिष्ठः । अल्पीयान्, अल्पिष्ठः ।

१५२३ । विन्मतोर्लुक् । (५-३-६५)

इष्ठन्नीयसुनोः परयोर्मतुपो विन्प्रत्ययस्य च लुक् ।

बलवत्तरो बलीयान् । बलवत्तमो बलिष्ठः । मेधावितरो मेधीयान् । मेधावितमो मेधिष्ठः ।

इत्यातिशायनिकाः ॥

---

## अथ पुनरपि प्रकीर्णकाः ॥

१५२४ । प्रशंसायां रूपप् । (५-३-६६)

प्रशस्तो वैयाकरणो वैयाकरणरूपः ।

१५२५ । ईषदसमाप्तौ कल्पब्देश्यदेशीयरः । (५-३-६७)

ईषदूनः पटुः पटुकल्पः, पटुदेश्यः, पटुदेशीयो वा ।

तिङश्चेत्यनुवृत्तेरेते तिङन्तादपि स्युः—

प्रशस्तं पचति–पचतिरूपम् । ईषदूनं पचति–पचतिकल्पम् ।

तद्धितत्वेन सुबुत्पत्तौ द्वित्वकर्मत्वादीनामयोगात् सामान्ये नपुंसकं प्रथमैकवचनं च । तथा चाव्ययप्रायत्वम् ।

१५२६ । विभाषा सुपो बहुच्पुरस्तात्तु । (५-३-६८)

ईषदसमप्तावित्येव । 'सुप्' इत्युक्तिस्तिङो निवृत्त्यर्थो । बहुच्-प्रत्ययः प्रकृतेः पूर्वं भवतीति विशेषः । विभाषाग्रहणं समासार्थम् ।

ईषदूनः पटुर्बहुपटुः ।

१५२७ । प्रकारवचने जातीयर् । (५-३-६९)

पटुप्रकारः पटुजातीयः । मृदुजातीयः ।

---

## अथापकर्षकः कप्रत्ययः ॥

१५२८ । प्रागिवात् कः । (५-३-७०)

'इवे प्रतिकृतौ' इति पर्यन्तं कप्रत्ययः सामान्येनाधिक्रियते ।

**१५२९ । अव्ययसर्वनाम्नामकच् प्राक टेः । (५-३-७१)**

कप्रत्ययापवादोऽकच् । अयं टेः प्राग् भवतीति विशेषः। तिङन्तेभ्योऽप्ययमिष्यन्ते ।

अज्ञाते, कुत्सिते, चाल्पे, ह्रस्वे, संज्ञानुकम्पयोः ।
प्रतिकृत्यामथ स्वार्थेऽप्येष कप्रत्ययो भवेत् ॥

**यथा**—कस्यायमित्यज्ञातोऽश्वः अश्वकः । उष्ट्रकः इत्यादि । कुत्सितोऽल्पो ह्रस्वो वा अश्वः अश्वकः । शूद्रकः, शावकः, वेणुकः इत्यादयः संज्ञायाम् ॥ अनुकम्पनीयः पुत्रः पुत्रकः । वत्सकः । बुभुक्षितकः ॥ अश्वस्य प्रतिकृतिरश्वकः । उष्ट्रकः । गजकः ॥ वृक्ष एव वृक्षकः । बाल एव बालकः ॥ अल्पं पचति पचतकि । कुत्सितमजल्पत् अजल्पकत् ॥ उच्चकैः, नीचकैः, सर्वके, सकः, अमुकः, त्वयका ॥

**१५३० । समासाच्च तद्विषयात् (छ) । (५-३-१०६)**

तच्छब्देन इवार्थः परामृश्यते। इवार्थविषयात् समासाच्छप्रत्ययः स्यात् । यथा—

काकतालीयो देवदत्तबधः—काकागमनतालपतनयोर्घटनेन जातः काकवध इव यदृच्छाघटित इत्यर्थः ।

---

## अथ केचिदव्ययतद्धिताः ॥

**१५३१ । संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् । (५-४-१७)**

पञ्चकृत्वो भुङ्क्ते—पञ्चवारमित्यर्थः । एवं षट्कृत्व इत्यादि ।

**१५३२ । द्वित्रिचतुर्भ्यः सुच् । (५-४-१८)**

कृत्वसुचोऽपवादः । द्विः, त्रिः, चतुः ।

**१५३३ । एकस्य सकृच्च । (५-४-१९)**

एकशब्दस्य सकृदित्यादेशः सुप्रत्ययश्च । प्रत्ययस्य संयोगान्तलोपः—सकृद्—एकवारमित्यर्थः ।

१५३४। प्रज्ञादिभ्यश्च (अण्)। (५-४-३८)

स्वार्थे अण्प्रत्ययः। नेदं परमव्ययम्।

प्रज्ञ एव—प्राज्ञः। वणिगेव—वाणिजः। मरुदेव—मारुतः। चोर एव—चौरः। मन एव—मानसम्। देवतैव—दैवतम्।

१५३५। बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्। ५-४-४२)

बहु, बहुभिः, बहुभ्यो, बहुषु वा बहुशो ददाति। एवं स्तोकशः, अल्पशः इत्यादि।

१५३६। संख्यैकवचनाच्च वीप्सायाम्। (५-४-४४)

संख्यावाचिभ्यः परिमाणवाचिभ्यश्च कारकेभ्यः शस् वीप्सायां द्योत्यायाम्।

द्वौ द्वौ मोदकौ ददाति—द्विशो मोदकं ददाति। एवं त्रिशः, शतशः, सहस्रशः। प्रस्थशो धान्यं क्रीणाति॥

१५३७। प्रतियोगे पञ्चम्यास्तसिः। (५-४-४४)

प्रतिना कर्मप्रवचनीयेन योगे विहितायाः पञ्चम्यास्तसिः। यथा अभिमन्युरर्जुनतः प्रति।

१५३८। अपादाने चाहीयरुहोः। (५-४-४५)

अपादाने पञ्चम्याश्च तसिर्न तु हीयरुहोः।

अपादाने—ग्रामत आगच्छति। चोरतो बिभेति।

हीयरुहोस्तु—अर्थाद्धीयते। वृक्षादवरोहति इति पञ्चम्येव।

॥ * ॥ आद्यादिभ्यस्तसेरुपसंख्यानम्॥

आद्यादिभ्यो विभक्त्यन्तरेऽपि तसिः। आदौ—आदितः। पार्श्वे—पार्श्वतः। एवं पृष्ठत इत्यादि। अयमेव सार्वविभक्तिकस्तसिरित्युच्यते।

१५३९। षष्ठ्या व्याश्रये। (५-४-४८)

नानापक्षसमाश्रयो व्याश्रयः। तत्र षष्ठ्यास्तसिः। यथा—देवा अर्जुनतोऽभवन्। अर्जुनस्य पक्षे इत्यर्थः।

१५४०। कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः। (५-४-५०)

॥ * ॥ अभूततद्भाव इति वक्तव्यम्॥

कारणस्य विकाररूपेण अभूतस्य तदात्मना भावोऽभूततद्भावः। सम्पद्यतेः कर्ता सम्पद्यकर्ता। अभूततद्भावे गम्यमाने कृभ्वस्तिभिर्धातु-

भिर्योगे सम्पत्तिकर्तुः प्रातिपदिकात् च्विरिति सर्वलोपी प्रत्ययः। 'अस्य च्वौ' इत्यवर्णान्तस्य ईत्वमुक्तं च्वौ। यथा—

अशुक्लः शुक्लो भवति शुक्लीभवति। पटीस्यात्तन्तुः।

अशुक्लं शुक्लं करोति शुक्लीकरोति। घटीकरोति मृदम्।

१५४१। विभाषा साति कार्त्स्न्ये। (५-४-५२)

पूर्वसूत्रविषये सातिर्वा कार्त्स्न्ये गम्यमाने।

भस्मसाद्भवति, भस्मीभवति काष्ठ—कार्त्स्न्येन भस्म सम्पद्यते। एकदेशे तु भस्मीभवतीत्येव।

१५४२। अभिविधौ सम्पदा च। (५-४-५३)

अभिव्याप्तौ गम्यमानायां च्विविषये सातिः सम्पद्यतेर्योगे च।

उदकसात् सम्पद्यते भवति वा लवणम्। उदकीभवति इति च।

१५४३। तदधीनवचने। (५-४-५४)

स्वामिविशेषवाचिनः प्रातिपदिकादीशितव्येऽर्थे साँतिः कृभ्वास्तिसम्पद्यतिभिर्योगे। यथा—

राज्ञोऽधीनं करोति राजसात्करोति महीम्। एवं राजसात्भवति सम्पद्यतेऽस्ति वा।

१५४४। देये त्रा च। (५-४-५५)

ब्राह्मणत्राकरोति, ब्राह्मणसात्करोति वा गाम्।

१५४५। देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्। [(५-४-५६)

देवादिभ्यो द्वितीयासप्तम्योरर्थे बहुलं त्रा। यथा—

देवान् गच्छति—देवत्रा गच्छति। मनुष्येषु वसति—मनुष्यत्रा वसति। बहुलग्रहणादन्यत्रापि—'बहुत्रा जीवतो मनः'।

१५४६। अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच्। (५-४-५७)

द्व्यजवरम् अक्षरद्वयादन्यूनमर्धं यस्य तस्मादव्यक्तानुकरणशब्दात् कृभ्वस्तियोगे डाच् न त्वितिशब्दे परे। यथा—

पटपटाकरोति पटः। चटचटाकरोतीन्धनम्।

इतः परं तद्धितेषु समासान्ताः शिष्यन्ते। तान् समासविधेरनन्तरं वक्ष्यामः॥

# ॥ आकाङ्क्षाकाण्डः ॥

शब्दानां व्युत्पत्तिर्व्युत्पन्नानां शब्दानामव्युत्पन्नानां च सुप्तिङ्भेदभिन्ना रूपनिष्पत्तयश्च व्याख्याताः । इतः परं निष्पन्नानां पदानाम् अन्योन्यान्वये यानि कार्याणि तान्युच्यन्ते—

१५४७ । **समर्थः पदविधिः** । (२-१-१)

पदसम्बन्धी विधिः सर्वोऽपि सङ्गतार्थो भवितुमर्हति । पदकार्याण्यर्थसाङ्गत्य एव प्रवर्तेरन् । अर्थसाङ्गत्यमेव सामर्थ्यमित्युच्यते । इह हि संस्कृतभाषायां संहितायाः प्राबल्याद्वाक्यद्वयप्रयोगे पूर्ववाक्यान्तिमपदस्य उत्तरवाक्यादिपदेन सहान्वयाभावेऽपि योगसद्भावाल्लक्षणैकचक्षुः शिष्यः पदकार्याण्यपि कदाचिदापादयेदिति शङ्कमान आचार्यः परिभाषामेनां प्रणीतवान् । तेन 'पुत्रो राज्ञः, पुरुषो देवदत्तस्य' इत्यत्र सामर्थ्याभावात् राज-पुरुषपदयोः राजपुरुष इति समासो न प्राप्नोति । पदविधिरित्युक्तेर्वर्णकार्याणि तु भवन्त्येव । यथात्रैव ङसः सकारस्य रुत्वे पाक्षिकावुपध्मानीयविसर्गौ । यथा वा 'तिष्ठतु दध्याहर भोस्तक्रम्' इत्यादौ यण् सन्धिकार्यम् ॥

सामर्थ्यं तावद्विविधं—व्यपेक्षा एकार्थीभावश्चेति । तत्र स्वार्थपर्यवसायित्वेन स्वतन्त्राणामेव पदानामाकाङ्क्षावशाद्यः परस्परसम्बन्धः सा व्यपेक्षा समुदायार्थस्य एकत्वप्रतीत्यर्थं स्वस्वाभिधेयस्य परस्परस्मिन् न्यग्भावनेन परतन्त्राणां पदानां सामर्थ्यमेकार्थीभावः । एकार्थीभाव एव वृत्तिरित्युच्यते । सा च कृत्, तद्धितः, समासः, एकशेषः, सनाद्यन्ता इति पञ्चविधा । एषु समासैकशेषयोरेव घटकावयवाः पदानि ।

अन्ये पदप्रत्ययाभ्याम् उपकल्पिताः । वृत्तीनामर्थानुवादकं वाक्यं विग्रह इत्युच्यते । वृत्तिषु घटकावयवानां स्वातन्त्र्याभावाद्विशेषणयोगो न घटते । यथा— दृढं कुम्भं करोतीति दृढ कुम्भकारः—(कृत्) । इति न ।

अध्यर्धेन शतेन क्रीतः अध्यर्धेन शत्यः—(तद्धितः) । „

विक्रमिणो राज्ञः पुरुषः विक्रमिणो राजपुरुषः–(समासः) । „

युवतिर्माता वृद्धःपिता च युवतिर्वृद्धः पितरौ–(एकशेषः) । „

आयुष्मन्तं पुत्रमिच्छति आयुष्मन्तं पुत्रकाम्यति—(सनाद्यन्तः) । इति न ।

विशेषणविशिष्टे वाक्ये वृत्तिर्न प्रवर्तेतैव । वृद्धस्य दशरथस्यापत्यमिति विवक्षायां दशरथशब्दात् 'अत इञ्' इत्यपत्यप्रत्ययस्य नावकाश एव। तथा चोक्तम्—

'सविशेषणानां वृत्तिर्न, वृत्तस्य च विशेषणयोगो न ।'

इति । वृत्तौ घटकं वृत्तम् ।

वाक्ये सामर्थ्यं व्यपेक्षा । तत्र च पदानां स्वातन्त्र्याद्यथेष्टं विशेषणयोगः । आकाङ्क्षायोग्यतासन्निध्यनुरोधेनैकस्यानेकपदान्वयोऽपि भवति । यथा—

राज्ञो देवदत्तस्य च पुरुषः । राज्ञः पुरुषोऽश्वश्च । तव वा मम वा गृहम् ।

नित्यसापेक्षाणां तु शब्दानां वृत्तावपि एकदेशान्वयो भवत्येव । तथा चोक्तम्—

'सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते ।
वाक्यवत् सा व्यपेक्षा हि वृत्तावपि न हीयते ॥'

अनेन देवदत्तस्य गुरुकुलम् इत्यादि सिध्यति । अन्यत्रापि

शिवस्य भगवतो भक्तः शिवभागवतः ।

आकृष्टा मरुतां लीला यैस्तान् 'मरुतामाकृष्टलीलान्'
गृहीतो रतेरनुनयो येन तेन 'रतेर्गृहीतानुनयेन' } —रघुवंशम्

इत्यादौ सापेक्षाणां समासो दृश्यते । तेन यत्रार्थप्रतीतिर्न हीयते तत्र सापेक्षाणामपि व्यधिकरणविशेषणानामेकदेशान्वयोऽभ्युपेय एवेति स्थितम् ॥

# ॥ समासप्रकरणम् ॥

अन्वितानां पदानामेकीकरणं समासः । स च घटकपदा
जातिभेदाभिप्रायेण

'सुपां सुपा, तिङा, नाम्ना, धातुनाथ तिङां तिङा ।
सुबन्तेनेति च ज्ञेयः समासः षड्विधो बुधैः ॥'

इत्युक्तरीत्या षड्विधः । किं त्वयं विभागो नातीव कार्यकारी । घटक
पदानां प्राधान्यनिबन्धने विभागे समासश्चतुर्विधः—

पूर्वपदार्थप्रधानोऽव्ययीभावः—उपहरि ।

उत्तरपदार्थप्रधानस्तत्पुरुषः—राजपुरुषः ।

उभयपदार्थप्रधानो द्वन्द्वः—रामलक्ष्मणौ ।

अन्यपदार्थप्रधानो बहुव्रीहिः—पीताम्बरः ।

इति । अयमेव विभागो व्युत्पादकः, पाणिनिना चादृतः । किं तु प्रक्रि
यैकपरायण आचार्यस्तत्पुरुषादीः संज्ञाः समासान्तादिकार्यप्रापणार्थमे
निबध्नाति । अतश्चाव्ययीभावादीनामर्थव्यभिचारः सुलभ एव । यथा

शाकप्रति इत्यव्ययीभाव उत्तरपदार्थप्रधानः । अतिमाल इति तत्पुरुषः पू
पदार्थप्रधानः । द्वित्रा इति बहुव्रीहिरुभयपदार्थप्रधानः ।

तत्तदधिकारेषु विहिताः समासास्तत्तत्संज्ञा इत्येव । एवं सर्वनामादि
संज्ञा अपि कार्यनिबन्धना एव, न त्वर्थनिबन्धनाः । अन्यथा प्रथमचरम
तयाल्पार्धादीनां कथं सर्वनामता स्यात् ?

समासविधेः प्राक् तदुपयुक्ताः प्रक्रिया वक्ष्यामः—

१५४८ । तत्पुरुषः समानाधिकरणः कर्मधारयः । (१-२-४२)

उत्तरपदप्राधान्यात्तत्पुरुषे हि पूर्वपदं विशेषणम् । तद्यत्र विशेष
णोत्तरपदेन समानाधिकरणं स तत्पुरुषः कर्मधारयसंज्ञः । यथा—

नीलमुत्पलं नीलोत्पलम् ।

## १५४९ । प्रथमानिर्दिष्टं समास उपसर्जनम् । (१-२-४३)

समासविधौ प्रथमाविभक्त्या निर्दिष्टं पदमुपसर्जनसंज्ञम् । यथा—

'विशेषणं विशेष्येण बहुलम्' इति विधौ प्रथमान्तं विशेषणमुपसर्जनम् ।

## १५५० । एकविभक्ति चापूर्वनिपाते । (१-२-४४)

एका अभिन्ना विभक्तिर्यस्य तदेकविभक्ति । विग्रहे नियत विभक्तिकम्, अत एव विशेषणत्वेनाप्रधानं पदमुपसर्जनमित्यर्थः इदमेव लौकिकमुपसर्जनलक्षणम्, पूर्वोक्तं तु समासशास्त्रे सङ्केतमात्रम् वक्ष्यमाणे (सू० १६१४) पूर्वनिपाते प्रागुक्तं 'प्रथमानिर्दिष्ट-रूपमेवोप-सर्जनं ग्राह्यं, न त्विदम्' इति निषेधति 'अपूर्वनिपाते' इति । अस्य तु फलमुपसर्जनह्रस्वः । स एवोच्यते—

## १५५१ । गोस्त्रियोरुपसर्जनस्य (ह्रस्वः) । (१-२-४८)

उपसर्जनयोर्गोशब्दस्त्रीप्रत्ययान्तयोर्ह्रस्वः । यथा—

चित्रा गावो यस्य स चित्रगुः ।　　मालामतिक्रान्तोऽतिमालः ।
निर्गतः कौशाम्ब्या निष्कौशाम्बिः । प्राप्तो जीविकां प्राप्तजीविकः ।

## १५५२ । लुक् तद्धितलुकि । (१-२-४९)

यत्र तद्धितप्रत्ययस्य लुक् तत्र स्त्रीप्रत्ययस्यापि लुगेव, न तु ह्रस्वः । क्रीतविकारादिष्वर्थेषु तद्धितस्य लुगुक्तः ।

पञ्च इन्द्राण्यो देवता अस्य—पञ्चेन्द्रः । आमलक्याः फलमामलकम् ।

---

# अथ समासविधिः ॥

## १५५३ । प्राक्कडारात् समासः । (२-१-३)

'कडाराः कर्मधारये' इति यावत् समासोऽधिक्रियते ।

१५५४ । सह सुपा । (२-१-४)

सुबिति पूर्वतरसूत्रादनुवर्तते । सुबन्तं सुबन्तेन सह समस्यत इति समाससामान्यस्वरूपं कथ्यते ।

१५५५ । अव्ययीभावः । (२-१-५)

इत्यधिकृत्य ।

**१५५६ । अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्य-र्थाभावा-त्यया-संप्रति-शब्दप्रादुर्भाव-पश्चा-द्यथा-नुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्या-न्तवचनेषु । (२-१-६)**

विभक्त्यादिष्वर्थेषु वर्तमानमव्ययं समर्थेन सुबन्तेन सह समस्यते अव्ययीभावश्च समासो भवति । 'अधि' इति सप्तम्यर्थकमव्ययं समर्थसुबन्तेन हरिशब्देन समस्यते । 'कृत्तद्धितसमासाश्च' इति समासस्य प्रातिपदिकत्वात् घटकपदस्थानां सुपां 'सुपो धातुप्रातिपदिकयोः' इति लोपः । 'अधिहरि' इति समासो जातः । समस्तात् पुनः प्रातिपदिकत्वेन सुपामुत्पन्नानामव्ययीभावस्य अव्ययत्वात् 'अव्ययादाप्सुपः' इति लोपः । **अधिहरि लक्ष्मीर्वसति** । हरौ लक्ष्मीर्वसतीत्यर्थः । 'अव्ययादाप्सुपः' इति लोपस्यापवादोऽस्ति । यथा—

१५५७ । नाव्ययीभावादतोऽम् त्वपञ्चम्याः । (२-४-८४)

अदन्तादव्ययीभावात् परस्य सुपो न लुक् । किं तु 'अम्' इत्यादेशः । पञ्चम्यास्तु न लुक्, नाप्यमादेशः ।

१५५८ । तृतीयासप्तम्योर्बहुलम् । (२-४-८४)

अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः । समीपाद्यर्थेष्वव्ययीभाव उदाह्रियते—

वृक्षस्य समीपं उपवृक्षम्, उपवृक्षात्, उपवृक्षेण, उपवृक्षे । उपवृक्षादोषधिर्गृहीता । उपवृक्षमुपवृक्षे वा तिष्ठति । उपवृक्षमुपवृक्षेण वा मृगो गतः । एवमन्येषामप्यम्भावः ।

मद्राणां समृद्धिः—सुमद्रम् ।
यवनानां व्यृद्धिः (क्षयः)—दुर्यवनम् ।
मक्षिकाणामभावो—निर्मक्षिकम् ।
हिमस्यात्ययः (अतिक्रमः)—अतिहिमम्
निद्रा सम्प्रति न युज्यते—अतिनिद्रम् ।
हरिशब्दः प्रकाशत इति—इतिहरि ।
हरेः पश्चात्—अनुहरि ।

**योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः ।**

रूपस्य योग्यम्—अनुरूपम् ।
अर्थमर्थं प्रति—प्रत्यर्थम् ।
शक्तिमनतिक्रम्य—यथाशक्ति ।
हरेः सादृश्यं सहरि (सह = स) ।

ज्येष्ठानुक्रमेण—अनुज्येष्ठम् ।
चक्रेण युगपत्—सचक्रम् ।
सदृशः सख्या—ससखि ।
क्षत्राणां सम्पत्ति—सक्षत्रम् ।
तृणमप्यपरित्यज्य—सतृणमत्ति ।
तद्धितपर्यन्तं—सतद्धितमधीते ।

अतिनिद्रम् इत्यत्र नपुंसकह्रस्वः । अव्ययीभावस्य नपुंसकत्वं वक्ष्यते । सचक्रमित्यादौ सहशब्दस्य 'स' इत्यादेशोऽपि वक्ष्यते । यथार्थत्वेनैव सादृश्यार्थेऽव्ययीभावे सिद्धे पृथग्ग्रहणं गुणभूतेऽपि सादृश्ये यथा स्यादिति । सम्पत्तिरनुरूप आत्मभावः । समृद्धिस्तु ऋद्धेराधिक्यम् ॥

## १५५९ । यथाऽसादृश्ये । (२-१-७)

साहश्यभिन्नेऽर्थे एव यथाशब्दः समर्थेन सुबन्तेन समस्यते । यथावृद्धं ब्राह्मणानामन्त्रयस्व । यथा हरिस्तथा हरः इति सादृश्येऽर्थे समासनिषेधार्थमारम्भः ॥

## १५६० । यावदवधारणे । (२-१-८)

अवधारणमियत्तापरिच्छेदः । यावदमत्रं ब्राह्मणानामन्त्रयस्व—यावन्त्यमत्राणि तावतो ब्राह्मणानित्यर्थः ॥

## १५६१ । सुप् प्रतिना मात्रार्थे । (२-१-९)

मात्रा बिन्दुः स्तोकमल्पमिति पर्यायाः । सुबिति वर्तमाने पुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थम् । सुपः प्रथमानिर्दिष्टत्वात्तस्य पूर्वनिपातः । शाकस्य लेशः शाकप्रति ॥

## १५६२ । विभाषा । (२-१-११)

इतः परं ये समासा उच्यन्ते ते विकल्पेनैवेत्यधिकारः । एतेनोक्ताः समासाः नित्याः । उपवृक्षम्, अधिहरि, निर्मक्षिकम् इत्यादिषु वृक्षस्य उप, हरौ अधि, मक्षिकाणां निर् इति विग्रहावस्था न भवत्येव । अतो नित्यसमासः, अनित्यसमास इति समासस्यान्योऽपि द्विविधो भेदो भवति । अस्वपदविग्रहा नित्यसमासाः । स्वपदविग्राह्या अनित्यसमासाः॥

## १५६३ । अपपरिबहिरञ्चवः पञ्चम्या । (२-१-१२)

अञ्चुशब्देन प्राक्प्रत्यगादयो गृह्यन्ते । अपादयः पञ्चम्यन्तेन वा समस्यन्ते । यथा—

अपत्रिगर्तम्, अप त्रिगर्तेभ्यो वा वृष्टो देवः । एवं परित्रिगर्तं, बहिर्ग्रामं, प्राग्ग्रामम् इत्यादि ।

## १५६४ । आङ्मर्यादाभिविध्योः । (२-१-१३)

आसेतु आहिमाचलम्, आ सेतोरा हिमाचलाद्वा ।

## १५६५ । लक्षणेनाभिप्रती आभिमुख्ये । (२-१-१४)

लक्षणवाचिना सह अभिप्रती वा समस्येते आभिमुख्येऽर्थे ।

अभ्यग्नि शलभाः पतन्ति । प्रत्यग्नि पतन्ति—अग्निं लक्षीकृत्येत्यर्थः ।

## १५६६ । अनुर्यत्समया । (२-१-१५)

अनुर्यस्य समीपवाची तेन लक्षणभूतेन वा समस्यते ।

अनुवनमशनिर्गतः—वनसमीपं लक्षीकृत्येर्थः ।

## १५६७ । यस्य चायामः । (२-१-१६)

अनुयमुनं मथुरा—यमुनायामेन मथुरायामो लक्ष्यते ।

## १५६८ । तिष्ठद्गुप्रभृतीनि च । (२-१)

एतानि निपात्यन्ते । तिष्ठद्गु नाम गोदोहनकालः ।

## १५६९ । पारे मध्ये षष्ठ्या वा । (२-१)

पारे मध्ये इत्येदन्ते पदे षष्ठ्या वा समस्येते । विभाषाधिकारेऽपि वावचनं षष्ठीतत्पुरुषसमावेशार्थम् । यथा—

पारेगङ्गं, गङ्गापारं, गङ्गायाः पारं वा । एवं मध्येमार्गं, मार्गमध्यं, मार्गस्य मध्यं वा ।

१५७० । तत्पुरुषः । (२-१-२२)

१५७१ । द्विगुश्च । (२-१-२३)

द्विगुरपि तत्पुरुषसंज्ञः । समासान्तः संज्ञाप्रयोजनम् ॥

१५७२ । द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः । (२-१-२४)

द्वितीयान्तं श्रितादिभिः कर्तरि निष्ठान्तैर्वा समस्यते । तत्पुरुष-संज्ञश्च समासः । यथा—

कृष्णं श्रितः कृष्णश्रितः । सुखप्राप्तः, शरणापन्नः इत्यादि ।

॥ * ॥ गम्यादीनामुपसंख्यानम् ॥

ग्रामं गमी—ग्रामगमी । अन्नं बुभुक्षुरन्नबुभुक्षुरित्यादि ।

यथाप्रयोगं गम्यादिः पठनीयः ।

१५७३ । अत्यन्तसंयोगे च । (२-१-२९)

अत्यन्तसंयोगे द्वितीया समर्थेन समस्यते ।

मुहूर्तं सुखं—मुहूर्तसुखम् । क्रोशकुटिला नदी ।

१५७४ । पूर्वसदृशसमानार्थकलहनिपुणमिश्रश्लक्ष्णैः । (२-१-३१)

तृतीया समस्यते ।

मासेन पूर्वो मासपूर्वः । चन्द्रेण सदृशश्चन्द्रसदृश इत्यादि ।

१५७५ । कर्तृकरणे कृता बहुलम् । (२-१-३२)

सर्पेण दष्टः सर्पदष्टः । नखैर्भिन्नो नखभिन्नः ।

बहुलग्रहणादन्येऽपि यथाप्रयोगं तृतीयातत्पुरुषाः ।

१५७६ । चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः । (२-१-३६)

यूपाय दारु यूपदारु । कुण्डलाय हिरण्यं कुण्डलहिरण्यम् ।

१५७७ । पञ्चमी भयेन । (२-१-३७)

उपलक्षणमिदम् । अन्येऽपि पञ्चमीतत्पुरुषा एवमूह्याः ।

चोरात् भयं चोरभयम् । वृक्षात् पतितं वृक्षपतितम् ।

१५७८ । सप्तमी शौण्डैः । (२-३-४०)

इदमप्युपलक्षणमेव ।

अक्षेषु शौण्डः अक्षशौण्डः । ग्रामे वास्तव्यो ग्रामवास्तव्यः । चरणे न्यस्तं चरणन्यस्तम् ।

१५७९ । पात्रेसमितादयश्च । (२-१-४८)

एते सप्तमीतत्पुरुषा निपात्यन्ते । निपातात् पूर्वपदे सप्तम्या लुगभावः । यो भोजनकाल एव सन्निधत्ते न तु कार्येषु स **पात्रेसमितः** **गेहेनर्दी, गेहेशूरः** इत्यादि ॥

१५८० । पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन । (२-१-४९)

पूर्वकाल इत्यर्थनिर्देशः, स्वरूपग्रहणमन्येषाम् । पूर्वकालक्रियावाचकं सुबन्तम्, एकादीनि च समानाधिकरणेन समर्थेन सुबन्तेन वा समस्यन्ते । यथा—

पूर्वं स्नातः पश्चादनुलिप्तः—स्नातानुलिप्तः । कृष्टसमीकृतं क्षेत्रम् । दग्धप्ररूढस्तरुः । भुक्तमुक्तं माल्यम् । एकवीरः । सर्वविद्या । जरन्नैयायिकः । पुराणमीमांसकः । नववैद्यः । केवलवैयाकरणः ।

१५८१ । दिक्संख्ये संज्ञायाम् । (२-१-५०)

समानाधिकरणेनेत्येव ।

उत्तरकुरवः । दक्षिणकोसलाः । पञ्चाम्राः । सप्तर्षयः ।

१५८२ । तद्धितार्थोत्तरपदसमाहारे च । (२-१-५१)

तद्धितार्थे विषये, उत्तरपदे परे, समाहारे च वाच्ये दिक्संख्ये समानाधिकरणेन सुबन्तेन समस्येते । यथा—

तद्धितार्थे—पूर्वस्यां शालायां भवः पौर्वशालः ।

पञ्चसु कपालेषु संस्कृतः पञ्चकपालः ।

उत्तरपदे—पूर्वा शाला प्रिया यस्य—स पूर्वशालाप्रियः ।

पञ्च गावो धनं यस्य—स पञ्चगवधनः ।

समाहारे—पञ्चानां वटानां समाहारः पञ्चवटी ।

समाहारे दिक्पूर्वपदत्वं न संभवति। पञ्चगवधन इत्यादौ प्रक्रिया वक्ष्यते—

### १५८३। संख्यापूर्वो द्विगुः। (२-१-५२)

पूर्वसूत्रेण विहिते समासे संख्यापूर्वपदो द्विगुसंज्ञः। 'द्विगोर्लुगनपत्ये' इति तद्धितलुक् समासान्तादयश्च प्रयोजनम्। यथा—

पञ्चसु कपालेषु संस्कृतः पञ्चकपालः—तद्धिते लुक्। पञ्चनावप्रियः—'नावो द्विगोः' इति समासान्तः। त्रयाणां लोकानां समाहारस्त्रिलोकी—'द्विगोः' इति ङीप्।

### १५८४। उपमानानि सामान्यवचनैः। (२-१-५५)

उपमानवाचकानि साधारणधर्मवाचिभिः समस्यन्ते। यथा—

मेघ इव श्यामो मेघश्यामः। चन्द्र इव सुन्दरश्चन्द्रसुन्दरः।

### १५८५। उपमितं व्याघ्रादिभिः सामान्याप्रयोगे। (२-१-५६)

उपमेयं सुबन्तम् उपमानभूतैर्व्याघ्रादिपदैः सह समस्यते साधारणधर्मो यदि न प्रयुज्यते। यथा—

पुरुषव्याघ्रः, राजसिंहः, नरर्षभः, राजहंसः।

एषु शूरत्वादिः साधारणधर्मो न प्रयुक्तः। तत्प्रयोगे तु पुरुषो व्याघ्र इव शूर इति वाक्यमेव॥

### १५८६। विशेषणं विशेष्येण बहुलम्। (२-१-५७)

विशेषणवाचि सुबन्तं समानाधिकरणेन विशेष्येण सह बहुलं समस्यते। यथा—

नीलं च तदुत्पलं च नीलोत्पलम्। रक्ताशोकः।

बाहुलकात् कृष्णसर्पादौ नित्यः समासः। रामो जामदग्न्य इत्यादौ वाक्यमेव। नीलोत्पलमित्यादौ विकल्पश्च। वैयाकरणखसूचिरित्यादौ कुत्सितवाचिनः पूर्वनिपातः अणककुलाल इत्यादौ परनिपातश्च बाहुलकादेव सिध्यति। अनेनैव सिद्धे 'पूर्वकालैक' इत्यादिः पूर्वनिपातनियमार्थः॥

### १५८७। क्तेन नञ्विशिष्टेनानञ्। (२-१-६०)

नञ्सहितेन क्तान्तेन समानाधिकरणेन तद्रहितं क्तान्तं समस्यते। यथा—कृतं च तदकृतं च कृताकृतम्। भुक्ताभुक्तम् इत्यादि।

॥ * ॥ शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च ॥

शाकप्रियः पार्थिवः शाकपार्थिवः ।

अयं मध्यमपदलोपी समास इत्युच्यते ।

**१५८८ । पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः । (२-१-६५)**

पोटादिभिः सह जातिवाचकं सुबन्तं समस्यते । समानाधिकरणतत्पुरुषस्य कर्मधारयसंज्ञोक्ता । कर्मधारये च पूर्वपदस्य पुंवद्भावो वक्ष्यते। **यथा**—इभपोटा । अश्वयुवतिः । गोधेनुः । महिषगृष्टिरित्यादि ।

**१५८९ । प्रशंसावचनैश्च । (२-१-६६)**

जातिरित्येव । गोमतल्लिका । पुरुषप्रकाण्डम् । अश्वतल्लज इत्यादि ।

**१५९० । वर्णो वर्णेन । (२-१-६९)**

कृष्णश्च रक्तश्च कृष्णरक्तः । नीललोहितः । कृष्णशारः ।

**१५९१ । मयूरव्यंसकादयश्च । (२-१-७२)**

एते निपात्यन्ते । मयूरो व्यंसको मयूरव्यंसकः ।

१. **एहीडादयोऽन्यपदार्थे**—

एहीडम्, एहियवं वर्तते । एहिवाणिजा, अपेहिवाणिजा, एहिस्वागता, अपेहिस्वागता क्रिया ।—

२. **'जहि'-कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति ।**

जहिजोडः, जहिस्तम्बः, उज्जहिस्तम्बः ।

३. **आख्यातमाख्यातेन क्रियासातत्ये ।**

'अश्नीत पिबत' इति यत्र सततमुच्यते सा अश्नीतपिबता । एवं खादतमोदता, उद्धरोत्सृजा, पचतभृज्जता, इत्यादि ।

**१५९२ । पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे । (२-२-१)**

पूर्वादयोऽवयववाचका अवयविना समस्यन्ते । षष्ठीसमासे पूर्वादीनां पूर्वनिपातो न स्यादिति वचनम् । यथा—

पूर्वं कायस्य पूर्वकायः । उत्तरकायः । इत्यादि ।

१५९३ । अर्धं नपुंसकम् । (२-२-२)

अर्धं समांशः । अर्धो यः कोऽप्यंशः ।

अर्धं पिप्पल्याः अर्धपिप्पली । ग्रामस्यार्धो ग्रामार्धं इत्येव ।

१५९४ । कालाः परिमाणिना । (२-२-५)

मासो जातस्य यस्य स—मासजातः । संवत्सरजातः । द्व्यहजातः इत्यादि ।

१५९५ । नञ् । (२-२-६)

नञ् इति निपातः समर्थेन सुपा समस्यते । यथा—

न ब्राह्मणः अब्राह्मणः । न सितः असितः ।

नञो नकारलोपो वक्ष्यते ॥

१५९६ । षष्ठी । (२-२-८)

षष्ठ्यन्तं समर्थेन सुबन्तेन समस्यते । यथा—

राजपुरुषः, वसिष्ठशिष्यः, गुरुपुत्रः, जगत्स्रष्टा, शास्त्राध्यापकः, सूत्रकृत्, बन्धुकृत्यं, क्षीरपानम् इत्यादि ।

षष्ठीतत्पुरुषनिषेधाः प्रायिका इति नात्रोपात्ताः ॥

१५९७ । कुगतिप्रादयः (नित्यम्) । (२-२-१८)

एते समर्थेन सह नित्यं समस्यन्ते । प्रादीनां क्रियायोग एव गतिसंज्ञेत्यन्यत्रापि समासार्थं पृथग्ग्रहणम् । कुशब्दः कुत्सितवाच्यव्ययमेव गृह्यते । यथा—

कुत्सितः पुरुषः कुपुरुषः । प्र दत्वा प्रदाय । पूजितः पुरुषः सुपुरुषः । दुष्टो मार्गः दुर्मार्गः । आपिङ्गलम् ।

प्रादिविषये वार्तिकानि—

१. प्रादयो गताद्यर्थे प्रथमया ।

प्रगत आचार्यः प्राचार्यः । प्रपितामहः, प्रपौत्रः ।

२. अत्यादयः क्रान्ताद्यर्थे द्वितीयया ।

अतिक्रान्तमिन्द्रियाणि अतीन्द्रियम् । अतिमानुषम् ।

३. अवादयः क्रुष्टाद्यर्थे तृतीयया ।

अवक्रुष्टः कोकिलया अवकोकिलः ।

४. पर्यादयो ग्लानाद्यर्थे चतुर्थ्या ।

परिग्लानोऽध्ययनाय—पर्यध्ययनः ।

५. निरादयः क्रान्ताद्यर्थे पञ्चम्या ।

निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः । निर्मलम् ।

गतिप्रसङ्गात्तत्संज्ञाविधिर्मध्ये कथ्यते—

१५९८ । ऊर्यादिच्विडाचश्च । (१-४-६१)

ऊर्यादयः शब्दाः च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञाः । **यथा**—ऊरीकरोति । ऊरीकृत्य । उररीकृतं, स्वाहाकृत्य । शुक्लीकरोति । पटपटाकरोति ।

१५९९ । अनुकरणं चानितिपरम् । (१-४-६२)

**यथा**—फूत्कृत्य, खाट्कृत्य । इतिपरे तु 'खाडितिंकृत्वा निरष्ठीवत्' ।

१६०० । आदरानादरयोः सदसती । (१-४-६३)

सत्कृत्य = पूजयित्वा । असत्कृत्य = अनादृत्य ।

१६०१ । भूषणेऽलम् । (१-४-६४) अलंकृत्य = भूषयित्वा ।

१६०२ । साक्षात्प्रभृतीनि च (विभाषा कृञि) । (१-४-७४)

साक्षात्कृत्य, साक्षात् कृत्वा । मिथ्याकृत्य मिथ्या कृत्वा इत्यादि ।

अथ प्रकृतः समासविधिरेवानुबध्यते । उक्ता गतिसमासाः । अनन्तरमुपपदसमासा उच्यन्ते—

१६०३ । उपपदमतिङ् । (२-२-१९)

नित्यमिति वर्तते । उपपदं समर्थेन शब्देन नित्यं समस्यते तिङन्ताघटितश्चायं समासः । 'तत्रोपपदं सप्तमीस्थम्' इति कृद्विधावुपपदानि तत्र तत्रोक्तानि । यथा—

कुम्भकारः, स्थण्डिलशायी, कर्णेजपः ।

अतिङ् इति निषेधो ज्ञापयति 'सुप्सुपा' इत्यधिकारोऽत्र न सम्बध्यत इति । ज्ञापकसिद्धश्चार्थो वार्त्तिककारेण कण्ठतः कथितः—

॥ * ॥ गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः ॥

## १६०४। अमैवाव्ययेन। (२-२-२०)

अव्ययेनोपपदस्य समासः अमन्तेनैव। स्वादुङ्कारम्।

## १६०५। तृतीयाप्रभृतीन्यन्यतरस्याम्। (२-२-२१)

'उपदंशस्तृतीयायाम्' इत्यतः प्रभृति यान्युपपदानि तान्यमन्तेनान्यतरस्यामेव समस्यन्ते। मूलकोपदंशं, मूलकेनोपदंशं वा भुङ्क्ते।

## १६०६। क्त्वा च। (२-२-२२)

तृतीयाप्रभृतीनि क्त्वान्तेन सह वा समस्यन्ते।

उच्चैःकृत्य, उच्चैः कृत्वा।

---

## १६०७। शेषो बहुव्रीहिः। (२-२-२३)

## १६०८। अनेकमन्यपदार्थे। (२-२-२४)

अनेकं सुबन्तमन्यपदार्थे वर्तमानं समस्यते, बहुव्रीहिश्च समासः। प्रथमार्थमेकं वर्जयित्वा सर्वेषु विभक्त्यर्थेषु बहुव्रीहिर्भवति। यथा—

| | |
|---|---|
| प्राप्तमुदकं यं स प्राप्तोदको ग्रामः | —द्वितीयाबहुव्रीहिः। |
| ऊढो रथो येन स ऊढरथोऽनड्वान् | —तृतीया ,, |
| उपहृतः पशुर्यस्मै स उपहृतपशू रुद्रः | —चतुर्थी ,, |
| उद्धृतमोदनं यस्याः सा उद्धृतौदना स्थाली | —पञ्चमी ,, |
| चित्रा गावो यस्य स चित्रगुर्देवदत्तः | —षष्ठी ,, |
| वीराः पुरुषाः यस्यां सा वीरपुरुषा नगरी | —सप्तमी ,, |
| 'सुसूक्ष्मजटकेशेन सुलभाजिनवाससा।<br>पुत्री पर्वतराजस्य कुतो हेतोर्विवाहिता॥' | बहुपदबहुव्रीहिः। |

**१. बहुव्रीहिः समानाधिकरणानामिति वक्तव्यम्।**

तथैवोदाहृतम्। तेन पञ्चभिर्भुक्तं यस्य स पञ्चभुक्त इति बहुव्रीहिर्न भवति।

**२. सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च॥**

कण्ठे स्थितः कालो यस्य सः कण्ठकालः। उरसिलोमा। उष्ट्रस्य मुखमिव मुखं यस्य स उष्ट्रमुखः। मृगाक्षी।

३. प्रादिभ्यो जातुजस्य वाच्यो वा चोत्तरपदलोपः।
प्रपतितं पर्णं यस्य स प्रपर्णस्तरुः। उन्मुखं, सम्मुखम्।

४. नञोऽस्त्यर्थानां बहुव्रीहिर्वाच्यो वा चोत्तरपदलोपः।
अविद्यमानः पुत्रो यस्य सः अपुत्रः अविद्यमानपुत्रः। अभार्यः।

१६०९। संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये। (२-२-२५)

संख्येयवाचिना संख्यापदेनाव्ययादयः समस्यन्ते स च बहुव्रीहिः।

दशानां समीपे ये वर्तन्ते ते उपदशाः।

आसन्नविंशाः अदूरविंशाः, अधिकविंशाः।

द्वौ वा त्रयो वा द्वित्राः, त्रिचतुराः, चतुष्पञ्चाः।

अत्र सर्वत्र समासान्तो वक्ष्यते॥

१६१०। दिङ्नामान्यन्तराले। (२-२-२६)

दिङ्नामान्यन्तराले वाच्ये समस्यन्ते। पूर्वस्या उत्तरस्याश्च दिशोऽन्तरालमुत्तरपूर्वा। एवं दक्षिणपश्चिमा। 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पुंवद्भावात् पूर्वपदह्रस्वः॥

१६११। तत्र तेनेदमिति सरूपे। (२-२-२७)

सप्तम्यन्ते तृतीयान्ते च समानरूपे पदे मिथः समस्येते। अर्थविशेषः सर्वो लोकप्रसिद्ध इति इतिशब्देन द्योतितः। तस्मिन् प्रगृह्य, तेन प्रहृत्य वा इदं युद्धं प्रवृत्तमित्यर्थ इतिशब्दद्योत्यः। 'अन्येषामपि दृश्यते' (१७०८) इति पूर्वपदस्य दीर्घः, इच् समासान्ताश्च वक्ष्यते इजन्तं चाव्ययम्। यथा—

केशेषु केशेषु प्रगृह्येदं युद्धं प्रवृत्तं—केशाकेशि। दण्डैश्च दण्डैश्च प्रहृत्येदं—दण्डादण्डि। एवं हस्ताहस्ति, मुसलामुसलि इत्यादि।

१६१२। तेन सहेति तुल्ययोगे। (२-२-२८)

सहशब्दस्तृतीयान्तेन समस्यते। तेन सह वर्तते इत्यर्थे। सहशब्दस्य सभावो वक्ष्यते। यथा—पुत्रेण सह वर्तत इति सपुत्रः। सकर्मकः।

## १६१३ । चार्थे द्वन्द्वः । (२-२-२९)

अनेकं सुबन्तं चार्थे समस्यते, द्वन्द्वश्च समासः । समुच्चयान्वाच येतरेतरयोगसमाहाराश्चार्थाः । तत्र परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वय समुच्चयः । यथा—ईश्वरं गुरुं च भजस्व । यथा वा रक्तः पटः कुण्डलं च ।

अन्यतरस्यानुषङ्गिकत्वे अन्वाचयः । यथा—भिक्षामट । गाश्चानय ।

मिलितानामन्वय इतरेतरयोगः । यथा—रामश्च लक्ष्मणश्च वने प्रव्राजितौ ।

समूहः समाहारः । यथा—हस्तिनोऽश्वा रथाः पदातयश्च व्रजन्ति ।

एषु प्रथमद्वितीययोरेकार्थीभावरूपसामर्थ्यासम्भवान्न समासः । काल-भेदेन भजनक्रियान्वयेऽपि परस्परनिरपेक्षयोर्गुर्वीश्वरयोः कथमेकपदो-पादानयोग्यता? कथंतरां वा प्रधानस्य भिक्षाटनस्यानुषङ्गिकस्य गवा-नयनस्य च? इतरेतरयोगसमाहारयोस्तु परस्परसाहित्यसत्त्वात् समासो भवति । यथा—

रामलक्ष्मणौ प्रवाजितौ—इतरेतरयोगः ।
हस्त्यश्वरथपादातं व्रजति—समाहारस्यैकत्वादेकवचनम् ।
रामलक्ष्मणभरतशत्रुघ्नाः । गिरिनगरनदीग्रामाः ।

---

## अथ समासेषु घटकपदसन्निवेशव्यवस्था ॥

## १६१४ । उपसर्जनं पूर्वम् । (२-२-३०)

'प्रथमानिर्दिष्टं समास उपसर्जनम्' इत्युक्तम् । तस्य पूर्वं प्रयोग कार्यः । तथैव च दर्शितम् ।

## १६१५ । राजदन्तादिषु परम् । (२-२-३१)

एषूपसर्जनं परं प्रयोज्यम् । दन्तानां राजेति तत्पुरुषे राजदन्

इत्युपसर्जनस्य दन्तशब्दस्य परप्रयोगः। गणे निपातनादनुपसर्जनस्यापि क्वचित् परप्रयोगः, कार्यान्तराणि च।

राजदन्तः, अग्रेवण, भार्यापती, जम्पती इत्यादि।

१६१६। द्वन्द्वे घि। (२-२-३२)

द्वन्द्वे घिसंज्ञं पूर्वं प्रयोज्यम्। हरिहरौ, पटुगुप्तौ।

१६१७। अजाद्यदन्तम्। (२-२-३३)

द्वन्द्वे अजादि अदन्तं च पदं पूर्वम्। उष्ट्रखरम्।

॥ * ॥ बहुष्वनियमः—अश्वरथेन्द्राः, इन्द्ररथाश्वा वा।

१६१८। अल्पाच्तरम्। (२-२-३४)

प्लक्षन्यग्रोधौ। धवखदिरपलाशाः।

॥ * ॥ अभ्यर्हितं पूर्वम् ॥ युधिष्ठिरार्जुनौ। सर्वेयं व्यवस्था प्रायिकी।

१६१९। सप्तमीविशेषणे बहुव्रीहौ। (२-२-३५)

सर्वोपसर्जनत्वादनियमे प्राप्ते नियमार्थं वचनम्। सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं प्रयोज्यम्। यथा—

कण्ठेकालः, उरसिलोमा—अत्र अलुग्वक्ष्यते।

चित्रगु, पीताम्बरः, उष्णरश्मिः, कृशाङ्गी।

सप्तम्याः पूर्वनिपातविधानाज्ज्ञापकादेव व्यधिकरणो बहुव्रीहिः। ज्ञापकसिद्धमेव वार्त्तिककारेण व्याख्यातं 'सप्तम्युपमानपूर्वपदस्य' इति।

१. सर्वनामसङ्ख्ययोरुपसङ्ख्यानम्—सर्वश्वेतः, द्विशुक्लः।

२. वा प्रियस्य पूर्वनिपातः—प्रियगुडः, गुडप्रियः।

३. गड्वादिभ्यः सप्तम्यन्तं परं—गडुकण्ठः, कण्ठगडुः।

४. प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ। प्रायिकं चेदं निष्ठायाम्॥
चक्रपाणिः, पिनाकपाणिः। अभ्युद्यतः उद्यतासिर्वा।

५. जातिकालसुखादिभ्यो निष्ठायाः परनिपातः॥
पलाण्डुभक्षिती, मानसजातः, सुखजातः। इदमपि प्रायिकम्।

१६२० । वाहिताग्न्यादिषु । (२-२-३७)

आहिताग्निः, अग्न्याहितो वा । जातपुत्रः, पुत्रजातो वा ।

१६२१ । कडाराः कर्मधारये । (२-२-३८)

कडारजैमिनिः, जैमिनिकडारो वा । वृद्धवीरः, वीरवृद्धो वा ।

कडार, गौर, काण, खञ्ज, खलति, वृद्ध इत्यादि ॥

---

## एकशेषः ॥

१६२२ । सरूपाणामेकशेष एकविभक्तौ । (१-२-६४)

प्रत्यर्थं शब्दनिवेशान्नैकेनानेकस्याभिधानं सम्भवतीति द्विवचन-बहुवचनयोः शब्दस्य संख्यानुसारेणावृत्तिः प्रसज्यते इत्येकशेष आरभ्यते। एकस्यामेव विभक्तौ यानि तुल्यरूपाणि प्रातिपदिकानि तेषामेकमेव शिष्यते अन्यानि निवर्तन्ते । यथा—

वृक्षश्च वृक्षश्च—वृक्षौ । वृक्षश्च......वृक्षश्च—वृक्षाः । वृक्षेण च......वृक्षेण च—वृक्षैः ।

सरूपाणामित्युक्तेरर्थभेदेऽपि रूपसाम्ये एकशेषो भवेत् । यथा—

'रदविप्राण्डजा द्विजाः'

विरूपाणामपि समानार्थकानाम् एकशेष इष्यते । यथा—

वक्रदन्तश्च कुटिलदन्तश्च वक्रदन्तौ कुटिलदन्तौ वा ।

१६२३ । वृद्धो यूना तल्लक्षणश्चेदेव विशेषः । (१-२-६५)

वृद्ध इति गोत्रस्य संज्ञा प्राचाम् । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ ।

१६२४ । स्त्री पुंवच्च । (१-२-६६)

यूना सहैकशेषे वृद्धस्त्रियाः पुंवद्भावश्च । यथा—

गार्गी च गार्ग्यायणश्च—गार्ग्यौ ।

१६२५ । पुमान् स्त्रिया । (१-२-६७)

**स्त्रिया सहोक्तौ पुमान् शिष्यते, स्त्रीपुंसलक्षणश्चेदेव विशेषः ।**

कुक्कुटश्च कुक्कुटी च कुक्कुटौ । युवा च युवतिश्च युवानौ ।

### १६२६ । भ्रातृपुत्रौ स्वसृदुहितृभ्याम् । (१-२-६८)

भ्राता च स्वसा च भ्रातरौ । पुत्रश्च दुहिता च पुत्रौ ।

### १६२७ । नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् । (१-२-६९)

**लिङ्गमात्रलक्षणे विशेषे, अक्लीबेन सहोक्तौ क्लीबं शिष्यते, तस्यैकवचनं च वा । यथा—**

शुक्लश्च कम्बलः, शुक्ला च बृहतिका, शुक्लं च वस्त्रं, तदिदं शुक्लम् । तानीमानि शुक्लानि ।

### १६२८ । पिता मात्रा । (१-२-७०)

**अन्यतरस्यामित्येव** । माता च पिता च पितरौ । मातापितरौ वा ।

**पूर्वपदस्य आत्वं वक्ष्यते ।**

### १६२९ । श्वशुरः श्वश्र्वा । (१-२-७१)

श्वश्रूश्च श्वशुरश्च श्वशुरौ । श्वश्रूश्वशुरौ वा ।

### १६३० । त्यदादीनि सर्वैर्नित्यम् । (१-२-७२)

**सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते । यथा—**

स च देवदत्तश्च तौ । अयं च देवदत्तश्च इमौ ।

त्वं च सर्वे लोकाश्च यूयम् । अहं च ग्रामजनाश्च वयम् ।

**त्यदादीनां मिथस्सहोक्तौ परं परं शिष्यते ।**

स चायं च इमौ । अयं च त्वं च युवाम् । त्वं चाहं च आवाम् ।

---

## समासेषु लिङ्गवचनव्यवस्था ॥

### १६३१ । द्विगुरेकवचनम् । (२-४-१)

**समाहारे द्विगुरेकवचनं स्यात् । त्रयो लोकाः समाहृतास्त्रिलोकी ।**

### १६३२ । द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् । (२-४-२)

प्राण्यङ्गानां द्वन्द्व एकवचनं, तूर्याङ्गानां सेनाङ्गानां च तथा । इतरेतरयोगे समाहारे च द्वन्द्वो विहितः । तत्र समाहारस्यैकत्वादेकवचनं सिद्धमेव । इतरेतरयोगेऽपि प्राण्यङ्गादीनामेकत्वसिद्ध्यर्थमारम्भः । 'न दधिपयआदीनि' इति एकत्वनिषेधः समाहारेऽपि द्विबहुवचनसिद्ध्यर्थः । एवं च प्राण्यङ्गादीनां समाहार एव द्वन्द्वः, दधिपयआदीनां तु इतरेतरयोग एवेति फलितम् । 'विभाषा वृक्ष...' इत्यादीनां येषामेकवचनं विकल्पितं तेषामेव उभयोरपि द्वन्द्वः । यथा—

पाणिपादं, शिरोग्रीवं—प्राण्यङ्गानाम् । मार्दङ्गिकपाणविकं—तूर्याङ्गानाम् । रथपादातं, हस्त्यश्वं—सेनाङ्गानाम् ।

### १६३३ । जातिरप्राणिनाम् । (२-४-६)

जातिवाचिनां द्वन्द्व एकवत्, न तु प्राणिवाचिनाम् ।

मृत्पाषाणम्, धानाशष्कुली ।

### १६३४ । क्षुद्रजन्तवः । (२-४-८)

द्वन्द्वे एकवत् स्युः । यथा—यूकालिक्षं, दंशमशकम् ।

### १६३५ । येषां च विरोधः शाश्वतिकः । (२-४-९)

मार्जारमूषकम् । श्वसृगालम् । अहिनकुलम् । काकोलूकम् ।

### १६३६ । गवाश्वप्रभृतीनि च । (२-४-११)

एतानि कृतैकवचनानि सविशेषप्रक्रियं निपात्यन्ते ।

गवाश्वं, गवाहिकं, कुब्जवामनं, पुत्रपौत्रम् इत्यादि ।

### १६३७ । विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् । (२-४-१२)

वृक्षमृगतृणधान्यव्यञ्जनपशुशकुनीनां द्वन्द्वः, अश्ववडवं, पूर्वापरम्, अधरोत्तरं इति निर्दिष्टाश्च वा एकवत्स्युः । यथा—

| | |
|---|---|
| प्लक्षन्यग्रोधं,-धाः—वृक्ष । | गोमहिषं, -षाः—पशु । |
| रुरुपृषतं ,-ताः—मृग । | तित्तिरिकपिञ्जलम्,-लाः—शकुनि । |
| कुशकाशं ,-शाः—तृण । | अश्ववडवं, -वौ — |
| व्रीहियवं ,-वाः—धान्य । | पूर्वापरं, -रे — |
| दधिघृतं ,-ते —व्यञ्ज । | अधरोत्तरं, -रे — |

॥*॥ **बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानाम्॥**

बहुवचनानां द्वन्द्व एवैषामेकवद्भावः । यथा—

बदराणि चामलकानि च बदरामलकम् । बदरं चामलकं च बदरामलके इत्येव ।

अत एव प्रकृतसूत्रोदाहरणे प्लक्षन्यग्रोधाः रुरुपृषता इत्यादि बहुत्वं दर्शितम् ।

**१६३८ । विप्रतिषिद्धं चानधिकरणवाचि । (२-४-१३)**

परस्परविरुद्धानामद्रव्यवाचिनां च द्वन्द्वो वैकवत् । यथा—

शीतोष्णं,-ष्णे । सुखदुःखं,-खे । जीवितमरणं,-णे ।

द्रव्यवाचित्वे तु शीतोष्णे उदके इत्येव ॥

**१६३९ । न दधिपयआदीनि । (२-४-१४)**

दधिपयसी, सर्पिर्मधुनी, शुक्लकृष्णौ, इध्माबर्हिषी इत्यादि ।

**१६४० । अधिकरणैतावत्त्वे च । (२-४-१५)**

आश्रयपदार्थस्यैतावत्त्वे संख्याविशेषे निर्णीतेऽपि नैकवद्भावः । **यथा**—दश दन्तोष्ठाः । षट् करितुरगाः ।

**१६४१ । स नपुंसकम् । (२-४-१७)**

द्विगुरेकवचनमित्यादिना प्रकरणेन यस्यैकवचनं विहितं स समासो नपुंसकं स्यात् । तथैव चोदाहृतम् । 'द्विगोः' इति ङीब्विधानाददन्तोत्तरपदो द्विगुः स्त्रियाम् । अन्यत्र दशगवमित्यादावेव तस्य नपुंसकता ॥

॥ ❀ ॥ **पात्राद्यन्तस्य न ॥** पञ्चपात्रं, त्रिभुवनं, चतुर्युगम् ।

**१६४२ । अव्ययीभावश्च । (२-४-१८)**

अयं नपुंसकं स्यात्। अव्ययत्वेन लिङ्गाभावेऽपि 'ह्रस्वो नपुंसके...' इति ह्रस्वसिद्ध्यर्थं क्लीबत्वविधानम्। यथा—

अधिस्त्रि। उपकुमारि। पारेगङ्गम्।

॥ * ॥ क्रियाविशेषणानां च क्लीबतेष्यते ॥

एषां कर्मणि द्वितीयोक्ता। अतः क्रियाविशेषणानि नपुंसकद्वितीयैकवचनान्तानि। यथा—

मृदु पचति। स्फुटदन्तश्रि वदति। प्रकटितप्रेम लिखितम्।

१६४३। तत्पुरुषोऽनञ्कर्मधारयः। (२-४-१९)

नञ्समासं कर्मधारयं च वर्जयित्वा तत्पुरुषो नपुंसकमित्यधिक्रियते।

१६४४। उपज्ञोपक्रमं तदाद्याचिख्यासायाम्। (२-४-२१)

उपज्ञान्त उपक्रमान्तश्च तत्पुरुषो नपुंसकं उपज्ञेयस्योपक्रम्यस्य चार्थस्यादित्वमाख्यातुमिष्यते चेत्। न तु नञ्समासकर्मधारययोः। यथा—पाणिनेरुपज्ञा पाणिन्युपज्ञं ग्रन्थः—पाणिनिना प्रथमं विज्ञाय प्रणीतः।

नन्दस्योपक्रमो नन्दोपक्रमं द्रोणः—नन्देन प्रथमं प्रवर्तितः।

१६४५। छाया बाहुल्ये। (२-४-२२)

न्यग्रोधच्छायम्। वैरल्ये तु शाकोटच्छाया। अबाहुल्येऽपि विकल्पं वक्ष्यति।

१६४६। सभा राजामनुष्यपूर्वा। (२-४-२३)

राजशब्दे पर्यायग्रहणमात्रम्। अमनुष्या रक्षःपिशाचादयः। यथा—इनसभम्, ईश्वरसभं, रक्षस्सभं, पिशाचसभम्। पर्यायेष्वपि नृपसभा, क्षितिपालसभा इत्यादि यौगिकपदपूर्वत्वे स्त्रीलिङ्ग एव दृश्यते॥

१६४७। अशाला च। (२-४-२४)

सङ्घातवाची सभाशब्दोऽपि क्लीबम्। स्त्रीसभम्।

१६४८। विभाषा सेनासुराच्छायाशालानिशानाम्। (२-४-२५)

ब्राह्मणसेनं,-ना। यवसुरं,-रा। तृणच्छायं,-या। गोशालं,-ला। श्वनिशं,-शा।—कृष्णचतुर्दश्याः संज्ञेयम्।

१६४९ । परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः । (२-४-२६)

**इतरेतरद्वन्द्वस्य तत्पुरुषस्य चोत्तरपदस्येव लिङ्गं स्यात् ।**

कुक्कुटमयूर्याविमे, मयूरीकुक्कुटाविमौ । अर्धं पिप्पल्या अर्धपिप्पली । पूर्वं कायस्य पूर्वकायः ।

१६५० । रात्राह्नाहाः पुंसि । (२-४-२९)

पूर्वरात्रः, सायाह्नः, द्व्यहः । एषु समासान्तो वक्ष्यते ।

**संख्यापूर्वं रात्रं क्लीबम्** । त्रिरात्रं, गणरात्रम् ।

**पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा** । पुण्याहम् । सुदिनाहम् ।

१६५१ । अपथं नपुंसकम् । (२-४-३०)

१६५२ । अर्धर्चाः पुंसि च । (२-४-३१)

ऋचोऽर्धम् अर्धर्चं,-र्चो वा ।

इह गणे बहवः केवलशब्दा एव पठिताः । पुन्नपुंसकशब्दाः सर्वेऽप्यस्मिन् गणे पठनीयाः ॥

बहुव्रीहेरन्यपदार्थप्रधानत्वाद्विशेष्यानुसारेण लिङ्गमिति प्रकाशमेव ।

---

## पूर्वपदकार्याणि ॥

### १. अलुक् ॥

१६५३ । अलुगुत्तरपदे । (६-३-१)

अलुगित्यानङ्पर्यन्तम्, उत्तरपदे इत्या पादपरिसमाप्तेश्चाधिक्रियते । अलुक् 'सुपो धातुप्रातिपदिकयोः' इति लुकोऽभावः ॥

१६५४ । पञ्चम्याः स्तोकादिभ्यः । (६-३-२)

एभ्यः पञ्चम्या अलुगुत्तरपदे परे । पूर्वपदस्थायाः पञ्चम्या

लुक् न स्यादित्यर्थः । 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' (२-१-३९) इति पञ्चमीतत्पुरुषविधावुपात्ताः स्तोकादयः ।

स्तोकान्मुक्तम्, अन्तिकादागतं, दूरादागतं, कृच्छ्राल्लब्धम् इत्यादि ।

१६५५ । ओजःसहोऽम्भस्तमसस्तृतीयायाः । (६-३-३)

॥ * ॥ अञ्जस उपसंख्यानम् ॥

ओजसाकृतं, सहसाकृत, अञ्जसाकृतम् ।

१६५६ । आत्मनश्च । (६-३-६) पूरण इति वक्तव्यम् ।

आत्मनाचतुर्थः, आत्मनाद्वितीयः इत्यादि ।

१६५७ । वैयाकरणाख्यायां चतुर्थ्याः । (६-३-७)

१६५८ । परस्य च । (६-३-८)

आत्मनेपदम्, आत्मनेभाषा । परस्मैपदं, परस्मैभाषा ।

१६५९ । हलदन्तात् सप्तम्याः संज्ञायाम् । (६-३-९)

त्वचिसारः, युधिष्ठिरः ।

१६६० । अमूर्धमस्तकात्स्वाङ्गादकामे । (६-३-१२)

कण्ठेकालः, उरसिलोमा ।

१६६१ । तत्पुरुषे कृति बहुलम् । (६-३-१४)

स्तम्बेरमः, कर्णेजपः, पङ्केरुहं, वनेचरः ।

१६६२ । प्रावृट्छरत्कालदिवां जे । (६-३-१५)

प्रावृषिजः, शरदिजः, कालेजः, दिविजः । अन्यत्र पङ्कजमित्येव ।

बाहुलकात्—मनसिजः, मनोजः इत्युभयमपि ।

१६६३ । घकालतनेषु कालनाम्नः (वा) । (६-३-१७)

सप्तम्या अलुग्वा । तरप्तमपौ घः । यथा—

पूर्वाह्णतरे, पूर्वाह्णतरे । पूर्वाह्णकाले, पूर्वाह्णकाले इत्यादि ।

१६६४ । शयवासवासिष्वकालात् । (६-३-१८)

सप्तम्या अलुग्वा ।—खेशयः, खशयः इत्यादि ।

१६६५ । नेन्सिद्धबध्नातिषु च । (६-३-१९)

इन्नन्तादिषु सप्तम्या अलुङ् न । स्थण्डिलशायी, साङ्काश्यसिद्धः, चक्रबन्धः ।

१६६६ । षष्ठ्या आक्रोशे । (६-३-२१)

चोरस्य कुलम् । आक्रोशाभावे तु—ब्राह्मणकुलम् ।

॥ * ॥ वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु ॥

वाचोयुक्तिः, दिशोदण्डः, पश्यतोहरः,—पश्यन्तमनादृत्य यो हरतीति अनादरे भावलक्षणषष्ठ्या अलुक् ।

१६६७ । पुत्रेऽन्यतरस्याम् । (६-३-२२)

षष्ठ्या आक्रोशे इत्येव । दास्याः पुत्रो, दासीपुत्रो वा ।

१६६८ । ऋतो विद्यायोनिसम्बन्धेभ्यः । (६-३-२३)

क्रियासम्बन्धवाचिनः योनिसम्बन्धवाचिनो वा ऋदन्तात् षष्ठ्या अलुक् । उत्तरपदमपि सम्बन्धवाचकमेव भवितुमर्हति ।

होतुरन्तेवासी । पितुःपुत्रः ।

१६६९ । विभाषा स्वसृपत्योः । (६-३-२४)

ऋदन्तात् षष्ठ्या अलुग्वा ।

मातुःस्वसा, मातुःष्वसा, मातृष्वसा । पितुःस्वसा, पितुःष्वसा, पितृष्वसा ।

लुकि नित्यं षत्वम् । अलुकि तु वा तत्प्रकरणे विहितम् ॥

---

## २. आनङ् ॥

१६७० । आनङृतो द्वन्द्वे । (६-३-२५)

विद्यायोनिसम्बन्धेभ्य इत्यनुवर्तते । उत्तरपदे इत्यधिकारश्चानुबध्नाति । आनङो नकारस्य प्रातिपदिकान्तलोपः ।

होतापोतारौ । मातापितरौ ।

१६७१ । देवताद्वन्द्वे च । (६-३-२६)

ऋत इति नानुवर्तते । मित्रावरुणौ । सूर्याचन्द्रमसौ वेदप्रसिद्ध-देवताद्वन्द्व एव । तेन हरिहरावित्यादौ नानङ् ।

अग्नीषोमौ । अग्नीवरुणौ । द्यावापृथिव्यौ इत्यादिरूपविशेषाश्च देवताद्वन्द्वे ।

१६७२ । मातरपितरावुदीचाम् । (६-३-३२)

एकशेषाभावपक्षे विकल्पोऽयम् । तेन त्रीणि रूपाणि—
मातापितरौ, मातरपितरौ, पितरौ इति ।

---

## ३. पुंवद्भावः ॥

१६७३ । स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु । (६-३-३४)

भाषितपुंस्कात्परस्य ऊङ्भिन्नस्य स्त्रीप्रत्ययस्य समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे पुल्लिङ्गस्येव रूपं स्यात् न तु पूरण्यां प्रियादौ वा उत्तरपदे ।
**यथा**—रूपवती भार्या यस्य स रूपवद्भार्यः । चित्रा गावो यस्य स चित्रगुः । युवतिर्भार्या यस्य सः युवभार्यः ।

ऊङन्तस्य तु रम्भोरूभार्ये इत्येव । अनेकपदे बहुव्रीहौ उत्तरपदस्य परत्वाभावात् पूर्वपदस्य न पुंवद्भावः । चित्राजरद्गुः । कर्मधारयपूर्वपदे तूभयोः पुंवद्भावेन चित्रजरद्गुः । अपूरणीप्रियादिष्वित्युक्तेः कल्याणी पञ्चमी यासां ताः कल्याणीपञ्चमा रात्रयः । अत्र पञ्चमी इति अप्प्रत्ययेन समासान्तेन वक्ष्यमाणेन रूपनिष्पत्तिः । कल्याणी प्रिया यस्य स कल्याणीप्रियः । प्रिया, मनोज्ञा, कल्याणी, सुभगा, दुर्भगा, भक्तिः, स्वसा, कान्ता, समा, चपला, दुहिता, वामा इत्यादिः प्रियादिः ॥

१६७४ । तसिलादिष्वा कृत्वसुचः । (६-३-३५)

तसिलादिषु कृत्वसुजन्तेषु तद्धितेषु परेषु स्त्रियाः पुंवत् । तसिलादयः परिगणिताः कात्यायनेन—

तत्रसौ घश्वरट्कल्परूपब्देशीयपाशपः ।
जातीयथाल्तिल्थ्यनश्च तसिलाद्यास्त्रयोदश ॥ **यथा**—

तस्याः ततः । बह्वीषु, बहुत्र इत्यादि ।

१. **शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः** । बह्वीभ्यो, बहुशः ।

२. **त्वतलोर्गुणवचनस्य** । शुक्लाया भावः शुक्लता, शुक्लत्वम् ।

३. **कुक्कुट्यादीनामण्डादिषु** । कुक्कुट्या अण्डं कुक्कुटाण्डम् ।

४. **भस्याढे तद्धिते** । हस्तिनीनां समूहो हास्तिकम् ।

ढे तु—रोहिण्या अपत्यं रौहिणेयः ।

५. **सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः** । तस्या मुखं तन्मुखम् । तस्या इदं तदीयं, तामर्थयतीति तदर्थी, तां कामयते तत्काम्यते ।

## १६७५ । क्यङ्मानिनोश्च । (६-३-३६)

क्यङ्—एनावाचरति एतायते । मानिन्—दर्शनीयमानिनी ।

## १६७६ । न कोपधायाः । (६-३-३७)

ककारोपधायाः स्त्रिया न पुंवत् । पाचिकाभार्यः, रसिकाभार्यः ।

## १६७७ । संज्ञापूरण्योश्च । (६-३-३८)

दत्ताभार्यः, पञ्चमीभार्यः ।

## १६७८ । वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे । (६-३-३९)

स्रौघ्नीभार्यः । माथुरीमानिनी ।

## १६७९ । स्वाङ्गाच्चेतः । (६-३-४०)

## १६८० । जातेश्च । (६-३-४१)

स्वाङ्गात् जातेश्च विहितः स्त्रीप्रत्ययो न पुंवत् । यथा—

सुकेशीभार्यः । शूद्राभार्यः । ब्राह्मणीभार्यः ।

## १६८१ । पुंवत्कर्मधारयजातीयदेशीयेषु । (६-३-४२)

अपूरणीप्रियादिष्विति निषिद्धः पुंवद्भावः कर्मधारयादौ प्रतिप्रसूयते । यथा—

महानवमी, कृष्णचतुर्दशी, महाप्रिया । पाचिका चासौ स्त्री च पाचकस्त्री । पञ्चमी चासौ भार्या च पञ्चमभार्या । ब्रह्मणी चासौ भार्या च ब्रह्मणभार्या ।

एवं—पाचकजातीया, पाचकदेशीया ।

---

## ४. ङ्यन्तह्रस्वः ॥

१६८२ । घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः । (६-३-४३)

भाषितपुंस्काद्यो ङी तदन्तस्यानेकाचो ह्रस्वः स्यात् घरूपादिषु परेषु चेलडादिषु चोत्तरपदेषु । यथा—

ब्राह्मणितरा, ब्राह्मणिरूपा, ब्रह्मणिब्रुवा इत्यादि ।

चेलडादयः कुत्सावाचकाः ।

१६८३ । नद्याः शेषस्यान्यतरस्याम् । (६-३-४४)

अङ्यन्तनद्या ङ्यन्तस्यैकाचश्च घादिषु वा ह्रस्वः ।

ब्रह्मबन्धूतरा, ब्रह्मबन्धुतरा, स्त्रीतरा, स्त्रितरा ।

कृन्नद्या न । लक्ष्मीतरा ।

१६८४ । उगितश्च । (६-३-४५)

उगिन्नद्या वा ह्रस्वः । यथा—विदुषितरा । विद्वत्तरा ।

ह्रस्वाभावे 'तसिलादिष्वा कृत्वसुचः' इति पुंवद्भावः ।

---

## ५. आत्वम् ॥

१६८५ । आन्महतः समानाधिकरणजातीययोः । (६-३-४६)

महत आकारोऽन्तादेशः समानाधिकरणे उत्तरपदे जातीयप्रत्यये च परे । यथा—महान् चासौ राजा च महाराजः । महागिरिः ।

स्त्रियामपि पुंवद्भावानन्तरमात्वं—महानदी ।

१६८६ । द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः । (६-३-४७)

द्वौ च दश च द्वादश । द्वाविंशतिः । द्वात्रिंशदित्यादि ।

अष्ट च दश च अष्टादश । अष्टाविंशतिः । अष्टात्रिंशत् ।

बहुव्रीहौ तु द्वित्राः । अशीत्यामपि—द्व्यशीतिः ॥

**१६८७ । त्रेस्त्रयः । (६-३-४८)**

त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत् ।

**॥ * ॥ प्राक्छतादिति वक्तव्यम् ॥**

**द्व्यष्टन आत्वं त्रेः त्रयादेशश्च शतात् पूर्वस्यां संख्यायामुत्तरपद एव ।** द्विशतं, त्रिशतम्, अष्टशतम् ।

**१६८८ । विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् । (६-३-४९)**

**चत्वारिंशत् - पञ्चाशत् - षष्टि - सप्तति - नवतिषूत्तरपदेषु आत्वं त्रयादेशश्च वा । यथा—**

द्वाचत्वारिंशत्, द्विचत्वारिंशत् । त्रयःपञ्चाशत्, त्रिपञ्चाशत् इत्यादि ।

**॥ * ॥ षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च धासु वेति वाच्यम् ।**

षोडन्, षोडश, षोढा, षड्ढा ।

---

## ६. ङ्यापो ह्रस्वः ॥

**१६८९ । इको ह्रस्वोऽङ्यो गालवस्य । (६-३-६१)**

**इगन्तस्याङ्यन्तस्य ह्रस्वो गालवमते ।** ग्रामणिपुत्रः, ग्रामणीपुत्रः ।

**इयङुवङ्भाविनामव्ययानां च न ।** श्रीमदः शुक्लीभावः ।

**१६९० । ङ्यापोः संज्ञाच्छन्दसोर्बहुलम् । (६-३-६३)**

कालिदासः, अजक्षीरम् ।

**१६९१ । त्वे च । (६-३-६४)**

**ङ्यापोर्वा ह्रस्वः ।** अजत्वम् अजात्वम् । रोहिणित्वं,—णीत्वम् ।

**१६९२ । इष्टकेषीकामालानां चिततूलभारिषु । (६-३-६५)**

**यथासंख्यं ह्रस्वः—**इष्टकचितम्, इषीकतूलं, मालभारी ।

---

## ७. नञ आदिलोपः ॥

### १६९३ । नलोपो नञः । (६-३-७३)

नञो नकारस्य लोप उत्तरपदे । न ब्राह्मणः— अब्राह्मणः ।

### १६९४ । तस्मान्नुडचि । (६-३-७४)

लुप्तनकारान्नञः परस्याचो नुडागमः । न आदिः अनादिः । अ, न, अन्, अन इति चत्वारो निषेधार्थका निपाताः । तेषु 'अ' हलादिनैव समस्यते । 'अन्' अजादिनैव । 'न'-कारस्तूभयेनापि । 'अन' इत्यकारान्तोऽतीव विरलप्रयोगः । अनेन नैकम्, अनेकं, नगः, अगः, इत्युभयथाप्रयोगा व्याख्याताः ॥

---

## ८. आदेशाः ॥

### १६९५ । वोपसर्जनस्य (सहस्य सः) । (६-३-८२)

उपसर्जनस्य सहशब्दस्य सभावो वा ।—सहपुत्रः—सपुत्रः ।

### १६९६ । ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु (समानस्य सः) । (६-३-८५)

एषूत्तरपदेषु समानस्य सभावः । सज्योतिः सनाभिरित्यादि ।

दृग्दृशवतुषु (११२०) (व्याख्यातमिदम्) सदृक्—सदृशः ।

### १६९७ । अषष्ठ्यतृतीयान्तस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु । (६-३-९९)

अन्यशब्दस्य दुगागमः स्यादाशीरादिषु परेषु । न तु षष्ठ्यन्तस्य तृतीयान्तस्य च । कारके च्छे च नायं निषेध इष्यते । यथा—

अन्यदाशीः, अन्यदाशा, अन्यदास्था, अन्यदास्थितः, अन्यदुत्सुकः, अन्यदूतिः, अन्यत्कारकः, अन्यद्रागः, अन्यदीयः ।

१६९८। **अर्थे विभाषा**। (६-३-१००) अन्यदर्थः, अन्यार्थः।

## १६९९। कोः कत्तत्पुरुषेऽचि। (६-३-१०१)

**अजादावुत्तरपदे**। कुत्सितोऽश्वः, कदश्वः। **अचीत्युक्तेः कुगजः इत्येव**।

१७००। **का पथ्यक्षयोः**। (६-३-१०४) कापथः, काक्षः।

## १७०१। ईषदर्थे। (६-३-१०५)

**कोः कात्वमजादावपि**।—ईषज्जलं, काजलम्। ईषदम्लं, काम्लम्।

१७०२। **विभाषा पुरुषे**। (६-३-१०६) कापुरुषः, कुपुरुषः।

१७०३। **कवञ्चोष्णे**। (६-३-१०७) कवोष्णं, कोष्णं, कदुष्णम्।

## १७०४। पृषोदरादीनि यथोपदिष्टम्। (६-३-१०९)

**पृषोदरादयः शब्दा यथोपदिष्टं साधवः। नानाविधप्रक्रियाजटिलत्वात्ते शब्दा न व्युत्पाद्यन्ते। व्यत्यस्ताः सर्वेऽपि शब्दाः अत्र गणे पठनीया इत्यर्थः**। पृषत उदरं पृषोदरम्। वारिवाहको वलाहकः इत्यादि।

## १७०५। संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ। (६-३-११०)

**अहन्शब्दस्याह्नादेशो वक्ष्यते। संख्यादिपूर्वपदत्वे तस्य सप्तम्येकवचने अहन्निति यथास्थितमेव रूपं वा। यथा—**

द्व्यह्नि, द्व्यहनि, द्व्यह्ने। सायाह्नि, सायाहनि, सायाह्ने।

---

# ९. दीर्घः॥

## १७०६। नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ (दीर्घः)। (६-३-११६)

**क्विबन्तेषु नह्यादिषु पूर्वपदस्य दीर्घः। यथा—**

उपानद्, नीवृत्, प्रावृट्, मर्मावित्, नीरुक्, ऋतीषट्, पुरीतत्।

## १७०७। उपसर्गस्य घञ्यमनुष्ये बहुलम्। (६-३-१२२)

घञन्ते उत्तरपदे उपसर्गस्य बहुलं दीर्घः, न तु मनुष्ये वाच्ये । परीपाकः, परिपाकः । मनुष्ये तु निषादः ॥

१७०८ । अन्येषामपि दृश्यते । (६-३-१३७)

उत्तरपदे अन्येषामपि दीर्घो दृश्यते । यथाप्रयोगं दीर्घो द्रष्टव्य इत्यर्थः । अनेन 'तत्र तेनेदमिति' बहुव्रीहौ पूर्वपदस्य दीर्घः ।

दण्डादण्डि, मुष्टीमुष्टि, बाहूबाहवि ॥

---

## उत्तरपदकार्याणि ॥

१७०९ । समासान्ताः । (५-४-६८)

तद्धिताधिकारस्यान्त्यभागेऽयमधिकारः। तेन तद्धितकार्याण्यूह्यानि।

१७१० । न पूजनात् । (५-४-६९)

पूजावाचकात् समासान्तो न । सु, अति इति निपातद्वयमेवात्र पूजावाचकं विवक्षितम् । यथा—शोभनो राजा सुराजा, अतिराजा । अत्र 'राजाहःसखिभ्य' इति टच् समासान्तो न भवति ॥

१७११ । किमः क्षेपे । (५-४-७०)

कुत्सितार्थककिंशब्दघटितात् समासान्तो न । कुत्सितो राजा किंराजा । अत्रापि टच् प्राप्तः ॥

१७१२ । नञस्तत्पुरुषात् । (५-४-७१)

राजा न भवतीत्यराजा । तत्पुरुषादिति नियमात् धूरस्य नास्तीत्यधुरं शकटमिति बहुव्रीहौ अप्रत्ययस्समासान्तो भवत्येव ॥

१७१३ । पथो विभाषा । (५-४-७२)

नञ्पूर्वात् पथ्यन्तात्तत्पुरुषाद्वा समासान्तः ।—अपथम्, अपन्थाः । निषेधं पूर्वमेवोक्त्वा समासान्तान् विदधाति—

१७१४ । बहुव्रीहौ संख्येये डजबहुगणात् । (५-४-७३)

'संख्ययाव्यया:....' (१६०९) इति संख्येये बहुव्रीहिर्विहितः। तत्र डच् समासान्तः । न तु बहुगणान्तात् । यथा—

उपदशाः पञ्चषाः । बह्वन्ते तु उपबहवः ।

डित्वात् भस्य टिलोपः । त्रिचतुरशब्दस्तु 'त्र्युपाभ्यां चतुरोऽजिष्यते' इत्यच्प्रत्ययान्तः ॥

१७१५ । ऋक्पूरब्धूःपथामानक्षे । (५-४-७४)

अ, अनक्ष इति च्छेदः। बहुव्रीहाविति नानुवर्तते। अतः समासमात्रस्यायं विधिः। ऋगाद्यन्तस्य समासस्य 'अ' प्रत्ययः समासान्तः। यथा—

ऋचोऽर्धम् अर्धर्चः
कृष्णस्य पूः कृष्णपुरम्
विमला आपो यत्र विमलापं सरः
अक्षस्य धूः अक्षधुरा ।
सतां पन्थाः सत्पथः ।

'द्व्यन्तरुपसर्गेभ्योऽप ईत्' 'ऊदनोर्देशे' इति सूत्राभ्याम् 'अप्' शब्दाकारस्य - ईत्व - ऊत्वयोर्विधानात् द्वीपम्, अन्तरीपं परीपम्, अनूपम् इति रूपसिद्धिः ॥

१७१६ । अच्प्रत्यन्ववपूर्वात् सामलोम्नः । (५-४-७५)

अच् समासान्तः । 'नस्तद्धिते' इति टिलोपः । प्रतिसामं, प्रतिलोमम् इत्यादि ।

कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते ।

कृष्णभूमः, द्विभूमः, सप्तभूमः, प्रासादः । भूमिरत्र भूमिका ।

१७१७ । अक्ष्णोऽदर्शनात् । (५-४-७६)

गवामक्षीव गवाक्षः ।

१७१८ । अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः । (५-४-७७)

पञ्चविंशतिरजन्ता निपात्यन्ते ।

१७१९ । अवसमन्धेभ्यस्तमसः । (५-४-७९)

अवतमसं, सन्तमसम् , अन्धतमसम् ।

१७२० । तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः । (५-४-८६)

द्व्यंगुलं त्र्यंगुलम् इत्यादि ।

१७२१ । अहस्सर्वैकदेशसंख्यातपुण्याच्च रात्रेः । (५-४-८७)

अहोरात्रः, सर्वरात्रः, पूर्वरात्रः इत्यादि । तत्पुरुषस्येत्यनुवृत्तावपि अहन्शब्दग्रहणसामर्थ्यादहोरात्र इति द्वन्द्वेऽप्यच् । अत्र तत्पुरुषो हि दुस्साधः ।

१७२२ । अह्नोऽह्न एतेभ्यः । (५-४-८८)

सर्वैकदेशादिभ्यः । सर्वाह्णः, पूर्वाह्णः, प्राह्ण इत्यादि ।

१७२३ । न संख्यादेः समाहारे । (५-४-८९)

द्वयोरह्नोः समाहारः द्व्यहः, त्र्यहः, दशाहः ।

अत्र वक्ष्यमाणे टचि 'अह्नष्टखोरेव' इति टिलोप एव ॥

१७२४ । उत्तमैकाभ्यां च । (५-४-९०)

उत्तमम् 'अहस्सर्वे...'-त्यत्रान्त्यं, पुण्यशब्दः । पुण्याहम् , एकाहम् ।

१७२५ । राजाहःसखिभ्यष्टच् । (५-४-९१)

एतदन्तात्तत्पुरुषाट्टच् । महाराजः, वायुसखः, पुण्याहम् ।

१७२६ । गोरतद्धितलुकि । (५-४-९२)

पञ्चानां गवां समाहारः पञ्चगवम् । तद्धितलुकि तु पञ्चभिर्गोभिः क्रीतं पञ्चगु । द्विगोरपि तत्पुरुषत्वादयं समासान्तः ।

कृष्णा गौः कृष्णगवी । राज्ञो गौः राजगवी । टित्वाद् ङीप् ।

१७२७ । द्वन्द्वाच्चुदषहान्तात्समाहारे । (५-४-१०६)

चवर्गदषहकारान्ताद् द्वन्द्वात्समाहारार्थकाट्टच् ।

वाक् च त्वक् च वाक्त्वचं, त्वक्स्रजम् । शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् । असमाहारे तु प्रावृट्छरदौ ।

**१७२८ । अव्ययीभावे शरत्प्रभृतिभ्यः । (५-४-१०७)**
उपशरदम्, अध्यनसम् इत्यादि ।

**१७२९ । अनश्च । (५-४-१०८)** उपराजम्, अध्यात्मम् ।

**१७३० । नपुंसकादन्यतरस्याम् । (५-४-१०९)** अधिवर्त्म,-र्त्मम् ।

**१७३१ । झयः । (५-४-१११)** उपसमिधम्, उपसमित् ।

**१७३२ । बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् । (५-४-११३)**

स्वाङ्गवाचिसक्थ्यक्ष्यन्तात् बहुव्रीहेः षच् । पृथुसक्थः । पङ्कजाक्षः । षित्त्वात् ङीप् । पृथुसक्थी, पङ्कजाक्षी । अस्वाङ्गाभ्यां तु—दीर्घसक्थि शकटम् । स्थूलाक्षा वेणुयष्टिः । 'अक्ष्णोऽदर्शनात्' इत्यच् ॥

**१७३३ । अप्पूरणीप्रमाण्योः । (५-४-११६)**

पूरणप्रत्ययान्तस्त्रीलिङ्गान्तात् प्रमाणीशब्दान्ताच्च बहुव्रीहेरप् ।
कल्याणी पञ्चमी यासां ताः—कल्याणीपञ्चमा रात्रयः ।

**१७३४ । सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः (५-४-१२०)**

एते बहुव्रीहावच्प्रत्ययान्ता निपात्यन्ते । शोभनं प्रातर्यस्य सुप्रातं दिनम् ।

**१७३५ । नञ्दुस्सुभ्यो हलिसक्थ्योरन्यतरस्याम् । (५-४-१२१)**
अहलः, अहलिः । असक्थः असक्थिः ।

**१७३६ । नित्यमसिच्प्रजामेधयोः । (५-४-१२२)**

नञ्दुस्सुभ्य इत्येव ।
अप्रजाः, सुप्रजाः, दुष्प्रजाः, अमेधाः, दुर्मेधाः, सुमेधाः ।

**१७३७ । धर्मादनिच् केवलात् । (५-४-१२४)**

केवलात् पूर्वपदात्परात् धर्मशब्दादनिच् बहुव्रीहौ । द्विपदे बहुव्रीहावित्यर्थः । कल्याणधर्मा । सन्दिग्धसाध्यधर्मा इत्यादौ कर्मधारयपूर्वपदत्वं कल्प्यम् । एवं चानेकपदे सामानाधिकरणे बहुव्रीहौ विकल्पः फलितः ।

१७३८ । इच् कर्मव्यतीहारे । (५-४-१२७)

'तत्र तेनेदमिति सरूपे' इति कर्मव्यतीहारे बहुव्रीहिर्विहितः । तस्मादिच् समासान्तः । केशाकेशि, मुसलामुसलि ॥

१७३९ । ऊधसोऽनङ् । (५-४-१३१)

'अल्लोपोऽनः'—कुण्डोध्नी ।

१७४० । जायाया निङ् । (५-४-१३४)

रमा जाया यस्य स रमाजानिः ।

ङित्वादन्तादेशो निङ् । यकारस्य 'लोपो व्योर्वलि' इति लोपः ।

१७४१ । गन्धस्येदुत्पूतिसुसुरभिभ्यः । (५-४-१३५)

उद्गन्धिः, पूतिगन्धिः, सुगन्धिः, सुरभिगन्धिः ।

१७४२ । अल्पाख्यायाम् । (५-४-१३७) सूपगन्धि भोजनम् ।

१७४३ । उपमानाच्च । (५-४-१३८) मद्यगन्धि ।

१७४४ । उरःप्रभृतिभ्यः कप् । (५-४-१५१)

व्यूढोरस्कः, प्रियसर्पिष्कः । पुमान्, अनड्वान्, पयः, नौः, लक्ष्मीः इति शब्दा अत्र गणे एकवचनान्ताः पठिताः । अतो बहुवचनान्तेभ्यो वक्ष्यमाणो वैकल्पिकः कबेव । द्विपुमान्, द्विपुंस्को वा ग्रामः ।

१७४५ । इनः स्त्रियाम् । (५-४-१५२)

बहुवाग्मिका सभा । पुंसि तु बह्वनुजीवी, बह्वनुजीविको वा राजा ।

१७४६ । नद्यृतश्च । (५-४-१५३)

नद्युत्तरपदादृदन्तोत्तरपदाच्च बहुव्रीहेः कप् ।

बहुकुमारीकं गृहम् । बहुभर्तृका भूमिः ।

१७४७ । शेषाद्विभाषा । (५-४-१५४)

अनुक्तसमासान्ताद्बहुव्रीहेः कब्वा । महायशाः महायशस्को वा ।

---

## सुडागमः ॥

### १७४८ । सुट् कात्पूर्वः । (६-१-१३५)

॥ * ॥ अड्भ्यासव्यवायेऽपीति वक्तव्यम् ॥ इत्यधिकृत्य—

### १७४९ । सम्परिभ्यां करोतौ भूषणे । (६-१-१३७)

### १७५० । समवाये च । (६-१-१३८)

सम्परिपूर्वस्य करोतेः कात्पूर्वः सुडागमः स्यात् भूषणे समावये चार्थे। संस्करोति । संचस्कार । समस्करोत् । परिष्करोति । परिचिष्कीर्षा । पर्यस्करोत्। समवायस्सङ्घातः ।

'संस्कृतं भक्षाः' इति ज्ञापकादर्थान्तरेष्वपि सुट् ।

### १७५१ । उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च । (६-१-१३९)

चात् भूषणसमवाययोः। प्रतियत्नो गुणाधानम्। वैकृतं विकारः। वाक्याध्याहार आकाङ्क्षितैकदेशपूरणम् । उपस्कृता कन्या—भूषिता । उपस्कृता ब्राह्मणाः—समुदिताः । लवणं तेमनस्योपस्कुरुते—गुणमादधाति । उपस्कृतमोदनं —विकृतमित्यर्थः । उपस्कृतं ब्रूते—साकाङ्क्षापूरणम् ॥

### १७५२ । किरतौ लवने । (६-१-१४०)

उपादित्येव—उपस्किरति । उपस्कीर्णम् ।

### १७५३ । हिंसायां प्रतेश्च । (६-१-१४१)

उपप्रतिभ्यां किरतेस्सुट् । उपस्किरति, प्रतिष्किरति ।

### १७५४ । अपाच्चतुष्पाच्छकुनिष्वालेखने । (६-१-१४२)

हर्षजीविकाकुलायकरणेष्वेव सुट्, तदा किरतेरात्मनेपदं च । अपास्किरते वृषो हृष्टः । कुक्कुटो भक्षार्थी । श्वा आश्रयार्थी । भूमिमालिखतीत्यर्थः।

### १७५५ । पारस्करप्रभृतीनि च संज्ञायाम् । (६-१-१५७)

कृतसुट्कानि निपात्यन्ते । पारस्करः, किष्किन्धा, तस्करः, बृहस्पतिः, प्रायश्चित्तं प्रायश्चित्तिः ।

---

# द्विरुक्तिप्रकरणम् ॥

१७५६। सर्वस्य द्वे। (८-१-१)

इतः परं समुदितस्य पदस्य द्वित्वं विधीयत इत्यधिकारः।

१७५७। तस्य परमाम्रेडितम्। (८-१-२)

द्विरुक्तस्य परं रूपमाम्रेडितसंज्ञम् ॥

१७५८। नित्यवीप्सयोः। (८-१-४)

पौनःपुन्ये वीप्सायां च समुदितस्य पदस्य द्वित्वम्। यथा—

पचतिपचति। भुक्त्वाभुक्त्वा। भोजंभोजम्। वृक्षंवृक्षम् सिञ्चति।

१७५९। उपर्यध्यधसः सामीप्ये। (८-१-७)

उपर्युपरि, अध्यधि, अधोऽधः। सामीप्यमत्र द्योत्यम्।

१७६०। वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु। (८-१-८)

असूयायां—सुन्दरसुन्दर वृथा ते सौन्दर्यम्।

सम्मतौ—देवदेव वन्द्योऽसि। इत्यादि।

१७६१। एकं बहुव्रीहिवत्। (८-१-९)

द्विरुक्त एकशब्दो बहुव्रीहिवत् स्यात्। तेन सुब्लोपपुंवद्भावौ।

एकैकस्मै देहि। वीप्सायां द्वित्वम्।

१७६२। आबाधे च। (८-१-१०)

पीडायां द्योत्यायां पदस्य द्वित्वं बहुव्रीहिवद्भावश्च।

गतगतो मे रामः। गतगता सीता। पुत्रशोकार्तस्य दशरथस्य वचनम्।

१७६३। कर्मधारयवदुत्तरेषु। (८-१-११)

वक्ष्यमाणेषु द्वित्वेषु कर्मधारयवद्भावोऽपि स्यात्। प्रयोजनं सुब्लोपपुंवद्भावावेव। स्वरे विशेषोऽस्तीति वचनम् ॥

### १७६४ । प्रकारे गुणवचनस्य । (८-१-१२)

प्रकारः सादृश्यम्—पटुपटुः, पटुपट्वी, पटुसदृशीत्यर्थः । एवं मन्दमन्दं इत्यादि ।

१. **आधिक्ये द्वे वाच्ये**—'भीतभीत इव शीतमयूखः' अतिभीतः ।

२. **आनुपूर्व्ये द्वे वाच्ये**—मूलेमूले स्थूलः, अग्रेऽग्रे कृशः ।

३. **सम्भ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः ।**
सर्पःसर्पः, बुध्यस्वबुध्यस्व । सर्पः ३, बुध्यस्व ३ ।

४. **क्रियासमभिहारे च**—याहियाहीति याति ।

५. **कर्मव्यतीहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम् ।**

६. **असमासवद्भावे पूर्वपदस्य सुपः सुर्वाच्यः ।**
अन्योन्यं विप्रा नमन्ति । 'अन्योन्येषां पुष्करैरामृशन्तः' । एवं परस्परम् । उत्तरोत्तरम् ।

७. **स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा ।**
अन्योन्यम्, अन्योन्याम् । 'परस्परामर्पितहस्तताल तत्कालमालीभिरहस्यताल'—परस्परस्यामित्यर्थः ।

### १७६५ । यथास्वे यथायथम् । (८-१-१४)

यथास्वमिति वीप्सायामव्ययीभावः । यथाशब्दस्य वीप्सायां द्वित्वं क्लीबत्वं च निपात्यते । यथा—

सर्वे यथायथमुपविशन्ति—स्वस्वोचितेषु स्थानेष्वित्यर्थः ।

---

## उपसंहारः ॥

ये शब्दशुद्ध्यै परमाचरन्ति समाप्लवं व्याकरणाम्बुराशौ ।
सुखावगाहक्षम एष तेषां मयेह सोपानपथो निबद्धः ॥ १ ॥

समुद्धृतं नाखिलमेव सूत्रं समुद्धृतेष्वप्यनतिस्फुटस्य ।
बालानुरोधेन यथाश्रुतार्थव्याख्यानमेवारचितं मयात्र ॥ २ ॥

क्षुद्रश्च सोऽयं मम मन्तुरन्तर्वाणिप्रवीरैर्ननु मर्षणीयः ।
अरुन्धतीदर्शनरीतिरेव मयादृता यत् सुखबोधनाय ॥ ३ ॥

अपूर्वसंज्ञापरिभाषगुप्ते सालातुरीयस्य वचोरहस्ये ।
प्रवेशनद्वारमिदं यदि स्यादवन्ध्य एवात्र परिश्रमो मे ॥ ४ ॥

आयुर्मितं ज्ञेयमिहामितं च तन्त्रं त्वपारं पणिगोत्रजस्य ।
व्युत्पत्तयेऽध्येयमिदं च सर्वैरिति प्रणीतं लघुपाणिनीयम् ॥

प्रकाशकाश्यात् सहजाद् यमर्थं न कौमुदी सा विशदीकरोति ।
तमेष सौम्यो लघुपाणिनीयबालातपः सुग्रहमातनोतु ॥ ६ ॥

माहेश्वर्यामनघगुणवृद्ध्युज्ज्वलायां न को वा
संस्कारार्थी सकृदभिषवं प्रार्थयेत्तीर्थझर्याम् ?
कृच्छ्रप्राप्ये महति विषये काशिकादौ तदर्थं
ये ग्लायन्ति प्रचरितुमिह स्नान्तु ते तन्निपाने ॥ ७ ॥

यो वैयाकरणाधिराज्यपदवीसिंहासनाधिष्ठितं
द्रष्टुं वाञ्छति पाणिनिं स विविधाः कक्ष्याः समारोहतु ।
सीव्यन्तं लघु सूत्रजालमुटजे व्याघ्राजिनासीन-
मप्येनं सेवितुमुत्सुकस्तु विशतु स्वैरं मदुक्ताध्वना ॥ ८ ॥

इत्याकाङ्क्षाकाण्डः लघुपाणिनीयपूर्वखण्डश्च ॥

॥ शुभम् ॥ ॥ शुभम् ॥

# ॥ लघुपाणिनीय–सूत्रसूची ॥




६ अ अ
५४ अकः सवर्णे दीर्घः
१२४३ अकथितं च
११४३ अकर्त्तरि च कार०
१२६६ अकर्त्तर्यृणे पञ्चमी
९१४ अकर्मकाच्च
९२३ अकर्मकाच्च
९३३ अकर्मकाच्च
८२८ अकृत्सार्वधातुकयो०
१२९८ अकेनोर्भविष्यदाध०
१७१७ अक्ष्णोऽदर्शनात्
१०१२ अच उपसर्गात्तः
३०२ अचः
८८६ अचः कर्मकर्तरि
८६१ अचः परस्मिन् पूर्वविधौ
१७१८ अचतुरविचतुरसुच०
६६५ अचस्तास्वत्थल्य०
१३८५ अचित्तहस्तिधे०
३१० अचि र ऋतः
८२५ अचि विभाषा
३६४ अचि श्नुधातुभ्रुवाम् ०
२८२ अचो ञ्णिति
२१ अचोऽन्त्यादि टि
१०२५ अचो यत्
१०८ अचो रहाभ्यां द्वे
२४२ अच्च घेः
१७१६ अच्प्रत्यन्वव०
१५१७ अजादी गुणवचनादेव
५९७ अजादेर्द्वितीयस्य
१३९ अजाद्यतष्टाप्
१६१७ अजाद्यदन्तम्
१०४२ अजिव्रज्योश्च
७७६ अजेर्व्यघञपोः
८१५ अज्झनगमां सनि
६६५ अञ्जेः सिचि
३९४ अट्कुप्वाङ्नुम्व्य०
५७७ अड् गार्ग्यगालवयोः
२२१ अड्डतरादिभ्यः पञ्चभ्यः
९७३ अणावकर्मकाच्चि०
३८ अणुदित्सवर्णस्य चा०
११४ अणोऽप्रगृह्यस्या०
११७१ अण् कर्मणि च
६१४ अत आदेः
१३७२ अत इञ्
१४८१ अत इनिठनौ
५४६ अत उत्सार्वधातुके
७३४ अत उपधायाः
७३९ अत एकहल्मध्ये०
१०० अतः कृकमिकंस०
१३१४ अतिरतिक्रमणे च
१५१२ अतिशायने तमबिष्ठनौ
३१३ अतो गुणे
४६७ अतो दीर्घो यञि
२०४ अतो भिस ऐस्

२२० अतोऽम्
५०७ अतो येयः
८९ अतो रोरप्लुतादप्लुते
८०७ अतो लोपः
७०१ अतो ऌान्तस्य
७०६ अतो हलादेर्लघोः
५०३ अतो हेः
१५७३ अत्यन्तसंयोगे च
८१४ अत्र लोपोऽभ्यासस्य
७५ अत्रानुनासिकः पूर्वस्य०
२६१ अत्वसन्तस्य चाधा०
६३६ अत्स्मृदृत्वरप्रथम्रद०
५७८ अदः सर्वेषाम्
४६५ अदभ्यस्तात्
३२९ अदर्शनं लोपः
३१६ अदस औ सुलोपश्च
५८ अदसो मात्
३१७ अदसोऽसेर्दादु दो मः
४४७ अदिप्रभृतिभ्यः शपः
१९ अदेङ् गुणः
७५७ अदो जग्धिर्ल्यप्ति०
१२९६ अधिकरणवाचिनश्च
१०८८ अधिकरणे बन्धः
१६४० अधिकरणैताव०
१३१२ अधिपरी अनर्थकौ
१३१६ अधिरीश्वरे
१२३८ अधिशीङ्स्थासां कर्म
१२९० अधीगर्थदयेशां०
१५०० अधुना
९२१ अधेः प्रसहने
१३५९ अन्
२८४ अनङ् सौ
१०९ अनचि च
१५०३ अनद्यतने र्हिलन्य०
४२९ अनद्यतने लङ्
४३१ अनद्यतने लुट्
१२४६ अनभिहिते
११८१ अनवक्लृप्त्यमर्ष०
१७२९ अनश्च
३२४ अनाप्यकः
४०३ अनितेः
८७२ अनिदितां हल०
१५९९ अनुकरणं चा०
३५५ अनुदात्तं सर्वम०
४१९ अनुदात्तङित आत्म०
६८३ अनुदात्तस्य चर्दुपध०
५५९ अनुदात्तोपदेशवनति०
७६ अनुनासिकात्परोऽनु०
८८० अनुनासिकस्य क्विझलोः०
९६४ अनुपराभ्यां कृञः
९६२ अनुपसर्गाज्ज्ञः
९३१ अनुपसर्गाद्वा
१४६ अनुपसर्जनात्
१२३३ अनुप्रतिगृणश्च
१५६६ अनुर्यत्समया
१३०३ अनुर्लक्षणे
१३३४ अनुशतिकादीनां च
११५ अनुस्वारस्य ययि०
१६०८ अनेकमन्यपदार्थे
३४ अनेकाल्शित्सर्वस्य
१४४ अनो बहुव्रीहेः
९३७ अनोरकर्मकात्
१७९ अन्तरं बहिर्योगोप०
१२४८ अन्तरान्तरेणयुक्ते
१२२० अन्तर्धौ येनादर्शन०
४६ अन्तादिवच्च

१५२१ अन्तिकबाढयोर्नेद०
१५१ अन्यतो ङीष्
१०७४ अन्यथैवंकथमित्थं०
१२७१ अन्यारादितरर्ते दि०
१७०८ अन्येषामपि दृश्यते
११३० अन्येष्वपि दृश्यते
८०१ अपगुरो णमुलि
१६५१ अपथं नपुंसकम्
३७१ अपदान्तस्य मूर्धन्यः
१५६३ अपपरिबहिरञ्चवः०
१३०७ अपपरी वर्जने
१२५० अपवर्गे तृतीया
९३२ अपह्नवे ज्ञः
१७५४ अपाच्चतुष्पाच्छकु०
१५३८ अपादाने चाहीं०
१२७० अपादाने पञ्चमी
१०९९ अपादाने परीप्सायाम्
९५९ अपाद्वदः
१३१५ अपि पदार्थसम्भाव०
२२३ अपृक्त एकाल्प्रत्ययः
२६५ अप्तृन्तृच्स्वसृनप्तृ०
१७३३ अप्पूरणीप्रमाण्योः
११५३ अप्प्रत्ययात्
१६३ अभाषितपुंस्काच्च
१२११ अभिज्ञावचने लृट्
१२३९ अभिनिविशश्च
९६५ अभिप्रत्यतिभ्यः क्षिपः
१३१५ अभिरभागे
११४६ अभिविधौ भाव इनुण्
१५४२ अभिविधौ सम्पदा च
७३५ अभ्यासस्यासवर्णे
५६२ अभ्यासाच्च
१११ अभ्यासे चर्च
१९९ अमि पूर्वः
१६६० अमूर्धमस्तकात्स्वा०
१६०४ अमैवाव्ययेन
२३१ अम्बार्थनद्योर्ह्रस्वः
२९५ अम् सम्बुद्धौ
७८३ अयामन्ताल्वा०
१०५४ अरुर्द्विषदजन्तस्य मुम्
६२० अर्तिपिपर्त्योश्च
७८६ अर्तिह्रीव्लीरीक्नूयी०
१२४ अर्थवदधातुरप्रत्ययः०
१६९८ अर्थे विभाषा
१५९३ अर्धं नपुंसकम्
१६५२ अर्धर्चाः पुंसि च
२९१ अर्वणस्त्रसावनञः
१४८३ अर्शआदिभ्योऽच्
१२०० अर्हे कृत्यतृचश्च
११३३ अलंकृञ्निराकृञ्प्र०
१०७५ अलंखल्वोः प्रतिषे०
१६५३ अलुगुत्तरपदे
३१ अलोऽन्त्यस्य
२२ अलोऽन्त्यात् पूर्व उपधा
१७४२ अल्पाख्यायाम्
१६१८ अल्पाच्तरं
२९९ अल्लोपोऽनः
१३२८ अवयवादृतोः
१४१५ अवयवे च प्रा०
१७१९ अवसमन्धेभ्यस्तमसः
३८४ अवाच्चालम्बनाविदूर्ययोः
९३९ अवाद् ग्रः
१५४६ अव्यक्तानुकरणाद्यज०
१५५६ अव्ययं विभक्तिसमीप०
१५२९ अव्ययसर्वनाम्नामक०
१३९५ अव्ययात्त्यप्

१२९ अव्ययादाप्सुपः
१५५५ अव्ययीभावः
१०६३ अव्ययीभावश्च
१६४२ अव्ययीभावश्च
१७२८ अव्ययीभावे शरत्प्र०
११०६ अव्ययेऽयथाभिप्रेताख्या०
८४५ अशनायोदन्यधना०
१६४७ अशाला च
६१६ अश्नोतेश्च
८४६ अश्वक्षीरवृष०
१३६५ अश्वपत्यादिभ्यश्च
१६९७ अषष्ठ्यतृतीयास्थस्या०
३०७ अष्टन आ विभक्तौ
२१५ अष्टाभ्य औश्
६८७ असंयोगाल्लिट् कित्
५८५ असिद्धवदत्राभात्
५७५ अस्तिसिचोऽपृक्ते
७७२ अस्तेर्भूः
२६८ अस्थिदधिसक्थ्यक्ष्णा०
४२५ अस्मद्युत्तमः
१४८२ अस्मायामेधास्रजो०
८४३ अस्य च्वौ
११०४ अस्यतितृषोः०
४५९ अस्यतिवक्तिख्याति०
७२२ अस्यतेस्थुक्
१७२१ अहः सर्वैकदेशसंख्या०
७१ अहन्
१३४१ अहष्टखोरेव
१७२२ अह्नोह्न एतेभ्यः
१८२ आकडारादेका संज्ञा
११६० आक्रोशे नञ्यनिः
११३१ आ केस्तच्छीलतद्धर्म०
१२२१ आख्यातोपयोगे
९२८ आङ उद्गमने
२२९ आङि चापः
९०८ आङो दोऽनास्यविहरणे
२४३ आङो नाऽस्त्रियाम्
९१६ आङो यमहनः
५२३ आङो यि
१५६४ आङ् मर्यादाभिविध्योः
१३०८ आङ् मर्यादावचने
१४४५ आ च त्वात्
५५३ आ च हौ
२७१ आच्छीनद्योर्नुम्
५१० आटश्च
४६९ आडजादीनाम्
४८३ आडुत्तमस्य पिच्च
२३६ आण् नद्याः
७३६ आत औ णलः
४९९ आतः
१११३ आतश्चोपसर्गे
११५६ आतश्चोपसर्गे
५०९ आतो ङितः
३०६ आतो धातोः
१११६ आतोऽनुपसर्गे कः
८९२ आतो युक् चिण्कृतोः
१०५० आतो युच्
७२० आतो लोप इटि च
१६५६ आत्मनश्च
४६६ आत्मनेपदेष्वनतः
७१८ आत्मनेपदेष्वन्यतरस्याम्
७६४ आत्मनेपदेष्वन्यतरस्याम्
१४३४ आत्मन्विश्वजन०
११२८ आत्ममाने खश्च
१३६१ आत्माध्वानौ खे
१६०० आदरानादरयोः सदसती

१६४ आदाचार्याणाम्
९८६ आदिकर्मणि क्तः कर्तरि च
६७७ आदितश्च
९ आदिरन्त्येन सहेता
१३ आदिर्ञिटुडवः
३३ आदेः परस्य
७९४ आदेच उपदेशेऽशिति
३७५ आदेशप्रत्यययोः
४८ आद् गुणः
३२६ आद्यन्तवदेकस्मिन्
२५ आद्यन्तौ टकितौ
१२३७ आधारोऽधिकरणम्
१६७० आनङृतो द्वन्द्वे
४०० आनि लोट्
९९४ आने मुक्
१६८५ आन्महतः समानाधि०
८११ आप्ज्ञप्यृधामीत्
१७६२ आबाधे च
१०७२ आभीक्ष्ण्ये णमुल् च
७५१ आमः
३६१ आमन्त्रितं पूर्वमवि०
२४४ आमि सर्वनाम्नः सुट्
४८१ आमेतः
७५३ आम्प्रत्ययवत् कृञोऽनु०
१०५२ आयनेयीनीयियः फढ०
८४० आयादय आर्धधातुके०
१२७९ आयुक्तकुशलाभ्यां चासे०
४५० आर्धधातुकं शेषः
६४२ आर्धधातुकस्येड्वलादेः
७५६ आर्धधातुके
१२०१ आवश्यकाधमर्ण्ययोर्णिनिः
११७३ आशंसायां भूतवच्च
११७५ आशंसावचने लिङ्
४३५ आशिषि लिङ्लोटौ
११२२ आ सर्वनाम्नः
५७२ आहस्थः
२६५ इकोऽचि विभक्तौ
६९१ इको झल्
४३ इको यणचि
१६८९ इको ह्रस्वोऽङ्यो०
१४५१ इगन्ताच्च लघुपूर्वात्
१११२ इगुपधज्ञाप्रीकिरः कः
२९४ इग्यणः सम्प्रसारणम्
७६८ इडश्च
१०५५ इच एकाचोऽम्प्रत्ययवच्च
१७३८ इच् कर्मव्यतीहारे
११९६ इच्छार्थेभ्यो विभाषा
११९३ इच्छार्थेषु लिङ्०
४०८ इजादेः सनुमः
७४७ इजादेश्च गुरुमतोऽनृच्छः
६८६ इट ईटि
४९२ इटोऽत्
६४८ इट् सनि वा
३८८ इणः षीध्वंलुङ्लिटां०
७६५ इणो गा लुङि
५८९ इणो यण्
३७३ इण्कोः
१४९७ इतराभ्योऽपि दृश्यन्ते
९०४ इतरेतरान्योन्योपपदा०
४८६ इतश्च
२७७ इतोऽत्सर्वनामस्थाते
१२६४ इत्थंभूतलक्षणे
११२१ इदंकिमोरीश्की
१४८६ इदम इश्
१५०६ इदमस्थमुः
३२० इदमो मः

१४९९ इदमो र्हिल्
१४९५ इदमो हः
५१८ इदितो नुम् धातोः
२४० इदुद्भ्याम्
३२३ इदोऽय् पुंसि
५५० इद्दरिद्रस्य
१७४५ इनः स्त्रियाम्
१३५६ इनण्यनपत्ये
१५६ इन्द्रवरुणभवशर्वरुद्र०
६८८ इन्धिभवतिभ्यां च
२५६ इन्हन्पूषार्यम्णां शौ
४६२ इरितो वा
५३७ इषुगमियमां छः
१६९२ इष्टकेषीकामालानाम् ०
१३५२ इष्ठस्य यिट् च
१३८७ इसुसुक्तान्तात् कः
९८ इसुसोः सामर्थ्ये
८७१ ई घ्राध्मोः
६३८ ई च गणः
५६६ ईडजनोर्ध्वे च
९९५ ईदासः
५७ ईदूदेद्द्विवचनं प्रगृह्यम्
८६४ ईयति
५६५ ईशः से
१७०१ ईषदर्थे
१५२५ ईषदसमाप्तौ कल्पब्देश्य०
१०४८ ईषद्दुस्सुषु कृच्छ्रा०
५४९ ई हल्यघोः
१४३२ उगवादिभ्यो यत्
१४१ उगितश्च
१६८४ उगितश्च
२६२ उगिदचां सर्वनामस्थाने०
२ उच्चैरुदात्तः
५०४ उतश्च प्रत्ययादसंयोग०
११८८ उताप्योः समर्थयोः०
५६७ उतो वृद्धिर्लुकि हलि
१७२४ उत्तमैकाभ्यां च
१३२७ उत्तरपदस्य
६२९ उत्परस्यातः
३०४ उद ईत्
११९ उदः स्थास्तम्भोः पूर्वस्य
१४७७ उदन्वानुदधौ च
९४१ उदश्चरः सकर्मकात्
६५६ उदितो वा
१६२ उदीचामातः स्थाने०
१०६६ उदुपधाद्भावादि०
९१२ उदोऽनूर्ध्वकर्मणि
५२८ उदोष्ठ्यपूर्वस्य
९१५ उद्विभ्यां तपः
१६४४ उपज्ञोपक्रमं तदा०
१०९४ उपदंशस्तृतीयायाम्
१० उपदेशेऽजनुनासिक०
६६१ उपदेशेऽत्वतः
५२७ उपधायाश्च
५३२ उपधायां च
१६०३ उपपदमतिङ्
९२७ उपपराभ्याम्
१७४३ उपमानाच्च
८४८ उपमानादाचारे
१५८४ उपमानानि सामान्य०
१०९२ उपमाने कर्मणि च
१५९५ उपमितं व्याघ्रादिभिः
१७५९ उपर्यध्यधसः सामीप्ये
१७०७ उपसर्गस्य घञ्यम०
८२४ उपसर्गस्यायतौ
१३३ उपसर्गाः क्रियायोगे

५२४ उपसर्गात् खल्घञोः
३८१ उपसर्गात् सुनोतिसुव०
३९८ उपसर्गादसमासेऽपि०
५१ उपसर्गादृति धातौ
११५१ उपसर्गे घोः किः
१६१४ उपसर्जनं पूर्वम्
९६९ उपाच्च
१७५१ उपात्प्रतियत्नवै०
९४४ उपाद्यमः स्वकरणे
९१३ उपान्मन्त्रकरणे
१२४० उपान्वध्याङ्वसः
१००४ उपेयिवाननाश्वान०
१३०६ उपोऽधिके च
१२९४ उभयप्राप्तौ कर्मणि
६०० उभे अभ्यस्तम्
१७४४ उरःप्रभृतिभ्यः कप्
३० उरण् रपरः
६१० उरत्
७३२ उर्ऋत्
६९४ उश्च
७४९ उषविदजागृभ्यो०
५०२ उस्यपदान्तात्
१ ऊकालोऽज्झ्रस्वदीर्घप्लुतः
७१७ ऊदुपधाया गोहः
१७३९ ऊधसोऽनङ्
८०५ ऊर्णोतेर्विभाषा
५६८ ऊर्णोतेर्विभाषा
१०९१ ऊर्ध्वे शुषिपूरोः
१५९८ ऊर्यादिच्विडाचश्च
१७१५ ऋक्पूरब्धूःपथामानक्षे
७३८ ऋच्छत्यृताम्
१०२२ ऋणमाधमर्ण्ये
२०१ ऋत उत्
६३३ ऋतश्च
६५० ऋतश्च संयोगादेः
७३७ ऋतश्च संयोगादेर्गुणः
१४११ ऋतष्ठञ्
८३८ ऋतेरीयङ्
२३४ ऋतो ङिसर्वनाम०
६६२ ऋतो भारद्वाजस्य
१६६८ ऋतो विद्यायोनिसं०
६० ऋत्यकः
१०३७ ऋदुपधाच्चाक्लृपिचृतेः
२८५ ऋदुशनस्पुरुदंसोऽने०
७२१ ऋदृशोऽङि गुणः
६६४ ऋद्धनोः स्ये
१४० ऋन्नेभ्यो ङीप्
१०३८ ऋहलोर्ण्यत्
५२६ ॠत इद्धातोः
११४८ ॠदोरप्
१७६१ एकं बहुव्रीहिवत्
४५ एकः पूर्वपरयोः
२२५ एकवचनं सम्बुद्धिः
३३८ एकवचनस्य च
१५५० एकविभक्ति चापूर्व०
१५३३ एकस्य सकृच्च
६७२ एकाच उपदेशेऽनुदा०
६८ एकाचो बशो भष्
५९६ एकाचो द्वे प्रथमस्य
३९६ एकाजुत्तरपदे णः
१३७० एको गोत्रे
५५ एङः पदान्तादति
५२ एङि पररूपम्
२२४ एङ्ह्रस्वात् सम्बुद्धेः
२७ एच इग्घ्रस्वादेशे
४४ एचोऽयवायावः

३१८ एत ईद्बहुवचने
४८४ एत ऐ
३२७ एतत्तदोः सुलोपो॰
१४८८ एतदोऽश्
१०३६ एतिस्तुशास्वृदृजु॰
१४८७ एतेतौ रथोः
५० एत्येधत्यूठ्सु
१२७३ एनपा द्वितीया
११४७ एरच्
३६७ एरनेकाचोऽसं॰
४७८ एरुः
८६५ एर्लिङि
६२२ ओः पुयण्ज्यपरे
३६८ ओः सुपि
१६५५ ओजःसहोऽम्भस्तम॰
५९ ओत्
५४१ ओतः श्यनि
८७ ओतो गार्ग्यस्य
१०१६ ओदितश्च
५३ ओमाङोश्च
१०३९ ओरावश्यके
१३४२ ओर्गुणः
२२८ ओसि च
२१२ औङ आपः
२४१ औत्
२०३ औतोऽशसोः
१६२१ कडाराः कर्मधारये
८३६ कण्ड्वादिभ्यो यक्
८३९ कमेर्णिङ्
१३७८ कम्बोजाल्लुक्
११६३ करणाधिकरणयोश्च
१०८४ करणे हनः
९०२ कर्तरि कर्मव्यतीहारे
९८३ कर्तरि कृत्
४३७ कर्तरि शप्
११२५ कर्तर्युपमाने
८४९ कर्तुः क्यङ् सलोपश्च
१२४१ कर्तुरीप्सिततमं कर्म
१२६१ कर्तृकरणयोस्तृतीया
१५७५ कर्तृकरणे कृता बहु॰
१२९३ कर्तृकर्मणोः कृति
१०४९ कर्तृकर्मणोश्च भूकृञोः
९२५ कर्तृस्थे चाशरीरे कर्मणि
१०९० कर्त्रोर्जीवपुरुषयो॰
१२२४ कर्मणा यमभिप्रैति॰
१०७६ कर्मणि दृशिविदोः॰
१२४७ कर्मणि द्वितीया
८५४ कर्मणो रोमन्थ॰
१११५ कर्मण्यण्
१०७३ कर्मन्याक्रोशे कृञः॰
१७६३ कर्मधारयवदुत्तरेषु
१२५२ कर्मप्रवचनीययुक्ते॰
१३०२ कर्मप्रवचनीयाः
८९७ कर्मवत् कर्मणा तुल्य॰
११४५ कर्मव्यतीहारे ण॰
१७०३ कवं चोष्णे
१०९३ कषादिषु यथाविध्य॰
८५३ कष्टाय क्रमणे
१०१ कस्कादिषु च
१७०० का पथ्यक्षयोः
११८९ कामप्रवेदनेऽक॰
८४७ काम्यच्च
१२१५ कारके
१०५७ कारे सत्यागदस्य
११९९ कालसमयवेलासु॰
१५९४ कालाः परिमाणिना

१४०३ कालाट्ठञ्
१४३९ कालात्
१२४९ कालाध्वनोरत्यन्तसं०
७४६ कास्प्रत्ययादाममं०
११८२ किंकिलास्त्यर्थेषु लृट्
११८० किंवृत्ते लिङ्लृटौ
११८० किंवृत्ते लिप्सायाम्
१४८५ किंसर्वनामबहुभ्यो०
१३१९ किति च
४९० किदाशिषि
३१४ किमः कः
१७११ किमः क्षेपे
१४५८ किमः संख्यापरि०
१५०७ किमश्च
१४५७ किमिदंभ्यां वो घः
१५१४ किमेत्तिङव्ययघादा०
१४९६ किमोऽत्
१७५२ किरतौ लवने
६६९ किरश्च पञ्चभ्यः
१५९७ कुगतिप्रादयः
१४९१ कुतिहोः
९७ कुप्वोः ᳵक ᳶपौ च
३९७ कुमति च
९०० कुषिरञ्जोः०
६०९ कुहोश्चुः
१२९१ कृञः प्रतियत्ने
७५२ कृञ्चानुप्रयुज्यते लिटि
१२६ कृत्तद्धितसमासाश्च
४०५ कृत्यचः
११६१ कृत्यल्युटो बहुलम्
१०२३ कृत्याः
१२९९ कृत्यानां कर्तरि वा
१२०२ कृत्याश्च
१२९२ कृत्वोऽर्थप्रयोगे का०
९८१ कृदतिङ्
१०६१ कृन्मेजन्तः
९२२ कृपो रो लः
१५४० कृभ्वस्तियोगे सम्पद्यक०
६६३ कृसृभृवृस्तुद्रुस्रुश्रुवो०
१३२१ केकयमित्रयुप्रलयानां०
१६९९ कोः कत्तत्पुरुषेऽचि
५१४ क्ङिति च
१००५ क्तक्तवतू निष्ठा
१२९५ क्तस्य च वर्तमाने
१२८७ क्तेन नञ्विशिष्टेनानञ्
९९१ क्तोऽधिकरणे च
१६०६ क्त्वा च
१०६२ क्त्वातोसुन्कसुनः
८७८ क्त्वि स्कन्दिस्यन्दोः
१६७५ क्यङ्मानिनोश्च
८४४ क्यचि च
८०९ क्यस्य विभाषा
५३६ क्रमः परस्मैपदेषु
१०२९ क्रय्यस्तदर्थे
१२५८ क्रियार्थोपपदस्य च क०
१२०७ क्रियासमभिहारे लो०
७९७ क्रीङ्जीनां णौ
९०९ क्रीडोऽनुपसंपरिभ्यश्च
१२२९ क्रुधद्रुहेर्ष्यासूयार्थो०
१२३० क्रुधद्रुहोरुपसृष्टयोः कर्म
४४५ क्र्यादिभ्यः श्ना
१००२ क्सुश्च
१४९२ क्वाति
२६३ क्विन्प्रत्ययस्य कुः
११२३ क्विप् च
१०२८ क्षय्यजय्यौ शक्यार्थे

१०१९ क्षायो मः
११७४ क्षिप्रवचने लृट्
१६३४ क्षुद्रजन्तवः
४१३ क्षुभ्नादिषु च
७१५ क्यस्याचि
८२ खरवसानयोर्वि०
११२ खरि च
१०५३ खित्यनव्ययस्य
२०२ ख्यत्यात् परस्य
१२४४ गतिबुद्धिप्रत्यवसाना०
१३४ गतिश्च
१२५६ गत्यर्थकर्मणि द्विती०
९८७ गत्यर्थाकर्मकश्लिष०
९२० गन्धनावक्षेपणसेवन०
१७४१ गन्धस्येदुत्पूतिसुसु०
५६० गमहनजनखनघ०
६५७ गमेरिट् परस्मैपदेषु
१३७३ गर्गादिभ्यो यञ्
११८२ गर्हायां च
११७८ गर्हायां लडपि०
१६३६ गवाश्वप्रभृतीनि च
७६९ गाङ् लिटि
७०८ गातिस्थाघुपाभूभ्यः०
१३५७ गाथिविदथिकेशि०
१४४९ गुणवचनब्राह्मणा०
५६९ गुणोऽपृक्ते
६२३ गुणो यङ्लुकोः
८६९ गुणोऽर्तिसंयोगाद्योः
८३७ गुपूधूपविच्छिपणि०
८३२ गुप्तिज्किद्भ्यः सन्
११५४ गुरोश्च हलः
९५६ गृधिवञ्च्योः प्रलम्भने
२८१ गोतो णित्
१३७१ गोत्राद्यून्यस्त्रियाम्
१७२६ गोरतद्धितलुकि
१५५१ गोस्त्रियोरुपसर्जनस्य
५१६ ग्रहिज्यावयिव्यधिव०
६४४ ग्रहोऽलिटि दीर्घः
१३८४ ग्रामजनबन्धुभ्यस्तल्
१३९२ ग्रामाद्यखञौ
८२४ ग्रो यङि
१६६३ घकालतनेषु काल०
७५९ घञपोश्च
८७५ घञि च भावकरणयोः
१६८२ घरूपकल्पचेलड्ब्रुव०
८३१ घुमास्थागापाजहाति०
२३५ घेर्ङिति
५९५ घ्वसोरेद्धावभ्यास०
९३ ङमो ह्रस्वादचि ङमुण्नित्यम्
२०० ङसिङसोश्च
२०९ ङसिङ्योः स्मात्स्मिनौ
३२ ङिच्च
१८६ ङिति ह्रस्वश्च
२३४ ङेप्रथमयोरम्
२३९ ङेराम्नद्याम्नीभ्यः
२०७ ङेर्यः
१६९० ङ्यापोः संज्ञा०
१३७ ङ्याप्प्रातिपदिकात्
७७४ चक्षिङः ख्याञ्
६०५ चङि
१०४० चजोः कु घिण्ण्यतोः
२८९ चतुरनडुहोरामुदात्तः
१३०१ चतुर्थी चाशिष्यायु०
१५७६ चतुर्थी तदर्थार्थ०
१२५७ चतुर्थी सम्प्रदाने
६२८ चरफलोश्च

१०७८ चर्मोदरयोः पूरेः
१३१ चादयोऽसत्वे
१६१३ चार्थे द्वन्द्वः
८९१ चिणो लुक्
८९६ चिण्णमुलोर्दीर्घो०
८८४ चिण्ते पदः
८९० चिण् भावकर्मणोः
११८६ चित्तीकरणे च
८०२ चिस्फुरोर्णौ
१५ चुटू
१०८० चेले क्नोपेः
६२ चोः कुः
२०३ चौ
४५५ च्लि लुङि
४५६ च्लेः सिच्
८२९ च्वौ च
१००० छन्दसि लिट्
१६४५ छाया बाहुल्ये
६०१ जक्षित्यादयः षट्
१३७६ जनपदशब्दात् क्ष०
१३९० जनपदे लुप्
१२२२ जनिकर्तुः प्रकृतिः
८९४ जनिवध्योश्च
६२७ जपजभदहदश०
३११ जराया जरसन्यतरस्याम्
११३५ जल्पभिक्षकुट्टलुण्ट०
२१४ जश्शसोः शिः
२११ जसः शी
२३३ जसि च
५५२ जहातेश्च
१०१० जहातेश्च क्त्वि
७५४ जाग्रोऽविचिण्ण०
१६३३ जातिरप्राणिनाम्
११८३ जातुयदोर्लिङ्
१६० जातेरस्त्रीविषयाद०
१६८९ जातेश्च
८७९ जान्तनशां विभाषा
१७४० जायाया निङ्
७३१ जिघ्रतेर्वा
५७९ जुसि च
४४८ जुहोत्यादिभ्यः श्लुः
५३९ ज्ञाजनोर्जा
९४५ ज्ञाश्रुस्मृदृशां सनः
१२८९ ज्ञोऽविदर्थस्य करणे
१५१९ ज्य च
१३५३ ज्यादादीयसः
१६९६ ज्योतिर्जनपद०
१४७५ झयः
१७३१ झयः
११९ झयो होऽन्यतरस्याम्
६९ झलां जशोऽन्ते
११० झलां जश् झशि
६८४ झलो झलि
५४६ झषस्तथोर्धोऽधः
४९१ झस्य रन्
४९७ झेर्जुस्
४६४ झोऽन्तः
११४० ञीतः क्तः
२०६ टाङसिङसामिना०
१४७ टिड्ढाणञ्द्वयस०
४७१ टित आत्मनेपदानां टेरे
१३३९ टेः
१३४८ ढे:
११२० ट्वितोऽथुच्
१३८६ ठस्येकः
२१८ डति च

१४५ डाबुभाभ्यामन्यरस्याम्
११४९ ङ्वितः क्त्रिः
१३४३ ढे लोपोऽकद्र्वाः
७९ ढो ढे लोपः
८९ ढ्रलोपे पूर्वस्य दी०
७३३ णलुत्तमो वा
९६० णिच्चश्च
४५८ णिश्रुद्रुस्नुभ्यः कर्त०
९५४ णेरणौ यत् कर्म
७८१ णेरनिटि
४५६ णेर्विभाषा
५१३ णो नः
७६६ णौ गमिरबोधने
७२६ णौ चङ्युपधाया ह्रस्वः
७७१ णौ च संश्चङोः
१०४३ ण्य आवश्यके
११५७ ण्यासश्रन्थो युच्
१११० ण्वुल्तृचौ
४१७ तङानावात्मनेपदम्
१४१० तत आगतः
१५७० तत्पुरुषः
१५४८ तत्पुरुषः समाना०
१७२५ तत्पुरुषस्याङ्गुलेः०
१६६१ तत्पुरुषे कृति ब०
१६४३ तत्पुरुषोऽनञ् ०
७७९ तत्प्रयोजको हेतुश्च
१४०६ तत्र जातः
१४४२ तत्र तस्येव
१६११ तत्र तेनेदमिति स०
१४०७ तत्र भवः
१४२९ तत्र साधुः
९८० तत्रोपपदं सप्तमीस्थम्
१२४२ तथायुक्तं चानी०
१३८८ तदधीते तद्वेद
१५४३ तदधीनवचने च
१४३८ तदर्हति
१४४३ तदर्हम्
१४६१ तदस्मिन्नधिकमि०
१४५४ तदस्य सञ्जातम्
१४७३ तदस्यास्त्यस्मिन्नि०
३१५ तदोः सः सावन०
१५०२ तदो दा च
१०६० तद्धितश्चासर्वविभक्तिः
१३६२ तद्धिताः
१५८२ तद्धितार्थोत्तर०
१३१८ तद्धितेष्वचामादेः
१४२४ तद्वहति रथयुगप्रा०
४४४ तनादिकृञ्भ्य उः
७१२ तनादिभ्यस्तथासोः
८१६ तनोतेर्विभाषा
३९ तपरस्तत्कालस्य
८९८ तपस्तपःकर्मकस्यैव
८८९ तपोऽनुतापे च
९८५ तयोरेव कृत्यक्त०
१५१५ तरप्तमपौ घः
१४०२ तवकममकावेकवचने
३५० तवममौ ङसि
१०२४ तव्यत्तव्यानीयरः
१६७४ तसिलादिष्वाकृत्वसुचः
१४९३ तसेश्च
१९४ तसौ मत्वर्थे
४८७ तस्थस्थमिपां तां०
१९६ तस्माच्छसो नः पुंसि
३६ तस्मादित्युत्तरस्य
१६९४ तस्मान्नुडचि
६१५ तस्मान्नुड् द्विहलः

१४०१ तस्मिन्नणि च युष्माका०
३५ तस्मिन्निति निर्दिष्टे पूर्वस्य
१४३३ तस्मै हितम्
१७५७ तस्य परमाम्रेडितम्
१४६३ तस्य पूरणे डट्
१४४४ तस्य भावस्त्वतलौ
१७ तस्य लोपः
१४१४ तस्य विकारः
१३८२ तस्य समूहः
१३६९ तस्यापत्यम्
१४१३ तस्येदम्
४२३ तान्येकवचनद्विवचन०
९९० ताभ्यामन्यत्रोणादयः
५९२ तासस्त्योर्लोपः
६५९ तासि च क्लृपः
१५१३ तिङश्च
४२२ तिङस्त्रीणि त्रीणि०
४४९ तिङ् शित् सार्वधातुकम्
६३० ति च
६७१ तितुत्रतथसिसुसरक०
४१६ तिप्तस्झिसिप्थस्थमि०
५८० तिप्यनस्तेः
३०५ तिरसस्तिर्यलोपे
१३३८ ति विंशतेर्डिति
७३० तिष्ठतेरित्
१५६८ तिष्ठद्गुप्रभृतीनि च
६५३ तीषसहलुभरुष०
४४२ तुदादिभ्यः शः
३४९ तुभ्यमह्यौ ङयि
११०९ तुमुन्ण्वुलौ क्रियायां०
१३४७ तुरिष्ठेमेयःसु
५७४ तुरुस्तुशम्यमः सा०
१३०० तुल्यार्थैरतुलोप०
७ तुल्यास्यप्रयत्नं सवर्णम्
५०६ तुह्योस्तातङ्ङाशि०
२८६ तृज्वत् क्रोष्टुः
५७० तृणह इम्
२६६ तृतीयादिषु भाषितपुं०
१३०४ तृतीयार्थे
१६०५ तृतीयाप्रभृतीन्य०
१५५८ तृतीयासप्तम्योर्बहुलम्
१७३ तृतीयासमासे
७४१ तॄफलभजत्रपश्च
११३२ तृन्
१३७७ ते तद्राजाः
१४३७ तेन क्रीतम्
१४४१ तेन तुल्यं क्रिया चे०
१४२० तेन दीव्यति खनति०
१४४० तेन निर्वृत्तम्
१६१२ तेन सहेति तुल्ययोगे
३५८ तेमयावेकवचनस्य
१०५ तोः षि
११७ तोर्लि
९९८ तौ सत्
१११९ त्यदादिषु दृशोऽना०
३१२ त्यदादीनामः
१३९८ त्यदादीनि च
१६३० त्यदादीनि सर्वैर्नित्यम्
३०९ त्रिचतुरोः स्त्रियां०
१४६९ त्रेः सम्प्रसारणं च
२४५ त्रेस्त्रयः
१६८७ त्रेस्त्रयः
३५१ त्वमावेकवचने
३५९ त्वामौ द्वितीयायाः
३४८ त्वाहौ सौ
१६९१ त्वे च

७४० थलि च सेटि
४७२ थासः से
२७८ थो न्थः
८७३ दंशसञ्जस्वञ्जां शपि
६४० दधस्तथोश्च
१००९ दधातेर्हिः
८१२ दम्भ इच्च
७४८ दयायासश्च
३२१ दश्च
५८२ दश्च
१३९४ दक्षिणापश्चात्पु०
९४३ दाणश्च सा चेच्चतुर्थ्यर्थे
६४ दादेर्धातोर्घः
६३९ दाधा घ्वदाप्
१५०१ दानीं च
९८८ दाशगोघ्नौ सम्प्र०
१५८१ दिक्संख्ये संज्ञायाम्
१४०८ दिगादिभ्यो यत्
१६१० दिङ्नामान्यन्तराले
१३६६ दित्यदित्यादित्यपत्यु०
२७५ दिव उत्
२७४ दिव औत्
१२३५ दिवः कर्म च
४३८ दिवादिभ्यः श्यन्
८८५ दीपजनबुधपूरि०
६१३ दीर्घ इणः किति
१२३ दीर्घं च
१९८ दीर्घाज्जसि च
६२४ दीर्घोऽकितः
६३५ दीर्घो लघोः
८८७ दुहश्च
११२० दृग्दशवतुषु
१५४४ देये त्रा च
१३३५ देवताद्वन्द्वे च
१६७१ देवताद्वन्द्वे च
१५४५ देवमनुष्यपुरुष०
१३२० देविकाशिंशपादित्य०
१०११ दो दद्धोः
१०२७ द्यतिस्यतिमास्थामि०
६११ द्युतिस्वाप्योः सम्प्रसा०
९७६ द्युद्भ्यो लुङि
१४५३ द्वन्द्वमनोज्ञादिभ्यश्च
१६३२ द्वन्द्वश्च प्राणितूर्यसेना०
१७२७ द्वन्द्वाच्चुदषहान्ता०
१६१६ द्वन्द्वे घि
१७४ द्वन्द्वे च
१३२३ द्वारादीनां च
१६३१ द्विगुरेकवचनम्
१५७१ द्विगुश्च
१४९ द्विगोः
१३६८ द्विगोर्लुगनपत्ये
३६३ द्वितीयाटौस्स्वेनः
३४१ द्वितीयायां च
११०० द्वितीयायां च
१५७२ द्वितीयाश्रितातीत०
१५३२ द्वित्रिचतुर्भ्यः सुच्
१४६० द्वित्रिभ्यां तयस्याय०
८६३ द्विर्वचनेऽचि
१५१६ द्विवचनविभज्योपं०
५०१ द्विषश्च
१४६८ द्वेस्तीयः
१६८६ द्व्यष्टनः संख्यायाम०
१६८ द्व्येकयोर्द्विवचनै०
१४२७ धर्मपथ्यर्थन्याया०
१७३७ धर्मादनिच् केवलात्
१२०६ धातुसम्बन्धे प्रत्ययाः

९७९ धातोः
८०६ धातोः कर्मणः समा०
८१९ धातोरेकाचो हलादेः०
१०२७ धातोस्तन्निमित्तस्यैव
५१२ धात्वादेः षः सः
१२२७ धारेरुत्तमर्णः
६८० धि च
१४२५ धुरो यड्ढकौ
१२१६ ध्रुवमपायेऽपादानम्
१६७६ न कोपधायाः
१९० नः क्ये
१३२५ न कर्मव्यतीहारे
१०६४ न क्त्वा सेट्
१५९ न क्रोडादिबह्वचः
१०४१ न क्त्वादेः
१२८४ नक्षत्रे च लुपि
१३७९ नक्षत्रेण युक्तः कालः
९०३ न गतिहिंसार्थेभ्यः
२५४ न ङिसम्बुध्योः
३६० न चवाहाहैवयुक्ते
१५९५ नञ्
१३३६ नञः शुचीश्वरक्षेत्रज्ञ०
१७१२ नञस्तत्पुरुषात्
१७३५ नञ्दुःसुभ्यो हलि०
१४४६ नञ्पूर्वात्तत्पु०
२४९ न तिसृ चतसृ
१६३९ न दधिपयआदीनि
८९९ न दुहस्नुनमां यक्चिणौ
७१४ न दृशः
१३९३ नद्यादिभ्यो ढक्
१६८३ नद्यास्शेषस्यान्यतरस्याम्
१७४६ नद्यृतश्च
१११९ नन्दिग्रहिपचादि०
५९८ न न्द्राः संयोगादयः
८६२ न पदान्तद्विर्वचन०
१०४ न पदान्ताट्टोनाम्
९७५ न पादम्याङ्यमाङ्य०
१६२७ नपुंसकमनपुंसकेनैक०
२६४ नपुंसकस्य झलचः
२१३ नपुंसकाच्च
१७३० नपुंसकादन्यतरस्याम्
११६२ नपुंसके भावे क्तः
१७१० न पूजनात्
१७२ न बहुव्रीहौ
५३३ न भकुर्छुराम्
४०९ न भाभूपूकमिगमि०
३७० न भूसुधियोः
१२५९ नमःस्वस्तिस्वाहा०
४७० न माङ्योगे
३१९ न मु ने
८४८ नमोवरिवश्चित्रङः क्यच्
१२१२ न यदि
१३२२ न य्वाभ्यां पदान्ताभ्याम्०
८८८ न रुधः
६४६ न लिङि
३३२ न लुमताङ्गस्य
१२९७ न लोकाव्ययनिष्ठा०
२५२ नलोपः प्रातिपदि०
२५३ नलोपः सुप्स्वर०
१६९३ नलोपो नञः
८६७ न ल्यपि
१२ न विभक्तौ तुस्माः
६५८ न वृद्भ्यश्चतुर्भ्यः
७९५ न व्यो लिटि
७४५ न शसददवादिगु०
९२ नश्चापदान्तस्य झलि

७८ नश्छव्यप्रशान्
१४२ न षट्स्वस्रादिभ्यः
१७२३ न संख्यादेः समाहारे
२९६ न सम्प्रसारणे सम्प्रसारणम्
३०१ न संयोगाद्वमन्तात्
५२५ न सुदुर्भ्यां केवलाभ्याम्
१३४० नस्तद्धिते
१७५६ नहिवृतिवृषिव्यधि०
६६ नहो धः
७२७ नाग्लोपिशास्वृदिताम्
८ नाज्झलौ
८७७ नाञ्चेः पूजायाम्
१९७ नादिचि
९४६ नानोर्ज्ञः
१४६४ नान्तादसंख्यादेर्मट्
६४१ नाभ्यस्तस्याचि पिति०
२६९ नाभ्यस्ताच्छतुः
३६२ नामन्त्रिते समाना०
२४८ नामि
११०५ नाम्न्यादिशिग्रहोः
१५५७ नाव्ययीभावादतो०
१५५ नासिकोदरौष्ठ ज०
९७२ निगरणचलनार्थे०
६१८ निजां त्रयाणां गुण०
१४७१ नित्यं शतादिमासार्ध०
९९ नित्यं समासेऽनुत्तरपदस्थस्य
८०५ नित्यं स्मयतेः
५४४ नित्यं करोतेः
८२० नित्यं कौटिल्ये गतौ
४८५ नित्यं ङितः
१७३६ नित्यमसिच् प्रजामेधयोः
१७५८ नित्यवीप्सयोः
१०८१ निमूलसमूलयोः कषः
१००६ निष्ठा
७८२ निष्ठायां सेटि
१०६५ निष्ठाशीङ् स्विदिमिदि
९१८ निसमुपविभ्यो ह्वः
६२५ नीग्वञ्चुस्रंसु ध्वंसु०
३ नीचैरनुदात्तः
६२६ नुगतोऽनासिका०
३७४ नुम्विसर्जनीयशर्व्य०
२५० नृ च
७०३ नेटि
६७० नेड्वशिकृति
२०५ देदमदसोरकोः
१६६५ नेन्सिद्धबध्नादिषु च
१८४ नेयङुवङ्स्थानावस्त्री
४०१ नेर्गदनदपतपद०
९०५ नेर्विशः
८९३ नेदात्तोपदेशस्य०
२५१ नोपधायाः
१४२६ नौवयोधर्मविषमूल०
१३२४ न्यग्रोधस्य च केवलस्य
१०१८ पचो वः
१५७७ पञ्चमी भयेन
१२८१ पञ्चमी विभक्ते
१२५४ पञ्चम्यपाङ्परिभिः
३३७ पञ्चम्या अत्
१४९० पञ्चम्यास्तसिल्
१६५४ पञ्चम्याः स्तोकादिभ्यः
७२४ पतः पुम्
१८८ पतिः समास एव
२७६ पतिमथ्यृभुक्षामात्
१७१३ पथो विभाषा
१४३० पथ्यतिथिवसति०
४१२ पदव्यवायेऽपि

३५३ पदस्य
३५४ पदात्
४११ पदान्तस्य
२३ परः सन्निकर्षः संहिता
१६४९ परवल्लिङ्गं द्वन्द्वतत्पु०
१३६ परश्च
४७४ परस्मैपदानां णल०
१६५८ परस्य च
१२१८ पराजेरसोढः
१०७१ परावरयोगे च
१२३६ परिक्रयणे सम्प्रदान०
११०२ परिक्लिश्यमाने च
३८६ परिनिविभ्यः सेव०
११४४ परिमाणाख्यायां०
१३३२ परिमाणान्तस्यासं०
९०६ परिव्यवेभ्यः क्रियः
९६७ परेर्मृषः
८२६ परेश्च घाङ्कयोः
४३० परोक्षे लिट्
११०८ पर्याप्तिवचनेष्वलमर्थेषु
५३८ पाघ्राध्मास्था०
१११४ पाघ्राध्माधेट्दृशः शः
१५७९ पात्रेसमितादयश्च
१७५५ पारस्करप्रभृतीनि०
१५६९ पारे मध्ये षष्ठ्या वा
१६२८ पिता मात्रा
१४१२ पितुर्यच्च
१५५ पुंयोगादाख्यायाम्
१६८१ पुंवत् कर्मधारयजातीय०
११६५ पुंसि संज्ञायां घः प्रायेण
२८० पुंसोऽसुङ्
५११ पुगन्तलघूपधस्य च
८५९ पुच्छभाण्डचीवराण्णिङ्
१६६७ पुत्रेऽन्यतरस्याम्
७७ पुमः खय्यम्परे
१६२५ पुमान् स्त्रिया
४६१ पुषादिद्युता०
९५८० पूर्वकालैकसर्व०
६१ पूर्वत्रासिद्धम्
१७७ पूर्वपरावरदक्षिणो०
९५० पूर्ववत्सनः
१५७४ पूर्वसदृशसमोना०
२१० पूर्वादिभ्यो नवभ्यो वा
१५९२ पूर्वापराधरोत्तरमेक०
५९९ पूर्वोऽभ्यासः
१२७४ पृथग्विनानानाभिस्तृ०
१४४७ पृथ्वादिभ्य इमनि०
१७०४ पृषोदरादीनि य०
१५८८ पोटायुवतिस्तो०
१०३० पोरदुपधात्
१५२७ प्रकारवचने जाती०
१५०५ प्रकारवचने थाल्
१७६४ प्रकारे गुणवचनस्य
९११ प्रकाशनस्थेयाख्यायोश्च
१३५५ प्रकृत्यैकाच्
८०२ प्रजने वीयतेः
१५३४ प्रज्ञादिभ्यश्च
१३११ प्रतिः प्रतिनिधिप्रति०
१२५५ प्रतिनिधिप्रधिदाने०
१५३७ प्रतियोगे पञ्चम्यास्त०
१३५ प्रत्ययः
३३१ प्रत्ययलोपे प्रत्यय०
१६१ प्रत्ययस्थात् कात् पूर्वस्या०
३३० प्रत्ययस्य लुक्श्लुलुपः
३५२ प्रत्ययोत्तरपदयोश्च
९४७ प्रत्याङ्भ्यां श्रुवः

१२३२ प्रत्याङ्भ्यां श्रुवः पूर्वस्य०
१७६ प्रथमचरमतयाल्पार्ध०
१९५ प्रथमयोः पूर्वसवर्णः
१५४९ प्रथमानिर्दिष्टं स०
३४२ प्रथमायाश्च द्विवचने
१०९८ प्रमाणे च
१४५५ प्रमाणे द्वयसज्दघ्न०
१४०६ प्रयोज्यनियोज्यौ०
१५२४ प्रशंसायां रूपप्
१५८९ प्रशंसावचनैश्च
१५१८ प्रशस्यस्य श्रः
१२८३ प्रसितोत्सुकाभ्यां तृतीया च
१४२२ प्रहरणम्
१५५६ प्राक्कडारात् समासाः
१४३१ प्राक्क्रीताच्छः
३७९ प्राक्सिताद‍ड्व्यवायेऽपि
१५२८ प्रागिवात्कः
१४२३ प्राग्घिताद्यत्
१४८४ प्राग्दिशो विभक्तिः
१३६४ प्राग्दीव्यतोऽण्
१४१९ प्राग्वहतेष्ठक्
१४३५ प्राग्वतेष्ठञ्
३९५ प्रातिपदिकान्तनुम्वि०
१२८५ प्रातिपदिकार्थलिङ्ग०
१३२ प्रादयः
९६६ प्राद्वहः
१६६२ प्रावृट्शरत्कालदिवां जे
१११७ प्रियवशे वदः खच्
१३५० प्रियस्थिरस्फिरो०
११५७ प्रैषातिसर्गप्रा०
१३८९ प्रोक्ताल्लुक्
९५१ प्रोपाभ्यां युजेरयज्ञ०
९३० प्रोपाभ्यां सम०
५६ प्लुतप्रगृह्या अचि नित्यम्
५४० प्वादीनां ह्रस्वः
७४४ फणां च सप्तानाम्
१४१७ फले लुक्
१४६६ बहुपूगगणसङ्घस्य०
३५७ बहुवचनस्य व०
२२७ बहुवचने झल्येत्
१७१४ बहुव्रीहौ संख्येये ड०
१७३२ बहुव्रीहौ सक्थ्य०
१६७ बहुषु बहुवचनम्
१३५१ बहोर्लोपो भू च बहोः
१५३५ बह्वल्पार्थाच्छस्कार०
१५४ बह्वादिभ्यश्च
८५५ बाष्पोष्मभ्यामुद्वमने
८०४ बिभेतेर्हेतुभये
९७१ बुधयुधनशजनेङ्०
५७१ ब्रुव ईट्
४७६ ब्रुवः पञ्चानामा०
७७३ ब्रुवो वचिः
११३७ भञ्जभासमिदो घुरच्
१३९९ भवतष्ठक्छसौ
६१७ भवतेरः
११६६ भविष्यति गम्यादयः
९८४ भव्यगेयप्रवचनीया०
२९२ भस्य
२९२ भस्य टेर्लोपः
९०१ भावकर्मणोः
११७० भाववचनाश्च
११४२ भावे
१००३ भाषायां सदवसश्रुवः
९३५ भासनोपसम्भाषा०
१३८३ भिक्षादिभ्योऽण्
१०२१ भित्तं शकलम्

५५१ भियोऽन्यतरस्याम्
७९० भियो हेतुभये षुक्
१२१७ भीत्रार्थानां भयहेतुः
९८९ भीमादयोऽपादाने
९५५ भीस्म्योर्हेतुभये
७५० भीह्रीभृहुवां श्लुवच्च
९५३ भुजोऽनवने
१२२३ भुवः प्रभवः
१०३४ भुवो भावे
७१० भुवो वुग्लुङ्लिटोः
१५१० भूतपूर्वे चरट्
११७६ भूते च
१२५ भूवादयो धातवः
१६०१ भूषणेऽलम्
७०९ भूसुवोस्तिङि
६१९ भृञामित्
८५१ भृशादिभ्यो भुव्यच्वे०
१०४७ भोज्यं भक्ष्ये
८४ भोभगोअघोअ०
३३६ भ्यसो भ्यम्
७२८ भ्राजभासभाष०
१६२६ भ्रातृपुत्रौ स्वसृदुहि०
११४१ मतिबुद्धिपूजार्थेभ्यश्च
७४ मतुवसोरु सम्बुद्धौ०
१४३ मनः
११२७ मनः
१२६० मन्यकर्मण्यनादरे वि०
३४९ मपर्यन्तस्य
१४१६ मयड्वैतयोर्भाषा०
८६८ मयतेरिदन्यतरस्याम्
१५९१ मयूरव्यंसकादयश्च
५२० मस्जिनशोर्झलि
१२०४ माङि लुङ्
१६७२ मातरपितरावुदीचाम्
१४७४ मादुपधायाश्च मतो०
८३३ मान्बधदान्शान्भ्यो०
८३५ मितां ह्रस्वः
९५८ मिथ्योपपदात् कृञो०
२६ मिदचोऽन्त्यात् परः
७९९ मीनातिमिनोतिदीङां०
५ मुखनासिकावचनो०
८१३ मुचोऽकर्मकस्य०
५९० मृजेर्वृद्धिः
६८९ मृडमृदगुधकुष०
४८० मेर्निः
९१ मोऽनुस्वारः
८८२ मो नो धातोः
९४९ म्रियतेर्लुङ्लिङोश्च
८८३ म्वोश्च
३२२ यः सौ
८७० यङि च
८२७ यङोऽचि च
५७३ यङो वा
१९३ यचि भम्
११८४ यच्चयत्रयोः
१०४४ यजयाचरुचप्रवचर्चश्च
१२८० यतश्च निर्धारणम्
१४५६ यत्तदेतेभ्यः परि०
१३३७ यथातथयथापुरयोः०
१०७५ यथातथयोरसूया०
१२०९ यथाविध्यनुप्रयोग ०
४१ यथासंख्यमनुदे०
१५५९ यथाऽसादृश्ये
१७६५ यथास्वे यथायथम्
६६७ यमरमनमातां सक्च
६९७ यमो गन्धने

१०७ यरोऽनुनासिकेऽनु०
१८९ यस्मात् प्रत्ययविधिस्त०
१२५३ यस्मादधिकं यस्य०
१२७६ यस्य च भावेन भाव०
१५३७ यस्य चायामः
६७६ यस्य विभाषा
८०८ यस्य हलः
१३४४ यस्येति च
२३७ याडापः
१५०९ याप्ये पाशप्
१०७७ यावति विन्दजीवोः
११६७ यावत्पुरानिपातयो०
१५६० यावदवधारणे
४८९ यासुट् परस्मैपदे०
१५२२ युवाल्पयोः कनन्यत०
३४६ युवावौ द्विवचने
१०५१ युवोरनाकौ
३५६ युष्मदस्मदोः षष्ठी०
३४० युष्मदस्मदोरनादेशे
१४०० युष्मदस्मदोरन्य०
३३३ युष्मदस्मद्भ्यां ङसोऽश्
४२४ युष्मद्युपपदे समा०
३४७ यूयवयौ जसि
१८३ यू स्त्र्याख्यौ नदी
५४५ ये च
१३६० ये चाभावकर्मणोः
४० येन विधिस्तदन्तस्य
१२६३ येनाङ्गविकारः
१६३५ येषां च विरोधः शा०
३४३ योऽचि
१४५२ योपधाद्गुरूपोत्तमा०
१३५४ र ऋतो हलादेर्लघोः
८७४ रञ्जेश्च
१०१३ रदाभ्यां निष्ठातो नः०
६५२ रधादिभ्यश्च
५२१ रभेरशब्लिटोः
१०६७ रलो व्युपधाद्धलादेः०
३९३ रषाभ्यां नो णः समा०
१४७९ रसादिभ्यश्च
१६१५ राजदन्तादिषु परम्
१४७८ राजन्वान् सौराज्ये
१७२५ राजाहःसखिभ्यष्टच्
१६५० रात्राह्नाहाः पुंसि
१०५८ रात्रेः कृति विभाषा
५९१ रात्सस्य
१२३१ राधीक्ष्योर्यस्य विप्रश्नः
७४२ राधो हिंसायाम्
३०८ रायो हलि
५२९ रिङ् शयग्लिङ्क्षु
५९३ रि च
६३१ रीगृदुपधस्य च
८३० रीङृतः
६३२ रुग्रिकौ च लुकि
१२२५ रुच्यर्थानां प्रीयमाणः
६९० रुदविदमुषग्रहिस्व०
५७६ रुदश्च पञ्चभ्यः
५६४ रुदादिभ्यः सार्वधातुके
४४३ रुधादिभ्यः श्नम्
७९३ रुहः पोऽन्यतरस्याम्
८३ रोः सुपि
११५८ रोगाख्यायां ण्वुल् बहुलम्
८० रो रि
७२ रोऽसुपि
५३० र्वोरुपधाया०
४१४ लः कर्मणि च भावे०
४१७ लः परस्मैपदम्

९९७ लक्षणहेत्वोः क्रिया०
१३०९ लक्षणेत्थंभूताख्यान०
१५६५ लक्षणेनाभिप्रती आ०
५०० लङः शाकटायनस्यैव
९९२ लटः शतृशानचा०
१२१४ लट् स्मे
५२२ लभेश्च
१६ लशक्वतद्धिते
११३४ लषपतपदस्थाभू०
४१५ लस्य
४९६ लिङः सलोपोऽनन्त्यस्य
४८८ लिङः सीयुट्
४५२ लिङाशिषि
११९५ लिङ् च
४३६ लिङ्निमित्ते लृङ्०
११९९ लिङ्यदि
६९३ लिङ्सिचावात्मने०
६४९ लिङ्सिचोरात्मने०
१००१ लिटः कानज्वा
४७३ लिटस्तझयोरेशिरेच्
६०२ लिटि धातोरनभ्यासस्य
४५१ लिट् च
७६० लिट्यन्यतरस्याम्
५१७ लिट्यभ्यासस्योभयेषाम्
४६० लिपिसिचिह्वश्च
९५७ लियः सम्माननशालीनी०
७८९ लीलोर्नुग्लुकावन्यत०
१५५२ लुक् तद्धितलुकि
७१६ लुग्वा दुहदिहलिहा०
४२८ लुङ्
७६३ लुङि च
४६८ लुङ्लङ्लृङ्क्ष्वडुदात्तः
७५८ लुङ्सनोर्घस्लृ
६७९ लुटः प्रथमस्य डारौरसः
९७८ लुटि च क्लृपः
८२१ लुप-सद-चर-जप-जभ०
१३८१ लुपि युक्तवद्व्यक्ति०
१४१८ लुप् च
१३८० लुबविशेषे
९९९ लृटः सद्वा
४३२ लृट् शेषे च
४७७ लोटो लङ्वत्
४३४ लोट् च
७२९ लोपः पिबतेरीच्चा०
८६ लोपः शाकल्यस्य
५४३ लोपश्चास्यान्यतर०
५५४ लोपो यि
४९४ लोपो व्योर्वलि
१४८० लोमादिपामादि०
८५२ लोहितादिडाज्भ्यः०
१७८४ ल्यपि लघुपूर्वात्
१९३ ल्युट् च
१०१५ ल्वादिभ्यः
७२५ वच उम्
५१५ वचिस्वपियजादीनां किति
१०४५ वचोऽशब्दसंज्ञायाम्
१४६७ वतोरिथुक्
१०३२ वदः सुपि क्यप् च
७०२ वदव्रजहलन्तस्याचः
१४८ वयसि प्रथमे
१४४८ वर्णदृढादिभ्यः ष्यञ्च
१५० वर्णादनुदात्तात्तो०
१५९० वर्णो वर्णेन
११७२ वर्तमानसामीप्ये वर्तमान०
४२७ वर्तमाने लट्
१०७९ वर्षप्रमाण ऊलोपश्चा०

१३३१ वर्षस्याभविष्यति
३६९ वर्षाभ्वश्च
६५५ वसतिक्षुधोरिट्
७३ वसुस्रन्सुध्वन्सु०
२९३ वसोः सम्प्रसारणम्
९७५ वा क्यषः
१७६० वाक्यादेरामन्त्रितस्या०
६९५ वा गमः
१०५६ वाचंयमपुरन्दरौ
७४३ वा जॄभ्रमुत्रसाम्
६५ वा द्रुहमुहष्णुहष्णिहाम्
२७० वा नपुंसकस्य
१०२६ वान्तो यि प्रत्यये
८६६ वान्यस्य संयोगादेः
११६ वा पदान्तस्य
४३९ वा भ्राशभ्लाशभ्रमु०
१३५ वामि
३६६ वांशसोः
७७७ वा यौ
१२१९ वारणार्थानामीप्सितः
७७५ वा लिटि
१०६९ वा ल्यपि
११३ वावसाने
९६ वा शरि
९८२ वाऽसरूपोऽस्त्रियाम्
२९७ वाह ऊठ्
१६२० वाहिताग्न्यादिषु
१४७० विंशत्यादिभ्यस्तमड०
१०२० वित्तो भोगप्रत्यययोः
७५५ विदांकुर्वन्त्वित्यन्य०
११३८ विदिभिदिछिदेः कुरच्
९९६ विदेः शतुर्वसुः
४७५ विदो लटो वा
४३३ विधिनिमन्त्रणा०
१५२३ विन्मतोर्लुक्
९०७ विपराभ्यां जेः
१६३८ विप्रतिषिद्धं चा०
१६९ विभक्तिश्च
१५६२ विभाषा
११७९ विभाषा कथमि लिङ् च
११६८ विभाषा कदाकर्ह्योः
१३१७ विभाषा क्रुञ्ञ
९७० विभाषाकर्मकात्
१२६७ विभाषा गुणेऽस्त्रियाम्
७११ विभाषा घ्राधेट्शा०
३०० विभाषा ङिश्योः
१६८८ विभाषा चत्वारिंश०
८१८ विभाषा चेः
१७५ विभाषा जसि
२८८ विभाषा तृतीयादिष्वचि
१७१ विभाषा दिक्समासे
११९१ विभाषा धातौ सम्भा०
७८५ विभाषाऽऽपः
१७०२ विभाषा पुरुषे
१५२६ विभाषा बहुच्०
६७८ विभाषा भावादिकर्मणोः
८०० विभाषा लीयतेः
७७० विभाषा लुङ्लृङोः
९३८ विभाषा विप्रलापे
१६३७ विभाषा वृक्षमृगतृण०
६३७ विभाषा वेष्टिचेष्ट्योः
१२१३ विभाषा साकाङ्क्षे
१५४१ विभाषा साति कार्त्स्न्ये
१५२६ विभाषा सुपो बहुच्
१६४८ विभाषा सेनासुरा
१६६९ विभाषा स्वसृपत्योः

३८९ विभाषेटः
९१३ विभाषोपपदेन प्रती०
६९८ विभाषोपयमने
२४ विरामोऽवसानम्
११०३ विशिपतिपदिस्कन्दां०
१५८६ विशेषणं विशेष्येण०
९४ विसर्जनीयस्य सः
९२६ वृत्तिसर्गतायनेषु क्रमः
१५२० वृद्धस्य च
१३९६ वृद्धाच्छः
१६७८ वृद्धिनिमित्तस्य च०
१८ वृद्धिरादैच्
४९ वृद्धिरेचि
१३९७ वृद्धिर्यस्याचामादि०
१६२३ वृद्धो यूना तल्लक्षण०
९७७ वृद्भ्यः स्यसनोः
६४५ वृतो वा
९२९ वेः पादविहरणे
९२२ वेः शब्दकर्मणः
७६१ वेञो वयिः
५८८ वेत्तेर्विभाषा
८५० वेरपृक्तस्य
३८५ वेश्च स्वनो भोजने
१६५७ वैयाकरणाख्यायां०
११७७ वोताप्योः
१५३ वोतो गुणवचनात्
१६९५ वोपसर्जनस्य
७८८ वो विधूनने जुक्
९३६ व्यक्तवाचां समुच्चा०
६१२ व्यथो लिटि
९६८ व्याङ्परिभ्यो रमः
८५ व्योर्लघुप्रयत्नतरः०
११२६ व्रते
६७ व्रश्चभ्रस्जसृजमृज०
११०७ शकधृषज्ञाग्लाघट०
१२०३ शकि लिङ् च
१०३१ शकिसहोश्च
१४६२ शदन्तविंशतेश्च
९४८ शदेः शितः
७९२ शदेरगतौ तः
२७२ शप्श्यनोर्नित्यम्
८५६ शब्दवैरकलहाभ्र०
५३४ शमामष्टानां दीर्घः श्यनि
१६६४ शयवासवासिष्वकालात्
१४०९ शरीरावयवाच्च
९५ शर्परे विसर्जनीयः
६०८ शर्पूर्वाः खयः
४५७ शल इगुपधादनिटः क्सः
१२० शश्छोऽटि
३३५ शसो न
७८७ शाच्छासाह्वाव्या०
१००८ शाच्छोरन्यतरस्याम्
१०६ शात्
५८३ शास इदङ्हलोः
३७६ शासिवसिघसीनां च
५८४ शा हौ
१४२१ शिल्पम्
१३७४ शिवादिभ्योऽण्
१८० शि सर्वनामस्थानम्
५८६ शीङः सार्वधातुके०
५८७ शीङो रुट्
१०१७ शुषः कः
१०८२ शुष्कचूर्णरूक्षेषु पिषः
५१९ शे मुचादीनाम्
४२१ शेषात् कर्तरि पर०
१७४६ शेषाद्विभाषा

१३९१ शेषे
४२६ शेषे प्रथमः
११८७ शेषे लृडयदौ
३४४ शेषे लोपः
४०२ शेषे विभाषाऽकखा०
१८७ शेषो घ्यसखि
१६०७ शेषो बहुव्रीहिः
५४७ श्नसोरल्लोपः
५५८ श्नान्नलोपः
५४८ श्नाभ्यस्तयोरातः
४४१ श्रुवः शृ च
६७३ श्र्युकः किति
१२२६ श्लाघह्नुङ्स्थाशपां०
७१३ श्लिष आलिङ्गने
६०४ श्लौ
७२३ श्वयतेरः
२९८ श्वयुवमघोना०
१६२९ श्वशुरः श्वश्र्वा
६७५ श्वीदितो निष्ठायाम्
१४ षः प्रत्ययस्य
१४६५ षट्कतिकतिपयचतुरां
२४७ षट्चतुर्भ्यश्च
२१६ षड्भ्यो लुक्
५५७ षढोः कः सि
४७ षत्वतुकोरसिद्धः
१४७२ षष्ठ्यादेश्चासंख्या०
१५९६ षष्ठी
१२७७ षष्ठी चानादरे
१२८८ षष्ठी शेषे
२८ षष्ठी स्थानेयोगा
१२६८ षष्ठी हेतुप्रयोगे
१२७२ षष्ठ्यतसर्थप्रत्ययेन
१६६६ षष्ठ्या आक्रोशे
१५११ षष्ठ्या रूप्य च
१५३९ षष्ठ्या व्याश्रये
४१० षात् पदान्तात्
१५२ षिद्गौरादिभ्यश्च
११५५ षिद्भिदादिभ्योऽङ्
१०३ ष्टुना ष्टुः
५३५ ष्ठिवुक्लमुचमां शिति
२१७ ष्णान्ता षट्
७०७ सः स्यार्धधातुके
३७८ सः स्विदिस्वदिसहीनां च०
१३५८ संयोगादिश्च
१०१४ संयोगादेरातो०
२५९ संयोगान्तस्य लोपः
१२२ संयोगे गुरु
२८४ सख्युरसम्बुद्धौ
१६०९ संख्ययाव्ययासन्ना०
१५८३ संख्यापूर्वो द्विगुः
१४३६ संख्याया अतिश०
१४५९ संख्याया अवयवे तयप्
१५३१ संख्यायाः क्रियाभ्या०
१३३० संख्यायाः संवत्सर०
१५०८ संख्याया विधार्थे धा
१७०५ संख्याविसायपूर्व०
१५३६ संख्यैकवचनाच्च०
१६७७ संज्ञापूरण्योश्च
१०८९ संज्ञायाम्
११५९ संज्ञायाम्
१४७६ संज्ञायाम्
८३४ सत्यापपाशरू०
३८२ सदिरप्रतेः
१५०४ सद्यःपरुत्परा०
१६४१ स नपुंसकम्
१२७ सनाद्यन्ता धातवः

११३९ सनाशंसभिक्ष उः
६७४ सनिग्रहगुहोश्च
७६७ सनि च
८१० सनिमीमाघुरभ०
६७४ सनीवन्तर्धभ्रस्ज०
१४०४ सन्धिवेलाद्यृतु०
६०३ सन्यङोः
६२१ सन्यतः
८१७ सन्लिटोर्जेः
६३४ सन्वल्लघुनि च
१२५१ सप्तमीपञ्चम्यौ०
१६१९ सप्तमीविशेषणे०
१५७८ सप्तमी शौण्डैः
१२७५ सप्तम्यधिकरणे च
१०९६ सप्तभ्यां चोप०
११२९ सप्तम्यां जनेर्डः
१४९४ सप्तम्यास्त्रल्
१६४६ सभा राजामनुष्यपूर्वा
९५२ समः क्ष्णुवः
९४० समः प्रतिज्ञाने
१५४७ समर्थः पदविधिः
१३६३ समर्थानां प्रथमाद्वा
९१० समवप्रविभ्यः स्थः
१७५० समवाये च
९४२ समस्तृतीयायुक्तात्
१०५९ समानकर्तृकयोः पू०
११९४ समानकर्तृकेषु तुमुन्
१०९७ समासत्तौ
१५३० समासाच्च तद्विषयात्
१७०९ समासान्ताः
१०६८ समासेऽनञ्पूर्वे०
४ समाहारः स्वरितः
१२०८ समुच्चयेऽन्यतरस्याम्
१२१० समुच्चये सामान्यव०
९६१ समुदाङ्भ्यो यमोऽग्रन्थे
१०८३ समूलाकृतजीवेषु०
९१७ समो गम्यृच्छिभ्याम्०
१७४९ सम्परिभ्यां करो०
९३४ सम्प्रतिभ्यामनाध्याने
२९५ सम्प्रसारणाच्च
२३० सम्बुद्धौ च
९९३ सम्बोधने च
१२८६ सम्बोधने च
११९० सम्भावनेऽलमिति चे०
९२४ सम्माननोत्सञ्जन०
१६२२ सरूपाणामेकशेष०
७१९ सर्तिशास्त्यर्तिभ्यश्च
१११८ सर्वकूलाभ्रकरीषेषु कषः
२५५ सर्वनामस्थाने चा०
२०८ सर्वनाम्नः स्मै
२३८ सर्वनाम्नः स्याड्ढ्रस्वश्च
१२६९ सर्वनाम्नस्तृतीया च
१७५६ सर्वस्य द्वे
१४८९ सर्वस्य सोऽन्यतरस्यां दि
१७० सर्वादीनि सर्वनामानि
१७० सर्वैकान्यकिंयत्तदः०
४८२ सवाभ्यां वा मौ
७० ससजुषो रुः
१२६२ सहयुक्तेऽप्रधाने
१५५४ सह सुपा
६८१ सहिवहोरोदवर्णस्य
३७२ सहेः साडः सः
१६०२ साक्षात्प्रभृतीनि च
३९२ सात्पदाद्योः
१२३४ साधकतमं करणम्
१२८२ साधुनिपुणाभ्याम०

२५८ सान्तमहतः संयोगस्य
३३९ साम आकम्
१२८७ सामन्त्रितम्
१४०५ सायंचिरंप्राह्णेप्रगे०
५०८ सार्वधातुकमपित्
४६३ सार्वधातुकार्धधातुकयोः
४५३ सार्वधातुके यक्
२७३ सावनडुहः
६४७ सिचि च परस्मैपदेषु
७०० सिचि वृद्धिः परस्मैपदेषु
४९८ सिजभ्यस्तविदि०
१९१ सिति च
७९८ सिध्यतेरपारलौकिके
५८१ सिपि धातोरुर्वा
८७ सिवादीनां वाड्व्यवा०
१३ सुः पूजायाम्
५७ सुखादिभ्यः कर्तृवेदनायाम्
७४४ सुट् कात्पूर्वः
५९३ सुट्तिथोः
१८१ सुडनपुंसकस्य
८४१ सुप आत्मनः क्यच्
१६६ सुपः
२२६ सुपि च
८४२ सुपो धातुप्रातिप०
१२८ सुप्तिङन्तं पदम्
१५६१ सुप्प्रतिना मात्रार्थे
११२४ सुप्यजातौ णिनिस्ता०
१७३४ सुप्रातसुश्व०
३९० सुषामादिषु च
१३२९ सुसर्वार्धाज्जनपदस्य
१३४५ सूर्यतिष्यागस्त्य०
३८२ सृजिदृशोर्झल्यमकिति
४७९ सेर्ह्यपिच्च
३२८ सोऽचि लोपे चेत्०
२५७ सौ च
४९५ स्कोः संयोगाद्योरन्ते च
३८३ स्तम्भेः
६६६ स्तुसुधूञ्भ्यः परस्मै०
१०२ स्तोः श्चुना श्चुः
३७७ स्तौतिण्योरेव०
३६५ स्त्रियाः
१६७३ स्त्रियाः पुंवद् भाषित०
१३८ स्त्रियाम्
११५२ स्त्रियां क्तिन्
२८७ स्त्रियां च
१६२४ स्त्री पुंवच्च
१३६७ स्त्रीपुंसाभ्यां नञ्स्न०
१३७५ स्त्रीभ्यो ढक्
६९९ स्थाघ्वोरिच्च
३८० स्थादिष्वभ्यासेन०
८६० स्थानिवदादेशोऽन०
२९ स्थानेऽन्तरतमः
१३४९ स्थूलदूरयुवह्रस्व०
६४३ स्नुक्रमोरनात्मने०
१०८५ स्नेहने पिषः
९१९ स्पर्धायामाङः
११३६ स्पृहिगृहिपतिदयि०
१२२८ स्पृहेरीप्सितः
७९१ स्फायो वः
७९६ स्फुरतिस्फुलत्योर्घञि
६६८ स्मिपूङ्रञ्ज्वशां सनि
१२०५ स्मोत्तरे लङ् च
४५४ स्यतासी लृलुटोः
८७६ स्यदो जवे
८९५ स्यसिच्सीयुट्तासिषु०
३७ स्वं रूपं शब्दस्याश०

७७८ स्वतन्त्रः कर्त्ता
१७८ स्वमज्ञातिधनाख्यायाम्
२१९ स्वमोर्नपुंसकात्
६५१ स्वरतिसूतिसूयति०
१३० स्वरादिनिपातमव्ययम्
४२० स्वरितञितः कर्त्र्०
४२ स्वरितेनाधिकारः
१३२६ स्वागतादीनां च
१६७९ स्वाङ्गाच्चेतः
१५७ स्वाङ्गाच्चोपसर्जनादसं०
११०१ स्वाङ्गेऽध्रुवे
४४० स्वादिभ्यः श्नुः
१९२ स्वादिष्वसर्वनामस्थाने
१२७८ स्वामीश्वराधिपतिदा०
१०८७ स्वे पुषः
१६५ स्वौजसमौट्छष्टाभ्यां०
५९४ ह एति
६९६ हनस्सिच्
१०३५ हनस्त च
८८१ हनस्तोऽचिण्णलोः
७६२ हनो वध लिङि
४०४ हन्तेरत्पूर्वस्य
५६३ हन्तेर्जः
५५५ हलः श्नः शानज्झौ
१६५९ हलदन्तात् सप्तम्याः०
६९२ हलन्ताच्च
११ हलन्त्यम्
४०७ हलश्चेजुपधात्
१३४६ हलस्तद्धितस्य
६०७ हलादिः शेषः
५३१ हलि च
३२५ हलि लोपः
८८ हलि सर्वेषाम्
२० हलोऽनन्तराः संयोगः
२२२ हल्ङ्याब्भ्यो दीर्घा०
९० हशि च
१०८६ हस्ते वर्तिग्रहोः
१४५० हायनान्तयुवा०
१७५३ हिंसायां प्रतेश्च
१०९५ हिंसार्थानां च समा०
३९९ हिनुमीना
१३०५ हीने
५०५ हुझल्भ्यो हेर्धिः
५४२ हुश्नुवोः सार्वधातुके
१२४५ हृक्रोरन्यतरस्याम्
१४२८ हृदयस्य प्रियः
१३३३ हृद्भगसिन्ध्वन्ते०
७८० हेतुमति च
११९२ हेतुहेतुमतोर्लिङ्
६३ हो ढः
१२६५ हेतौ
५६१ हो हन्तेर्ञ्णिन्नेषु
७०४ ह्म्यन्तक्षणश्वस०
६०६ ह्रस्वः
१२१ ह्रस्वं लघु
२४६ ह्रस्वनद्यापो नुट्
२२२ ह्रस्वस्य गुणः
१०३३ ह्रस्वस्य पिति कृति तुक्
६९१ ह्रस्वात्तादौ तद्धिते
६८५ ह्रस्वादङ्गात्
२३७ ह्रस्वो नपुंसके०



175. Hanuman Dyanam

# Laghu-Paniniya

## A Papular Sanskrit Grammar

FOR BEGINNERS



---

**(Part II)**

---

BY

**A. R. RAJARAJA VARMA, M. A., M. R. A. S.**

PROFESSOR OF

SANSKRIT AND DRAVIDIAN LANGUAGES

H. H. The Maharaja's College, Trivandrum.

---

**B. V. BOOK DEPOT,**

TRIVANDRUM.

---

PRINTED AT THE 'BHASKARA' PRESS,

TRIVANDRUM.

 1913 [Price Re. 1.





# PREFACE.

The kind reception accorded to my grammar of Classical Sanskrit, called the *Laghupaniniyam*, by the University of Madras and the Sanskrit Colleges of Mysore and Travancore, as well as by the public in general, was one of the circumstances which suggested to me the idea of writing a sequel or supplement to it. The Laghupaniniyam which was published two years ago professed to treat only of *Samskrita* or the literary language of the classical period of Sanskrit literature. But the word Sanskrit in its wider sense has come to include an earlier stage of the language, that is, the dialect in which the Rishis of the Vedic period sang their hymns. And it must be admitted that the stupendous work of the world's greatest grammarian comprehends both stages of the language. Indeed, Panini in fact goes much further, and has noted the peculiarities of usage not only in the two broad divisions of the language, familiarly known as *Chhandas* (Vedic) and *Bhasha* (Classical), but also in the minor or intermediate dialects as they appear in the Mantra, Yajus (in its several recensions) and Brahmana. [1] This thoroughness is the chief merit of Panini. As *Laghupaniniyam*, the first part of my grammar was an attempt to offer a popular exposition of the *Laukika* sutras of Panini, the present volume is a similar attempt in the case of *Vaidika* Sutras.

Apart from my eagerness to secure completeness to my work, I had a special incentive to treat of Vedic Grammar on the basis of Panini; because, it was this part of his work that had not received an adequate exposition at the hands of his commentators. Panini's contempora-

(1) Vide opening remarks p. 8.

ries no doubt looked upon the Vedas and the Brahmanas as Sacred literature; but they did not go the length of considering them beyond the scope of their interpretation or explanation. Panini indeed speaks even of new Brahmanas. [1] But in the process of time the vedic hymns gradually but steadily grew in sanctity till it came to be considered a sacrilege to subject them to a grammatical investigation. Hence it is that scholiasts of Panini, and especially text-book writers among Hindus generally, have done but scanty justice to his Vedic aphorisms. I would thus claim even more justification for writing the present volume than the first.

In writing the present volume, as well as the first, I have tried to avail myself of the results of the labours of such Oriental Scholars as Professor Whitney and the Rev. Thomas Clark, and I acknowlede my indebtedness to them. But I have profited much more by the suggestiveness of their works than by anything that they actually contained. I have, however, not allowed myself to be dazzled by the new light from the west and be led away from the beaten path of the orthodox school of Panini's interpreters. New departures from traditional lines of treatment will indeed be found in my work; but, it will be observed that such attempts have been made only as occasional digressions, apparently calculated to relieve the inevitable monotony of alternating explanations and illustrations. It is only at the conclusion the reader is called upon to take a general survey of the Paninian system and test its soundness from a historical point of view.

In this book I have endeavoured to reconcile the methods of grammatical investigation favoured by the oriental scholars of the west with the orthodox methods

(1) e. g. पुराणप्रोक्तेषु ब्राह्मणकल्पेषु IV. 3-105

of Indian grammarians, and I have attempted to carry on discussions on modern critical lines in the language of indigenous Vaiyakaranas themselves. Whenever it appeared to me that Panini's nomenclature was deficient [1] or too symbolic and meaningless, [2] I have not hesitated to make use of new terms, directly [3] or indirectly [4] used by Panini himself or earlier grammarians [5], or even to coin new terms myself [6], to translate into Sanskrit the terminology of Western Orientalists.

Even today, hundreds of students in several parts of India commit to memory Panini's *Ashtadhyayi*, and undergo an elaborate course in the *Siddhantakaumudi* with its commentaries, and commentaries on commentaries, making the science of grammar their life-study. Some of these students under this time-honoured system of training attain to a high degree of eminence indeed in the Science of Language. But they confine their labours to *within* the Paninian system and content themselves with making a critical examination of its ground work, engaging in scholastic discussions about its underlying principles, and attempting to discover short-cuts in the process of word-formation propounded by it. If this work of mine can induce such students of the orthodox class to divert their energies in the more useful direction of a historical investigation of Sanskrit grammar, I will most gladly consider that my labours have been amply rewarded.

TRIVANDRUM,
*5th September 1913.*

A. R. Rajaraja Varma.

(1) e. g. आख्यातक for a participle
(2) e. g. भवन्ती, परोक्षा, for लट्, लिट् &c.
(3) e. g. पूरणी for ordinals
(4) e. g. अतिशायन-(ताद्धित) for comparative & superlative degree
(5 e. g. निवृत्तिस्थान for weak Personal endings
(6) e. g. दृढ and शिथिल for strong & weak

# विषयानुक्रमणी





| विषयः | | पृष्ठम् |
|---|---|---|
| **वैदिककाण्डः** | **१-३८** | |
| लोकवेदभेदः | | १—५ |
| भाषोपचयः | | ५—८ |
| संज्ञाप्रकरणं | | ९—१० |
| सन्धि ,, | | १०—१२ |
| प्लुतविधिः | | १३—१५ |
| व्यञ्जनाविकाराः | | १५—१८ |
| सुबन्तप्रकरणं | | १८—२० |
| नामरूपावलिः | | २०—२२ |
| तिङन्तप्रकरणं | | २३—३० |
| आख्यातक ,, | | ३०—३४ |
| कृदन्त ,, ,, | | ३५—३६ |
| तद्धित ,, ,, | | ३७—३८ |
| **स्वरकाण्डः** | **३९—६२** | |
| स्वरस्वरूपम् | | ३९—४१ |
| एकश्रुतिः | | ४२ |
| स्वरविशेषाः | | ४३ |
| स्वरपरिभाषाः | | ४४—४८ |
| अनुबन्धनिबन्धनाः प्रत्ययस्वराः | | ४९,—५० |
| प्रकृतिस्वरः | | ५१ |
| सुप्स्वरः | | ५२—५४ |
| तिङ्स्वरः | | ५४—५६ |
| निपातस्वरः | | ५६—५८ |
| पदस्वरः | | ५९—६१ |
| समासस्वरः | | ६२ |

| विषयः | | पृष्ठम् |
|---|---|---|
| **तन्त्रप्रतिष्ठा** | **६३–७३** | |
| सामान्यविचारः | | ६३—६४ |
| पाणिनीयसिद्धान्तः | | ६५—६६ |
| स्वतन्त्रकल्पनाः | | ६६—६९ |
| लक्षणकरणं | | ६९—७० |
| प्रस्थानचर्चा | | ७१—७३ |
| **भाषाचरित्रं** | **७४–११६** | |
| भूमिका | | ७४—७५ |
| अक्षरसमाम्नायः | | ७५—८१ |
| दार्ढ्यशैथिल्ये | | ८२—८५ |
| विभक्तयः | | ८५—८९ |
| सर्वनामानि | | ८९—९१ |
| आख्यातानि | | ९१—११२ |
| शब्दव्युत्पत्तिः | | ११३—११६ |

॥ श्रीः ॥

# लघुपाणिनीयम् ।

## उत्तरखण्डः ।

## वैदिककाण्डः ।

इह किल काव्यनाटकालङ्कारादिषु व्युत्पन्नोऽपि प्रायो मुह्यति संस्कृताभिज्ञमानी मन्त्रब्राह्मणयोरर्थं व्याख्यातुं प्रवृत्तः । कोऽत्र हेतुः? यद्युभयेऽपि ग्रन्था गैर्वाणीति प्रथितयैकयैव भाषयोपनिबद्धास्तर्ह्येकत्र निष्णातस्यान्ये दुर्बोधा न भवितुमर्हन्ति; यदि पुनरुभयोर्भाषाभेद एवाभ्युपगम्यते तर्हि भूयस्स्वंशेषूभयोरुपलभ्यमानं साधारण्यं न संगच्छेत । अतोऽनुमीयते वस्तुत एकैव भाषा कालादुपचयापचयाभ्यां विकृता भिन्नेव प्रतिभातीति । तत्र प्राचीना दशा वैदिकग्रन्थेषु, इतरा लौकिकग्रन्थेषु चोपलभ्यते । वेदशब्दो मन्त्रब्राह्मणयोर्निरूढः; अतश्चत्वारो वेदास्तेषां ब्राह्मणानि च वैदिकभाषयोपनिबद्धाः; इतरत् सर्वं ग्रन्थजातं लौकिकभाषामयम् । एवञ्च, यथा स्थविरो देवदत्तो बालाद्देवदत्ताद् भिद्यते, तथा लौकिकी वाग्वैदिकीतोऽपि ।

वैदिकी भाषैव व्याकरणव्यवस्थाभिः संस्करणेन संस्कृतव्यपदेशमवापेत्याहुः । अधुना पुनर्वैदिकसंस्कृतमित्यपि यद्व्यवहरामस्तदेरण्डतैलादिवत् प्रकृत्यर्थत्यागेन लक्षणया स्यात् । तिलान्निष्पन्नः स्नेहरसो हि तैलम्; कथं पुनरेरण्डेभ्यस्तिलरसो निष्पद्यते? वैदिकभाषाया बाल्यतुल्या दशा तावत् सर्वाङ्गीणा दृश्यते । तथाहि—

१. **शब्दसमुच्चयः**—वेदे तावल्लोक इव नास्त्येव शब्दसमृद्धिः। वैदिकाः शब्दा नैघण्टवं, नैगमं, दैवतमिति त्रिभिः काण्डैर्यास्केन निरुक्ते समाम्नाताः; लौकिकाश्चामरसिंहेन त्रिकाण्डात्मके नामलिङ्गानुशासने पठिताः। दृश्यते ह्यनयोरजगजयोरिव महदन्तरम्। किञ्च वेदे प्रचुरप्रचारा बहवः शब्दा लोके लुप्ताः; अन्येषां त्वर्थभेदो जातः। यथा—ग्मा=भूमिः; निधा=पाशः; चर्षणिः=जनः। अद्य रेणुपर्यायो रजश्शब्दो वेदे लोकपर्यायो दृश्यते। त्यद्, त्वद्, त्व इति त्रीणि सर्वनामानि वेदमात्रदृष्टानि। असुरसशब्देन देवा उच्यन्ते।

२. **नामानि**—नामपदानां लिङ्गनियमे महच्छैथिल्यमवर्तत। चतुर्थ्यर्थे षष्ठी, षष्ठ्यर्थे चतुर्थीत्यादिभिर्विनिमयैः, सर्वासां स्थाने प्रथमैकवचनप्रयोगैः, प्रत्ययलोपैरन्यैश्चोच्चावचैः सम्प्रदायैर्दुष्कर आसीद्विभक्तीनां निर्णयः। किञ्च नामरूपावलिरेव विलक्षणा वेदेषु। यथा—

| | | | | | | |
|---|---|---|---|---|---|---|
| वृक्षः | वृक्षा | वृक्षासः; | वृक्षं | वृक्षा | वृक्षान्, | |
| वृक्षेण | (वृक्षा) | वृक्षाभ्यां | वृक्षेभिः | | | इत्यादि। |

३. **आख्यातानि**—लकारेषु लेड्वेद एव दृष्टः,। लुङ्वेदे न दृश्यते। लेट् तावद्विलकारोऽपि ङिल्लकाराणां रूपाण्यपि लभते। 'तप्तनप्तनथनाश्च' इति लोटि परस्मैपदमध्यमबहुवचनप्रत्ययोऽतीव दीर्घः। धातूनां नास्त्येव विकरणव्यवस्था। सप्तसु विकरणप्रत्ययेषु एको द्वौ त्रयो वा यथायोगं धातुष्वासज्यन्ते। विकरणान्तरेष्वपि लुक्च्छ्लूविश्लृ-ङ्लृलमुपयुज्येते। सर्वेऽपि धातव उभयपदिन एव। गमयाञ्चकारेत्यादिषु दृष्ट आम्प्रत्ययो वैदिकदशायाश्चरमादनेषु लब्धजन्मापि विरलप्रचार एवासीत्। तदानीं च तस्य लिटीव लकारान्तरेष्वपि प्रयोगोऽन्वमन्यत। यथा 'चिक्रयामकः' 'पावयांक्रियात्' इत्यादि। 'विदांकुर्वन्तु' इत्येको लोट्याम्प्रयोगोऽद्यापि दृश्यते। प्रथमं कृञेवानुप्रायुज्यत, अनन्तरमेव अस्तिभवती अप्युपात्ते। अत एव 'कृञ्चानुप्रयुज्यते लिटि' इति कृञ्धातुमेकं निर्दिशत्याचार्यः। अश्वघोषकालिदासादीनां कालादर्वागेवानुप्रयोग-

धातोरव्यवधानेन प्रयोगे निर्बन्ध आसीदिति अनुप्रयोगविधिप्रकरणे दर्शितम्। लुङ्–लङ्–लृङ्क्षु अडागमविधिरैच्छिक एवावर्तत। भूतकाललकाराणां लुङ्–लङ्–लिटां वर्तमानेऽपि प्रयोगात् कालनियमो व्याकुलीभूतः।

४. **उपसर्गाः**—धातोः प्रागेव प्रयोक्तव्या इत्युपसर्गाणां स्थाननियमो नासीत्। मध्ये बहुभिः पदैरन्तरितास्ते कृच्छ्रादुद्दिष्टेन धातुना योजनीयाः। कदाचित् प्रादिसमासेष्विव उपसर्गदर्शनाद्योग्यक्रियाध्याहार आवश्यको भवति।

५. **निपाताः**—निपातानां तु पुरस्तादुपचाराः (नामभ्यः प्राक् प्रयोक्तव्याः) उपरिष्टादुपचाराः (परत्वेन प्रयोक्तव्याः) इति स्थाननियम आसीत्। तथाहि— नञित्ययं निपातो नाम्नः पूर्वं प्रयुक्त एव निषेधं द्योतयति, परं प्रयुक्तस्तूपमार्थम्। यथा—

"नेन्द्रं देवममंसत"—ऋक्– ८। ३। २९। १

इन्द्रं देवं नामन्यन्तेति निषेधार्थे नञ्।

"हृत्सु पीतासो युध्यन्ते दुर्मदासो न सुरायाम्।
ऊधर्न नग्ना जरन्ते"— ऋक्। ५। ७। १९। १

इन्द्रस्तुतिरूपायामस्यां ऋचि 'सोमा' इति पदं प्रकरणवशादध्याहार्यम्। 'पीतासः' पीताः सोमाः हृत्सु (स्थिताः) सुरायां (पीतायां) 'दुर्मदासो न' दुर्मदाः पुरुषा इव युध्यन्ते। सोमरसेन पीतेन इन्द्रस्य कुक्षिः पूर्ण इति भावः। तादृशमिन्द्रं 'नग्नाः' स्तोतरः 'ऊधर्न' पयसा पूर्णं धेनोरूध इव 'जरन्ते' स्तुवन्ति।

६. **उलूखलाः**—उलूखलानां बालिशत्वमुपर्युद्धृतायामृच्येव स्पष्टम्। उदाहरणान्तराण्यपि दर्शयामः—

"यच्चिद्धि त्वं गृहे गृह उलूखलक युज्यसे।
इह द्युमत्तमं वद जयतामिव दुन्दुभिः"— ऋक् १। २। २५। ५

हे उलूखल त्वं हि 'यच्चित्' यद्यपि गृहे गृहे युज्यसे (धान्यावघातार्थमुपयुज्यसे) (तथापि) त्वं इह (अस्मद्गृहे) जयतां दुन्दुभिरिव (जयभेरीव) द्युमत्तमं वद (गंभीरं शब्दायस्व) इत्युलूखलं प्रति प्रार्थना। मम धान्यपुष्टिर्भूयादिति भावः ।

"वक्ष्यन्ती वेदा गनीगन्ति कर्णं
प्रियं सखायं परिषस्वजाना ।
योषेव शिङ्क्ते वितताधि धन्वं
ज्या इयं समने पारयन्ती "— ऋ ५।१।१९।३।

इयं धनुर्ज्यायाः प्रशस्तिः । इयं ज्या योषेव (कामुकी नारीव) प्रियं सखायं (अर्थात् स्वसखमिषुं) परिषस्वजाना (आलिङ्गन्ती विकरणव्यत्ययाच्छ्लुकि द्वित्वं) इत् (निरर्थको निपातः) वक्ष्यन्तीव (रहस्याख्यायिनीव) कर्णं आगनीगन्ति (कर्णसमीपमागच्छत्याकृष्यमाणा) । (किञ्च) अधिधन्वं (धनुषि) वितता (विस्तृता) शिङ्क्ते (कूजति मणितमिव करोति) समने पारयन्ती (युद्धे जयदानक्षमा इति ज्याया विशेषणम् ) ।

'वसिष्ठो वर्षकामः पर्जन्यं तुष्टाव; तं मण्डूका अन्वमोदन्त; स मण्डूकाननुमोदमानान् दृष्ट्वा' तान् प्रोत्साहयति—

"उपप्रवद मण्डूकि वर्षमावद तादुरि
मध्ये ह्रदस्य प्लवस्व विगृह्य चतुरः पदः"

हे तादुरि (तरणशीले) मण्डूकि, उप (उपगम्य, उपसर्गदर्शनाद्योग्यक्रियाध्याहारः) प्रवद (वर्षपतनार्थमुद्घुष्यस्व;) वर्षं आवद (आवेदय) (अनन्तरं वृष्टे देवे) चतुरः पदो विगृह्य (पादचतुष्टयं प्रसार्य) ह्रदस्य मध्ये प्लवस्व । (यथेच्छं विहरस्व) । बालस्येवाकृतिमरमणीया इमे वाग्विलासा हृदयमावर्जयन्ति ।

एवमविमुक्तशैशवा वैदिकी संस्कृतभाषा व्याकरणयन्त्रणां न सहते । अतः किल लोकवेदयोरनुग्राहकं व्याकरणं प्रणेतुमुद्यतः पाणिनिश्छन्दसि (वेदे) भूयासां विधीनां बाहुलकमाह । तथाच 'बहुलं छन्दसि'

इत्येकादशवारमावृत्य सूत्रितमाचार्येण । व्याख्यातारस्त्वेकमपि पदमुल्लंघ्य 'सर्वे विधयश्छन्दसि वैकल्पिकाः' 'छन्दसि दृष्टानुविधिः' इति सार्वत्रिकीमुशन्त्यव्यवस्थाम् । तथाच वार्तिककारिका—

'सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन' ॥

उपग्रह आत्मनेपदपरस्मैपदविभागः । नरः प्रथमादिपुरुषव्यवस्था; कर्ता कारकं; प्राय इमे व्यत्ययाः प्रारंभ एवास्माभिरुदाहृताः ।

यदत्र वैदिकमित्युक्तं तच्छन्दश्शब्देन, यदत्र लौकिकमित्युक्तं तत् भाषाशब्देन च व्यवहरति पाणिनिः । वयं तावदधुनानना आविशेषितेन भाषाशब्देन पण्डितपामरसाधारणीं देश्यभाषां व्यपदिशामः । यदि संप्रदायस्यास्य पाणिनेर्जीवितकालेऽपि प्रचार आसीत्तर्हि तेषु दिनेषु संस्कृतं माहराष्ट्रीद्रावीडीप्रभृत्यद्यतनजीवद्भाषानिर्विशेषमेव प्राचरदिति वक्तुं शक्यते। किन्तु संभावनामात्रमिदमिति मन्यामहे । तथाहि प्रथमतः, यदिदं समस्क्रियत तत् संस्कृतस्य संस्कृतत्वमित्यवोचाम । संस्काराश्च प्रायः पण्डितमात्रवेद्याः । कथमकृतविद्या भारवाहकादयः पामरा उभयतोभाषोऽयं धातुः ; अतः कर्त्रभिप्राये क्रियाफले, आत्मात्मनेपदं कार्यं, अन्यत्र परस्मैपदमित्यादीनि प्रयोगस्वारस्यानि जानीयुः? ज्ञात्वापि वा कथन्तरां अद्यतनानद्यतनादिषु कालेषूचिततमं निर्णीय सेट्त्वानिट्त्व—पित्त्वङित्त्वादिनिबन्धनैः प्रक्रियाविशेषैर्निष्पादनीयानि लुङादीनां रूपाणि यथावत् प्रयुञ्जीरन्? द्वितीयतः, व्याकरणप्रयोजनविचारप्रस्तावे "अभिवादे स्त्रीवन्मा भूमेत्यध्येयं व्याकरणम्" इत्याह महाभाष्यकारः । अनेन ज्ञायते पतञ्जलेः कालेषु स्त्रियः प्लुतविधावनभिज्ञा अभवन्निति । अतः स्त्रीभिः, सुतरां चाकृतविद्यैः पुरुषैः, शुद्धं संस्कृतं नाभाष्यतेति ज्ञायते । तृतीयतः, नाटककर्तारः कृतविद्यानामपि स्त्रीणां नीचपात्राणां च वचनेषु प्राकृतं प्रयुञ्जते । लिङ्गैरेभिरनुमीयते विद्वद्गोष्ठीष्वेव संस्कृतं प्रचारत्, गृह्यास्तु व्यवहाराः केनापि सर्वजनीनेन भाषान्तरेण निरवर्त्यन्तेति ।

एवं मध्यदेशवासिभिरार्यैः सर्वेषु व्यवहारेषूपयुक्ता वेदेषु परमद्योपलभ्यमाना भाषा संस्करणैरेकतः संस्कृतव्यपदेशं प्रतिपद्य पण्डितैर्विद्याव्यवहारेषु प्रयुज्यमाना पोषमवाप; सैवान्यतः संस्क्रियमाणायामेव दशायामनभिज्ञैः प्राकृतजनैर्ध्वनिसौष्ठवशून्यमुच्चार्य दूष्यमाणा गृह्येषु व्यवहारेषु नित्योपयोगेन लब्धप्रतिष्ठा प्राकृतात्मना परिणता व्यवर्द्धत । न च प्राकृतव्याकर्तुर्वररुचेरत्र मतभेदः शङ्कनीयः । स हि प्रकृतेरागतं प्राकृतमिति व्युत्पत्तिं कृत्वा प्राकृतानां मिथः प्रकृतिविकृतिभावमुद्भावयन् कतिचन प्राकृतानि साक्षादेव संस्कृतादन्यानि प्राकृतान्तरद्वारा च समुत्पन्नानि मन्यते । सत्यं; वररुचेर्न तावद्दूरमभिनिवेशः; संस्कृताभिज्ञान् प्राकृतव्याकरणे व्युत्पादयितुमुद्यतोऽयमधिकार्यनुरोधात् संस्कृतप्राकृतयोर्भेदप्रतिपादनद्वारा प्राकृतं व्याकरोतीत्येव । अत एव प्राधान्यात् प्रथममुपात्ताया माहाराष्ट्र्या विचारणान्ते 'शेषः संस्कृतात्' इति सूत्रितं तेन । प्राकृतशब्दव्युत्पत्तिस्तु प्रकृतौ स्थितं प्राकृतमिति ग्राह्यम् । यथाजातावस्थायामेव स्थितं न तु परिष्कृतमित्यर्थः । एवञ्च प्राकृतशब्देन व्यावहारिकी सर्वजनीना भाषोच्यते ।

अथ पुनः प्राकृतान्यपि सर्वजनीनानां विषयाणां प्रतिपादनाय कविभिर्मतप्रवर्तकाचार्यैश्चोपयुक्तानि वररुचिप्रभृतिभिर्वैयाकरणैर्लम्भितां व्यवस्थामासाद्य संस्कृतवदेव गच्छति काले ग्रान्थिकभाषापदमवापुः । तथा हि * मागधी बौद्धैः परिगृहीता महतीमवाप प्रतिष्ठाम् । माहाराष्ट्रीशौरसेन्यौ तथैव जैनैः परां कोटिमारोपिते । प्रवरसेनः सेतुबन्धं प्रणिनाय । हालो गाथा सप्तशतीं समकलयत् । अद्भुतार्थया बृहत्कथया प्रथां प्राप पैशाची ।

* इयं यौरोपैर्महाशयैः 'पाळी' इति शब्द्यते । कदाचिदयं शब्दः 'नेपाली' इति संस्कृतस्यापभ्रंशः स्यात् । अशोकशासनान्यनया भाषयोपनिबद्धानि, अशोको मगधकोसलयोरधिपतिरासीत्; कोसलेषु नेपालान्तर्गता श्रावस्तिपुरी मूलनगरमासीत्; इत्ययमर्थस्तर्कमिममनुकूलयति । महानामाख्यमहाशयप्रणीतात् महावंशाख्यग्रन्थादेव पाल्या मागधीभेदत्वमवगम्यते ।

अथ प्राकृतेष्वप्येवं विद्याप्रचारार्थकेन विनियोगेन व्यवस्थाप्यमानेषु तेभ्यः प्राकृतान्तराण्युद्भूवन्; य इमेऽपभ्रंशा इत्युच्यन्ते। एवमेकैकस्यापि प्राकृतस्य बहवोऽपभ्रंशा अजायन्त। एतेऽपभ्रंशा एवाद्यतनीनामौत्तराहभाषाणां मातृस्थानं वहन्ति। प्राकृतानां नानात्वे तावद्देशभेदो भाषान्तरसंसर्गश्च हेतुः। इह हि नवान् निवेशदेशानन्विष्य पर्यटन्त आर्यजनाः सङ्घशः सङ्घशः तदा तदागत्य भारतभूमिमध्यवात्सुरिति निर्णितं चरित्रकारैः। तत्र विन्ध्यहिमालययोर्मध्यपातितत्वात् 'मध्यदेश' इति प्रथितमार्यावर्तमधिवसन्तो वर्गाः परिसरभूवासिभ्यः स्ववर्गेभ्यः सर्वथा प्रबलतरा बभूवुः। प्रबलानां व्यावहारिकी भाषैव प्रथमं वैदिकी पश्चात् संस्कृतात्मना परिणता च दृश्यते। प्राकृतानि तु परिसरवासिनामार्याणामेव किञ्चित् किञ्चिद्विलक्षणाभिर्भाषाशाखाभिस्संसृष्टानि कूटस्थाद्दूरविप्रकृष्टानि लक्ष्यन्ते। प्राकृतानां पुनरपभ्रंशा आरभीयवर्नीप्रभृतिविगोत्रभाषाणां संश्लेषेण दूरतरमाविष्कुर्वन्ति विप्रकर्षम्। मध्यदेशभाषाया एव प्राच्योदीच्यादिभेदेन आन्तरालिका विभागा आसन्नित्यप्यनुमीयते। अन्यथा 'तुमर्थेसे—....' इति पाणिन्युक्तरीत्या एकस्य संस्कृते दृष्टस्य तुमुन्प्रत्ययस्य स्थाने वैदिकभाषायां नानाप्रकाराणां प्रत्ययानामुपलब्धिः कथमुपपद्यते? किञ्च संस्कृतेऽपि पाणिनिः प्राचामुदीचां च मतभेदानुपदिशति। अपिच 'सहस्रशाखाः श्रुतयः प्रथन्ते' इति वचनं भाषावलक्षण्यकल्पनामप्यनुकूलयति। मन्त्रद्रष्टृणामृषीणां गोत्रभेदमनुसृत्य तत्तद्दृष्टानां मन्त्राणां नामाख्यातरूपेषु अनुगतं यत् किञ्चिद्वैलक्षण्यमुपलभ्यते वा न वेति परीक्ष्यैवात्र निर्णयः प्रतिपत्तव्यो वर्तते।

योऽयमत्र संस्कार उक्तः, स न पञ्चषैर्वर्षैरपि वा पुरुषायुषैर्निष्पन्नः किन्तु महता परिवर्तेनैव कालस्य। ईदृशा हि विकारा नैकपदे संभवन्ति। अतो वैदिकेष्वेव ग्रन्थेषु दृश्यते विक्रियोन्मुखी समवस्था। तथाहि यावन्त ऋङ्मन्त्रेषु न तावन्तः सन्ति विलक्षणाः प्रयोगा यजुषि; अथ यजुषि यावन्तो न तावन्तो ब्राह्मणेषु। आरण्यकेषूपनिषत्सु च प्रायः संस्कृतप्राया

भाषागतिः । ततश्च संस्कृतेऽपि स्मृतिष्वितिहासेषु च विद्यन्त आर्षसंज्ञिता व्याकरणविरुद्धाः प्रयोगाः । भासाश्वघोषकालिदासप्रभृतयः प्राचीनाः कवयः कदाचिच्छब्दानुशासनमुल्लंघ्य निरङ्कुशं प्रयुञ्जते । कालिदासादर्वाञ्च एव लक्षणैकशरणाः ।

वैदिकभाषायामप्येवं भाविनो विकारस्य प्राग्रूपं पश्यन् पाणिनिः 'उभयथर्क्षु' ( ८ । ३ । ८ ) 'यजुष्युरः' ( ६ । १ । ११७ । ) 'देवसुम्नयोर्यजुषि काठके' ( ७ । ४ । ३८ ) 'यज्ञकर्मण्यजपन्यूङ्खसामसु' ( १ । २ । ३४ ) 'द्वितीया ब्राह्मणे' ( २ । ३ । ६० ) इत्यादिवत् केषाञ्चिद्विधीनां लक्ष्याण्यपि विविच्य निर्दिशति । क्वचित् 'वा षपूर्वस्य निगमे' ( ६ । ४ । ९ ) इति निगमशब्दं, 'मन्त्रे घसंवरणश....' ( २ । ४ । ८० ) इति मन्त्रशब्दं च व्यापकतरं गृह्णाति । प्रायशस्त्वाचार्यश्छन्दश्शब्दमेव प्रयुङ्क्ते । छन्दश्शब्देन च छन्दोनिबद्धो मन्त्र एव विवक्षित इति नियमो न कृतः । 'छन्दसि पुनर्वस्वोरेकवचनं (अन्यतरस्यां)' (१ । २ । ६१) इति सूत्रेण विहितं ह्येकवचनं 'पुनर्वसुर्नक्षत्रमदितिर्देवता' इति छन्दोहीने यजुषि दृश्यते । अतः 'छन्दसी' ति पदं वैदिकभाषासामान्यवाचकं, इतराणि तु विशेषवाचकानीति बोध्यं । निगमशब्दोऽप्यर्थस्वारस्यात् सामान्यवाचक एव स्यात् ; किन्तु स त्रिचतुरेष्वेव सूत्रेषूपात्तः । 'सम्बुद्धौ शाकल्यस्येतावनार्षे'( १ । १ । १६)इत्यार्षशब्दोऽप्येकत्र सूत्रे छन्दःपर्यायो दृष्टः । भाष्यकारोऽपि भाषाशास्त्रदृष्ट्या वेदेष्वस्त्येव प्राचीनतातारतम्यमिति मन्यते । यदाह प्रारम्भ एव—"अथ शब्दानुशासनं । ....केषां शब्दानां ? लौकिकानां वैदिकानां च । तत्र लौकिकास्तावत्गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इति । वैदिकाः खल्वपि—'शन्नो देवीरभिष्टये' (अथर्वा) 'इषेत्वोर्ज्जेत्वा' (यजुः) 'अग्निमीळे पुरोहितं' (ऋक् )'अग्न आयाहि वीतये' (साम)" इति । अत्र वेदानां निर्देशे अभ्यर्हितत्वनिबन्धनं क्रममुत्सृज्य अथर्वादिसामान्तं परिगणनमर्वाचीनताक्रमानुरोधादेवेति स्पष्टम् । लौकिकाः शब्दा अद्यतनाः ; ततः प्राचीना अथ-

वेदेषु दृष्टाः, ततोऽपि यजुषि, ततश्च ऋचि, सामसु प्राचीनतमा इति । एतेन वेदानामनादित्वस्यापौरुषेयत्वस्य वा न क्षतिः । अकर्तृकत्वं नामाज्ञातकर्तृकत्वमित्येव तार्किको ब्रूयात् । ब्रह्मणो मुखाद् ब्राह्मणैरधिगता श्रुतिरिति वादस्तु युक्त्यसहत्वादर्थवादमात्रमिति वेदान्तिनोऽपि सम्मन्येरन् । अत ईदृशेषु विचारेषु आस्तिक्यभङ्गो न शङ्कनीयः । किञ्चिद्दीर्घोऽप्ययमुपोद्घातो लौकिकवैदिकभेदस्यावधारणार्थमुपकरिष्यति ।

अथ लौकिकप्रक्रियायामुपात्तैरेव प्रकरणैर्विभज्य छान्दसानि सामान्यसूत्राणि, यथाप्राधान्यं विशेषसूत्राणि च व्याख्यास्यामः । —तत्र प्रथमम्

## संज्ञाप्रकरणम् ।

लोकवेदसाधारणमेव संज्ञापरिभाषं कृतमाचार्येण । तथापि कासाञ्चित् संज्ञानां छन्दसि विषयस्य संकोचो विकासो वोपदिष्टः । सोऽत्र निर्दिश्यते । घिसंज्ञाविधौ 'पतिः समास एव' (१८) इति नियममुपदिश्य

### (१७६६) षष्ठीयुक्तश्छन्दसि वा । १ । ४ । ९ ।

समासाभावेऽपि षष्ठ्यन्तेन युक्तः पतिशब्दः छन्दसि वा घिसंज्ञः स्यात् ।

क्षेत्रस्य पतिना वयम्

उदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुपशेष एहि ।

हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभिसम्बभूथ । ऋक्-सू-१०-१८-८

'सीतायाः पतये नमः' ।

इति लोकेऽपि प्रयोगश्छान्दसानुकरणं स्यात् ।

अथ भपदसंज्ञाविधौ—

### (१७६७) अयस्मयादीनि च्छन्दसि । १ । ४ । २० ।

॥ * ॥ उभयसंज्ञान्यपीति वक्तव्यम् ॥

अयस्मयादयः शब्दा भसंज्ञाकार्यं पदसंज्ञाकार्यं च लभेरन्निन्यर्थः । अयस्मयम् इत्यत्र भसंज्ञया न रुत्वम् । यथा—

अयस्मयानि पात्राणि । न सुष्टुभास ऋक्कता गणेन ।

उत्तरोदाहरणे ऋक्वता इत्यत्र पदत्वात् कुत्वं, भत्वात् न जश्त्वम् । एवमन्यत्रापि भकार्याणि पदकार्याणि च युगपद्व्यत्ययेन वा द्रष्टव्यानि ।

उपसर्गाः क्रियायोगे ( १३४ ) गतिश्च ( १३४ ) इत्यतः परम्

**(१७६८) ते प्राग्धातोः । १ । ४ । ८० ।**

**(१७६९) छन्दसि परेऽपि । १ । ४ । ८१ ।**

**(१७७०) व्यवहिताश्च । १ । ४ । ८२ ।**

उपसर्गा लोके धातोः प्रागेव प्रयोक्तव्याः; छन्दसि तु न कोऽपि स्थाननियमः । यथा—

हान्ति नि मुष्टिना—निहान्ति ।

आ मन्द्रैरिन्द्र हारिभिर्याहि मयूररोमाभिः—आयाहि

---

## सन्धिप्रकरणम् ।

प्रथमयोः पूर्वसवर्णनिषेधो

**(१७७१) वाच्छन्दसि । ६ । १ । १०६ ।**

दीर्घाज्जसीचि च निषिद्धः पूर्वसवर्णदीर्घः छन्दसि वा । यथा—

मानुषीरीळते विशः—मानुष्य इत्यर्थः ।

उशतीरिव मातरः—उशत्यः ।

एङः पदान्तादति (९९) इति पूर्वरूपविधिप्रस्तावे—

**(१७७२) प्रकृत्यान्तःपादमव्यपरे । ६ । १ । ११५ ।**

एङः पदान्तादित्येतदन्वयानुरोधात् एङ् पदान्त इति प्रथमया विपरिणम्यते । पदान्त एङ् अति परे प्रकृत्या स्यात् । स चेदत् वकारयकारपरो न भवति । पादस्यान्तः अन्तःपादम् । ऋक्पाद एव विवक्षितः । यथा—

ते अग्ने अश्वमायुञ्जन् । ते अस्मिञ्जवमादधुः । उपप्रयन्तो अध्वरम् ।
प्रत्यु— (अव्यपरे किम् ?) तेऽवदन् । तेऽयस्मयम् ।
(अन्तःपादं किम् ?) कया मती कुत एतास एतेऽर्चन्ति ।

'अव्यपर' इति निषेधस्य निषेधमाह—

**(१७७३) अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च** । ६ । १ । ११६ ।

अव्यात्, अवद्यात्, अवक्रमुः, अव्रत, अयम्, अवन्तु, अवस्यु, इत्येतेषु परेष्वपि अन्तःपादमेङ् प्रकृत्या । यथा—

अग्निः प्रथमो वसुभिर्नो अव्यात् । मित्रमहो अवद्यात् । मा शिवासो अवक्रमुः । ते नो अव्रताः । शतधारो अयं मणिः । ते नो अवन्तु पितरः । कुशिकासो अवस्यवः ।

यजुषि पादानामभावा-दप्राप्तं विदधाति ।

**(१७७४) यजुष्युरः** । ६ । १ । ११७ ।  उरो अन्तरिक्षम् ।

**(१७७५) आपो-जुषाणो-वृष्णो-वर्षिष्ठेऽम्बेऽम्बालेऽम्बिके पूर्वे** । ६ । १ । ११८ ।

यथा— आपो अस्मान्मातरः शुन्धयन्तु ।
जुषाणो अप्तुरज्यस्य । वृष्णो अंशुभ्यां गभस्तिभिः ।
वर्षिष्ठे अधि नाके । अम्बे अम्बाले अम्बिके ।

उदाहरणेष्वन्तिमं तथैव यजुषि स्थितम् । 'अम्बार्थनद्यो'- रिति ह्रस्वो बाहुलकाच्छन्दसि न भवति । अम्बादयः शब्दा द्राविडीत उपात्ताः स्युरिति संभावनामयं प्रयोगः स्थिरयति । यजुषि भाषान्तरतः प्रातिपदिकमात्रमुपात्तम् । लोके तु संबुद्धिरूपमप्यनुकृतं भवितुमर्हति । द्राविड्यां हि 'अम्म' 'अक्क' 'अल्ल' (?) इत्येव हि सम्बुद्धिः । 'अम्माळ्' (அம்மாள்) इति द्राविडं पदं 'अम्बाला' इति, 'अक्काळ्' (அக்காள்) इत्येतत् 'अक्काला' इति च संस्कृतीकृतं प्रतिभाति । यास्केनैतानि पदानि न निरुक्तानि ।

**(१७७६) अंग इत्यादौ च** । ३ । १ । ११९ ।

यथा—ऐन्द्रः प्राणो अङ्गे अङ्गे आदीध्यत् ।

**(१७७७) अनुदात्ते च कुधपरे** । ६ । १ । १२० ।

अनुदात्ते कवर्गधकारपरे चाति एङ् प्रकृत्या स्यात् यजुषि । यथा—
अयं सो अग्निः । अयं सो अध्वरः ।

**(१७७८) अवपथासि च** । ६ । १ । १२१ । यथा—

त्रि रुद्रेभ्यो अवपथाः ।

अनेन प्रकरणेन प्रश्लेषसन्धिर्लोके सार्वत्रिको यजुषि प्रायिक ऋक्संहितायां विरळश्चासीदिति ज्ञायते । एतत्प्रदर्शनार्थमेवाव्यापकमपि सूत्रपञ्चकमत्रोपात्तम् ।

**(१७७९) इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च** । ६ । १ । १२० ।

असवर्णेऽचि परे पदान्ता इकः प्रकृत्या स्युस्तेषां दीर्घत्वे ह्रस्वश्च इति शाकल्यस्य मतं निर्दिशत्याचार्यः । अस्योदाहरणानि लोके न दृष्टानीति छन्दसीदं व्याख्यातमस्माभिः । यथा—

चक्री + अत्र = चक्रि अत्र, चक्र्यत्र ।

शाकल्याभिमतः प्रकृतिभावोऽयं 'इको यणचि' इति सन्धेः कृत्स्नं विषयं व्याप्नोति । 'एचोऽयवायावः' इति सन्धौ च यवयोर्लोपमिच्छति शाकल्यः । स एव लोपो रोर्यादेशस्य च भवति । प्रश्लेषसन्धिरृक्संहितायां विरल इति पूर्वमेव प्रतिपादितम् । एवञ्च अव्याकृते प्राचीनसंस्कृते व्यञ्जनयोरिव स्वरयोरपि संयोगः सुलभ आसीदिति स्फुटमनुमीयते । प्रातिशाख्येषु एचां सन्ध्यक्षरत्वकीर्तनं, तदानुगुण्येन 'आद् गुणः,' 'वृद्धिरेचि' इति एकादेशसन्धिविधिः, एकतः प्राकृतेषु अन्यतः लेतिन-ग्रीकाप्रभृतिषु सगोत्रभाषान्तरेषु च स्वरयोर्योगदर्शनं, चालनीपर्याये तितउशब्दे सन्ध्यभावसद्भावश्चानुमानमिदं द्रढयति । ऋक्षु 'व्याप्तिः' 'स्वस्ति' इत्यादौ 'वियाप्तिः' 'सुवस्ति' इति स्वरभक्तिप्रयोगो दृश्यते; पाणिनिश्च पदमध्ये 'अचि श्नुधातुभ्रुवाम् ........' इति इयङुवङौ विदधाति; पदान्तेऽपि आदिवृद्धिप्रयोगे 'न य्वाभ्यां पदान्ताभ्यां.......' इत्युक्तरीत्या यणादेशस्थाने इयङुवङावेव फलतः; 'व्योर्लघुप्रयत्नतरं' आह शाकटायनः; इत्यादीनां अर्थानां स्वारस्ये पर्यालोच्यमाने अद्य संस्कृते सनिर्बन्धमनुष्ठीयमानस्य भाषान्तरविलक्षणस्य सन्धिदार्ढ्यस्य प्रागवस्था प्रत्यक्षीभवति । प्रथमं—'स्त्री + एति = स्त्रिएति' इति ह्रस्वसमुच्चितं शाकल्योक्तं प्रकृत्यावस्थानं; ततः 'स्त्रीयेति' इति शाकटायनीयलघुप्रयत्नतरमध्यमागमः; पश्चात

'स्त्रीयेति' इति स्फुटस्यैव यकारस्यागमः; अन्ते च 'स्त्र्येति' इति इकारस्य यादेश इति । एकस्वरघटिते पदे स्वरस्य विकारेण पदस्य रूपहानिराप-द्यत इति यणादेशस्थाने यणागमकरणमद्यापि विरलतया दृश्यते । तथा-हि 'त्रियम्बकं संयमिनं ददर्श' इति कालिदासः । 'भूवादि'-रित्येव प्रथमं धातुगणं व्यपदिशत्याचार्यः ।

दीर्घाणामेवायं प्रकृतिभाव इति केचिद्व्याचक्षते ।

॥*॥ **न समासे** ॥ इति समास एनं निषेधति कात्यायनः ।

## प्लुतविधिः ।

**(१७८०) वाक्यस्य टेः प्लुत उदात्तः** । ८ । २ । ८२ । इत्यधिकृत्य ।

**(१७८१) प्रत्यभिवादेऽशूद्रे** । ८ । २ । ८३ ।

अभिवादितेन गुरुणा प्रयुक्ता आशीः प्रत्यभिवादः; तत्र प्रयुक्तस्य अशूद्रविषयकस्य वाक्यस्य टेः प्लुतः स्यात् । स चोदात्तः । यथा—

आयुष्मानेधि देवदत्त३ ।

(शूद्रविषये तु) आयुष्मानेधि तुषजक ।

॥*॥ **स्त्रियामपि प्रतिषेधो वाच्यः** ॥ आयुष्मती भव गार्गि ।

॥*॥ **भो राजन्यविशां वा** ॥

आयुष्मानेधि देवदत्त भो३ः,-भोः - आयुष्मानेधीन्द्रवर्म३न्,--र्मन् ।

आयुष्मानेधीन्द्रपालित३,--त ।

**(१७८२) दूराद्धूते च** । ८ । २ । ८४ ।

दूरात्सम्बोधने वाक्यस्य टेः प्लुत उदात्तः । यथा—

आगच्छ भो माणवक३ ।

**(१७८३) हैहेप्रयोगे हैहयोः** । ८ । २ । ८५ ।

अनयोर्निपातयोः प्रयोगे अनयोरेव प्लुतो न तु वाक्यान्तगतसम्बुद्धेः । यथा—

हे३ देवदत्त; देवदत्त हे३ ।

**(१७८४) गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् । ८ । २ । ८६ ।**

प्राचां मते प्रत्यभिवादादौ अनन्त्यस्याप्यृकारवर्जितस्य गुरोरचः पर्यायेण प्लुतः । यथा—

दे ३ वदत्त; देवद ३ त्त; देवदत्त ३ ।

इह प्राचां इति योगं विभज्य सर्वमिदं प्राचां मत एवेत्यर्थं कृत्वा कृत्स्नं प्लुतविधिं विकल्पयन्ति व्याख्यातारः । अनेनार्वाचीनसंस्कृते प्लुतो लुप्त इति ज्ञायते ।

**(१७८५) ओमभ्यादाने । ८ । २ । ८७ ।**

मन्त्रस्यादौ प्रयुक्तः प्रणवः प्लवते । यथा— ओ३म् अग्निमीळे पुरोहितम् ।

**(१७८६) ये यज्ञकर्मणि । ८ । २ ८८ ।**

ये३ यजामहे ।

**(१७८७) प्रणवष्टेः । ८ । २ । ८९ ।**

यज्ञकर्मणि ऋचां पादानां टेः प्रणव आदेशः । यथा—

अपां रेतांसि जिन्वतो३म् । (स्वाध्याये तु) अपां रेतांसि जिन्वति । इत्येव ।

**(१७८८) याज्यान्तः । ८ । २ । ९०**

याज्यमन्त्राणामन्तः प्लवेत । यथा— स्तोमैर्विधेमाग्नये ३ ।

इतः परं पञ्चदश सूत्राणि प्लुतविधायकान्येवंप्रायाणीति ग्रन्थविस्तरभयादुपेक्ष्यन्ते ।

**(१७८९) प्लुतावैच इदुतौ । ८ । २ । १०६ ।**

ऐदौतोः प्लुतप्रसक्तौ तदवयवयोरिदुतोरेव प्लुतः कार्यः । ऐ=आ+इ; औ=आ+उ । यथा—ऐतिकायन इत्यस्य प्लुतौ

अ इ ३ तिकायन । औपगव ,, ,, अ उ३ पगव ।

**(१७९०) एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्यादुत्तरस्येदुतौ । ८ । २ । १०७ ।**

अप्रगृह्यस्य एचः अदूराद्धूतविषये प्लुते अवयवविभागं कृत्वा पूर्वार्द्धभूतस्य अकारस्य प्लुतं कुर्यात् । उत्तरार्द्धे तु इदुदात्मना अवतिष्ठेताम् । ऐचो विशेषविधानात् एङ एवायं फलति ।

॥ * ॥ **प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्विति परिगणनं कर्तव्यम् ॥**

प्रत्यभिवादे — आयुष्मानेधि अग्निभूत३इ (अग्निभूते)

'है' 'हे' इत्यनयोरुक्तस्य प्लुतस्य प्रयोगे नायं विधिः । अदूराद्धूत' इति निषेधात्, परिगणनाच्च ।

(१७९१) **तयोर्य्वावचि संहितायाम्** । ८ । २ । १०८ ।

तयोरिदुतोर्यकारवकारादेशौ स्यातामचि परे संहितायां विषये । तयोरित्यनेन एदोतौर्विश्लेषणादुत्पन्नाविदुतौ गृह्येते । यथा—

अग्ने+आशा=अग्न३याशा । पटो+आशा=पट३वाशा ।

एवमेचां सन्ध्यक्षरत्वं कण्ठत उक्तमाचार्येण; तत्र एङि अकारांशस्य प्रधान्यं; ऐचि तु इदुदंशस्य । प्लुतिश्च प्रधानांशस्यैव; अत एचां प्लुतस्य चतस्रो मात्राः सम्भवन्ति । स्वरद्वयघटितत्वादेव तेषां न ह्रस्वः; प्लुतोऽपि सामान्यरीत्या असम्भवन्नंशमादाय क्रियते; दीर्घ एव तेषां स्वभावः । प्राकृतेषु ह्रस्वोऽपि दृश्यते । अतो ज्ञायते सन्ध्यक्षराणां एकतया प्रतीतिः क्रमोपचितेति ।

अथासिद्धकाण्डगता व्यञ्जनविकाराः—

(१७९२) **छन्दसीरः** । ८ । २ । १५ ।

'मादुपधयाश्च मतोर्वोऽयवादिभ्यः' (१४७४) इति प्रकरणस्थमिदं सूत्रम् । छन्दसि इवर्णान्ताद्रेफान्ताच्च मतोर्वत्वं भवति । यथा—

हरिवो मेदिनं त्वा । दधीवांश्चरुः । गीर्वान् । धूर्वान् । आशीर्वान् ।

(१७९३) **अनो नुट्** । ८ । २ । १६ ।

अन्नन्तात् परस्य मतोर्नुडागमः । तेन अन्नन्तानां मतुपि नलोपाभावः फलति । यथा—

अक्षण्वन्तः कर्णवन्तः सखायः ।—अक्षिमन्तः ।

अस्थिदधिसक्थ्यक्ष्णामनङ् अतृतीयादिष्वपि 'छन्दस्यपि दृश्यते' इत्यनेन ।

अस्थन्वन्तं यदनस्था बिभर्ति—अस्थिमन्तम् ।

**(१७९४) नाद् घस्य । ८ । २ । १७ ।**

नकारान्तात्तरप्तमपोर्नुडागमः । यथा—सुपथिन्तरः दस्युहन्तमः ।

'ससजुषो रुः' इति प्रकरणे—

**(१७९५) अम्नरूधरवरित्युभयथा छन्दसि । ८ । २ । ७० ।**

अम्नस् , ऊधस अवस् इत्येषां छन्दसि रुर्वा रेफो वा भवेत् । यथा— अम्नरेव, अम्न एव । ऊधरेव, ऊध एव । इत्यादि ।

**(१७९६) भुवश्च महाव्याहृतेः । ८ । २ । ७१ ।** यथा- भुवरित्यन्तरिक्षं, भुव इत्यन्तारिक्षम् ।

'नश्छव्यप्रशान् (७८)' इत्यतः परं

**(१७९७) उभयथर्क्षु । ८ । ३ । ८ ।**

नान्तस्य पदस्य अम्परे छवि रुत्वं ऋचि विकल्पेनैव । यथा— तस्मिंस्त्वा दधाति । तस्मिन् त्वा दधाति ।

**(१७९८) दीर्घादटि समानपादे । ८ । ३ । ९ ।**

दीर्घात् परस्य पदान्तस्य नस्य अटि परे रुत्वम् । निमित्तनिमित्तिनौ चेदेकस्मिन्नेव ऋक्पादे भवतः ।

यथा—महाँ इन्द्रो य ओजसा--महानिन्द्रः ।

'अत्रानुनासिकः पूर्वस्य तु वा (७९)' इत्यादिप्रक्रियात्रानुसन्धेया । रोर्यत्वे कृते लोपः ।

परिधीँ रति=परिधीनति ।

अत्र रोरकारपूर्वत्वाभावान्न यत्वम् । अतश्च 'रति' इति रस्य श्रवणम् । एवं 'सूनूँ- युवन्यूँ- रुत्' इत्यादावपि इकारोकारपूर्वो रुः श्रूयत एव ।

**(१७९९) नॄन् पे । ८ । ३ । १० ।**

'नॄन्' इत्यस्य पकारे परे रुः स्यात् । नकारस्य रुत्वे विसर्गोपध्मानीयौ । तस्मात् पूर्वस्यानुनासिकानुस्वारौ एवं चत्वारि रूपाणि । नॄंः पाहि, नॄँः पहि इत्यादि ।

**(१८००) स्वतवान् पायौ । ८ । ३ । ११ ।**

पूर्ववद्रो रूपचतुष्टयम् । यथा— भुवस्तस्य स्वतवाँः पायुरग्ने ।

**(१८०१) हे मपरे वा (मः) । ८ । ३ । २६ ।**

**(१८०२) नपरे नः । ८ । ३ । २७ ।**

मपरे हकारे परे मस्य म एव, नपरे नकारश्च, वा स्यात् । यथा—

किम् ह्मलयति, किं ह्मलयति । किन् ह्नुते, किं ह्नुते ।

॥ * ॥ **यवलपरे यवला वा** ॥ यथा—

कियँह्यः, किंह्यः । किवँह्वलयति, किंह्वलयति ।

किलँह्लादयति, किंह्लादयति ।

(१८०३) **ङ्णोः कुक्टुक् शरि** । ८ । ३ । २८ ।

पदान्तयोर्ङकारणकारयोः कुक्टुकावागमौ वा शरि । यथा--

प्राङ्क्षष्ठः, प्राङ्षष्ठः । सुगण्ट् षष्ठः, सुगण्षष्ठः ।

(१८०४) **डः सि धुट्** । ८ । ३ । २९ ।

(१८०५) **नश्च** । ८ । ३ । ३० ।

पदान्तात् डकारात् नकाराच्च परस्य सस्य धुडागमः ।—यथा— षट्त्सन्तः, षट्सन्तः । सन्त्सर्वः, सन्सर्वः ।

विसर्जनीयस्य सत्वविधौ—

(१८०६) **छन्दसि वाप्राम्रेडितयोः** । ८ । ३ । ४९ ।

विसर्गस्य सादेशः कुप्वोः, प्रशब्दे आम्रेडिते च न ।

यथा—उरुणःकारुः, उरुणस्कारुः । अयःपात्रं, अयस्पात्रम् ।

(१८०७) **कःकरत्करतिकृधिकृतेष्वनदितेः** । ८ । ३ । ५० ।

एषु परेषु विसर्गस्य सः, नत्वदितिशब्दगतस्य । यथा—

विश्वतस्कः, विश्वतस्करत् । पयस्करति । उरुणस्कृधि इत्यादि ।

(१८०८) **पञ्चम्याः परावध्यर्थे** । ८ । ३ । ५१ ।

पञ्चमीविसर्गस्य सः अध्यर्थके परिशब्दे परे । यथा—दिवस्परि प्रथमं जज्ञे । अग्निर्हिमवतस्परि ।

(१८०९) **पातौ च बहुलम्** । ८ । ३ । ५२ ।

'पातु' इत्यस्मिन् परे विसर्गस्य बहुलं सत्वम् । यथा--

दिवस्पातु । राजस्पातु । परिषदः पातु ।

(१८१०) **षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु** । ८ । ३ । ५३ ।

वाचस्पतिं विश्वकर्माणमूतये । दिवस्पुत्राय सूर्याय । इत्यादि । षत्वविधौ—

(१८११) **युष्मत्ततक्षुष्वन्तःपादम्** । ८ । ३ । १०३ ।

युष्मदादेशाः, तद् ततक्षुस् एतेषु तकारादिषु परेषु इण्कोः परस्य सस्य षः, स चेत्सकार ऋक्पादमध्ये भवति । यथा—

अग्निष्टं नामासीत् । अग्निष्टे पतिः ।
अग्निष्टद्विश्वमावृणाति । द्यावापृथिवी निष्टतक्षुः ।

(१८१५) **यजुष्येकेषाम्** । ८ । ३ । १०४

पूर्वोक्तं यजुष्यपि केचिदिच्छन्ति । यथा—

अर्चिर्भिष्ट्वम्, अर्चिर्भिस्त्वम् ।

(१८१३) **पूर्वपदात्** । ९ । ३ । १०६ ।

छन्दसि पूर्वपदस्थान्निमित्तात् परस्य सस्य वा षः । यथा—

द्विषन्धिः । त्रिषन्धिः । मधुष्ठानम् । आपोहिष्ठा ।
युवं हि स्तः स्वर्पती ।

णत्वविधौ—

(१८१४) **छन्दस्यृदवग्रहात्** । ८ । ४ । २६ ।

अवग्रहो नाम समस्तपदानां पृथक्कृत्य पाठः । तद्विषये पूर्वपदस्थात् ऋतः परस्य नस्य णः । यथा— नृमणाः । पितृयाणम् ।

## सुबन्तप्रकरणम् ।

'एङ्ह्रस्वात् संबुद्धेः (२२४) इति लोपप्रस्तावे-

(१८१९) **शेश्छन्दसि बहुलम्** । ६ । १ । ७० ।

जश्शसोरादेशस्य शेर्बहुलं लोपः । यथा—

या क्षेत्रा । या वना ।—यानि क्षेत्राणि, यानि वनानि ।

शौ लुप्ते प्रत्ययलक्षणेन त्यदाद्यत्वं, पररूपं, 'नपुंसकस्य झलचः' इति नुम्, 'सर्वनामस्थाने चासंबुद्धा'विति दीर्घः, 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः—या इति रूपं सिध्यति ।

'एतत्तदोः सुलोपः....' (३२७)—

(१८१६) **स्यश्छन्दसि बहुलम्** । ६ । १ । ११३ ।

'स्यः' इति त्यच्छब्दप्रथमैकवचनस्य सुलोपो बहुलं हलि । यथा—

एष स्य वाजी क्षिपणिं तुरण्यति । यत्र स्यो निपपेत् ।

(१८१७) मन्त्रेष्वाङ्यादेरात्मनः(लोपः) । ६ । ४ । १४१ ।

टाविभक्तौ आत्मन्शब्दस्य आदिलोपः । यथा—

त्मना देवेभ्यः । त्मना सोमेषु । आत्मना ।

॥ * ॥ आङोऽन्यत्रापि लोपः ॥ त्मन्यासमञ्जत मद्यम् ।

'अतो सिस ऐस्' (२०४)

(१८१८) बहुलं छन्दसि । ७ । १ । १० । यथा—

अग्निर्देवेभिः । बाहुलकादनतोऽपि नद्यैरिति ।

(१८१९) सुपां सुलुक्पूर्वसवर्णाछेयाडाड्यायाजालः । ७ । १ । ३९ ।

सुपामेते आदेशाः प्रयोगानुसारेण द्रष्टव्याः । प्रयोगबाहुल्यानुसारेणोदह्रियन्ते—

सु—अनृक्षरा ऋजवस्सन्तु पन्थाः—पन्थान इति जसः सुः ।

लुक्—परमे व्योमन्—व्योम्नीति ङेर्लुक् ।

पूर्वसवर्णः—धीती मती सुष्टुती । धीत्या इत्यादेष्टाप्रत्ययस्य पूर्वसवर्णः ।

आत्—न ताद् ब्राह्मणान्निन्दामि—तान् इति शस आत् ।

शे-न युष्मे वाजबन्धवः । अस्मे इन्द्रा बृहस्पती युष्मास्वस्मभ्यामिति सुभ्यसोः शे ।

या—उरुया, धृष्णुया—उरुणा धृष्णुना—इति टाप्रत्ययस्य या ।

डा—नाभा पृथिव्यां—नाभाविति ङेर्डा

ड्या—अनुष्टया च्यावयतात्—अनुष्टुभेति टाप्रत्ययस्य ड्या ।

याच्—साधुया—साध्विति सोर्याच् ।

आल्—वसन्ता यजेत—वसन्ते इति ङेराल् ।

॥ * ॥ इयाडियाजीकाराणामुपसंख्यानम् ॥

यथा—इया—उर्विया परिधानं—उरुणेति टाप्रत्ययस्य ।

डियाच्—सुक्षेत्रिया, सुगात्रिया—,, ,,

ई—दृतिं न शुष्कं सरसी शयानं—सरसीति ङेः ।

॥ * ॥ सुपां सुपस्तिङां तिङ इति वक्तव्यम् ॥

सुपां तिङां च व्यत्ययो द्रष्टव्य इत्यर्थः । यथा—

धुरि दक्षिणायाः—दाक्षिणायामिति सप्तम्याः षष्ठी ।

चषालं ये अश्वयूपाय तक्षति—तक्षन्तीति वचनस्य व्यत्ययः ।

अत्र शेइत्यादेशः सप्तम्या लुकि ईदूदन्तौ च प्रगृह्यौ तथा हि—

(१८२०) शे । १ । १ । १३ ।

शेइत्ययमादेशः प्रगृह्यः स्यात् । यथा–

अस्मे इन्द्राबृहस्पती ।

(१८२१) ईदूतौ च सप्तम्यर्थे । १ । १ । १९ ।

सप्तम्यर्थे वर्तमानमीदूदन्तं च प्रगृह्यम् । यथा–

सोमो गौरी अधिश्रितः ।–गौर्यामित्यर्थः ।

(१८२२) आज्जसेरसुक् । ७ । १ । ५० ।

जसिर्जस् । तस्य अवर्णान्तादङ्गात् परस्यासुगागमः । यथा–

ब्राह्मणासः पितरः सोम्यासः ।—ब्राह्मणाः सोम्याः ।

आमि—'ह्रस्वनद्यापो नुट् (२४६ '—

(१८२३) श्रीग्रामण्योश्छन्दसि । ७ । १ । ५६ ।

(१८५४) गोः पादान्ते । ७ । १ । ५७ । यथा—

श्रीणामुदारो धरुणो रयीणां—सूत्रग्रामणीनाम् ।
विद्मा हि त्वा सत्पतिं शूरगोनाम् ।

## नामरूपावलिः ।

[अत्र वलयान्तर्न्यस्तानि रूपाणि विरलप्रयोगाणि]

अकारान्तः पुल्लिङ्गो यज्ञशब्दः

| | ए | द्वि. | बहु. |
|---|---|---|---|
| प्र. | यज्ञः......यज्ञा | (यज्ञौ) | यज्ञासः (यज्ञाः) |
| द्वि. | यज्ञम् | ,, ,, | यज्ञान् |
| तृ- | यज्ञेन (यज्ञेना-यज्ञा) | यज्ञाभ्यां | यज्ञेभिः (यज्ञैः) |
| च. | यज्ञाय ........ | ,, | यज्ञेभ्यः |
| प. | यज्ञात् ....... | ,, | ,, |
| ष. | यज्ञस्य ........ | यज्ञयोः ........ | यज्ञानां |
| स. | यज्ञे ........ | ,, | यज्ञेषु । |

यज्ञेना इति सांहितो दीर्घ एव । यज्ञा इत्यत्र टाप्रत्ययस्य आदादेशः, सवर्णदीर्घो वा ।

---

क्लीबे वनशब्दः

| | | | |
|---|---|---|---|
| प्र— | वनं | वने | वना (वनानि) |

पुनस्तद्वत्, शेषं पुंवत् ।

इकारान्तः

| | पुं—ए. | स्त्री—ए. | क्ली—बहु |
|---|---|---|---|
| तृ— | अग्निना (अग्नचा) | ——— | प्र, द्वि } वारी । |
| च— | ——— | ऊतये (ऊती) | |
| स— | अग्नौ (अग्ना) | ऊतौ (ऊती) | |

शेषं संस्कृतवत् । उकारान्तोऽप्येवमेव । तत्र ङौ 'सानवि' इति केवलो गुणोऽपि क्वचिद्दृश्यते ।

---

अकारान्तस्त्रीलिङ्गः—

| | | | |
|---|---|---|---|
| प्र— | मनीषा | मनीषे | मनीषाः (मनीषासः) |
| तृ— | मनीषया (मनीषा) | | |

शेषं संस्कृतवत् ।

ईकारान्तः स्त्रीलिङ्गः—

| | | | |
|---|---|---|---|
| प्र— | गौरी | गौरी (गौर्यौ) | गौरीः (गौर्यः) |
| द्वि— | गौरीं | ,, ,, | गौरीः |
| तृ— | गौर्या (गौरी) | गौरीभ्यां | गौरीभिः |
| च— | गौर्यै | ,, | गौरीभ्यः |
| प— | गौर्याः | ,, | ,, |
| ष— | ,, | गौर्योः | गौरीणां |
| स— | गौरी (गौर्यां) | ,, | गौरीषु । |

ऋचि ईकारान्तषष्ठीपञ्चम्येकवचनान्तानि विरळानि । ब्राह्मणेषु एतत्स्थाने चतुर्थ्येकवचनमेव दृश्यते । यथा— स्त्रियै पयः (ऐत. ब्रा ।) ऊदन्तानि ईदन्तवदेव । ऋकारान्तेषु औङि पितरा इति रूपमेव विशेषः ।

क्वचित् 'पितरां' 'स्वस्त्रां' इति आमि नुडभावश्च दृश्यते । हलन्तेषु विरळानि वैलक्षण्यानि; तानि च सामान्यत एतानि — (१) पुंस्त्रियोः औङ आत्वं; (२) ङेर्लुक्; (३) क्लीबे शेरात्वम् ।

### अथ सर्वनाम्नां रूपेषु विशेषाः---

अस्मच्छब्दः

| | | | |
|---|---|---|---|
| प्र– | अहं | आवं | वयम् |
| द्वि– | माम् (मा) | आवां नौ | अस्मान्, नः |
| तृ– | मया | आवाभ्यां | अस्माभिः |
| च– | मह्यं-मे | ,, नौ | अस्मभ्यं (अस्मे) नः |
| प– | मत् | ,, | अस्मत् |
| ष– | मम, मे | आवयोः नौ | अस्माकं, नः |
| स– | मयि | ,, | अस्मासु, (अस्मे) |

युष्मच्छब्दः

| | | | |
|---|---|---|---|
| प्र– | त्वं | युवं | यूयं, |
| द्वि– | त्वा (त्वां) | युवां | युष्मान्, वः |
| तृ– | त्वया (त्वा) | युवाभ्यां (युवभ्यां) | युष्माभिः |
| च– | तुभ्यं, ते | ,, वां | युष्मभ्यं, वः |
| प– | त्वत् | ,, | युष्मत् |
| ष– | तव, ते | युवयो (युवोः) | युष्माकं वः |
| स– | त्वयि (त्वे) | ,, ,, | युष्मासु (युष्मे) |

त्यदादीनां अत्वे कृते अदन्तत्वात् अदन्तसाधारणा विशेषा द्रष्टव्याः— पुंसि औङ आत्वं; भिस ऐसादेशाभावः; पुंस्त्रियोः टा इत्यनेन सवर्णदीर्घः, आज्जसेरसुक् च; क्लीबे शेर्लुक् ।

---

## तिङन्तप्रकरणम् ।

'अदिप्रभृतिभ्यः शपः । (२ । ४ । ७२)' इति लुग्विधेः, 'जुहोत्यादिभ्यः श्लुः' (२-४-७५) इति श्लुविधेश्चानन्तरमेव **'बहुलं छन्दसि'** इति सूत्रितमाचार्येण । तेन लुक्श्लू अन्येष्वपि गणेषु भवतः । यथा–

त्राध्वं नो देवाः—त्रायतिर्भ्वादिः ।
वृत्रं हनति । अहिः शयते—अदादिकयोरपि न लुक् ।
पूर्णां विवष्टि—वश कान्तौ अदादिकः—तत्र श्लुः ।
दाति प्रियाणि—ददातेः शपो लुक् ।

विकरणप्रत्ययविधानान्ते सूत्रम्—

### (१८२५) व्यत्ययो बहुलम् । ३ । १ । ८५ ।

शबादीनां बहुलं व्यतिक्रमः स्यात् । यत्र विहितस्ततोऽन्यत्र प्रवृत्तिरेकत्रैव द्वयोस्त्रयाणां वा युगपत् प्रवृत्तिश्च द्रष्टव्येत्यर्थः । यथा–

अण्डा शुष्मस्य भेदति—भिनत्तेः शप् । स न मराति—म्रियतेः शप् ।
इन्द्रो वस्तेन नेषतु—सिप्शपौ द्वौ । इन्द्रेण युजा तरुषेम वृत्रं—उ-सिप्-शपः त्रयः ।

विकरणप्रत्ययानामुत्पत्तिरेतावता स्फुटीभवति । रूपसौष्ठवाय प्रथमं धातोः पुरुषप्रत्ययानां च मध्ये यथायोगमायोजितास्ते क्रमेण तत्तद्धातुषु प्रतिनियता आसन्निति । एकस्यैव धातोर्विकरणद्वये प्रयोगोऽद्यापि दृश्यते । यथा– क्लिश्नाति, क्लिश्यति । भ्रमति, भ्राम्यति ।

'धूनोति चम्पकवनानि धुनोत्यशोकम्
चूतं धुनाति धुवति स्फुटितातिमुक्तम् ।
वायुर्विधूनयति केसरपुष्परेणून्
यत् कानने धवति चन्दनमञ्जरीश्च ॥'

नामप्रकरणे यथा भपदसंज्ञयोरव्यवस्थोक्ता तथा धातुप्रकरणे सार्वधातुकार्द्धधातुकयोः—

### (१८२६) छन्दस्युभयथा । ३ । ४ । ११७ ।

धातोर्विहिताः प्रत्ययाः प्रक्रियानुरोधेन उभयसंज्ञा अपि स्युः ।

यथा— वर्द्धन्तु त्वा सुष्टुतयः—वर्द्धयन्त्वित्यर्थः। शप आर्द्धधातुकत्वाण्णि-लोपः। विश्रृण्विरे—लिटः सार्वधातुकत्वात् श्नुः श्नभावश्च।

अनेन धातुभ्य उत्पन्नानां प्रत्ययानां सार्वधातुकार्द्धधातुकत्वाभ्यां द्वैविध्यं प्रकल्प्य प्रक्रियाव्यवस्थापनमर्वाचीनमिति स्फुटम्। एवमेव भप-दसंज्ञाभ्यां नामविषये।

अथ तिङ्प्रत्ययानां प्रायिकाः केचिद्विकारा उच्यन्ते—

(१८२७) **अमो मश्**। ७। १। ४०।

मिबादेशस्य अमो मशादेशोऽपि स्यात्। अकार उच्चारणार्थः। शित्त्वं सर्वादेशत्वार्थम्। म् इत्यादेशस्वरूपम्। तिप्सिपोरिव मिपोऽपि इकारलोपः फलति। यथा—

वधीं वृत्रम्। क्रमीं वृक्षस्य शाखाम्।

लुङि बाहुलकादडभावः; मिपोऽपृक्तत्वादीडागमे सिज्लोपः।

(१८२८) **लोपस्त आत्मनेपदेषु**। ७। १। ४१।

तः=तकारस्य। आत्मनेपदप्रत्ययेषु तकारस्य लोपः कदाचित् स्यात्। यथा—

गन्धर्वाप्सरसो अदुह—अदुहतेति तकारस्य लोपः।

'शीङो रुट्' इत्यतः परं 'बहुलं छन्दसि' इत्युक्तत्वात् रुडागमः।

दुहामश्विभ्यां पयो अघ्न्येयं—दुग्धामिति तकारस्य लोपः।
दक्षिणतः शये।—शेते इति ,,

(प्रत्यु)—(आत्मनेपदेषु किं ?)वत्सं दुहन्ति कलशम्।
(प्रायिकत्वात्) आत्मानमनृतं कुरुते।

(१८२९) **ध्वमो ध्वात्**। ७। १। ४२। यथा—

अन्तरेवोष्माणं वारयध्वात्—वारयध्वमित्यर्थः।

(१८३०) **तस्य तात्**। ७। १। ४४।

लोण्मध्यमबहुवचनस्य तस्य क्वचित् तादित्यादेशः। यथा—

गात्रं गात्रमस्या नूनं कृणुतात्।—कृणुतेत्यर्थः।

(१८३१) तप्तनप्तनथनाश्च । ७ । १ । ४५ ।

लोण्मध्यमभूततप्रत्ययस्यैव । यथा—

श्रणोत ग्रावाणः—तप्, पित्त्वात् गुणः ।

ता न ऊर्जे दधातन—धत्तेत्यर्थः ।

जुजुष्टन—जुषेश्छान्दसः श्लुः; जुषतेत्यर्थः ।

यदिष्ठन-इच्छतेत्यर्थः । इषेस्थने शपो लुक् ।

(१८३२) इदन्तो मसि । ७ । १ । ४६ ।

मस् इत्युत्तमबहुवचनं 'मसि' इतीदन्तमपि स्यात् । यथा—

पुनस्तां दीपयामासि । शलभं भञ्जयामसि ।

अथ लकाराः—

(१८३३) छन्दसि लुङ्लङ्लिटः (अन्यतरस्यां) । ३ । १ । ६ ।

सर्वेषु कालेषु वा लुङ्लङ्लिटश्छन्दसि । यथा—

अहं तेभ्योऽकरं नमः—वर्तमाने लुङ्, कृञश्च्लेश्छन्दस्यङ् ।

अग्निमद्य होतारमावृणीतायं—वृणोतीत्यर्थे लङ् ।

अद्याममार—म्रियते इत्यर्थे लट् ।

(१८३४) लिङर्थे लेट् । ३ । १ । ७ ।

विध्यादिषु हेतुहेतुमद्भावादिषु च लिङर्थेषु वा लेट् ।

(१८३५) उपसंवादाशङ्कयोश्च । ३ । १ । ८ ।

उपसंवादः परिभाषणं, कर्तव्ये पणबन्धः यदि मे भवानिदं कुर्यादहमपि भवत इदं करिष्यामीत्येवंरूपः । कारणतः कार्यानुसरणमाशङ्का । अनयोरपि लेट् । यथा—

अहमेव पशूनामीशै—उपसंवादः ।

नेज्जिह्मायन्तो नरकं पताम—आशङ्का ।

लेट्प्रक्रिया ।

(१८३६) लेटोऽडाटौ । ३ । ४ । ९४ ।

लेटस्तिङामडाटावागमौ पर्यायेण स्याताम् । यथा—

जोषिषत् । पताति ।

(१८३७) **आत ऐ** । ३ । ४ । ९५ ।

लेट्सम्बन्धिन आकारस्य ऐकारः । तेन आतां=ऐतां । आथां=ऐथाम् । आत्मनेपदप्रथममध्यमद्विवचनयोरिति फलति । 'लेटोऽडाटौ' इत्याडागमस्य तु विधानसामर्थ्यादैत्वं न ।

(१८३८) **वैतोऽन्यत्र** । ३ । ४ । ९६ ।

आत ऐ इत्यस्य विषयं वर्जयित्वा एत ऐ वा । अन्यत्रेत्युक्तेः प्रथममध्यमद्विवचनयोर्न । यथा—

मदग्रा एव वो ग्रहा गृह्यान्तै
प्रत्यु—मन्त्रयैते मन्त्रयैथे ।

(१८३९) **इतश्च लोपः परस्मैपदेषु** । ३ । ४ । ९७ ।

लेट इकारस्य (तिप्सिप्झिमिप्सु स्थितस्य) लोपो वा ।

(१८४०) **स उत्तमस्य** । ३ । ४ । ९८ ।

वस्मसोः सकारलोपो वा ।

एवं लेटि पुरुषप्रत्ययाः—

| | | | | | |
|---|---|---|---|---|---|
| अत् | अतः | अन् | अतै | ऐते | आन्तै |
| अस् | अथः | अथ | असै | ऐथे | अध्वै |
| अम् | अव | अम | ऐ | अवहै | अमहै |

विकल्पादैकारादेशं इतो लोपं च विनापि रूपाणि । आडागमपक्षे आत् आतः इत्यादयो दीर्घाद्याः प्रत्ययाः ।

(१८४१) **सिब्बहुलं लेटि** । ३ । १ । ३४ ।

लेटि सिप् संस्करणप्रत्ययो बहुलं स्यात् । लृलुटोः स्यतासी इव लेटि सिप् शाश्वतो विकरणप्रत्ययः । किन्तु बाहुलकात् क्वचित् स न प्रवर्तते । तेन जोषिषत् तारिषत् इत्यादौ सिब्दृश्यते, पताति च्यावयाति इत्यादौ तु न । 'जुहवत्' 'युनजत्' इत्यादिवद्विकरणान्तराण्यपि न विरलानि ।

बाहुलकैरपि विकल्पैश्च लेटि नानाविधानि रूपाणि प्रसज्यन्ते। तत्र उत्तमैकवचने मिप इकारे लुप्ते अडाडागमाभ्यां 'भवं' 'भवां' इतिवद्रूपाण्यापद्यन्ते; किन्तु तथा नोपलभ्यन्ते प्रयोगाः। दृश्यन्ते चाथर्वसु "यथाहं शत्रुहोऽसानि" इतिवल्लोट्तुल्यानि रूपाणि। कदाचिदृक्षु 'दोहा' 'भवा' इति लुप्तप्रत्ययानि च रूपाणि। अतो 'मेर्निः' लेट्यप्यस्तीति वक्तव्यम्। बाहुलकात् सर्वमपि सम्भाव्यते च लेटि। उच्चावचेषु लेड्रूपेषु प्रयोगबाहुल्यानुसारेण प्रत्ययावलिरधोलिख्यते।—

| | परः | | | आत्मः | | |
|---|---|---|---|---|---|---|
| | ए | द्वि | बहु | ए | द्वि | बहु |
| प्र | अत्<br>अति | अतस् | अन् | आतै<br>अते | ऐते | अन्ते<br>अन्त<br>आन्तै |
| म. | अस्<br>असि | अथस् | अथ | असे<br>आसै | ऐथे | अध्वे<br>आध्वै |
| उ. | आनि | आव | आम | ऐ | आवहै<br>आवहे | आमहै<br>आमहे |

रूपावलिः

| | | | | | | |
|---|---|---|---|---|---|---|
| प्र. | भवात्<br>भवाति | भवातः | भवान् | एधातै<br>एधाते | एधैते | एधान्ते<br>एधान्तै |
| म. | भवाः<br>भवासि | भवाथः | भवाथ | एधासे<br>एधासै | एधैथे | एधाध्वे<br>एधाध्वै |
| उ. | भवानि<br>भवा | भवाव | भवाम | एधै | एधावहै<br>एधावहे | एधामहै<br>एधामहे |

अदन्तेषु विकरणेषु प्रत्ययानामाडागम एव प्रतिनियतो दृश्यते। इह विधिनिमन्त्रणादिषु हेतुहेतुमद्भावादिषु च लिङ् विहितः। तेष्वेवार्थेषु लेट्लोटौ चातिदिष्टौ। एवमत्र लकारत्रयं भूयसा समानार्थकं संवृत्तम्। दृश्यन्ते च त्रयोऽपि वेदेषु। अथ विकल्पभूयस्त्वेन रूपाणामनियतत्वात्, लोटैव कार्यनिर्वाहाच्च क्रमाल्लुप्तप्रचारो लेट् लोके नष्ट इत्याहुः। वस्तुतस्तु चरित्रदृष्ट्या विमृश्यमाने लेटोऽवशेषा अद्यापि दृश्यन्त एव। तथाहि— एत ऐत्वं, आडागमः, मेर्निः, अनुदात्तत्वं इत्येतेषामुभयत्र सत्वाल्लेड्रूपाण्येव

लोट उत्तमे पुरुषे। किञ्च 'माङि लुङ्' 'स्मोत्तरे लङ् च' इति विहितौ लुङ्लङौ वस्तुतो लड्रूपाण्येव भवितुमर्हन्ति । 'मा वादीः' 'मा स्म शोचः इत्यादिषु माङ्युक्तेषु वाक्येषु लोट एव ह्यर्थस्य स्वारस्यम्। दृश्यते च 'मास्तु' 'मा कुरु' 'मा वद' इत्यादिषु लोडेव प्रयुक्तः। माङ्योगे अडागमप्रतिषेधात्, तिप्सिप्झीनामिलोपस्य उत्तमसलोपस्य च साधारण्यात्, विकरणप्रत्यययोः सिच्सिपोः सारूप्यात्, सिच ईडामगस्य 'बहुलं छन्दसि' इत्युक्तेः सिप्यपि प्रवृत्तेः सिच्यप्रवृत्तेर्वा सम्भवाच्च परस्मैपदे लुङ्लेटो रूपसाम्यमपि तान्तन्तादेशाविषयेषु सम्भवति । सिचि वृद्धिरेकैव प्रक्रिया दुर्घटा। सापि महाबाहुलकबलादेकत्र त्याज्या अन्यत्रापि ग्राह्या वा। लङि तु रूपसाम्यमितोऽपि सुलभतरम् ।

च्लेरादेशविधिप्रस्तावे—

**(१८४२) मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः ।२।४।८०।**

घस, ह्वर, णश, वृ, दह, आदन्तधातुः, वृच्, कृ गम, जन एभ्यः च्लेर्लुक्। यथा—

घस—अक्षन्नमीमदन्त पितरः। दह—मा न आधक्।
आदन्तः प्रा—आप्रा द्यावापृथिवी अन्तरिक्षम्।
कृ—अक्रन् कर्म कर्मकृतः। गम—अग्मन्।

एवमन्येऽप्युदाहार्याः।

**(१८४३) कृमृदृरुहिभ्यश्छन्दसि (च्लेरङ्वा) ।३।१।५९।**

इदं तेभ्योऽकरं नमः। अमरत्, अदरत्। आरुहत्।

लोटो हेः शानजुक्तः—

**(१८४४) छन्दसि शायजपि ।३।१।८४।**

हलः परस्य श्नाप्रत्ययस्य छन्दसि शायजपि स्यात्। यथा—

गृभाय जिह्वया मधु।—गृहाणेत्यर्थः। हस्य भत्वं वक्ष्यते।

अमन्त्रे इति निषेधात् छन्दसि लिट्याम्न। केषाञ्चिल्लिटोऽन्यत्राप्याम् निपात्यते—

(१८४५) **अभ्युत्सादयांप्रजनयांचिकायांरमयामकः पावयांक्रियाद्विदामक्रन्निति च्छन्दसि** । ३ । १ । ४२ ।

आद्येषु चतुर्षु लुङ्याम्, कृञो लुङि सिपि च्लेः 'मन्त्रे घस...' इत्यादिना लुकि निष्पन्नस्याक इत्यस्यानुप्रयोगश्च । पावयांक्रियादित्याशीर्लिङि, विदामक्रन्निति पुनश्च लुङि ।

'न माङ्योगे-(अडाटौ)'—

(१८४६) **बहुलं छन्दस्यमाङ्योगेऽपि** । ६ ४ । ७५ ।

माङ्योगं विनापि अडाटौ न स्तः । माङ्योगेऽपि कदाचित् स्तः ।

**यथा**— जनिष्ठा उग्रः सहसे तुरायः — अमाङ्योगे अभावः ।

मा वः क्षेत्रे परबीजान्यवाप्सुः—माङ्योगे भावः ।

(१८४७) **इरयो रे** । ६ । ४ । ७६ ।

'इरे' इति लिट् प्रथमबहुवचनस्य 'रे' इत्यादेशो बहुलं स्यात् ।

**यथा**—गर्भं प्रथमं दध्र आपः—दधिरे इत्यर्थः ।

(बाहुलकात्) परमाया धियो अग्निकर्माणि चक्रिरे ।

'रे' इत्यादेशस्याभीयत्वेनासिद्धत्वात् दध्रे इत्यत्र 'आतो लोप इटि च' इत्याल्लोपः । 'रे' इत्यादेशविधानसामर्थ्यादेव पुनरिडागमो न ।

(१८४८) **लिङ्याशिष्यङ्** । ३ । १ । ८६ ।

आशीर्लिङि परे धातोरङ् प्रत्ययः स्यात् । यथा—

मन्त्रं वोचेमाग्नये—'वच उम्' । पितरं च दृशेयं मातरं च ।

अथ दीर्घविधिः—

(१८४९) **ऋचि तु-नु-घ-मक्षु-तङ्-कु-त्रोरुष्याणां** । ६ । ३ । १३३ ।

ऋच्येषां दीर्घः स्यात् । यथा—

आ तू न इन्द्र वृत्रहन् तु । नू मूर्तः—नु ।

उत वा घा स्यालात्—घ (इति निपातः) । मक्षू गोमन्तमीमहे—मक्षु ।

भरता जातवेदसम्—भरत । (लोट् म. ब.) कूमनः—कु ।

अत्रा ते भद्रा—अत्र । उरुष्या णोऽग्नेः—उरुष्य ।

(१८५०) इकः सुञि। ६। ३। १३४।

सुञ् निपातः। तस्मिन् परे पूर्वस्य इगन्तस्य दीर्घः। यथा—

अभी षु णः सखीनाम् अभि।

(१८५१) द्व्यचोऽतस्तिङः। ६। ३। १३५।

द्व्यचस्तिङन्तस्यात ऋचि दीर्घः स्यात्। यथा—

विद्मा हि त्वा सत्पतिं शूर गोनाम्—विद्म।

(१८९०) निपातस्य च। ६। ३। १३६। यथा—

एवा ते। अच्छा तें——एव, अच्छ।

(१८९३) तुजादीनां दीर्घोऽभ्यासस्य। ३। १। ७। यथा—

—प्रभरा तूतुजानः—मित्रो दाधार पृथिवीमुतद्याम्।

॥ ॥ एकाचो द्वे प्रथमस्येति द्वित्वं छन्दसि वा ॥ यथा—

यो जागार। दाति प्रियाणि।

---

## आख्यातकप्रकरणम्।

'छन्दसि लिट्' (१०००), 'लिटः कानज्वा (१००१), 'क्वसुश्च' (१००२) इति सूत्रत्रयं पूर्वमेव व्याख्यातम्। खल्विधौ विशेष उच्यते—

(१८९४) छन्दसि गत्यर्थेभ्यः (युच्)। ३। ३। १२९।

ईषद्दुस्सुषूपपदेषु गत्यर्थेभ्यो युच् खलोऽपवादः। यथा —

सूपसदनोऽग्निः

(१८९५) अन्येभ्योऽपि दृश्यते। ३। ३। १३०। यथा—

सुदोहनामाकृणोत् ब्रह्मणे गाम्।

(१८९६) तुमर्थे से-सेनसे-असेन्-क्से-कसेन-अध्यै-अध्यैन्-कध्यै-कध्यैन्-शध्यै-शध्यैन्-तवै-तवेङ्-तवेनः। ३। ४। ९।

तुमुन्नर्थे धातोरेते प्रत्ययाः स्युः। अत्र सरूपा एव प्रत्ययाः

प्रक्रियार्थं तत्तदनुबन्धायोजनेनानेकधा पठिताः । नित्त्वमाद्युदात्तत्वार्थम् । यथा—

वक्षे रायः —वच्+से वक्तुमित्यर्थः ।
ता वामेषे — इ+सेन् —एतुम् ।
शरदो जीवसे धाः — जीव्+असे—जीवितुम् ॥
प्रेषे भगाय—इ+क्से—प्रैतुम् ॥
गवामिव श्रियसे—श्रि+कसेन्—श्रयितुम् ॥
कर्मण्युपाचरध्यै—उपाचर+अध्यै—उपाचरितुम् ॥
इन्द्राग्नी आहुवध्यै—आहु+कध्यै—आहोतुम् ॥
वायवे पिबध्यै—पा+शध्यै—पातुम् ॥
सोममिन्द्राय पातवे—पा+तवै —पातुम् ॥
दशमे मासि सूतवे—सू+तवेङ्—सवितुम् ॥

(१८५७) **प्रयै रोहिष्यै अव्यथिष्यै** । ३ । ४ । १० ।

एते निपात्यन्ते ।

प्रयै=प्रयातुं; रोहिष्यै=रोहणाय; अव्यथिष्यै=अव्याथनाय ।

(१८५८) **दृशे विख्ये च** । ३ । ४ । ११ ।

दृशे विश्वाय सूर्यम्—द्रष्टुम् ।
विख्ये त्वा हरामि—विख्यातुम् ।

(१९५९) **शकि णमुल्कमुलौ** । ३ । ४ । १२ ।

शक्नोतावुपपदे तुमर्थे धातोर्णमुल्कमुलौ । यथा—

अग्निं वै देवा विभाजं नाशक्नुवन्—विभक्तुम् ।
अपलुपं नाशक्नुवन्—अपलोप्तुम् ।

(१८६०) **ईश्वरे तोसुन्कसुनौ** । ३ । ४ । १२ । यथा—

ईश्वरोऽभिचरितोः—अभिचरितुमित्यर्थः ।
ईश्वरो विलिखः—विलिखितुम् ।

(१८६१) **कृत्यार्थे तवै-केन्-केन्य-त्वनः** । ६ । ४ । १४ ।

कर्तरि तुमुन् । भावकर्मणोः कृत्याः । तवैप्रत्यय उभयत्र ग्रहणात् कर्तृकर्मभावेषु भवति । यथा—

न म्लेच्छितवै, नापभाषितवै,—म्लेच्छितव्यम्, अपभाषितव्यम् ।
अवगाहे—अवगाहितव्यम् ।
दिदृक्षेण्यः—दिदृक्षितव्यः । कर्त्वं हविः—कर्तव्यम् ।

'कृन्मेजन्तः' 'क्त्वातोसुन्कसुनः' इति केन्य-त्वन्-भिन्नानामव्ययत्वम् ।

(१८६२) **अवचक्षे च** । ३ । ४ । १५ ।

अवचष्टे रेश्प्रत्ययः कृत्यार्थे । यथा—नावचक्षे—नावख्यातव्यम् ।

(१८६३) **भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्** । ३ । ४ । १६ ।

भावलक्षणे वर्तमानेभ्यः स्थादिभ्यः तोसुन् । भावार्थ एव प्रत्ययः—

आ संस्थातोर्वेद्यां सीदन्ति—संस्थानात् ।
पुरा सूर्यस्योदेतोराधेयः—उदयात् ।
पुरा वत्सानामपाकर्तोः—अपाकरणात्
पुरा प्रवदितोरग्नौ प्रहोतव्यम्—प्रवदनात् ।
पुरा प्रचरितोराग्नीध्रे होतव्यम्—प्रचरणात् ।
आ होतोरप्रमत्तास्तिष्ठति—हवनात् ।
आ तामितोरासीत—तमनात् ।
आ विजनितोः सम्भवामेति—विजननात् ।

(१८६४) **सृपितृदोः कसुन्** । ३ । ४ । १७ ।

भावलक्षण इत्येव । यथा—

पुरा क्रूरस्य विसृपो विरप्शिन्—विसर्पणात् ।
पुरा जतृभ्य आतृदः—आतर्दनात् ।

अथ क्त्वाप्रत्यये विशेषः ।

'समासेऽनञ्पूर्वे क्त्वो ल्यप्'—

(१८६५) **क्त्वापि च्छन्दसि** । ७ । १ । ३८ । यथा—

यजमानं परिधापयित्वा—परिधाप्य ।

'क्त्वा इति वक्तव्ये 'क्त्वापि' इत्युक्तिः क्त्वाल्यपोश्छन्दसि परस्परविषयातिक्रमज्ञापनाय । तेन 'अर्च्य तान् देवान् गतः' इत्यादिवत् ल्यब्विषये क्त्वा ।

(१८६६) **क्त्वो यक्** । ७ । १ । ४७ ।

क्त्वा इत्यस्य यगागमः । इदं क्त्वाल्यपोर्मेलनमिव प्रतिभाति । यथा—

दत्वाय सविता धियः—दत्वा । दिवं सुपर्णो गत्वाय—गत्वा

(१८६७) **इष्ट्वीनमिति च** । ७ । १ । ४८ ।

यजतेः क्त्व ईनमन्तादेशो निपात्यते यथा—

इष्ट्वीनं देवान्——इष्ट्वा ।

॥ ॐ ॥ पीत्वीनमपीष्यते ॥ यथा——पीत्वीनं——पीत्वा ।

(१८६८) **स्नात्व्यादयश्च** । ७ । १ । ४९ । यथा—

स्विन्नः स्नात्वी मलादिव————स्नात्वा ।

पीत्वी सोमस्य वावृधे————पीत्वा ।

आख्यातेषु यथा लेट् तथा आख्यातकेषु तुमर्थकाः सेअसेप्रभृतयः, कृत्यार्थकास्तवैप्रभृतयश्च लोके लुप्तप्रचाराः । लेटः प्रचारलोपस्य हेतुर्लिङ्लोड्भ्यां गतार्थकत्वामिति प्रतिपादितम् । सेअसेप्रभृतयः कथं लोके नष्टा इति विचारयामः—'तुमुन्ण्वुलौ क्रियायां क्रियार्थायां' इति तुमन्विधेरनुपदमेव'भाववचनाश्च' इति सूत्रयता तुमुनो भावार्थकत्वं ज्ञापितमाचार्येण । 'अव्ययकृतो भावे' इति कण्ठतश्चोक्तं भाष्यकारेण । अतो 'यष्टुं याति' इति तुमुन्नन्तस्य 'यागाय याति' इति घञन्तचतुर्थ्याश्च तुल्य एवार्थः । इह किल 'महस्' 'रंहस्' 'चक्षस्' इत्यादौ कश्चिदौणादिकः असुन्प्रत्ययः, 'मन्तुः' 'तन्तुः' 'सेतुः' इत्यादौ कश्चित् तुप्रत्ययश्च भावार्थे दृश्यते । 'सम्पदादिभ्यः क्विप्' च पाणिनिनैवोक्तः । एते प्रत्ययाः प्रारम्भकाले घञादिवत् प्रायो धातुसामान्ये प्रयुक्ता आसन्निति कल्पयितुं शक्यते । एषां चतुर्थ्येकवचनानि क्रमात् 'असे' 'तवे' 'ए' इति स्युः । एवं 'तुमर्थे........' इति सूत्रे पठितेषु असे, असेन्, कसेन्, तवे, तवेन्, तवेङ् इत्येते प्रत्ययास्तत्तद्भावार्थककृदन्तानां चतुर्थ्येकवचनरूपाणि भवितुमर्हन्तीत्यनुमितिर्दुर्वारा प्रसज्यते । अस्यां च कल्पनायां तोसुन्-कसुन्-तुमुनश्चोपपद्यन्ते—तुप्रत्ययान्तस्य पञ्चम्येकवचनं षष्ठ्येकवचनं वा तोसुन्; तस्यैव द्वितीयैकवचनं तुमुन्; असुन्प्रत्ययान्तस्य प्रथमैक-

5

वचनं, क्लीबत्वांगीकारे द्वितीयैकवचनं वा कसुन् इति ॥ दृशे, विख्ये, अवचक्षे इति निपातनेषु दृष्टः ए-रूपः प्रत्ययः, कृत्यार्थे विहितः केन् च क्विबन्तानां चतुर्थ्येकवचनम् । णमुल्कमुलौ घञन्तस्यैव द्वितीयैकवचनम् । एवं अध्यै-रूपाश्चत्वारः प्रत्यया इदानीं लुप्तप्रचारस्य कस्यापि भावार्थे कृदन्तस्य 'अधी' इत्येवमात्मकस्य चतुर्थ्येकवचनमेव स्यात् । रोहिष्यै अव्यथिष्यै इति निपातनयोः 'सी' इति प्रत्ययः कल्प्यः । तवै इत्यैकारान्ते प्रत्यये तु-प्रत्ययस्य स्त्रीत्वं* कल्पनीयमित्येव । एवं पूर्वचरित्रे मृग्यमाणे तव्यत्तव्यानीयरां कृत्यानामप्युत्पत्तिरूहपथमारोहति । तुप्रत्ययान्तात्तदर्हतीत्यर्थे तद्धितेषु दृष्टेन यत्-प्रत्ययेन तव्यप्रत्ययो निष्पद्यते । ओर्गुणे 'वान्तो यि प्रत्यये' इति अवादेशे च तु+य=तो+य=तव्य । अन+ईय=अनीय इति ल्युडन्ताच्छप्रत्ययेन अनीयरपि सिध्येत् । एवं तव्यानीयरौ कृदन्तात्तद्धितेन निष्पन्नावित्यायाति । दृश्यते चान्यत्रापि तादृशी व्युत्पत्तिः कृत्सु ड्वितः क्त्रिमुक्त्वा पुनस्तद्धितेषु 'क्त्रेर्मम्नित्यं' इति मब्विधाने । तव्यानीयरावृक्संहितायां नोपलभ्येते । अतश्च तयोर्वाचीनत्वं व्यक्तम् । 'श्रोतुकामः' 'श्रोतुमनाः' इत्यादिषु 'तुं काममनसोरपि' इति तुमुन्मकारस्य लोपदर्शनमस्माकमूहानुपोद्बलयति । एवं क्त्वाप्रत्ययोऽपि कदाचित् तुप्रत्ययस्य स्त्रियां तृतीयैकवचनमेव स्यात् । ऋक्संहितायां ल्यप् भूरिशो दीर्घो दृश्यते । अतो ल्यबन्तः क्तिन्नन्तानां क्विप्रत्ययान्तानां वा तृतीयैकवचनम् भवेदिति तर्कस्यावकाशोऽस्ति । उक्तेषु द्वितीयाचतुर्थीपञ्चमीरूपेषु चतुर्थ्या एवार्थस्वारस्यम् । 'ए' 'असे' 'तवे' इत्येकारान्तप्रत्ययानामेव वेदेषु प्रचुरः प्रचारश्च दृश्यते । कथं पुनर्लोके 'तुम्' इति द्वितीयारूपमात्रस्य प्रतिष्ठा जातेति न सुव्यक्तम् । तुमुन् हि "(इच्छार्थेषु)समानकर्तृकेषु तुमुन्" "शकधृषज्ञा...." इति च विधीयते । भोक्तुमिच्छति, वक्तुं जानाति इत्याद्युदाहरणेषु च तुमुन्नन्तं कर्मैव । प्रथमं, इच्छतिजानात्यादीनां कर्मणि प्रयुक्तस्तुमुन् क्रमात् क्रियार्थक्रियास्वपि रूपभेदं विना प्रयोगमवापेति स्यादिति प्रतिभाति ॥

---

* स्त्रीत्वे च घिसंज्ञामादाय गुणः, नदीसंज्ञामवलम्ब्य आडागमश्च प्रवर्तनीयः।

## कृदन्तप्रकरणम् ।

**(१८६९) जनसनखनक्रमगमो विट् । ३ । २ । ६७ ।**

एभ्यो धातुभ्य उपसर्गे, सुपि वा उपपदे कर्तरि विट् प्रत्ययः । क्विबिव सर्वलोपी विट् । विटि कृते अनुनासिकान्तानां "विड्वनोरनुनासिकस्यात्" ( ६ । ४ । ४१ ) इत्याकारोऽन्तादेशश्च भवति । यथा—

अब्जा गोजा ऋतं बृहत्—जन ।
गोषा इन्द्रो नृषा असि—सन ।
इयं शुष्मेभिर्बिसखा इवारुजत्—बिसं खनतीति बिसखाः ।
आ दधिक्राः शवसा पञ्च कृष्टीः—क्रम ।
अग्रेगा उन्नेतृणां—गम ।

**(१८७०) आतो मनिन्क्वनिब्वनिपश्च । ३ । २ । ७४ ।**

चकाराद्विच् । सुप्युपसर्गे चोपपद इत्येव । यथा—

दा—सुदामा । स्था—अश्वत्थामा—मनिन् ।
धा—सुधीवा । पा—सुपीवा—क्वनिप् ।
दा—भूरिदावा । पा—घृतपावा—वनिप् ।
पा—कीलालपाः । या—शुंभयाः—विच् ।

**(१८७१) अन्येभ्योऽपि दृश्यते । ३ । २ । ७५ ।**

आकारान्तभिन्नेभ्योऽपि । यथा—

प्रातरित्वा—इणः क्वनिप् ।

'सनाशंसभिक्ष उः'—

**(१८७२) क्याच्छन्दसि । ३ । २ । १७० ।**

क्यप्रत्ययान्ताच्छीलादिष्वर्थेषु उप्रत्ययः । यथा—

अघमिच्छतीत्यघायुः ।

क्यचि प्रक्रियाविशेषान् प्रकरणान्ते वक्ष्यामः ।

**(१८७३) आदृ-गम-हन-जनः-किकिनौ लिट् च ।३।२।१७१।**

आदन्तेभ्य ऋवर्णान्तेभ्यो गमादिभ्यश्च किकिनौ प्रत्ययौ, तौ च लिड्वत् भवतः । लिड्वद्भावात् प्रकृतेर्द्वित्वम् । यथा—

पपिः सोमं । ददिर्गाः—आत् ॥

मित्रावरुणौ ततुरिः ।—बभ्रिर्वज्रं—ऋ ।

जग्मिर्युवा । जघ्निर्वृत्रं । जज्ञिर्बीजम्—गमहनजनः ।

अथ क्यचि प्रक्रियाविशेषाः ।—'अस्य च्वौ' 'क्यचि च' इति प्रस्तावे—

**(१८७४) न च्छन्दस्यपुत्रस्य ।७।४।३५।**

पुत्रभिन्नस्य अदन्तस्य क्यच्युक्तं दीर्घत्वमीत्वं च न । यथा-

देवान् जिगाति सुम्नयुः । मित्रयुः ।

(पुत्रस्य तु) पुत्रीयन्तः सुदानवः ।

**(१८७५) दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति ।७।४।३६।**

एते निपात्यन्ते । यथा-

| | | | |
|---|---|---|---|
| दुष्टशब्दात् | क्यचि | उप्रत्यये | दुरस्युः । |
| द्रविण ,, | ,, | ,, | द्रविणस्युः । |
| वृष ,, | ,, | ,, | वृषण्यति । |
| रिष्ट ,, | ,, | ,, | रिषण्यति । |

**(१८७६) अश्वाघस्यात् ।७।४।३७।**

अश्वायन्तो मघवन् । मा त्वा वृका अघायवो विदन् ।

**(१८७७) देवसुम्नयोर्यजुषि काठके ।७।४।३८।** यथा-

देवायन्तो यजमानाय । सुम्नायन्तो हवामहे ।

काठकादन्यत्र तु—देवयुः । सुम्नयुः ।

**(१८७८) कव्यध्वरपृतनस्यर्चि लोपः ।७।४।३९।** यथा-

कव्यन्तः सुमनसः । अध्वर्यन्तः । पृतन्यन्तस्तिष्ठन्ति ।

## तद्धितप्रकरणम् ।

'तदर्हति' इत्यधिकारे–

**(१८७९) छन्दसि च (यत्) । ५ । १ । ६७ ।**

सर्वप्रातिपदिकेभ्यस्तदर्हतीत्यर्थे यत् । यथा–

उदक्या वृत्तयः । यूप्यः पलाशः । गर्त्यो देशः ।

**(१८८०) उपसर्गाच्छन्दसि धात्वर्थे । ५ । १ । ११८ ।**

छन्दसि क्रियायोगं विनाप्युपसर्गाः प्रयुज्यन्त इत्युक्तम् । तत्रार्थसिद्धक्रियास्थाने वतिप्रत्ययो वा स्यात् यथा–

यदुद्वतो निवतो यासि वप्सत् ।—उद्गतानि निगतानीत्यर्थः ।

पूरणप्रत्ययेषु 'नान्तादसंख्यादेर्मट्'—

**(१८८१) थट् च छन्दसि । ५ । २ । ५० ।**

नकारान्तादसंख्यादेः संख्यावाचिनः प्रातिपदिकात् परस्य पूरणार्थकस्य डटो मडागमस्थाने थट् च स्यात् यथा–

साकञ्जानां सप्तथमाहुरेकजम् ।

## प्रकीर्णकम् ।

**(१८८२) प्रसमुपोदः पादपूरणे । ८ । १ । ६ ।**

एषामुपसर्गाणां द्वे स्तः, द्वित्वेन पादश्चेत् पूर्यते । यथा—

प्रप्रायमग्निर्भरतस्य शृण्वे । संसमिद्युवसे वृषन् ।

उपोप मे परामृश । किं नोदुदु हर्षसे दातवा उ ।

पादपूरणार्थमन्येऽपि विकाराः क्रियन्ते । तथा हि–यकारवकारयोः पुरस्तात् इकारउकारयोगः । तथाच सन्धिषु यणादेशस्थाने इयङुवङौ फलतः । भ्याम्, भ्यस्, ध्वम्, एण्य, स्य इत्येषु प्रत्ययेष्वपि भूरिशः स्वरभक्तिरियं सञ्चार्यते । यथा–

तत् सवितुर्वरेण्यं = (वरेणियं)

॥ * ॥ हृग्रहोर्भश्छन्दसि ॥

हृ ग्रह इत्यनयोर्हकारस्य भकारः । यथा—

गृभाय जिह्वया मधु । मघ्वा जभार ।

"द्वयोश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते स डकारो ळकारः ॥
ळहकारमेति स एव चास्य ढकारस्सन्नूष्मणा सम्प्रयुक्तः ॥"

अचोर्मध्ये डकारस्य ळकारः। ढकारस्य ळ्हकारश्च ऋग्वेदे भवति।

यथा—अग्निमीळे पुरोहितम्। मरुद्भिरुग्रः पृतनासु षाळ्हा।

**(१८८३) पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्ना-सञ्छस्प्रभृतिषु । ६ । १ । ६३ ।**

असर्वनामस्थानेषु सुप्सु तद्धितेषु च पदादय आदेशाः स्युः, स्थानिनः स्पष्टत्वादाचार्येण नोपात्ताः । ते चादेशाश्चाधः प्रदर्श्यन्ते—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| पादस्य | पद् | मासस्य | मस् | असृजः | असन् | यकृतो | यकन् |
| दन्तस्य | दत् | हृदयस्य | हृद् | यूषस्य | यूषन् | शकृतः | शकन् |
| नासाया | नस् | निशाया | निश् | दोषो | दोषन् | उदकस्य | उदन् |
| | | | | | | आस्यस्य | आसन् |

यथा— पादं पादौ पदः । पदा पद्भ्यां पद्भिः इत्यादि ।
दन्तं दन्तौ दतः । दता दद्भ्यां दद्भिः "
मासं मासौ मासः । मासा माभ्यां माभिः "
हृदयं हृदये हृन्दि । हृदा हृद्भ्यां हृद्भिः "

आचार्येण छन्दसि शस्प्रभृतिष्वादेशत्वेन गणितेष्वेतेषु केचित् भाषायामपि स्वतन्त्रपर्यायशब्दवत् सार्वत्रिकाः प्रयुज्यन्ते । तथाहि 'पदङ्घ्रिश्चरणोऽस्त्रियां,' 'स्वान्तं हृन्मानसं मनः,' इति चामरः । धातुषु 'अस्तेर्भूः,' 'चक्षिङः ख्याञ्' 'पाघ्राध्मा....पिबजिघ्रधम....' इति यथा सार्वधातुकार्द्धधातुकभेदेन खिला उक्तास्तथानामसु सर्वनामस्थानशस्प्रभृतिभेदेन खिलान्येतानीति प्रतिभाति । सर्वेषु धातुषु दृष्टः प्रत्ययः सार्वधातुकः, सर्वेषां नाम्नां स्थानं सर्वनामस्थानं इति संज्ञयोरन्वर्थता च दृश्यते ।

# स्वरकाण्डः ।

इह संभाषणेषु लिखितयोर्गद्यपद्ययोरनुवाचनेषु च प्रायः सर्वाणि पदानि एकरूपेण ध्वनिना नोच्चार्यन्ते । यथा—

'उदेति सविता ताम्रस्ताम्र एवास्तमेति च'

इत्यत्र द्वितीयस्ताम्रशब्दः सविशेषेण यत्नेन शब्द्यते । उद्देशप्रतिनिर्देशयोस्ताम्रत्वरूपस्य धर्मस्याभिन्नत्वद्योतनमस्य प्रयोजनम् ।

'भुक्ता बहवो दारा लब्धाः पुत्राश्च पौत्राश्च ।
नीतं शतमप्यायुः सत्यं वद मर्तुमस्ति **मनः** ॥'

अत्र शब्दतोऽनुक्तं प्रश्नं प्रत्याययितुं मनश्शब्दः केनापि विकृतेन ध्वनिनोच्चार्यते ।

**गुर्व**र्थमर्थी श्रुत**पारदृश्वा रघोः** सकाशादनवाप्य कामम् ।
गतो **वदान्यान्तर**मित्ययं मे मा भूत् **परीवादनवा**वतारः ॥"

अत्र रेखाङ्किताः शब्दास्तत्तद्व्यङ्ग्यार्थबोधनाय उत्कटयत्नमुच्चारणीयाः । उक्तमिमं ध्वनिविकारं काकुशब्देन व्यपदिशन्त्यालङ्कारिकाः । प्रश्नभीतिशोकविस्मयादीनां भावानां द्योतको ध्वनिविकारः काकुः । इयं वाक्ये पदेषु व्यवस्थिता, उत्कटयत्नेनोच्चारणं च प्रायोऽस्याः स्वरूपम् ।

अथ पदेष्वक्षराणामुच्चारणेऽपि ध्वनिभेदः कार्यः । योऽयं स्वर इत्युच्यते । काक्वां विकारो यत्ने क्रियते; स्वरे तु श्रुतावित्यनयोर्भेदः । एवं च वाक्येषु पदानामुच्चारणेऽनुष्ठेय उत्कटानुत्कटत्वभेदः काकुः; पदेष्वक्षराणामुच्चारणेऽनुष्ठेयः श्रुतिभेदः स्वर इति विवेकः । यथा काकुः शोकभीत्यादीनां द्योतकस्तथा स्वरः कस्य द्योतक इति शृङ्गग्राहिकया निर्देष्टुं न शक्यते । नाम्नां लिङ्गवत्, आख्यातानामुपग्रहवच्च अक्षराणां कोऽपि जातिभेदः स्वर इति कल्पनीयम् । वृक्षसमुद्रादिषु पुंधर्मस्य लतासरिदादिषु स्त्रीधर्मस्य चारोपाद्यथा लिङ्गस्य, यथाच क्रियाफलस्य आत्मपर-

गामित्वभेदाभ्यामुपग्रहस्य च क्वचिदुपपत्तिः सुलभा, तथा लोपसम्भावनाहीन उदात्तः, लोपसम्भावनावाननुदात्तः इत्यादयो युक्तयः स्वरस्याप्युद्भावनीया एव । 'अस्ति स्तः सन्ति' इत्यादिष्वस्तेर्लड्रूपेषु हि अस्ति असि अस्मि इत्येकवचनेषु धात्वकार उदात्तः, द्विवचनबहुवचनेषु तु अनुदात्तः । उदात्ततायामकारो न लुप्यते, अनुदात्ततायां तु लुप्यते । लिङि स्यात् स्यातां स्युः........इति धात्वकारस्य सर्वत्रानुदात्तत्वात् सर्वत्र लोपः । किञ्च लुप्यन्नप्युदात्तः स्वधर्मं सुरक्षितं पुनः स्वस्थानमापन्नायाक्षरायार्पयति । यथा— कुमारशब्दोऽन्तोदात्तोऽनुदात्ते ङीपि कृते 'यस्येति च' इति लोपेन नष्टोऽपि स्वमुदात्तत्वं ईकारेऽर्पयति । कुमारीं इत्यन्तोदात्तः शब्दः । अपिच 'एकः पूर्वपरयो'रिति सन्धौ अन्यतरस्योदात्तत्वे आदेश एवोदात्तो भवति । प्राण्यङ्गेषु मर्मणामिव पदेषूदात्तस्य किमप्यस्ति प्राधान्यम् ।

लौकिके संस्कृते स्वरश्चिराल्लुप्तप्रचारो जातः । वेदाः परमद्य स्वाध्यायकाले स्वरोपस्कृतमुच्चार्यन्ते । स्वरविधायकसूत्रेऽपि लोकवेदभेदमुपदिशन्नाचार्यः स्वजीवितकाले लोकेऽपि स्वरप्रचारमावेदयति । 'प्राचां क्रीडायां' (६–२–७४) इति प्राग्देशवासिनां क्रीडावाचकेषु 'उद्दालकपुष्पभञ्जिका' 'वीरणपुष्पचायिका,' 'तालभञ्जिका' इत्यादिषु शब्देषु स्वरविशेषमाह । 'क्षयो निवासे' (६–१–२०१) इत्यादिवन्नानार्थकानां शब्दानां स्वरेणार्थं नियन्त्रयति । 'वर्णादनुदात्तात्तोपधात्तो नः' इतिवत् प्रक्रियाविधिषु स्वरैरपि निमित्तान्युपदिशति । उदात्तेतः परस्मैभाषाः, अनुदात्तेत आत्मनेभाषाः, स्वरितेत उभयतोभाषा इति स्वरैरुपग्रहो नियम्यते । धातूनेव उदात्ताननुदात्तांश्च पठित्वा स्वरनिबन्धना कृतेड्व्यवस्था । उभयपदिनां स्वरितेत्त्ववत् वेटां स्वरितत्वे कल्पनीये कुतस्तान् ऊदित्त्वेनाङ्कितवान् पाणिनिरिति परं चित्रीयामहे । किञ्च 'स्वरितेनाधिकारः' इति अधिकारचिह्नं स्वरितः स्वरः । एवं बहूनि प्रयोजनानि स्वरैः साधयन्, लौकिकं संस्कृतं भाषाशब्देन व्यपदिशन्, बहुत्र लोके वेदाद्भिन्नं स्वरमुपदिशंश्चाचार्यः स्वरसंस्कारं विनैव सूत्राणि प्रणिनायेति कथं कल्प्यतां ? तथा,

ण्याचार्यस्य कालेऽपि संस्कृते स्वरोच्चारणसंप्रदायः शिथिलो जात इत्येव वक्तव्यं वर्तते । तथाहि—सर्वाधारभूतायां मन्त्रवदभ्यर्हितायां चतुर्दशसूत्र्यां स्वरानिर्णयः कथम् ? अनेकपदघटितेष्वधिकारसूत्रेषु सर्वेषामचां स्वरितेनोच्चारणं किं सुकरम् ? धातुघटकानामचां तदनुबन्धानां च पदव्यवस्थार्थमिड्व्यवस्थार्थं च स्वरभेदकल्पनाद्धातुपाठे न्याय्यस्य अन्तोदात्तस्य सञ्चारो दुर्घटः । किञ्च हलन्तधातूनामन्तेष्वायोजिता अच इत्संज्ञासिद्ध्यर्थमानुनासिक्येन, पदभेदद्योतनार्थमुदात्तादिभेदेन चोच्चारणीया इति महान् भारः । इदानीमुपलभ्यमानेषु ग्रन्थेषु 'एधादय उदात्ता अनुदात्तेत' इति स्वरनियमः प्रतिज्ञयैव कृतो दृश्यते । अपिच 'प्रतिज्ञानुनासिक्याः पाणिनीया' इतिवत् 'स्वरितेनाधिकारः' इति सूत्रे 'प्रतिज्ञा स्वरिताः पाणिनीया' इति व्याख्यातारः समामनन्ति । अन्यच्च, 'इत्थं व्याख्यास्यामः,' 'एवं व्याख्यास्यामः,' 'अन्यथा व्याख्यास्याम' इति विचित्रकल्पनाकोलाहलेषु समासस्वरादिभिः सूत्राणामर्थनियन्त्रणाशङ्कामपि न करोति भगवान् भाष्यकारः । तथा च स्वररहितामेवाष्टाध्यायीमुपलब्धवान् पतञ्जलिरित्यनुमीयते । अपरं च, आचार्य एव वेदेऽपि क्वचित् 'यज्ञकर्मण्यजपन्यूङ्खसामसु' इत्येकश्रुतिं विदधाति । एवं स्थिते पाणिनेः काल एव स्वरप्रयोग ऐच्छिकः संवृत्तः स्यादिति कल्पनैव न्याय्या दृश्यते । लोके स्वरभेदोपदेशस्त्वाचारपरिपालनमात्रं स्यात् । सर्वथा स्वयमेव विविधैः कारणकलापैः क्षयोन्मुख्याः स्वरव्यवस्थायाः कण्ठे कुठारं श्लेषलोलुपाः कवयः प्रायुञ्जतेति तु सुव्यक्तम् ।

'अहं च त्वं च राजेन्द्र लोकनाथावुभावपि ।
बहुव्रीहिरहं राजन् षष्ठीतत्पुरुषो भवान् ।'

इत्यादीनां कल्पनावैचित्र्याणां बाधकं स्वरं कथं ते सहेरन् ? ऐतिहासिकास्तु 'यथेन्द्रशत्रुः स्वरतोऽपराधात्' इति स्वरव्यभिचारेण यज्वनामनिष्टप्राप्तिमपि समामनन्ति । दृश्यते च संस्कृतस्य सगोत्रासु यवन–रोमकभाषा- (Greek, Latin) प्रभृतिषु आर्यभाषासु प्रारम्भकाले स्वरनिर्बन्धः ।

तासु कालवशात् श्रुतिनिबन्धनः स्वरो यत्ननिबन्धना काकुः संवृत्तः ; संस्कृते तु निश्शेषं नष्ट एवेति प्रतिभाति ॥

'उच्चैरुदात्तः' 'नीचैरनुदात्तः' 'समाहारः स्वरितः' इति संज्ञाप्रकरण एव स्वरो लक्षितः । तत्र समाहाररूपे स्वरिते कियानंश उदात्तः, कियांश्चानुदात्त इति जिज्ञासायां सूत्रयत्याचार्यः—

(१८८४) तस्यादित उदात्तमर्द्धह्रस्वम् । १ । २ । ३२ ।

तस्य स्वरितस्यादौ ह्रस्वार्द्धमात्रातुल्यो भाग उदात्तः, शेषोऽनुदात्त इति । तथा च ह्रस्वस्वरिते उदात्तानुदात्तयोः समांशाभ्यां मिश्रणं, दीर्घस्वरिते $\frac{1}{2}$उ+$1\frac{1}{2}$अ इति योगः, प्लुते $\frac{1}{2}$उ+$2\frac{1}{2}$अ इत्यायाति । एवञ्च दीर्घप्लुतयोर्भूयान् भागोऽनुदात्तो भवति । व्याख्यातारः पुनः सूत्रे ह्रस्वग्रहणमतन्त्रं प्रतिजानानाः सर्वत्र समांशयोगमिच्छन्ति । तदेतदर्वाचीनानां प्रातिशाख्यकाराणां मतं स्यात् ।

स्वरान् निरुच्यानुपदमेव कुत्र ते नियोगतोऽनुष्ठेयाः, कुत्र ऐच्छिका इति विचारयत्याचार्यः—

(१८८५) एकश्रुति दूरात् संबुद्धौ । १ । २ ३३ ।

दूरात् संम्बोधने प्रयुज्यमानं वाक्यमेकश्रुति स्यात्, स्वरविवेकं विनोच्चार्यमित्यर्थः । तथा च यथा सन्ध्यभावरूपः प्रकृतिभावस्तथा त्रैस्वर्याभावरूप एकश्रुतिः :

(१८८६) यज्ञकर्मण्यजपन्यूङ्खसामसु । १ । २ । ३४ ।

जपो मन्त्राणामुपांशुप्रयोगः । न्यूङ्खा नाम षोडश ओकाराः । सामानि गीतयः । एतत्त्रयभिन्नेषु मन्त्रप्रयोगेषु यज्ञसम्बद्धेषु वाक्यमेकश्रुति स्यात् । जपादित्रय एव मन्त्रास्त्रैस्वर्येणोच्चार्या इत्यर्थः ।

(१८८७) उच्चैस्तरां वा वषट्कारः । १ । २ । ३५ ।

यज्ञकर्मणीति वर्तते । देवतासंप्रदाने प्रयुक्तः 'वषट्' 'वौषट्' इति

न श्रूयमाणो निपातो वषट्कारः । स वा उदात्ततरेण स्वरेणोच्चार्यः । उदात्तस्य यावान् श्रुतिप्रकर्षस्ततः किञ्चिदधिको ध्वनेरारोहः कार्यः इत्यर्थः । एवमनुदात्ततरमपि वक्ष्यति ।

### (१८८८) विभाषा च्छन्दसि । १ । २ । ३६ ।

इदं सूत्रं बहुभिर्बहुधा व्याख्यातम् । वेत्यनुवृत्तौ विभाषाग्रहणं व्यवस्थितविभाषार्थम् । पूर्वतरसूत्रे 'यज्ञकर्मणि' इत्यस्य प्रतिनिर्देशः 'छन्दसि' इति । अतः छन्दसि वेदाध्ययने स्वस्वशाखानुरोधेन एकश्रुतिः त्रैस्वर्यं वा इत्यर्थः स्वारसिको भाति । एवञ्च पाणिने : काले स्वाध्यायेऽपि स्वरनिर्बन्धः सार्वत्रिको नासीदित्यायाति ।

### (१८८९) न सुब्रह्मण्यायां स्वरितस्य तूदात्तः । १ । २ । ३७ ।

सुब्रह्मण्या नाम निगदः, तत्र 'यज्ञकर्मणि–' इति 'विभाषा च्छन्दसि' इति च विहिता एकश्रुतिर्न स्यात्, लक्षणप्राप्तस्य स्वरितस्य चोदात्त आदेशः स्यात् ।

### (१८९०) देवब्रह्मणोरनुदात्तः । १ । २ । ३८ ।

सुब्रह्मण्यायामेव ' देवा ब्राह्मणः' इति पठ्यते । तयोः स्वरितस्थाने अनुदात्त इत्यपवादः ।

### (१८९१) स्वरितात् संहितायामनुदात्तानाम् । १ । २ । ३९ ।

एकश्रुतिरिति वर्तते। संहिताविषये स्वरितात् परेषामनुदात्तानामेकश्रुतिः स्यात् । स्वरितस्योत्तरो भागोऽनुदात्तः । अतस्तदनुगामिनोऽनुदात्ताः परभागाभावादेकश्रुत्यैव श्रूयन्त इति न्याय्यमेव । इयमेकश्रुतिः 'प्रचय' इति प्रातिशाख्येषूच्यते । प्रचितानां सङ्घीभूतानामनुदात्तानां परभागाभावात् श्रुतेरारोहावरोहराहितमेकरूपं श्रवणं भवतीत्यर्थयोजना ।

### (१८९२) उदात्तस्वरितपरस्य सन्नतरः । १ । २ । ४० ।

उदात्तः स्वरितो वा परो यस्मात् सोऽनुदात्तः सन्नतरः अनुदात्ततरः स्यात् । अयमपि अनुदात्तत्वप्रकर्षः परभागनिबन्धनः । नीचः, सन्नो

निहत इत्यनुदात्तपर्यायाः । प्रकरणेनानेन स्वराणां स्वरूपं, विनियोग-प्रदेशः, श्रुतिप्रकर्षतारतम्यं च प्रतिपादितानि ।

अथ स्वरविषये परिभाषाः सामान्यनियमाश्च ।

(१८९३) **अनुदात्तं पदमेकवर्जम्** । ६ । १ । १५८ ।

पदेषु यस्योदात्तः स्वरितो वा विधीयते तमेकं अचं वर्जयित्वा शेषा अचोऽनुदात्ताः स्युः । तथा चैकस्मिन् पदे एक एवानुदात्तः स्वरितो वा भवति । स्थानानुरोधेन आद्युदात्तं, मध्योदात्तं, अन्तोदात्तमिति व्यवहारः प्रवर्तते । व्यत्यस्ततया अनेकोदात्तानि च पदानि सन्ति । तत्र व्यस्तं पदं द्व्युदात्तमेव; समस्तेषु तु त्र्युदात्तादिकमपि भवति । सर्वानुदात्तानि च कतिचित् पदान्यनुशिष्टानि । अत्र तत्वपर्यालोचनायामुदात्त एक एव स्वरः, अनुदात्तस्तत्प्रतिद्वन्द्वीत्येव । स्वरितस्तु किञ्चिदुदात्तरूषणादेव तृतीयस्वरत्वेन गणितः । कामपि श्रुतिमनवलम्ब्याक्षराण्युच्चारयितुं न शक्यन्ते । तत्र तत्तत्कण्ठानुरोधेन यत्नविशेषं विना स्वयं प्रवर्तमाना नैसर्गिकी श्रुतिरनुदात्ता । केषुचित् पदेषु कानिचिदक्षराणि परं किञ्चिदारूढया श्रुत्या पठितव्यानि । तस्य उदात्तसंज्ञा । कुत्रचिद्विरळेषु पदेष्वारूढा श्रुतिरक्षरस्य समग्रां कालकलां न व्याप्नोति, किन्तु अर्धमात्रायामुच्चारितायामवरुह्य स्थायिनीं सामान्यश्रुतिमेवावगाहते । इयमवस्था स्वरित इत्युच्यते । निवातनिष्पन्दस्य जलाशयस्य जलपूर इवैकश्रुतिः । वीचीतरङ्गणेषूर्ध्वगता कल्लोलकोटिरिवोदात्तः । कल्लोलयोर्मध्यगतमन्तरालमिवानुदात्तः । उन्नम्यावनमतस्तरङ्गस्य पार्श्वप्रपात इव स्वरितः । सामान्यमनुदात्तः, शेषौ विशेषरूपौ । तयोः पुनः श्रुत्यारोहतारतम्यनिबन्धनः परस्परभेदः । उत् उर्ध्वं आत्त आरोपित उदात्तः । स्वरवान् कृतः स्वरितः । स्वरशब्दात् "तत् करोती"ति णिजन्तान्निष्ठा । इति संज्ञानामर्थानुगतिः । एवञ्च, स्वरशब्द उदात्तमेवाचष्टे, तदंशग्रहणादनुदात्ताः केचित् स्वरिता भवन्तीत्येव । स्वरितस्यैवं स्वतन्त्रस्वरत्वाभावादेव तद्विधिर्न कुत्राप्यारब्ध आचार्येण । स्वरितो हि असिद्धकाण्डप्रारंभे 'उदात्तस्वरितयोर्यणः स्वरि-

तोऽनुदात्तस्य (१८९६)' इति सूत्रेण, तदन्ते 'उदात्तादनुदात्तस्य स्वरितः' (१८९४) इति सूत्रेण च परमुपदिश्यते । उभयत्र चायमनुदात्तस्यादेशत्वेनैव निर्दिष्टः । असिद्धकाण्डस्तावद् वर्णविकारोपदेशाय विनियुक्तः । अतो विकारात्मनैव स्वरितमाचार्यो गणयतीति स्पष्टम् । ननु षाष्ठे स्वरविधौ 'तित् स्वरित' (१९०९) इति स्वरितो विधीयते । नाप्ययमनुदात्तस्थानिकः इति चेत्, सत्यम् । तत्रायं समाधिः—तितः प्रत्यया विरलाः । उपलभ्यमानेषु च त्रिचतुरेषु 'यत्' 'ण्यत्' 'तव्यत्' 'अत्' ('किमोत्', क) इत्येतेषु यण् दृश्यते । यण् चेदयमुदात्तस्थानिकः समर्थ्यते तदा 'उदात्तस्वरितयोर्यण...(१८९६)'इत्यनेनैव स्वरितो निर्वाह्यः स्यात् । तथा च समर्थितमस्माभिस्तव्यत्प्रत्यययकारस्य तादृशत्वं 'स्नात्व्यादयश्च' (१८६८) इति सूत्रव्याख्यानोपसंहारे । किमोऽति क्वादेशविधानान्नान्वेषणीयो यणादेशः । यण्ण्यतोस्तु 'यतोऽनावः' (१९१४) इत्यादिभिरपवादैर्भूयसो विषयस्यापहारात् 'चिकीर्ष्यं' इत्यादावेव स्वरितसाधनाय प्रयतितव्यम् । तस्य च नायमवसर इति विरम्यते । विमर्शोऽयं वक्ष्यमाणानां 'उदात्तादनुदात्तस्य स्वरितः (१८९४)' इत्यादीनां विधीनामुपपत्तिं संपादयिष्यति ।

पदेषु यस्य स्वर उपदिश्यते तद्भिन्ना अचोऽनुदात्ता इत्ययं प्रकृतसूत्रेण कृतो नियमः शेषनिघात इत्युच्यते । तस्य च प्रयोजनम्—

**"आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च**
**पृथक् स्वरनिवृत्त्यर्थमेकवर्जं पदस्वरः ॥**

इति पूर्वाचार्यैः परिगणितम् । 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इत्यागमस्य, 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इत्यादेशस्य, 'धातोः (अन्त उदात्तः)' 'फिषोऽन्त उदात्तः' (फिट्सूत्रं, फिट्=प्रातिपदिकं) इति प्रकृतेः, 'आद्युदात्तश्च'इति प्रत्ययस्य च पृथक् पृथक् स्वर उपादिश्यते । तत्र एक एव कार्य इति परिभाषया नियमः कृतः । विप्रतिषेधप्रसङ्गे 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय' इति सार्वत्रिको न्यायोऽत्रापि सञ्चार्यः । विशेषश्च—

**सतिशिष्टः स्वरो बलीयानन्यत्र विकरणेभ्यः ॥**

यस्मिन् स्थिते सति यः शिष्यते (विधीयते) स सतिशिष्टः स्वरः, तस्येतरापेक्षया बलीयस्त्वं बोध्यं विकरणस्वरं वर्जयित्वा। विकरणप्रत्ययो हि अन्यस्मिन् प्रत्यये परे विधीयते यथा—'कर्तरि शप्' इति। तत्र कर्त्रर्थकसार्वधातुकादनन्तरमुपस्थितोऽपि शप् तस्य (कर्त्रर्थकसार्वधातुकस्य) स्वरं न बाधते। प्रक्रियामात्रप्रयोजनकस्य विकरणस्य प्रत्ययान्तरसाधारणं स्वातन्त्र्यं स्वरविषये नाद्रियत इति हृदयम्। उक्तरीत्या स्वर उदाहरणेषु सञ्चार्यते—**गुप्** इत्युदात्तो धातुः। तस्मात् स्वार्थिक आयप्रत्ययः। तस्य प्रत्ययत्वेनाद्युदात्तत्वे प्राप्ते 'सनाद्यन्ता धातवः' इति धातुत्वाद्धातुस्वरेणान्तोदात्तः—**गोपाय** इति यकार उदात्तः, शेषौ शेषनिघातेनानुदात्तौ। तत'स्ति' इति लट्प्रथमैकवचने कृते उदात्तेन यकारेण सह 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तस्य शपः एकादेशे कृते 'एकादेश उदात्तेनोदात्तः' इति यकार उदात्त एवावतिष्ठते। तिबपि पित्त्वेनानुदात्तः। तस्य असिद्धकाण्डगतेन 'उदात्तादनुदात्तस्य स्वरितः' इति विधिना स्वरितश्रवणं भवति। स्वरितस्यासिद्धत्वाच्छेषनिघातेन यकारस्यानुदात्तत्वं तु न। **गोपायति** इति यकार उदात्तः। ति स्वरितः, शेषो **गोपा** इति भागोऽनुदात्तः। अथ तव्यप्रत्ययश्चेत् क्रियते, तस्य प्रत्ययाद्युदात्तेन **गोपायितव्य** इति तकार उदात्तो भवति। तव्यत्प्रत्यये तित्त्वेन व्यकारः स्वरितः स्यात्। अनीयरि कृते रित्त्वेन मध्योदात्ते **गोपायनीय** इति नीकार उदात्तः। सर्वत्र शेषाक्षराणां शेषनिघातेनानुदात्तः। अथ कृदन्तेभ्य एभ्यः सुबुत्पत्तौ तत्प्रयुक्ता भेदाश्च यथासम्भवं स्युः। समासश्चेत् क्रियते तन्निबन्धनाश्च।

लिपिषु स्वराणामङ्कने बहवः सन्ति सम्प्रदायाः। तत्र बहुवृत्त एकोऽत्र विव्रियते।— अनुदात्तस्य चिह्नमधस्तिरश्ची रेखा, स्वरितस्योपर्यूर्ध्वाधरा। अचिह्नितमक्षरमुदात्तम्। अनुदात्तेषु न सर्वाण्यङ्क्यन्ते। अपितु उदात्तात् स्वरिताद्वा पूर्वमेवाक्षरम्। पूर्वानुदात्तचिह्नमाद्युदात्ते पदे कर्तुं

न शक्यते। अतोऽनङ्कितमाद्यक्षरमुदात्तत्वेनैव ग्राह्यम्। अनुदात्तास्तु वाक्यप्रारम्भे सन्देहनिवारणाय यावदुदात्तदर्शनमङ्क्यन्ते। इति। यथा—

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्॥

अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि।

**स्वरविधौ व्यञ्जनमविद्यमानवत्॥**

व्यञ्जनान्यगणयित्वैव पूर्वपरव्यवहारादिः क्रियत इत्यर्थः।

(१८९४) **उदात्तादनुदात्तस्य स्वरितः।** ८। ४। ६६।

उदात्तात् परस्यानुदात्तस्य स्वरितः स्यात्। उदात्तोच्चारणसमनन्तरमेवोच्चार्यमाणस्यानुदात्तस्य प्रारम्भे किञ्चिदिवोदात्तरूषणमवर्जनीयम्। आरम्भे उदात्तरूषितोऽनुदात्त एव हि स्वरित इत्युच्यते। उच्चैसारूढस्य ध्वनेरेकपद एव नीचैरवरोहणमनायाससाध्यं न स्यादिति वाचयितृसौकर्यानुरोधी विधिरयम्। यथा—अग्निमीळे। अत्र 'ग्नि' इत्युदात्तात् परस्यानुदात्तस्य ईकारस्य स्वरितः। असिद्धकाण्डगतत्वादयं स्वरितः शेषनिघातं न प्रयोजयति। अत्र पक्षभेदमाह—

(१८९५) **नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्** । ८। ४। ६७।

उदात्तस्वरितयोरुदयो यस्मादिति बहुव्रीहिः। ताभ्यां परमित्यर्थः। परशब्दार्थे उदयशब्दप्रयोगो ग्रन्थान्ते मङ्गलार्थ इत्याहुः। उक्त उदात्तादनुदात्तस्य स्वरितो गार्ग्यादिभिन्नानामाचार्याणां मते उदात्तस्वरितयोः परयोर्न स्यात्। गार्ग्यादयः सर्वत्रेच्छन्ति, अन्ये अनुदात्तपरकत्व एवेत्यर्थः। यथा—'अग्निमीळे' इत्यत्र 'ळे'कारस्यानुदात्तत्वात् मीकारः सर्वमते स्वरित एव। 'अमन्तवो मां' इत्यत्र 'मां' इति परस्योदात्तत्वात् वोकारस्य स्वरितत्वं गार्ग्यादिमत एव।

(१८९६) **उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य।** ८। २। ४।

उदात्तस्य स्वरितस्य वा स्थाने समादिष्टाद्यणः परस्यानुदात्तस्य स्वरितः स्यात् । यथा— अभिशब्दोऽन्तोदात्तः । तस्य 'नित्यवीप्सयो'-रिति द्वित्वे 'तस्य परमाम्रेडितं' 'अनुदात्तं च' इति द्वितीयोऽकारोऽनुदात्तः । 'अभ्यभि' इति सन्धौ उदात्तस्य इकारस्य स्थानं प्राप्ताद्यकारात् परस्यानुदात्तस्य अकारस्य स्वरितो भवति । एवं खलप्व्याश। इति स्वरितस्थानगताद्यणः परस्योदाहरणम् । उदात्तस्य इकः स्थाने आदिष्टो यण् उदात्तयण् इत्युच्यते । तथा स्वरितयण् इति च । इत्थं च इगादेशा यणः स्थानिधर्ममुदात्तत्वादिकं न जहतीति सिद्धम् । स्त्रीपुरुषविभागे यथा षण्डस्तथा स्वरव्यञ्जनविभागे आन्तरालिका यवरलाः । अत एव तेषां 'मध्यमा' इति 'अन्तस्था' इति च व्यपदेशः । स्वराणां विवृतः प्रयत्नः, अन्तस्थानामीषद्विवृत इत्येव भेदः । व्यञ्जनेष्वदृष्टोऽनुनासिकाननुनासिकधर्मश्च स्वरवदेतेषु दृश्यते । ह्रस्वो दीर्घः प्लुत इति मात्राप्रयुक्तो भेदः परमेतेषां नास्ति । सन्धिकार्यसंप्रसारणाभ्यां परस्परविनिमयक्षमा इको यणश्चानुत्कटजातिभेदा इति स्थितिः । अत 'उदात्तादनुदात्तस्य स्वरित' इति पूर्वोक्तेन विधिनैवोदात्तयणः परस्यानुदात्तत्वं सिध्यति, स्वरितयणः परस्य तु नवो विधिरारभ्य एव । किञ्च प्रकृतं सूत्रमसिद्धकाण्डस्यादौ वर्तते । 'उदात्तादनुदात्तस्य स्वरित'स्तु तदन्ते इति चास्ति स्थानकृतो भेदः ।

**(१८९७) एकादेश उदात्तेनोदात्तः । ८ । २ । ५ ।**

अनुदात्तस्येति वर्तते । उदात्तानुदात्तयोरेकादेश उदात्तः स्यात् । आन्तरतम्यात् स्वरितो मा भूदित्यपूर्वो विधिः । अन्यत्र तु भिन्नस्वरयोरचोरेकादेश आन्तरतम्यपर्यालोचनयैव । यथा— अग्नि+औ=अग्नी ।

**(१८९८) स्वरितो वानुदात्ते पदादौ । ८ । २ । ६ ।**

अनुदात्तः पदादिस्थश्चेत् उदात्तानुदात्तयोरेकादेशः स्वरितो वा स्यात्, पक्षे उदात्तश्च । यथा—

सु+उत्थितः=सूत्थितः । वि+ईक्षते=वीक्षते

व्यवस्थिताविभाषेयम् । व्यवस्था च प्रातिशाख्येषु कृता—

'इकारयोश्च प्रश्लेषे क्षैप्राभिनिहितेषु च' (स्वरितः) इति । सवर्णदीर्घः प्रश्लेषः । उदात्तस्वरितयोः स्थाने यो यण् स क्षैप्रः । 'एङः पदान्तादति' इति पूर्वरूपमभिनिहितः ।

**(१८९९) अनुदात्तस्य च यत्रोदात्तलोपः** (आदिरुदात्तः) ।६।१।१६१।

यस्मिन्ननुदात्ते परे उदात्तो लुप्यते तस्यादिरुदात्तः स्यात् । आदिग्रहणमनेकाक्षरेषु स्थाननियमार्थम् । उदात्तलोपनिमित्तभूतोऽनुदात्त उदात्तः स्यादित्यर्थः । उदात्तत्वाख्यो धर्मः स्वाश्रयनाशेऽपि पार्श्वगताक्षरेषु संक्रम्यानष्ट एव तिष्ठेदित्येभिर्विधिभिरवगम्यते । यथा—

कुमार + ई (ङीप्) = कुमारी ।

---

## स्वरविधिः ।

'प्रत्ययः' 'परश्च' इत्यधिकारस्थल एव स्वरोऽप्यधिक्रियते ।

**(१९००) आद्युदात्तश्च** ।३।१।३।

प्रत्ययः सर्वोऽप्युदात्त इत्युत्सर्गः । अनेकाक्षरेषु प्रत्ययेषु स्थाननियमार्थमादिपदग्रहणम् । 'यासुट् परस्मैपदेषूदात्तो ङिच्च' 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' 'चतुरनडुहोरामुदात्तः' इतिवद्विशेषविधानाभावे अनुदात्ता एवागमाः । अतः प्रत्ययानामाद्यन्तव्यवहार आगमनिरपेक्ष इति ज्ञेयम् ।

**(१९०१) अनुदात्तौ सुप्पितौ** ।३।१।४।

'स्वौजसमौट्.......' इति विभक्तयः पितः प्रत्ययाश्च अनुदात्ता इत्यपवादः । सुप एकाच एव । पित्सु तरसमबादयोऽनेकाचोऽपि सन्ति । तेषु देशविशेषनिर्देशाभावात् सर्वोऽप्यजनुदात्तः ।

(१) प्रथममनुबन्धनिबन्धनाः प्रत्ययस्वराः

**(१९०२) चितः** (अन्त उदात्तः) ।६।१।१६३।

चितः प्रत्ययस्यान्त उदात्तः स्यात् । यथा—

भङ्गुर । भासुर—'भञ्जभासमिदो घुरच्' (११३७)

'अनुदात्तं पदमेकवर्जं' इति शेषनिघातः ।

(१९०३) तद्धितस्य । ६ । १ । १६४ ।

चितस्तद्धितस्यान्त उदात्तः स्यात् । पूर्वेण सिद्धे ञित्स्वरस्य परत्वात् बलीयसो बाधनार्थमिदम् । यथा—

कौञ्चायन— 'गोत्रे कौञ्चादिभ्यः चफञ्'

(१९०४) कितः । ६ । १ । १६५ ।

तद्धितस्येत्येव । यथा— नाडायन—'नडादिभ्यः फक्' ।

(१९०५) तित् स्वरितम् । ६ । १ । १८५ ।

स्पष्टम् । तितः प्रत्ययस्यानेकाच्त्वे तु 'अन्त उदात्तः' इति प्रकरणादन्तः स्वरितः । शेषस्य निघातश्च यथा—

वाच्य—'ऋहलोर्ण्यत्' । क्व—किमोत् ।

(१९०६) लिति (प्रत्ययात् पूर्वमुदात्तं) । ६ । १ । १९३ । यथा—

चिकीर्षकः ।—ण्वुल् ।

(१९०७) ञ्नित्यादिर्नित्यम् । ६ । १ १९७)

नित्यग्रहणं विभाषानिवृत्त्यर्थम् । 'सौवर्यः सप्तम्यस्तदन्तसप्तम्यः' इति परिभाषया ञ्नित्प्रत्ययान्ता ग्राह्याः । ञिदन्तस्य निदन्तस्य चादिरुदात्तः । यथा— सौन्दर्य—ष्यञ् । वृष्टि—क्तिन् ।

'उदात्तादनुदात्तस्य स्वरितः' इति 'न्द' 'ष्टि' इत्यनयोः स्वरितः ।

(१९०८) उपोत्तमं रिति । ६ । १ । २१७ ।

रिदन्तस्योपान्त्यमुदात्तं स्यात् । यथा—

करणीय—अनीयर् । पटुजातीय—जातीयर् ।

(२) प्रकृतिस्वरः ।

धातुः प्रातिपदिकं चेति द्विविधा प्रकृतिः । उभे अपि व्युत्पन्नाव्युत्पन्नभेदेन पुनर्द्विविधे । तत्र उभयविधोऽपि धातुः

(१९०९) **धातोः** (अन्त उदात्तः) । ६ । १ । १६२ ।

इत्यन्तोदात्तः । अव्युत्पन्नानि प्रातिपदिकानि "**फिषोऽन्त उदात्तः**" इति फिट्सूत्रेणोत्सर्गतोऽन्तोदात्तानि । कृत्तद्धिताभ्यां व्युत्पन्नानां स्वरो निर्णीयते । — तत्रापि 'आद्युदात्तश्च' इत्यधिकारेण अनुबन्धभेदैश्च, सामान्यविधय उक्ता एव । विशेषेषु व्यापकाः कथ्यन्ते—

(१९१०) **कर्षात्वतो घञोऽन्त उदात्तः** । ६ । १ । १५९ ।

कर्षतेराकारवतश्च धातोर्घञन्तस्यान्त उदात्तः । यथा—

कर्ष । पाक । राग । दाय ।

'ञ्नित्यादि....' (१९०७) इत्याद्युदात्तस्यापवादोऽयम् ।

(१९११) **ह्रस्वनुड्भ्यां मतुप्** । ६ । १ । १७६ ।

'अन्तोदात्तात्' इति वर्तते । उदात्तह्रस्वान्तात् नुटश्च परो मतुबुदात्तः । पित्स्वरबाधनार्थमिदम् । यथा—अग्निमान् । वायुमान् । अक्षण्वान् ।

(१९१२) **अन्तश्च तवै युगपत्** । ६ । १ । २०० ।

चकारादादिः । तवैप्रत्ययान्तस्यादिरन्तश्च युगपदुदात्तौ स्याताम् । एवमेते द्व्युदात्ताः । यथा— कर्तवै । हर्तवै ।

(१९१३) **निष्ठा च द्व्यजनात्** (संज्ञायां) । ६ । १ । २०५ ।

निष्ठान्तस्य द्व्यचः संज्ञायामादिरुदात्तो न त्वाकारः । यथा—

दत्तः गुप्तः । (आकारश्चेत्) त्रातः ।

(१९१४) **यतोऽनावः** । ६ । १ । २१३ ।

यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तः । नव्यशब्दस्य तु न । तित्स्वरितस्यापवादः । यथा— चेय, नेय—'अचो यत्' ।

कण्ठ्य, ओष्ठ्य—'शरीरावयवाद्यत्' ।

## (३) सुप्स्वरः।

'अनुदात्तौ सुप्पितौ' (१९०१) इति सुपः सर्वानुदात्ताः। दीव्यतीति देव इति पचाद्यजन्तो देवशब्दश्चित्त्वादन्तोदात्तः। देवस् इति प्रथमैकवचने प्रत्ययस्य हल्मात्रत्वात् प्रत्ययस्वरस्य नावकाशः। देव औ इति द्विवचने उदात्तेन सहैकादेशात् औप्रत्यय उदात्तो भवति। एवमन्यत्राप्यजादिप्रत्ययेष्वेकादेशे। इनादेशे गुणस्योदात्तत्वे तस्मात् परो नकार 'उदात्तादनुदात्तस्य....' इति स्वरितः। आमन्त्रितस्याद्युदात्तत्वं वक्ष्यते—

| | | |
|---|---|---|
| देवः | देवौ | देवाः |
| हे देव | हे देवौ | हे देवाः |
| देवम् | देवौ | देवान् |
| देवेन | देवाभ्याम् | देवैः—देवेभिः। |
| देवाय | ,, | देवेभ्यः |
| देवात् | ,, | देवेभ्यः |
| देवस्य | देवयोः | देवानाम् |
| देवे | ,, | देवेषु |

**(१९१) सावेकाचस्तृतीयादिर्विभक्तिः** (उदात्तः)। ६। १। १६८।

सौ सप्तमीबहुवचने यत् प्रातिपदिकमेकाच् तस्मात् परा तृतीयादिविभक्तिरुदात्ता स्यात्। भसंज्ञायामल्लोपेन कृतमेकाच्त्वं परिहर्तुं 'सावेकाचः' इति। यथा—वाचा वाग्भ्यां वाग्भिः। याता याद्भ्यां याद्भिः। 'उदात्तादनुदात्तस्य स्वरितः' क्रियते चेत् वा चा इत्यादिवत् स्वरितः पाठ्यः। एवमन्यत्राप्यूह्यम्। स्वरितोऽयं सर्वत्र न दर्शितः।

**(१९१६) अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे** । ६। १। १६९।

नित्यसमासादन्यत्र यदुत्तरपदमन्तोदात्तमेकाच् च तस्मात् परा तृतीयादिर्विभक्तिरुदात्ता वा स्यात्। पक्षे समासान्तोदात्तत्वं प्रकृतेः। यथा—

परमवाचा, परमवाचा।

(१९१७) **अञ्चेश्छन्दस्यसर्वनामस्थानम्** । ६ । १ । १७०

इन्द्रो दधीचो अस्थभिः ।

'चौ' इति वक्ष्यमाणस्य प्रकृतेरन्तोदात्तस्यापवादः ।

(१९१८) **ऊडिदंपदाद्यप्पुंरैद्युभ्यः** । ६ । १ । १७१ ।

एभ्योऽसर्वनामस्थानविभक्तिरुदात्ता । यथा—

| | | |
|---|---|---|
| ऊठ्— | प्रष्ठौहः | अप्—अपः । |
| इदम्— | आभ्यां | पुंस्—पुंसः । |
| | | रै—रायः । |
| पदाद्यादेशः— | पदा | दिव्—दिवः । |

(१९१९) **शतुरनुमो नद्यजादी** । ६ । १ । १७३ ।

नुंहीनशतृप्रत्ययान्तादन्तोदात्तात् परा ङी अजाद्यसर्वनामस्थानविभक्तिश्चोदात्ता । यथा— तुदती—तुदता ।

(१९२०) **उदात्तयणो हल्पूर्वात्** । ६ । १ । १७४ ।

नदी अजाद्यसर्वनामस्थानं चोदात्तम् । यथा—

कर्त्री—कर्त्रा—उदात्तस्य तृच ऋकारस्य यण् ।

(१९२१) **नोङ्धात्वोः** । ६ । १ । १७५ ।

पूर्वोक्तं न । यथा— ब्रह्मबन्ध्वा, खलप्वे

(१९२२) **नामन्यतरस्याम्** । ६ । १ । १७७ ।

ह्रस्वात् परो नामुदात्तो वा । यथा—

अग्नीनां, अग्नीनां—वायूनां, वायूनां ।

(१९२३) **ङ्याश्छन्दसि बहुलम्** । ६ । १ । १७८ ।

ङ्यन्तात् परो नां छन्दसि बहुलमुदात्तः ।

(१९२४) **न गोश्वन् साववर्णराडङ्क्रुङ्कृद्भ्यः** । ६ । १ । १८२ ।

एभ्यस्तृतीयादिर्विभक्तिर्नोदात्तः । साववर्णः प्रथमैकवचने अवर्णान्तः । कृदिति कृञः क्विप् । अङ् इति अञ्चतेः पूजार्थकात् क्विन् । यथा—गवा । शुने । येभ्यः, तेभ्यः । केभ्यः । राजः । प्राञ्चि । कुञ्चां । कृत्सु ।

(१९२५) **सर्वस्य सुपि** । ६ । १ । १९१ ।

आदिरुदात्तः । यथा—सर्वः सर्वौ सर्वे ।

(१९२६) **आमन्त्रितस्य च** (आदिरुदात्तः) । ६ । १ । १९८ ।

यथा— हे देव। देवौ देवाः ।

वाक्यादिस्थस्यैवायमाद्युदात्तः । पदात् परस्य तु सर्वानुदात्तो वक्ष्यते ।

(१९२७) **युष्मदस्मदोर्ङसि** । ६ । १ । २११ ।

(१९२८) **ङयि च** । ६ । १ । २१२ ।

आदिरुदात्तः । यथा—तव । मम । तुभ्यम् । मह्यम् ।

(१९२९) **चौ** (अन्तः) । ६ । १ । २२२)

लुप्ताकारनकारे अञ्चतौ परे पूर्वस्यान्त उदात्तः । यथा—देवद्रीची ।

---

## (४) तिङ्स्वरः ।

(१९३०) **तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः** । ६ । १ । १८६ ।

तासेरनुदात्तेतो ङितोऽकारान्तोपदेशाच्चाङ्गात्परं लकारात्मकं सार्वधातुकमनुदात्तं स्यात्। ह्नु इङ् इत्येताभ्यां परं तु न । यथा—

तासि— दातारौ दातारः ।

अनुदात्तेत्— आस्ते आसाते आसते ।

ङित्— शेते शयाते शेरते ।

अदुपदेश— पचतः तुदतः करिष्यतः ।

विधिरयं महान्तं व्याप्नोति विषयम् । लकारेषु लिडाशीर्लिङौ द्वावेवार्द्धधातुकौ । अनुदात्तेत्साहचर्याद्यद्यपि ङिद्धातुरेव गृह्यते तथापि आदादिका आत्मनेपदिनः सर्वेऽत्रान्तर्भूताः । शप्–श्यन्–श–यक्–चङ्–अङ्

—क्य इत्यादिभिरदुपदेशा बहवः । एवञ्च सुप इव तिङोऽपि भूयसानुदात्ताः। सुप्तिङोरनुदात्तभूयस्त्वं चावश्यकम्, अन्यथा प्रकृतिस्वरस्य विषयः संकुचेत् ।

(१९३१) **आदिस्सिचोऽन्यतरस्याम्** । ६ । १ । १८७ ।

सिजन्तस्यादिरुदात्तो वा स्यात् । पक्षे चित्त्वादन्तोदात्तः । यथा—

मा हि कार्ष्टाम्, मा हि कार्ष्टाम् । मा हि लाविष्टाम्, मा हि लाविष्टाम् ।

सिचश्चित्करणसामर्थ्यादागमानुदात्तत्वमत्र न भवति ।

(१९३२) **स्वपादिहिंसामच्यनिटि** । ६ । १ । १८८ ।

एषामजादावनिटि लसार्वधातुके परे आदिरुदात्तो वा । यथा—

स्वपन्ति । स्वपन्ति

(१९३३) **अभ्यस्तानामादिः** । ६ । १ । १८९ ।

अजादावनिटि लसार्वधातुके अभ्यस्तानामादिरुदात्तः । यथा—

ददति । दधतु । जाग्रति । जक्षतु ।

(१९३४) **अनुदात्ते च** । ६ । १ । १९० ।

अविद्यमानोदात्ते च लसार्वधातुके परेऽभ्यस्तानामादिरुदात्तः । अनजाद्यर्थमारम्भः । यथा—

ददाति । जहाति । जिहीते । मिमीते ।

(१९३५) **भीह्रीभृहुमदजनधनदरिद्राजगरां प्रत्ययात् पूर्वं पिति** । ६ । १ । १९२ ।

एषामभ्यस्तानां पिति लसार्वधातुके प्रत्ययात् पूर्वमुदात्तम् । यथा—

बिभेति । जिहेति । जुहोति । इत्यादि

(१९३६) **अचः कर्तृयकि** । ६ । १ । १९५ ।

अजन्तानां कर्तृयकि परे आदिरुदात्तो वा । यथा—

लूयते लूयते वा केदारः स्वयमेव ।

(१९३७) **थलि च सेटीडन्तो वा** । ६ । १ । १९६ ।

सेटि थलन्ते पदे आदिरन्त इड्वा उदात्तः । लित्स्वरेण प्रत्ययात् पूर्वमुदात्तम् । यथा— लुलविथ—चत्वारोऽपि पर्यायेणोदात्ताः ।

(१९३८) **चङ्यन्यतरस्याम्** (उपोत्तमम्) । ६ । १ । १२८ ।

चङन्ते उपोत्तममुदात्तं वा । पक्षे अदुपदेशलसार्वधातुकस्यानुदात्तत्वाच्चङाश्चित्स्वरः । यथा—मा हि चीकरतम्, चीकरतम् वा ।

---

## (९) निपातस्वरः ।

नाम्नामिव निपातोपसर्गयोरपि स्वराः फिट्सूत्रेषु विधीयन्ते । यथा—**निपाता आद्युदात्ताः** । ४ । १२ । **उपसर्गाश्चाभिवर्जम्** । ४ । १३ । **एवादीनामन्तः** । ४ । १४ । **वाचादीनामुभावुदात्तौ** । ४ । १५ । **चादयोऽनुदात्ताः** । ४ । १६ । इति । पादचतुष्टयविभक्तानि फिट्सूत्राणि शान्तनवाचार्यप्रणीतानीत्याहुः । तत्कृतानां ग्रन्थान्तराणामनुपलम्भात् कोऽसावाचार्य इति न विद्मः । फिट्सूत्रेषु पाणिनीयपरिभाषादर्शनादयं पाणिनेरर्वाचीन एव भवितुमर्हति । कण्ठतश्च तथोक्तमुद्योते नागोजिभट्टपादैः । किन्तु फिट्सूत्रकारः-अष् (अच्), हय् (हल्), फिष् (प्रातिपदिकं) यमन्वा (वृद्धिः), नप् (नपुंसकं), शिट् (सर्वनाम), स्फिक् (लुप्) इत्यपाणिनीयाभिः संज्ञाभिर्व्यवहरति । नपुंसकशब्दस्य 'नप्' इति सङ्कोचनमेव प्रस्थानस्यास्य नवीनतां विशदयति । पाणिनिस्तावत् स्वकपोलकल्पितेषु परं मात्रालाभव्यसनमाविष्करोति । तदनन्तरगामिनामेव तावद्दूरमल्पाक्षरीकरणसंरंभः प्रसरति यावता सर्वजनीनानां साधुशब्दानां वैरूप्यकरणमपि प्रसज्यते । यथा वोपदेवव्याकरणे ह्रस्वदीर्घप्लुतानां पार्श्वतक्षणेन 'स्वर्घप्लु' इति सङ्कोचनम् । अतो मुग्धबोधव्याकरणसजातीयात् कुतश्चित् प्रस्थानादुद्धृता एताः संज्ञा इति प्रतिभाति ।

अथ नाम्नां लिङ्गानुशासनवत् स्वरानुशासनमपि पाणिनिः स्वयमेव कुतो नारब्धवानिति जिज्ञासोदेति । नूनं 'उणादयो बहुलं' इति सूत्रयन्नाचार्यः स्वरानुशासनमपि विहितं मन्यते । उत्सर्गतोऽन्तोदात्तानि प्रातिपदिकानि, यत्र पुनर्देशभेद आवश्यकस्तत्र प्रत्ययानां रेफचकारादयोऽनुबन्धा योज्या इति स्यादाचार्यस्य हृदयम् । उणादयः पुनः शाकटायनीया इति प्रवादस्य न पश्यामः कमप्याधारम् । किमाचार्यः परकीयाणां सूत्राणामुपपत्तिसंपादनाय 'तितुत्रतथसरकसेषु च' इत्यादिसंविधानमारभेत? । किं वा पञ्चपाठीप्रणेता पाणिनिरुणादीनप्यसङ्कलय्य विश्राम्येत्? । यथा नैरुक्तानां क्रियासमाम्नाय आचार्येणानुबन्धासज्जनेन परिष्कृतस्तथा तेषां नामनिरुक्तिसम्प्रदायोऽपि नवीकृतो भवितुमेवार्हति । अनुबन्धकरणे च तत्तद्व्याकरणप्रस्थानप्रवर्तकानां परस्परनिरपेक्षत्वं 'आङ आपः' 'आङो नास्त्रियां' इत्यष्टाध्यायीदृष्टानां पूर्वाचार्यसङ्केतानां विमर्शनप्रस्तावे निरूपितं महाभाष्ये । किञ्च, उणादीनां शाकटायनोपज्ञत्वे बहुत्र नामग्रहणेन तमाचार्यं पूजयन् पाणिनिर्बाहुलकोपदेशेन तदीयं ग्रन्थं न कदाप्युपाहासिष्यत् ।

नामव्युत्पत्तिविषये प्राचीनानां पक्षद्वयमवर्तत । यथाह यास्कः—"नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च; न सर्वाणीति गार्ग्यो वैयाकरणानां चैके" इति । भाष्यकारश्च 'नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकं" इति तदेतदनुवदति । 'उणादयो व्युत्पन्नाः' 'उणादयोऽव्युत्पन्नाः' इति पाणिनीयव्याख्यातॄणां ग्रन्थेषु दृश्यमानो वादोऽप्यस्यैव पक्षद्वयस्य रूपान्तरम् । तत्र 'शकटस्य च तोकं' इति परिहासगर्भेण नामनिर्देशेनात्मनः शाकटायनमते स्पष्टमरुचिं प्रकाशयति पतञ्जलिः । बहुत्र चाह 'उणादयोऽव्युत्पन्ना इति वक्ष्यामि' इति । पाणिनेस्तु 'तितुत्रतथसरकसेषु च' इति इण्निषेधारम्भदर्शनाद् व्युत्पत्तिमतमेवाभिमतमित्यवगम्यते । किन्तु "अनन्वितेऽर्थे, अप्रादेशिके विकारे, अर्थनित्यः परीक्षेत केनचिद्वृत्तिसामान्येन; अविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात्; न त्वेव न हि निर्ब्रूयात्" (यास्कनिरुक्तम्— २ ।

१। १।) इति नैरुक्तानां वीरव्रतं तु पाणिनिर्न सहते। तिरोहितप्रकृतिप्रत्ययविभागानां शब्दानां निपातनेनानुशासनमेवाचार्यस्याभिमतं प्रतिभाति। अचतुरविचतुरादिषु यद्यपि लाघवार्थं निपातनसरणिरनुसृता तथापि परुत्परार्यैषमआदिषु तथा नेति स्पष्टम्। एवं च नामनिर्वचनार्थमपि यत्नः पाणिनिना कृतो भवेत्। किन्तु अद्योपलभ्यमान उणादिसूत्रपाठः पाणिनिप्रोक्तस्य संक्षेपस्य प्रपञ्चः स्यात्। तथाहि आचार्यो दशविकरणीभिन्नान् धातून् पठित्वा नाम्नां धातूकरणपद्धतिञ्चोपदिश्यान्ते 'बहुलमेतान्निदर्शनम्' इत्याह। तद्धितेषु च 'तस्यापत्यं' इत्यादीनर्थानधिकृत्य 'शेषे' इत्युपसंहरति। तथैव 'धः कर्मणि ष्ट्रन्' (३। २। १८१।) इत्यादिं नामनिरुक्तिपद्धतिं प्रदर्श्य 'उणादयो बहुलम्' इति सूत्रयामास। 'गर्गादिभ्यो यञ्' इत्यादीनि गणान्तराणीव "कृमावाजिमिस्वदिसाध्यशूभ्य उण्" इत्यादीनि गणसूत्रनिर्विशेषाणि कतिचन सूत्राणि च पपाठ। यथा पुनरर्वाचीनेषु कैश्चिद्धातूनामर्थनिर्देश आकृतिगणानां पूरणञ्चारब्धं तथान्यैरुणादयोऽपि प्रपञ्चिताः। प्रपञ्चयितुश्चाद्य लुप्तप्रचारत्वादनिर्णयस्वरूपेण शाकटायनग्रन्थेन बहूपकृतं स्यात्। एवं मनुशिष्यप्रणीतायाः स्मृतेर्मनुस्मृतिव्यवहार इव उणादिसूत्रपाठस्य शाकटायनप्रोक्तत्वप्रथा समजनीति कल्पनीयम्। एवं च ओपर्ट् (Dr. Oppert) महाशयेन मद्रास् (Madras) नगरे मुद्रापितस्य जैनव्याकरणग्रन्थस्य यादृशः शाकटायनीयव्यपदेशस्तादृश एवोणादिसूत्राणामपीत्यलं शाखाचङ्क्रमणरभसेन।

---

## (६) पदस्वरः।

प्रकृतिप्रत्ययनिरपेक्षमखण्डस्य पदस्याष्टमाध्यायप्रथमपादे स्वरो विहितः। सोऽयं पदस्वरः।

'तस्य परमाम्रेडितं' इत्यतः परम्।—

(१९३६) **अनुदात्तश्च**। ८। १। ३।

पदद्वित्वे परमाम्रेडितम्, तच्च सर्वानुदात्तं स्यात्। तेन 'नित्य-वीप्सयोः' इत्यादिना द्वित्वे दिनेदिने, पुनःपुनः, उपर्युपरि इत्यादौ द्विरुक्तद्वितीयरूपं सर्वानुदात्तं भवति।

'पदस्य'। 'पदात्' 'अनुदात्तं सर्वमपादादौ' इत्यधिकारे युष्मदस्मदोर्वस्नसाद्यादेशा उक्ताः। शेषाः कथ्यन्ते।—

(१९४०) आमन्त्रितस्य। ८। १। १९।

पदात् परस्यापादादौ स्थितस्य आमन्त्रितस्य पदस्य सर्वानुदात्तः स्यात्। यथा—पचसि देवदत्त। पदात् परत्वाभावे आद्युदात्त उक्तः (१९२६)। आमन्त्रितस्याविद्यमानवद्भावः (३६१), तन्निषेध (३६२) श्च पूर्वोक्तावत्रानुसन्धेयौ। अत्र विषये

(१९४१) सुबामन्त्रिते पराङ्गवत्स्वरे। २। १। २।

इति काचन परिभाषाप्यस्ति। कात्यायनपरिष्कृतस्य सूत्रस्यास्य, आमन्त्रितेनान्वितं षष्ठ्यन्तं तदीयशरीरानुप्रविष्टमिव स्वरे कर्तव्ये ग्राह्यमित्यर्थः। तेन

यत्ते दिवो दुहितर्मर्त्तभोजनम्।

इत्यादौ 'दिव' इति षष्ठ्या अपि सर्वानुदात्तत्वं भवति।

(१९४२) तिङ्ङतिङः। ८। १। २८।

तिङन्तं पदमतिङन्तात् पदात् परमनुदात्तं स्यात्। यथा—

देवदत्तः पचति। यज्ञदत्तो भुङ्क्ते।

अग्निमीळे पुरोहितम्।

(१९४३) न लुट्। ८। १। २९। यथा— श्वः कर्ता

लुट्प्रयोगश्छन्दसि न दृश्यते इत्युक्तं। युक्तिस्तु नोक्ता। सात्र प्रदर्श्यते। तृजन्ताल्लुडन्तस्यास्तेरनुप्रयोगेण निष्पादितान्येव लुड्रूपाणि। तथाहि-

भविता भवितारौ भवितारः—अत्र प्रथमपुरुषे अस्तिरूपाणां प्रयोगं विनैव गम्यमानत्वादप्रयोगः। यथा— 'कारस्करो वृक्षः' 'मातापितरौ

वन्धौ' 'ब्राह्मणा भोजनप्रियाः' इत्यादौ । भवितासि भवितास्थः भवितास्थ । भवितास्मि भवितास्वः भवितास्मः । एषु असि स्थः स्थ, अस्मि स्वः स्म इति अस्तिरूपाणि स्फुटानि । द्विबहुवचनयोः भवितारौ स्थः, भवितारौ स्मः इति रूपे कृत एवान्वयो घटेत इत्याक्षेपस्त्वकिञ्चित्करः । तथैव 'इयं रूपिणी भविता' इत्यादौ लिङ्गव्याघातश्च न गणनीयः । 'शक्यमञ्जलिभिः पातुं....' इत्यादौ सामान्ये नपुंसकवदत्र सामान्ये पुल्लिङ्गैकवचनमित्येव । तृज्वाच्यं कर्तृत्वं पुन्धर्म इति पुल्लिङ्गरूपमुपात्तम् । किञ्च 'अस्ति' 'आह' इत्यादीनां विभक्तिप्रतिरूपकाव्ययत्वे 'वयमस्ति' 'ऋषय आह' इति प्रयोगो यथा दुर्वारस्तथा तृचोऽपि संस्करणप्रत्ययस्थानाभिषेके लिङ्ग-वचनोपाध्यपरिच्छिन्नः प्रयोग इति सुलभः समाधिः । आत्मनेपदेऽपि 'से साथे ध्वे, हे स्वहे स्महे, इति सर्वं व्यतिस्ते इत्यस्तेरात्मनेपदे स्थितमेव रूपम् । त्रैकालिकस्य तृचो भाविकाले व्यवस्थापनं च सङ्केतायत्तम् । किञ्च 'पुरोपकण्ठोपवनं किलेक्षिता दिदेश यानाय निदेशकारिणः' (नै. च.) 'शोभामद्रेः स्तिमितनयनप्रेक्षणीयां भवित्रीम्' (मे. सं.) इत्यादिषु प्रयोगेषु तृचो भाव्यर्थे प्रयोगः स्वारसिको दृश्यते । एवं आमन्तो लिंडिव लुडप्य-नुप्रयोगानिष्पन्नः । अनुप्रयोगैराख्यातरूपानिष्पादनपद्धतिश्च वैदिकदशान्त एव संस्कृतेऽवतारिता । अत एव आमन्तो लिट् 'अमन्त्रे' इत्याचार्येण मन्त्रे निषिद्धः । ब्राह्मणेषु तु सानुप्रयोगो लिडिव लुडपि कदाचिद्दृश्येत । लिटि यथा व्यवहितोऽप्यनुप्रयोगः काळिदासादिग्रन्थेषु दृश्यते तथा लुट्यपि । यथा—

'अन्तश्शुद्धस्त्वमसि भविता वर्णमात्रेण कृष्णः' (मे. सम्.)

'ततोऽस्मि शकुनिं हन्ता मिषतां सर्वधन्विनाम्' (भार-उद्यो-१६१—३७).

किञ्च

'गत्वा सद्यः फलमविकलं कामुकत्वस्य लब्धा'

इति मेघसन्देशश्लोके 'लब्धासे' इति वक्तव्ये प्रथमपुरुषवन्मध्यमेऽप्यनु-प्रयोगं विना 'लब्धा' इति प्रयुङ्क्ते महाकविः । व्याख्यातारस्तु प्रयोगानी-दृशानन्यथानयनेन साधूकुर्वन्ति चेत् 'तं पातयां प्रथममास' इत्यादि लिट्-

प्रयोगेष्वपि तैर्नोदासितम् । उक्तरीत्या लुटस्तिङन्तत्वाभावादेव सिद्धो निघाताभावः । आचार्यस्तु व्याकरणप्रणयनकाले लुटोऽपि लकारान्तरतुल्य योगक्षेमतां पश्यन् तस्य लकारेष्वेकतमत्वमभ्युपेत्यानुदात्ततां निषेधति ।

(१९४४) **निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम्** ।
। ८ । १ । ३० ।

निपातैरेतैर्युक्तं तिङन्तं न निहन्यते । स्पष्टमुदाहरणम् । अथ त्रिंशत्प्रायैः सूत्रैः नह, सत्यं, अङ्ग, हि, यावत्, च, वा, एव, अहो, ननु इत्यादीनां निपातान्तराणामपि योगे तिङन्तनिघातं निषेधत्याचार्यः । अनेकार्थानां केषांचिदर्थभेदनिबन्धनमपि करोति निषेधम् । ग्रन्थविस्तर-भयात्तत्प्रपञ्चोऽत्रोपेक्ष्यते ।

(१९४५) **यद्वृत्तान्नित्यम्** । ८ । १ । ६६ ।

यच्छब्दरूपावलिर्यद्वृत्तम् । तस्मात् परं तिङन्तं नानुदत्तम् । प्रक-रणेऽस्मिन् अव्यवधानेन परत्वं न विवक्षितमिति ज्ञापकात् सिद्धम् । अतो यच्छब्दरूपघटितस्य वाक्यस्य तिङन्तं न निहन्यत इत्यर्थो लभ्यते । एवञ्च विशेषणवाक्येषु 'तिङतिङः' इति निघातो न कार्य इति फलति ।

(१९४६) **गतिर्गतौ** (अनुदात्तः) ८ । १ । ७० ।

अनेकोपसर्गसमवाये पूर्वं पूर्वमनुदात्तम् । यथा—

अभ्युद्धराति समुदानयाति अभिसम्पर्याहरति ।

(१९४७) **तिङि चोदात्तवति** । ८ । १ ७१ ।

गतिरनुदात्तः । 'निपाता आद्युदात्ता' इत्यस्यापवादः ।

---

## (७) समासस्वरः ।

(१९४८) **समासस्य** (अन्त उदात्तः) ६ । १ । २२३ ।

उत्सर्गतः समासा अन्तोदात्ताः । यथा—

राजपुरुषः । ब्राह्मणसमित् ।

अन्तस्योदात्तत्वे शेषनिघातः।

अथास्यापवादः प्रकृतिभावः—

(१९४९) **बहुव्रीहौ प्रकृत्या पूर्वपदम्**। ६। २। १।

बहुव्रीहौ पूर्वपदस्य व्यस्तदशायामुदात्तः स्वरितो वा यः स्वरः स्वतः सिद्धः स एव न तु समासनिबन्धनोऽन्तोदात्तः। (पूर्वपदस्य सर्वानुदात्तत्वे तु अन्तोदात्तः सावकाश एव)यथा—

श्रोत्रिय पुत्रः—'श्रोत्रियन् छन्दोऽधीते' इति नित्त्वादाद्युदात्तः।

कार्ष्णोत्तरासङ्गः—कार्ष्णशब्दोऽअन्तत्वात् ञित्त्वेनाद्युदात्तः।

समासैरेव पूर्वोत्तरपदे असकृत् प्रकल्प्य ग्रथितेषु दीर्घदीर्घसमासेषु स्वरः कथं निर्णीयत इति न भेतव्यम्। परास्तस्वरयन्त्रणैराधुनिकैरेव तादृशाः समासाः प्रयुज्यन्ते। विशेषविधयो नात्र व्याख्यायन्ते। ते सूत्रपाठादवगन्तव्याः। एवमग्रेऽपि।

(१९५०) **तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः** ।६।२।२।

एते तत्पुरुषे प्रकृत्या स्युः। यथा—

तुल्यश्वेतः, सदृशश्वेतः, शंकुलाखण्डः, शस्त्रीश्यामः इत्यादि।

(१९५१) **गतिकारकोपपदात् कृत्**। ६। २। १३९।

गतेः कारकादुपपदाच्च कृदन्तमुत्तरपदं तत्पुरुषे प्रकृतिस्वरं स्यात्।

यथा— गति—प्रहरणं—ल्युटः कृत्प्रत्ययस्य लित्स्वरः।

कारक—इध्मव्रश्चनः— ,, ,, ,,।

उपपद—सुकरः—खलः ,, ,, ,,।

(१९५२) **उभे वनस्पत्यादिषु युगपत्**। ६। २। १४०।

एषु पूर्वोत्तरपदे युगपत् प्रकृत्या स्याताम्। तेन वनस्पतिः बृहस्पतिः। इत्यादयो द्व्युदात्ताः। उदात्तश्च पदयोरादौ।

(१९५३) **देवताद्वन्द्वे च**। ६। २। १४१।

उभे प्रकृत्या। तेन इन्द्राबृहस्पती इति पदं त्र्युदात्तम्। त्रीण्यप्याद्युदात्तानि पदानि।

(१९५४) **थाथघञ्क्ताजबित्रकाणां** (अन्तः) ६। २। १४४।

थ, अथ, घञ्, क्त, अच्, अप्, इत्र, क एतदन्तानां गतिकारकोपपदेभ्यः परेषामन्त उदात्तः । 'गतिकारकोपपदात्कृत्' इति कृदुत्तरपदप्रकृतिस्वरस्यापवादः । प्रत्ययेष्वाद्यावौणादिकौ । अन्ये कृतः । योज्यमुदाहरणम् । अत्र समासस्वरविधौ सामान्यविधीनपि कांश्चिदुपेक्ष्य दिङ्मात्रमेव दर्शितम् । वाक्यस्वरविधिः सम्भवन् प्लुतविधिना एकश्रुतिविधिना च चरितार्थः ॥

---

## तन्त्रप्रतिष्ठा ।

एवमत्र पाणिनीयैः सूत्रैः सामान्यतो निरूपिता रूपसिद्धिः शब्दानां लौकिकानां वैदिकानां च । विशेषविधिष्वपि येकेचिदवश्यविज्ञेयतया प्रतिभातास्तत्र तत्रोपात्ताः । शेषास्त्वेतावता समधिगतशास्त्रमर्यादस्य छात्रस्य विना व्याख्यानमष्टाध्यायीपरिशीलनादेव सुगमा भविष्यन्तीति विश्वसिमः । सन्ति च काशिकावृत्तिप्रभृतयोऽनुगतव्याख्यानपरा ग्रन्थाः । सत्यं, आचार्येणानुशिष्टायां सूत्राणां किञ्चिदूनचतुस्सहस्र्यामर्धमपि नास्माभिर्विवृतम्, अथापि निसर्गदुरासदे पाणिनीयतन्त्रमहादुर्गे सुकुमारमतीनां प्रविविक्षूणां सुखप्रवेशक्षमं द्वारमेकं चेदेतावता व्यवसायेनोद्घाटितं तर्हि फलितमेव काममस्मन्मनोरथैः । अथोपक्रान्तस्य प्रक्रियासिद्धिं परमप्रयोजनं प्रकल्प्य तत इतो विप्रकीर्णानां कतिपयसूत्राणामापातसुगमेन विवरणेन परमुपदर्शितस्वरूपस्य पाणिनीयतन्त्रस्य संक्षिप्तमपि सर्वङ्कषं कमपि सर्वाङ्गीणं विमर्शमनिर्वर्त्य सहसोपसंहरणमन्याय्यं मन्यामहे । अतः संस्कृतसाहित्यसाम्राज्ये कियती श्रीपाणिनिमहर्षेः प्रतिष्ठेति विचारयिष्यामः ।

पाणिनिस्तावत् शाकल्यशाकटायनप्र*भृतीन् दशाचार्यान् नामग्राहं स्मरति, 'प्राचां' 'उदीचां' 'आचार्याणां' 'एकेषां' इति चतुरश्च बहुवचनेन निर्दिशति । सैवैरेभिः स्वतन्त्रव्याकरणप्रणेतृभिश्च भवितव्यम् । अन्यथा तत्स्मरणस्यानर्थक्यं प्रसज्येत । पूर्ववैयाकरणानां मतानि विविच्य

* १. शाकल्यः, २. शाकटायनः, ३. गार्ग्यः, ४. भारद्वाजः, ५. आपिशलिः ६. काश्यपः, ७. स्फोटायनः, ८. चाक्रवर्मणः, ९. सेनकः, १०. गालवः ।

निर्दिशन्नाचार्य आत्मनस्तदुपजीवित्वमनुमापयति । 'औङ आपः' 'आङो नास्त्रियां' इति कदाचित्तदीयैश्च सङ्केतैर्व्यवहरति । विभक्तिसमासादीनां प्रथमाव्ययीभावादीनि नामानि सिद्धवत्कृत्य न लक्षयति । तथैवागमा-देशप्रत्ययानपि । लोपस्य लक्षणकरणं तु 'प्रत्ययस्य लुक्श्लुलुपः' इति विशेषसंज्ञाविधानार्थं स्यात् । गुणवृद्धिसंप्रसारणोपसर्गादयोऽनुगतार्थाः संज्ञाः प्रायः प्राचीना एवेति प्रतिभाति । कुतस्तर्हि गुणवृध्यादयो लक्षिताः, प्रथमाव्ययीभावादयस्तु नेति न चोदनीयम् । प्रथमादयो विभक्तिसंज्ञाः केवलसंख्यानिबन्धनत्वान्निर्वचनं नापेक्षन्ते, अन्ये तु परिभाषिकत्वात् सङ्केतितार्थस्मरणाय निरूपितस्वरूपा इत्येव । 'औङ्' 'आङ्' इत्युक्तयोर्विभ-क्त्योः प्रत्ययशरीरबाह्यस्य ङकारस्य श्रवणादनुबन्धकरणं प्राचीनैरप्याद्दृ-तामिति ज्ञायते । अनुबन्धानां प्रत्याहारकरणे विनियोगोऽपि प्राचीनैः प्रहतः पन्था भवितुमर्हति । अन्यथा इत्संज्ञापेक्षेण प्रत्याहारनयेन निर्व-र्तितं हल्पदं इत्संज्ञोपदेशके 'हलन्त्य'–सूत्र एव प्रयुज्य व्याख्यातृभिरुद्घो-षितस्यान्योन्याश्रयदोषस्यावकाशमाचार्यो नादास्यत् ।

प्राचीनग्रन्थानामधुनानधिगमात् कियदुपकृतं तैः पाणिनेरिति परि-च्छेत्तुं न पारयामः । एतावत्तु जानीमः, यत् पाणिनीयापेक्षया गणनीयः कोऽपि गुणनिकर्षस्तेषामासीदिति । ते सर्वे सिलिन्ध्रनाशं नष्टाः, पाणिनी-यस्तु सुमेरुरिवाद्याप्यक्षोभ्यो वर्तते । लोके हि जीवितमत्सरे गुणोत्कृष्ट एवोद्रिच्यते । क्षुद्रो वा प्रभूतो वा भवतु पाणिनेः पुरोगामिभ्य उपनतो विज्ञानदायः, स तं स्वयत्नेन पुष्कलीकृत्य क्षोदक्षमं सर्वभाषानुग्राहकं शब्दानुशासनमकल्पयदिति तु प्रत्यक्षम् । प्रतिदिनमिवोदीयमानैर्नवनवैर्वि-कारैर्वैदिकभाषातो लौकिकभाषाया विदूरीभावे प्रसक्ते श्रुतीनामार्थो विस्मृतो मा भूदिति 'रक्षोहागमलघ्वसन्देहान् प्रयोजनं' प्रकल्प्य शब्दान् व्युत्पा-दयितुं व्याकर्तुं च सर्वतः पण्डितैः प्रवर्तितस्य यत्नस्य परिणामात्मना समु-द्भूतेषु निरुक्तेषु व्याकरणेषु च यास्कनिरुक्तं पाणिनिव्याकरणं चेत्येकैकमे-वाद्यत्वेऽस्माभिरुपलभ्यते । गुणानुरागी लोक इति न्यायादनयोः सुरक्षित-त्वमेवास्पदीकृत्य प्रशस्ततरत्वमनुमितमित्येव ।

## १. पाणिनीयसिद्धान्तः ।

संज्ञापरिभाषकथनं, प्रत्ययविधिः, (लोपागमादेशरूप)- वर्णविकारोपदेशः, एकत्रोक्तस्यान्यत्रातिदेशः, स्वरनिरूपणं इतीमान् परिमितानेव विषयानावृत्यावृत्त्य सूत्रैः प्रतिपादयन् पाणिनिः प्रक्रियोपदेशमात्रेण निर्वृत इव दृश्यते । अथापि सिद्धान्तचर्चायां न सर्वथोदासितमाचार्येण । तदर्थेऽपि पञ्चसूत्री विनियुक्तास्ति । तामेनां व्याख्यास्यामः।—'लुपि युक्तवद्व्यक्तिवचने' (१३८१) इति लुपा लोपे प्रकृतेः-'युक्तवद्भाव'शब्दितां लिङ्गवचनप्रत्यापत्तिमुपदिश्य स्वयमाक्षिपति।—

(१९९९) **तदशिष्यं संज्ञाप्रमाणत्वात्** । १ । २ । ९३ ।

तत्=युक्तवद्वचनं नानुशासनीयम् । कुतः? संज्ञानामेव प्रामाण्यात् । संज्ञाशब्दा हि नानालिङ्गवचनाः प्रमाणं भवितुमर्हन्ति । पञ्चालानां निवासो जनपद इत्यर्थे अण्प्रत्ययं कृत्वा तस्य लुपि युक्तवद्भाव इति क्लेशः किमित्याद्रियते? आपः, दाराः, गृहाः, इतिवत् पञ्चाला इति पुलिङ्गबहुवचनान्ता जनपदसंज्ञेत्येवास्त्विति भावः । एवं तर्हि लुबेव मास्त्वित्यापतति । तदेवाहोत्तरसूत्रेण—

(१९९६) **लुब्योगाप्रख्यानात्** । १ । २ । ९४ ।

लुबप्यशिष्यः, अवयवार्थो हि नात्र प्रतीयते । तत्प्रत्यायकस्य प्रत्ययस्यादर्शनादिति भावः । पञ्चालाख्यजनानां निवासभूतत्वादेव देशस्य तन्नाम्ना प्रसिद्धिरित्यत्र प्रत्यायकलिङ्गाभावाद्योगार्थकल्पनमप्रमाणमिति फलितम् । योगार्थकल्पनायामनर्थान्तरमप्यापतेदित्याह—

(१९९७) **योगप्रमाणे च तदभावेऽदर्शनं स्यात्** । १ २ । ९५ ।

योगार्थः प्रमाणं चेत् कारणकलापैस्तस्य निवृत्तौ लुप्-प्रकृतेः शब्दस्य प्रयोगानर्हत्वं प्रसज्येत । पञ्चालजनानां शत्रुभिरन्यतो निष्कासने संज्ञापरिवर्तनं कर्तव्यं स्यात् । तेषामेवाभिष्यन्दवमनेन कोसलेषु

वासे प्रसक्ते कोसलानामपि पञ्चालसंज्ञा प्राप्नुयात् । अतः संज्ञासु योगार्थकल्पनं प्राचीनमतानुरोधादारब्धमित्येव । न तु वस्तुतः स्वस्याभिप्रेतमिति तात्पर्यम् । प्रसङ्गादन्यानपि वैयाकरणसमयान् खण्डयति—

**(१९९८) प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्** । १ । २ । ५६ ।

प्रधानप्रत्ययाभ्यामर्थवचनमप्यशिष्यं अर्थस्य लोकतः सिद्धेः । पूर्वाचार्या हि परिभाषन्ते—'प्रधानोपसर्जने प्रधानार्थं सह ब्रूतः' 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः' इति । शब्दानामर्थप्रतिपादकत्वं लोकसिद्धं; वैयाकरणसिद्धान्तान् नापेक्षते । अनधीतव्याकरणोऽपि वाक्यं श्रुत्वोद्दिष्टे कर्माणि प्रवर्तते । अतो राजपुरुष इति समासे राजपदमुपसर्जनं, पुरुषपदं प्रधानं; तथा दाशरथिरिति तद्धिते प्रकृत्यर्थः प्रत्ययार्थस्य विशेषणं, तयोश्च युगपदेवार्थबोधो न तु भिन्नयोः; इत्यादिर्वादो वैयाकरणस्याभिमानमात्रमिति भावः ।

**(१९९९) कालोपसर्जने च तुल्यम्** । १ । २ । ५७ ।

अद्यतनः काल एतावान्, एवमेवंविधं पदमुपसर्जनमित्यादिर्नियमोऽपि न कर्तव्यः । सर्वजनीना एते व्यवहारा नियमनं नापेक्षन्ते, नापि शक्यन्ते नियन्तुमिति भावः ।

---

## २. स्वतन्त्रकल्पनाः ।

परमतखण्डनेनानेन सुशब्दव्यवस्थापने शब्दशास्त्रस्य कियद्दूरमाधिकारं पाणिनिरन्विच्छतीति स्पष्टीभवति । स न मन्यते यथा जनस्य पचनजलाहरणाद्यर्थं कुलालो घटान् करोति तथा वैयाकरणः सम्भाषणार्थं शब्दान् करोतीति । यदि पुनः पाणिनीयस्य व्याख्यातारः 'इदमपाणिनीयं' 'एतद्भाष्यविरोधादुपेक्ष्यं' इत्यादि वल्गन्तः कोलाहलं कुर्वन्ति तत्राचार्यः किमपराध्यति? अनादिरखण्डो लोकसिद्धः शब्दः । तं शिष्यव्युत्पादनाय वैयाकरणः प्रकृतिप्रत्ययादिविभागैर्विशकलयति । उपायश्चायं यथाप्रतिभं

नाना कल्पयितुं शक्यते । वारणसीं प्रस्थितः पुरुषो यथा राजपथेषु बहुष्वाशुगामिनमादत्ते तथा शिष्य उपायबाहुल्ये लघुतममाद्रियेतेति मुनेरभिप्रायः । अतो लाघवमात्रे दत्तदृष्टिः स बहुत्र स्वातन्त्र्यं करोति । तथा हि—

१. जक्षित्यादीन् सप्त धातून् कृतद्वित्वानेव धातुपाठे पठित्वा तेषामभ्यस्तसंज्ञां प्रतिज्ञातवान्; न पुनर्गुप्तिजादिभ्यः स्वार्थे सन्प्रत्ययमिव तेषां सर्वत्र द्वित्वमुपदिष्टवान् । 'जक्षित्यादयः षट्' (६०१) इतिसूत्रव्याख्यानं दृश्यताम् । शक्नोतेः सनि यथा शिक्षतिर्निष्पादितस्तथा भजतेः सनि भिक्षतिर्निष्पादनीय आसीत् । एवं कृते भिक्षुः भिक्षा इति कृद्रूपाणि च 'सनाशंसभिक्ष उः' इति पृथग्यत्नं विनैवोदपत्स्यन्त । लाघवमिदं कथमाचार्यस्य न प्रत्यभादिति चित्रीयामहे । 'शिक्ष विद्याग्रहणे' इति भूवादौ पृथक् पाठस्तु केनापि प्रक्षिप्तः स्यात् । एवं धातुपाठे अदादिषु चुरादिष्वन्यत्र च बहवो व्युत्पादनक्षमाः क्रियाप्रकृतयः केवलधातुत्वेन पठिता इति सूक्ष्मधियामपरोक्षम् । अनेकाचः सर्वेऽपि धातव ईदृशा एव । कण्ड्वादिर्धातूकृतानि नामान्येवेति सर्वो जानाति । नकारादीनां धातूनां णोपदेशतया सकारादीनां षोपदेशतया च पाठः प्रयोजनमुद्दिश्य कृत इति सुप्रसिद्धम् । तद्वदेव आकारान्तानामेजन्तत्वेन पाठोऽपि । 'षो अन्तकर्मणि' इत्यादीनामोदन्तं रूपं न कुत्रापि दृश्यते । कुत्राप्यदृष्टं रूपं च कथं सहजं भवेत्? इदमस्वारस्यं मनसि निधायैव, मन्ये, 'आदेच उपदेशे.......' इति सूत्रयत्याचार्यः । प्रयोजनमुद्दिश्यैते एवमुपदिष्टाः, न तु वस्तुतस्तादृशास्ते ।

२. विकरणेषु श्नोः पृथक् उ–प्रत्ययः किमर्थं कल्पित इति सन्देहो जायते । तनादिस्तावत् तनु, षणु, क्षणु, क्षिणु, ऋणु, तृणु, घृणु, वनु, मनु, कृञ् इति दशाभिर्धातुभिर्घटितः । तेषु कृञ्भिन्नाः सर्वेऽपि नान्ताः । कृञश्च गणपाठेनातृप्त आचार्यः "तनादिकृञ्भ्यः" इति पृथगुप्रत्ययं शास्ति । अन्ये नव नकारं विना स्वादिषु पठिताश्चेद-

भीष्टं रूपं लभेरन् । सार्वधातुकेषु परं श्नुप्रत्ययेनेष्टसिद्धिरिति चेच्छृणु । तनादिनवके तनु, मनु, घृणु, वनु, षणु इति पञ्च धातवो गणान्तरेषु पाठादार्धधातुकेष्वनिष्टं रूपं न प्रतिपद्येरन् । शेषाणां क्षणु, क्षिणु, तृणु, ऋणु इति चतुर्णामेवानिष्टरूपापत्तिः प्रतिविधेया । तत्र च क्ङिति झलादौ प्रत्यये अनुनासिकलोपो जागर्ति । तेन यथोपन्यस्तं निरनुनासिकपाठे लाभ एव । क्षतं क्षतिः इत्यादीन्येषां लोके दृष्टश्रुतानि रूपाणि सिद्धानि । अझलादावक्ङिति च स्यतासिल्युण्वुलादिष्वनिष्टं रूपं प्रसज्येतेति चेत् प्रसज्यतां कामम् । क एनांस्तेषु प्रयोक्ष्यते? न हि धातुपाठे पठिताः सर्वेऽपि धातवः सर्वेषु कृत्सु लकारेषु च प्रयोक्तव्या इत्यस्ति नियमः । केचिद्धातवः सार्वधातुकमात्रविषयाः, अन्ये आर्धधातुकमात्रविषयाः इति सर्वेऽनुमन्यन्ते । व्याप्रियते, अधीते इत्यादयः परे उपसर्गप्रतिनियताः । किञ्च नामानि धातुजान्येवेति शपथं कृत्वा नैरुक्ता वैयाकरणेषु शाकटायनप्रभृतयश्च तन्निर्वहणाय विचित्रान् धातूनुपकल्पयन्ति । तेभ्यः सर्वेभ्यः कृत्तिङोरुत्पत्तिं त एव नेच्छन्ति । यथाह यास्कः—"अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते-दमूनाः क्षेत्रसाधा इति; अथापि नैगमेभ्यो भाषिकाः—उष्णं घृतमिति; अथापि प्रकृतय एवैकेषु भाष्यन्ते; विकृतय एकेषु (देशेषु) । शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते...., विकारमस्यार्येषु भाषन्ते शव इति । दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु । २ । १ । ३ । ४ ।" इति । एवं क्षण्वादिचतुष्टयस्य लुङादौ प्रयोगो मास्तु । इदमन्यदप्यस्त्यस्माकमनुकूलम्—यदस्मदुक्तनये तृणुप्रभृतीनामिगुपधानामनिष्टो लघूपधगुणो न प्राप्नोति । अत्र सिद्धान्तकौमुदीकारः "उ-प्रत्ययनिमित्तो लघूपधगुणः 'संज्ञापूर्वको विधिरनित्य' इति न भवतीत्यात्रेयादयः भवत्येवेत्यन्ये" इत्युक्त्वा क्षिणोति क्षेणोति इत्युभयथाप्युदाहरति । आत्रेयादिमतमेव च "तृणुते तृणं च" इति प्रयुञ्जानो 'गुरुकुलक्लिष्टो मुरारिः कवि'-राद्रियते । भट्टोजिदीक्षितानामपि 'संज्ञापूर्वको विधिरनित्य' इति परिभाषाया भाष्यानुक्तत्वमेवारुचिबीजं, न तु क्षेणोति तर्णुते इति विरूपेषु रूपेषु पक्षपात इति स्फुटमवे ।

एवं स्थिते लाघवप्रियः पाणिनिः 'तनादिभ्य उः' इति किमित्यपूर्वं विकरणं कल्पयति ? यथाशङ्कितमनिष्टरूपापत्तिशङ्कैवाचार्यस्य प्रधानं कारणं स्यात् । धातूनां प्रयोगविषयसङ्कोचनमाचार्यस्यानिष्टं च प्रतिभाति । यतः स खिलधातूनन्योन्यादेशान् प्रकल्प्य सार्वत्रिकात् करोति । किञ्च-घृणिशब्दव्युत्पादनाय घृण-धातु,: क्षणशब्दव्युत्पादनाय क्षणुधातुश्चापेक्षितः । अव्युत्पन्नेषु केवलधातुष्वदन्ता न सन्तीति सनाद्यन्तार्थमारब्धस्य 'अतो लोप'स्य प्रतिषेधः कर्तव्यः स्यात् । इत्याद्यूह्यम् । कृञ उ-प्रत्ययोऽवश्यं वक्तव्यः । स दीपकन्यायेन तनादीनामप्युपकरोत्वित्येवाचार्यस्य हृदयं स्यात् । अन्यथा तनादौ पठितं कृञं किमिति पृथग्गृह्णाति ?

३. तॄ कॄ पॄ इत्यादयः ॠदन्ताः पठिता धातवो वस्तुतः तर्, किर्, पुर्, इति रेफान्ता एव भवितुमर्हन्ति । ॠकारयुक्तानि हि रूपाणि न कुत्रापि दृश्यन्ते । कुत्राप्यदृष्टं प्रकृतिरूपं च कृत्रिममेव भवितुमर्हति । एवं खट्वादीनां आदन्तस्त्रीलिङ्गशब्दानां आदन्ताट्टापा निष्पादनं, अव्ययेषु सुप उत्पाद्य लोपनं, क्विबादिसर्वलोपिप्रत्ययस्वीकारः, सिजादीनां स्थानित्वेन च्लेः प्रवेशनं इत्यादयोऽसंख्येया अर्थाः किञ्चित् किञ्चित् प्रयोजनं पुरस्कृत्य कृताः कल्पना इति विचारपथदत्तदृष्टीनां स्वयं स्पष्टीभविष्यति ।

---

## ३. लक्षणकरणम् ।

अथ 'प्रधानप्रत्ययार्थवचन'वत्, कालोपसर्जनयोरप्याशिष्यत्वं वदन् पाणिनिः किमभिप्रैतीति पश्यामः । इह व्याकरणे शास्त्रान्तरवदनुगतकञ्चिद्धर्ममवलम्ब्य साङ्केतिकपदानां लक्षणकरणमाचार्याय न रोचते । तथाच प्रत्ययः, पदं, धातुः, समासः, कारकं निपातः, उपसर्गः, अव्ययं, सर्वनाम इत्यनेकेषु सङ्केतेषु नैकोऽपि व्यावर्तकधर्मोपदेशेन

निरुक्तः । तृतीयचतुर्थपञ्चमाध्यायाः प्रत्ययाधिकारान्तर्भूताः; तत्र प्रकृतिभ्यः परे ये विधीयन्ते ते प्रत्यया इत्येव । तथा निपातोऽव्ययं, सर्वादिगणः सर्वनाम इत्यादि । एवं प्रातिस्विक उपदेशः परिगणनं वा क्रियते न तु व्यावर्तकं लक्षणम् । परसंसर्गेणार्थप्रत्यायकः प्रत्ययः; धात्वर्थोपस्कारक उपसर्गः; लिङ्गसंख्यान्वयायोग्यमव्ययं; सकृदुपात्तस्य नाम्नः परामर्शकं सर्वनाम इतिवल्लक्षणकरणे का हानिः? सत्यम्; बहुधा व्यभिचारो जागर्ति । तथाहि—प्रत्यये—स्वार्थिका अपि सन्ति प्रत्ययाः । विकरणानि हि न कञ्चिदर्थं बोधयन्ति । 'इयत्' इति शब्दे प्रकृतिसंसर्गो नास्ति । इवादयो निपाता अपि परसंसर्गेणार्थबोधकाः । इति लक्षणस्याव्याप्तिरतिव्याप्तिश्च । उपसर्गे—मुहुर्भूयःपुनरादयोऽपि क्रियामेवोपस्कुर्वन्तीत्यतिव्याप्तिः । अव्यये—अपदिशमिति क्लीबाव्ययमुच्यते । त्रतमादिविभक्त्यव्ययेषु विशेष्यानुरोधेन लिङ्गवचनयोगो वक्तव्यो वर्तते । सर्वनामसु—उक्तो व्यावर्तकधर्मः सर्वाद्यन्तर्गणे त्यदादावेव व्याप्नोति । अतिव्याप्नोति च 'अयं जनः' इत्यादौ समुदाये, "श्रुत्वा देवः प्रमाणं" इत्यादिवाक्यगतेषु देवादिशब्देषु च ।

यथोक्ताव्याप्त्यतिव्याप्तिपरिहाराय निष्कर्षे क्रियमाणे नानाविशेषणानि देयानि स्युः । तैश्च लक्षणवाक्यानां महान् विकारो जायेत । किमित्यास्थीयते तादृशो यत्नः? रूपसिद्धिर्हि शब्दशास्त्रस्य प्रथमं प्रयोजनं, विभागकरणं तु गौणमेव । अकजर्हता, वृत्तिषु पुंवद्भावः, ङसिङ्योः स्मात्स्मिन्नादयः इत्यादिः प्रक्रिया यस्य तन्नामपदं सर्वनाम इत्येव वैयाकरणो ब्रूयात् । प्रथमचरमादयः कदाचि'ज्जसः शेः' संविभागिनो दृष्टा इति तेऽपि जसि विभाषा सर्वनामानि । एवमादिषु कार्यातिदेशार्थं संज्ञैवातिदिश्यते । गुणवृद्धिप्रयोजकत्वादयो धर्मा यस्य सः प्रत्ययः । सत्ववाचकमसत्ववाचकं वा 'सदृशं त्रिषु लिङ्गेषु.......यन्न व्येति तदव्ययम् । एवमन्यत्रापि व्याकरणप्रक्रियैव संज्ञाया नियामिका, न त्वनुगतो

लौकिको धर्मः । अत एवोपसर्गसर्वनामादयो गणेन परिगण्यन्ते । 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययेषु केषाञ्चित् सूत्रकृता सामान्यलक्षणे उपात्तेऽपि वार्तिककारः परिगणनमारभते ।

---

## ४. प्रस्थानचर्चा ।

व्याकरणं तावद्द्वेधा प्रणेतुं शक्यते । व्याचिकीर्षिताया भाषायास्तदात्वदृष्टं रूपसिद्धिसम्प्रदायं सम्यक् परीक्ष्य यस्यां कल्पनायां तदुपपादनं सुकरतमं प्रतीयते तामाश्रित्य तन्त्रायितव्यम् । अयमेको मार्गः. योऽयमभ्यूहनिष्पन्नत्वादाभ्यूहिको भवति । उद्दिष्टाया भाषायाश्चरित्रमन्विष्य निर्णीतामादिमावस्थामास्पदीकृत्य ततः सावधानमनुधाव्य तदातदोत्पन्नानां विकाराणां व्यवस्थापनमन्यो मार्गः । योऽयमागमनिबन्धनत्वादागमिकव्यपदेशमर्हति । अनयोः पूर्वः सुकरतरः सद्यःप्रयोजनकरश्च; अन्यस्तु व्यापको दृढतरप्रतिष्ठश्च । मार्गयोर्भेदमुदाहरणैः स्पष्टीक्रियते—भगवतः सूत्रकारस्य गोत्रनाम पाणिनिरिति । तदेतत्, दक्षस्यापत्यं दाक्षिरितिवत्, 'अत इञ्' पणिनस्यापत्यं पाणिनिरित्येव आभ्यूहिकमार्गप्रवृत्तो वैयाकरणो निर्ब्रूयात् । निरुक्तवांश्च तथा परमार्थतः "भणपाणिनजशास्त्रे तातङः स्थानिनौ कौ" इति प्रयुञ्जानो नैषधकारः । वस्तुतस्तु पणिनोऽपत्यं पाणिनः, तस्यापत्यं युवा पाणिनिरित्येव शब्दव्युत्पत्तिः । कथमिदमागमानभिज्ञो जानीयात् ? अथ शिवस्+अर्च्यः=शिवोऽर्च्यः इति सन्धिः प्रतिपादनीय इत्यस्तु । अत्र प्रथमं सस्य रुः, ततस्तस्य उः, आद्गुणः, 'एङः पदान्तादति' इति पूर्वरूपं इति हि आगमिकः पाणिनिः प्रक्रियामाह । आभ्यूहिकस्तु आचक्षीत—किमनेन चित्रवधेन? पदान्तसकारः पुरस्तात् परस्तादपि अकारह्रस्वेन सम्पुटितो दृश्यते चेत् सशृङ्गस्य सलाङ्गूलस्य तस्य एकपदे ओकारेणादेशः क्रियतां इति । पर्याप्तं चैतावत्, यदि संस्कृतमात्रस्य व्याकरणं चिकीर्ष्यते । शिवो अर्च्य इति च्छान्दसः सन्धिर्नघटेतेत्येव ।

लोकवेदयोर्युगपदुपकारकस्य व्याकरणस्य प्रणयनाय प्रवृत्तत्वात् आगमिकमेव प्रस्थानं भूयसानुसरति पाणिनीयं तन्त्रम्। तस्य च तादृशत्वादेव स्वपूर्वतरेभ्यः स्वानन्तरोत्पन्नेभ्यश्च शब्दशास्त्रप्रस्थानेभ्यो महीयसी प्रतिष्ठा लोके जाता। दाक्षीपुत्रस्य पाणिनेस्तन्त्रं दाक्षायणत्वेन स्वमातृभ्रातृव्य एव व्याडिराचार्यो लक्षश्लोकात्मकेन संग्रहाख्येन ग्रन्थेन प्रपञ्चितवान्। ततः कात्यायनः शेषपूरणप्रायैर्वार्त्तिकैरुपबृंहितवान्। सर्वोपरि च भगवान् आदिशेषावतारत्वेन प्रथितः पतञ्जलिर्वार्तिकतरंगिणीभिरुपबृंहितमेव पाणिनीयाष्टकमहार्णवं सर्वङ्कषप्रसरेण श्रीमद्व्याकरणमहाभाष्यमन्दरेण विलोड्य शब्दानुशासनरहस्यामृतं तृषितेभ्यो विबुधेभ्यः समर्पितवान्। ततो व्याडिपक्षपातादसुरप्रख्यैः कैश्चिन्मत्सरिभिराच्छिद्य लोप्यमानं महाभाष्यं महाविष्णुकल्पः कोऽपि कश्मीराधिपतिरुद्धृत्य पुनरपि विबुधायत्तमकरोदित्यैतिह्यं राजतरङ्गिणी प्रस्तौति। अद्यत्वे पुनर्व्याडिग्रन्थो निश्शेषं लुप्तः; वार्तिकानि च भाष्यारूढान्येवोपलभ्यन्ते। अथ भाष्यामृतपानतर्पितान्तरङ्गो भर्तृहरिर्व्याकरणोपनिषद्भूतं वाक्यपदीयं प्रणिनाय। धातुपाठं माधवो व्याचख्यौ। गणपाठं गणरत्नमहोदधिकार इति सर्वाङ्गीणैर्व्याख्यानैर्दृढीकृता पाणिनीयस्य प्रतिष्ठा।

यत् प्रतिपादितमागमानुसारित्वाद्दशाविशेषविचारं विना कृत्स्नां संस्कृतभाषामनुगृह्णाति पाणिनेः शब्दानुशासनमिति तत् भूयोभिप्रायेण। अभ्यूहोऽपि क्वचित् क्वचिदादर्तव्य एवासीदाचार्यस्य। किन्त्वत्र दुर्घटप्रकृतिरागमिकमार्ग एवापराध्यति, न पुनस्तन्त्रकारः। प्राक्चारित्रं तावत् प्रयत्नादनुस्त्रियमाणमपि कियद्दूरं प्रतिपत्तुं शक्यते? निरर्गलनिर्गलदमलसलिलकल्लोलहल्लोहलैराप्लावितानल्पदेशावकाशा काशीनगरे दृश्यते भगवती भागीरथी। तस्याः पुनरत्युच्छ्रितहिमवच्छृङ्गान्तर्गतानन्तनीरसिरानिष्यन्दिश्वभ्रगर्भनिलीनं प्रभवं भगीरथ एक एव जानीते। एवमेव महाकविसूक्तेष्वधरितसुधारसाभिः सरसवाचोयुक्तिभिराविष्कृतपरिपूर्णतारुण्यप्रौढिमया गैर्वाण्या वाण्या पांसुक्रीडोचितेषु शैशवदिनेषु कानिकानि म्लिष्ट-

वाक्यानि जल्पितानीति केनेदानीं प्रत्यक्षीकृतम्? वैदिकावस्था तावत् कौतुकभरितं कौमारं वय एव दर्शयति, न पुनरतिशैशवम्। नोपलभ्यते च कुत्रापि ऋग्वेदात् प्राचीनतरः संस्कृतोपनिबद्धो ग्रन्थः। अतः स्वकीयं तन्त्रं यावच्छक्यमागमिकं कृतवान् पाणिनिरिति सन्तोष्टव्यम्।

अद्य पुनः प्रणष्टस्य पूर्वचरितस्य पुनरुपकल्पनाय समारब्धविविधप्रयत्नकलापैः पाश्चात्यैर्महाशयैर्महता प्रयासेन चिराद्दृष्टं संस्कृतभाषायाः प्रभवस्थानम्। तद्दर्शने च पाणिनीयं व्याकरणं भूयसा तेषामुपाकरोदित्यत्राप्याचार्य एव प्रथममभिनन्दनमर्हति। महाभाष्यसम्पादितानि सोपानान्येव शमर्ण्यदेशीयान् (German) अन्तर्वाणीन् भाषाशास्त्रस्य गभीरं तलमवातीतरन्। वर्णविकारेषु, रूपभेदोपाधिषु, वृत्तिषु, समभिव्याहारशक्तिषु, स्फोटे च पतञ्जलिना संस्कृतभाषामेकामधिकृत्यावतारितासु चर्चासु भूयस्यो विशेषविवक्षां विना भाषासामान्यमनुगृह्णन्तीति व्याप्तिं गृहीत्वा पाश्चात्यैः प्रवर्तितं भाषाशास्त्रम्। तस्यैवं परम्परया पाणिन्युपज्ञत्वाल्लघुपाणिनीयोपसंहारावसरेऽस्मिंस्तदीयविज्ञानाधिगतानां नवानामर्थानामंशतो निबन्धनमनाशास्यं न भवेदिति किञ्चित् प्रस्तूयते। सुकरं चैतदेतावति कृते विचारे, यतः पाणिनिना चोदितेषु विधिष्वज्ञातयुक्तीनां केषाञ्चिदुपपत्तिवासनैवास्मत्कर्तव्यत्वेनावशिष्यते। पूर्वमेव स्वरप्रकरणे वैदिकप्रक्रियायां च भाषाविज्ञानीयविध्यनुसारेण विमर्शाः कतिचन प्रसङ्गवशादवतारिताः। किन्तु तत्र पाणिनीयतन्त्रानुकूलनाय सविशेषो यत्न आस्थातव्य असीत्। इतः परं तन्त्रनिरपेक्षं सामान्यदृष्ट्या विषयव्यालोडनमेव भविष्यति।

---

# भाषाचरित्रम् ।

अत्रादावयं भूमिकाबन्धः क्रियते—यथा भारतखण्डेऽत्र देश्यभाषाणां सर्वासामुपजीव्यत्वेन संस्कृत*माकारभाषापदं भजति तथा युरोप[१]महाखण्डे 'लेतिनो'[२] इति प्रथिता रोमकभाषा, 'ग्रीको'[३] इति प्रथिता यवनभाषा च तत्स्थानं वहतः । बाल्य एव स्वदेशाकरभाषयोर्ग्रीकोलेतिनयोः कृतपरिचयाः जोणर्स[४]—कोल्ब्रूक[५]प्रभृतयः आङ्गलेयाः[६] सूरयः कार्यवशादत्रागत्य यावत् संस्कृतमधीयते तावदेकतः संस्कृतस्यान्यतो ग्रीकोलेतिनयोश्च सोदर्याणां स्वसृणामिव प्रस्फुटो यौनसम्बन्धस्तेषां प्रत्यभात्; तन्मुखेन च स्वदेशाकरभाषयोः प्रवयाः काचिज्ज्येष्ठभगिनी विदेशे पूजिता जीवतीति विदितवृत्ताः शर्मण्य-पैराङ्कि[७]प्रभृतय इतरे युरोपवर्गीयाः कुतुकभरितास्तदुपासनाय सर्वतः प्रयत्नमारेभिरे । ततःप्रभृति तैः प्रवर्तितं भाषाविज्ञानीयाख्यं[८] शास्त्रं क्रमेणोपचितमद्य प्रतिष्ठोन्मुखं वर्तते । वयमप्येवमुपज्ञातयोरास्माकाकरभाषायाः कनिष्ठभगिन्योर्मुखपरिचयमप्यन्ततः कर्तुमर्हाम इति शिष्यानुद्बोधयामः । भाषासाम्येनान्यैश्च सुपरीक्षितैर्लिङ्गैर्युरोपवासिनां इन्द्यावासिनां च जनानामेकवर्ग्यत्वं निर्णीतमन्तर्वाणिभिः ।—

"अत्रेतिहस्म प्रवदन्ति सूरयः पुरा किलैष्या[९]क्षितिखण्डमध्यगाम् ।
अधित्यकां हिन्दुकुशाख्य[१०]भूधरस्याध्यूषुरार्य[११]व्यपदेशिनो जनाः ॥
जनार्णवे तत्र विमर्दतस्ततः स्थानादभिष्यन्दिनि केचिदूर्मयः ।
हिमाद्रिकूटान्तरवर्तिवर्त्मना प्रपेदिरे भूमिमिमां सहस्रशः ॥"

—आङ्गलसाम्राज्यम् ।

अन्ये पुनः पश्चिमतः प्रसर्पिणो विलङ्घ्य शैलान् विविधान् नदीरपि ।
इतालि[१२]यग्री[१३]समुखेषु लेभिरे यौरोपनीवृत्सु निवेशनं शनैः ॥

---

* Classic language. १. Europe. २. Latin. ३. Greek. ४. Sir W. Jones. ५. Colebrooke. ६. English. ७. French. ८. Philology. ९. Asia. १०. Hindukush ११. Aryas. १२. Italy. १३. Greece.

श्लोकोक्तरीत्या चरित्रैरप्रहते पुरातनकाले एष्यामहाखण्डस्य मध्यसीमामधिवसन्त आर्यव्यपदेशभाजो जना अभिष्यन्दवमनन्यायेन प्राक् पश्चाच्च प्रसरन्तः शनैः शनैरिन्द्यामण्डलम्, युरोपखण्डस्य भूयांसं भागं च विजित्य तत्रावात्सुः। तेषामभिष्यन्दवमनात् पूर्वं सर्वसाधारणी या भाषा तावदासीत् सा आर्यकुलकूटस्था **मूलार्यभाषे**त्युच्यते। इयं प्राधान्येन इन्द्यायां युरोपखण्डे च दृष्टेति हेतोः पाश्चात्यैः ऐन्द्ययौरोपी (Indo-European) इति व्यपदिश्यते। तस्याः शाखाप्रवर्तिकाः सप्त दुहितरो ज्ञाताः— १. संस्कृतप्रवरा भारतीयशाखा, २. छन्दप्रवरा ऐरेणिके (पारसीक) शाखा, ३. लित्तिके-श्लाविकशाखा, ४. ग्रीसैतालिक-शाखा, ५. केल्तिके शाखा, ६. त्यूँटाणिक शाखा, ७. शर्मण्यँशाखा चेति। एतासां शाखोपशाखाप्रतानसङ्कुलस्य सन्तानस्य गाढेन पर्यवेक्षणेनाद्य कूटस्थाया मूलार्यभाषायाः प्रतिष्ठा, शाखासु प्रवराणां बाल्यचरितं च विज्ञातं वर्तते। तत्र संस्कृतभाषाचरित्रस्य दिक्प्रदर्शनमात्रमत्र क्रियते।

---

## अक्षरसमाम्नायः।

स्वरेषु प्रथमे त्रयो (अ इ उ) मूलभूताः। सन्ध्यक्षराणि (ए ओ ऐ औ) अन्वर्थनामान्येषां मिथो मिश्रणेनोत्पन्नानि। ऋकारऌकारौ विवारप्रयत्नेन स्वरीकृतौ रेफलकारावित्येव। 'कृपो रो लः' 'प्लुतावैच इदुतौ' इति सूत्रयोर्व्याख्याने उभयमपि विचारितमिदम्। मूलस्वरेषु अकारस्तीव्रयत्नः, इकारो मृदुयत्नः, उकारो मध्ययत्नः इत्यस्ति विवेकः। अस्योपपत्तिरुपरिष्टाद्वक्ष्यते। केवलस्वराणां (अकां) द्विरुक्तौ संश्लेषेण दीर्घः। त्रिरुक्त्यादिरुच्चारणे विशेषादर्शनान्न गण्यते। अत एव 'अकः सवर्णे दीर्घो' विहितः। प्लुतं तु भिन्नस्वरूपो विकारः। सन्ध्यक्षराणि संयोगरूपत्वात्

---

१. Zend २. Iranian ३. Lito-Slav ४. Greeco-Italic
५. Keltic ६. Tutonic ७. German

स्वतो दीर्घाणि । तेषु घटकांशयोस्तिलतण्डुलन्यायेन संसृष्टिरेव विवक्षिता, न तु नीरक्षीरन्यायेन सङ्करः । गच्छता पुनः कालेनावयवश्लेषस्य दार्ढ्यातिरेकात् भेदबुद्धावेव तिरोहितायां सीसताम्रयोर्विलापितयोरुत्पद्यमानो नवः कांस्यसंज्ञो लोह इव स्वतन्त्रास्वरा एते संवृत्ताः ।

अतश्च प्राकृतेषु एङो ह्रस्वता दृश्यते । एङ्ह्रस्वो ग्रीकाप्रभृतिषु स्वसृभाषासु दृष्टत्वात् प्राचीन एव, संस्कृते केनापि कारणेन नष्ट इति वक्तव्यं वर्तते । ग्रीकालेतिनयोर्यत्र एकार ओकारो वा स्वरः, संस्कृते तत्र प्रायेण अकारो दृश्यते; अतः पुरातना एङ्विषयाः संस्कृते क्रमादकारेणापहृताः स्युः; उपलभ्यते चाद्यापि पदान्तसकारात् पूर्वस्य अकारस्य क्वचित् 'शिवो वन्द्य' इत्यादौ ओकारात्मनावस्थानम् । प्राकृतेषु तु पदान्तसकारात् पूर्वस्य अकारस्य ओ–त्वं सार्वत्रिकम् ।

इकार–उकारयोर्गुणवृद्धिभ्यामेचो निष्पद्यन्ते । इक आदावकारयोगो गुणः । अकारद्वययोगः, आकारयोगः, सकृद्गुणितस्य पुनर्गुणनं वा वृद्धिः । अ+इ=ए; अ+उ=ओ; अ+अ+इ=ऐ; अ+अ+उ=औ; ऋकार-ऌकारौ गुणवृद्ध्योः क्रियमाणयोः कार्यवशादारोपितं स्वरधर्ममुत्सृज्य निजं व्यञ्जनभावमेव प्रतिपद्येते । अतो गुणितऋकारः अर् इति रूपं प्राप्नोति । वर्धितः आर् इति च । एवं ऌकारः अल्, आल् इति । गुणाख्यो विकार आर्यभाषाणां साधारणः, वृद्धिस्तु संस्कृतमात्रदृष्टः ।

इको यणश्च विजातिक्षेत्रजा भ्रातर इव जातिमात्रेण केवलं भिद्यन्ते । प्रसार्योच्चारिता यण इको भवन्ति । सङ्कोच्योच्चारिता इको यणश्च । तत्र रेफलकारौ स्वरदशायामप्युत्कटव्यञ्जनांशाविति विशेषः । अनेन 'इको यणचि' इति सन्धिः सम्प्रसारणं च व्याख्यातम् । यण्–सन्धिः पदान्ते सार्वत्रिकप्रायः, पदमध्ये त्वेकाक्षराणामङ्गानां स्वरापहारेण वैरूप्यं, संयोगपूर्वाणां व्यञ्जनान्तरयोगेन दुःश्रवता च मा भूदिति यूवोरियङुवङौ क्रियेते । 'एचोऽयवायावः' इति विश्लेषितयोर्ध्वोर्यणेव । प्रश्लेषसन्धिरवाप्योरुपसर्गयोरल्लोप इवार्वाचीनैरवतारितः । अत एव च्छन्दसि तत्र प्रकृतिभावो विधीयते ।

व्यञ्जनानि मध्यमा, ऊष्माणः, वर्गपञ्चकघटिताः स्पर्शाश्चेति त्रिधा विभक्तानि । ऊष्मसु हकार एको विलक्षणध्वनिरनिरुक्तस्थानश्च । मृदुभिर्घटितोऽयं महाप्राणप्रकृतिस्तान् घोषीकरोतीति प्रातिशाख्यकारा आहुः । 'झयो होऽन्यतरस्यां' इति पूर्वसवर्णविधिः, ऋग्वेदीय ळकारलेखनसम्प्रदायश्चामुमर्थं विशदयतः । खराणामतिखरीकरणमपि हकारयोगानिबन्धनं प्रतिभाति; किन्तु तत्र न किञ्चिन्निर्णायकं लिङ्गमस्ति । घोषप्रयत्नवतो हकारस्य योगेन निष्पन्नाश्चेदतिखराः कथमघोषा दृश्यन्त इति सन्देहश्च जागर्ति । ग्रीकाभाषायां 'छिद् द्वैधीकरणे' इति धातोः 'स्किद्' इति, 'गच्छति' इत्यस्य 'बस्को' इति च रूपस्य दर्शनात् छकारः 'स्क' इति संयोगादुत्पन्न इति केचिदुन्नयन्ति । 'छे च' इति तुग्विधानेन दृश्यते च छकारस्य संयोगसमानयोगक्षेमा दशा । खकार एवं क्श इति संयोगादुत्पन्नः स्यादिति *तर्कयामि । भाष्यकारो हि चाक्षिङः ख्शाञ् $ इति पठित्वा असिद्धकाण्डे शस्य यो वा वक्तव्य इत्याह । रुत्वप्रतिषेधादिप्रयोजनमुद्दिश्य कृतोऽप्ययं पाठो यकारादेशस्य विकल्पनादुच्चारणसाम्यमनुमापयति । 'अक्खिदत्' 'अक्खिद्र' 'परिक्खिदते' इति तैत्तिरीयसंहितायां खिदधातुरूपेषु खकारस्य द्वित्वकरणदर्शनमप्यस्मदूहमनुकूलयति । 'शश्छोऽटि' इति शस्य छत्वविधानस्य 'छ्वोः शूडनुनासिके च' इति वैपरीत्येन छस्य शत्वविधानस्य च स्वारस्यपर्यालोचने छकारेऽपि महाप्राणबीजं शकार एव स्यादिति तर्कस्यावकाशोऽस्ति । महच् शास्त्र इति वैकल्पिकस्य छत्वस्याकरणेऽपि ध्वनौ न

---

* ग्रन्थकर्तुः स्वकपोलकल्पितोऽयमूह इत्येकवचनप्रयोगः । एवमन्यत्राप्येकवचनप्रयोगेषु द्रष्टव्यम् । $ किञ्च, यदि ख्शादिरयमादेशस्तर्हि चाक्षिङमेव प्रत्याख्यास्यामः । जुहोत्यादावेनं पठित्वा श्नाभ्यस्तयोरातो लोपेन चष्टे चक्षाते चक्षते इत्यादीन्यस्याभीष्टानि रूपाणि च सम्पादयिष्यामः । 'ई हल्यघोः' इतीत्वविधायके सूत्रे 'अख्शोः' इति ख्शोऽपि प्रतिषेधो वक्तव्य इत्येव । ख्शा-द्वित्वे चख्शा । आल्लोपसंयोगादिलोपषत्वष्टुत्वैः चष्टे । चक्शाते । चक्षते इति षकारश्रवणार्थमसिद्धकाण्डे शस्य षोऽपि पठितव्यः । अनेन भाष्यकारस्य ख्शादिपाठोपक्षेपो निर्मूलः प्रौढिवादो न स्यादिति प्रतीयते । 'चचक्षे' इति लिटि वैकल्पिकं रूपमेव दुर्घटम् ।

-हान् भेदश्चोपलभ्यते । पदान्ते दार्ढ्याय शस्य छः, पदमध्ये शैथिल्याय छस्य शश्च ।

उक्तस्यानुमानस्य लिङ्गान्तराण्यपि सन्त्युपष्टम्भकानि । तथाहि— १. 'नादिन्याक्रोशे पुत्रस्य' इति सूत्रस्य भाष्ये 'चयो द्वितीयाः शरि पौष्करसादेः' इति वार्तिकं पठ्यते । उदाह्रियते च—'अच्छरम्' 'अफ्सः,' 'वथ्सः' इति । अनेन खराणां परस्ताच्छषसैः संयुक्तानामतिखरत्वापत्तिं पौष्करसादिराचार्यो वाञ्छतीति ज्ञायते । २. मन्त्रशास्त्रे क्षकारो मातृकापाठे भण्यते । देवनागरे तस्य स्वतन्त्रा लिपिः कल्पिता । ३. प्राकृतेषु वत्सः= वच्छो; क्षणः=खणो; अप्सराः=अच्छरा इति परस्तात् शषसंसंयुक्तानां खराणामतिखरीभावो दृश्यते । ४. 'अभ्यासे चर्पूर्वाः खयः' इति पुरस्तात्संयुक्तानां शरामगणनेन परसंयोगादस्य दार्ढ्यातिरेकः सूच्यते ।

इह विसर्गः पदान्तेष्ववसाने कखपफेषु परेषु चैव दृश्यते इति, प्राणिषु नखदन्तलोमश्मश्रुवदप्रधानं शरीरबाह्यमङ्गमिति सर्वो जानाति । तथा किञ्चिदपि दूरं विचारमार्गे बुद्धिः प्रहीयते चेदन्ये वर्णा गङ्घश्वयथुप्रभृतिविछिकारजन्या इति स्फुटीभविष्यति । तथाहि—

झलि परे पदान्ते च हकारस्य घोषाः; शकारस्य षकारः, चवर्गस्य कवर्गश्च विधीयन्ते । तेन ह-श-चवर्गाः पदमध्ये स्वरमध्यमानुनासिकेषु परेष्वेव श्रूयन्त इति सिद्धम् । अतश्चैतेऽपि विसर्गवदेवासार्वत्रिकाः । विसर्गः पदान्तमात्रदृष्टः, एते पदमध्यमात्रदृष्टा इति वैपरीत्यमेव भेदः । तथापि स्वरयोगक्षमत्वात् तेषां स्वतन्त्रवर्णता लोके प्रतिभासते । स्वर एव ह्यक्षरस्य जीवनाडी; लिपयश्च स्वरोपस्कृतान्येव व्यञ्जनानि चिह्नयन्ति । एवञ्च, यथा विसर्गो नैसर्गिकरेफस्य रुत्वापन्नसकारस्य वा विकारस्तथा हकारो वर्गचतुर्थानां, शकारः षकारस्य, चवर्गः कवर्गस्य च विकार इति ज्ञायते । षकारः पुनर्मूर्द्धन्यादेशविधानादिभिर्बहुत्र सकारप्रकृतिक इति स्फुटम् । अत ऊष्मसु सकार एक एव प्रकृतिसिद्धः, अन्ये विकारा इति फलितम् । दृश्यते च धातुषु नामसु च शषसानां देशभेदादिभिर्महत्यव्यवस्था ।

हरति-गृह्णाती अद्यापि च्छन्दसि भरतिगृभ्णाती एव। 'हृग्रहोर्भ-श्छन्दसि'। लोकेऽपि हन्तेः अभ्यासात् परतो ञ्णिन्नेषु परेषु च घकारादि:। किंबहुना 'चजोः कुघिण्ण्यतोः' इति प्रकरणं समग्रमेवात्रोद्धरणमर्हति। अत्र-पूजेर्ण्यति कुत्वनिषेधस्य सूत्रवार्तिकभाष्येष्वदृष्टत्वान्मुनित्रयस्य जीवित-काले पूग्यः इत्येव रूपं प्राचरदित्यपि सन्देहस्यावसरो जागर्ति *। भोगः भोग्यं, पाकः पाक्यं, तिग्मं, रुक्मं इत्यादयः शब्दाः स्वरमध्यमानुनासिक-योगेऽपि चवर्गस्य बहुत्र कवर्गात्मनैवावस्थानमावेदयन्ति।

ईदृशीभिर्युक्तिभिष्टवर्गस्तवर्गादुत्पन्न इति दर्शयितुं सुशकम्। तत्र 'विनामः' इति कात्यायनेन व्यवहृतो नस्य णत्वविधिः, धस्य ढत्वविधिः, "अज्मध्यस्थडकारस्य ळकारं बह्वृचा विदुः ढकारस्य ळ्हकारं च" इति प्रातिशाख्यं च कतिचन लिङ्गानि। इह कण्ठः, तालु, मूर्द्धा, दन्तमूलं, ओष्ठौ इति आभ्यन्तरादारभ्य बाह्यक्रमेण वर्णानां स्थानानि। तत्र दूरान्तरितस्थानजन्या वर्णा यथा मिथः प्रस्फुटभेदा न तथा आस-न्नस्थानजन्याः। अतः सीमाद्वयस्य मध्यगता दन्त्यमूर्द्धन्यतालव्या अन-तिदूरान्तरितध्वनित्वात् संसर्गे व्यतिक्लिश्नते। तदा च स्वतो विकार्यप्रकृति-को दन्त्यो न केवलमासन्ने मूर्द्धन्ये, अपि त्वेकान्तरिते तालव्येऽपि संसर्गव-शात् सारूप्यं प्राप्य लीयते। इदमेव श्चुत्वं ष्टुत्वमिति च व्यवह्रियते। इह दन्त्यैर्विकृतैर्मूर्द्धन्यानिष्पादने प्राकृतभाषाणां द्राविडभाषाणां च संसर्गेण बहु व्यापृतं स्यात्। ता हि संस्कृतदन्त्यान् मूर्द्धन्यान् कुर्वन्ति। यथा—

| | |
|---|---|
| पत्तनम्—पट्टणम् | वैदूर्य्यम्—वेडूर्यम् |
| दोला—डोळा | मन्दोदरी—मण्डोदरी |
| दालिमम्— { दाडिमम्, डाडिमम् } | शाद्वलम् - शाड्वलम् |
| अङ्गनम्—अङ्कणम् | भिन्दिपालः—भिण्डिपालः |
| वर्तते—वट्टदि | स्थाने—ठाणे |

* 'त्यजिपूज्योश्च' इति काशिकारीत्येदम्। वस्तुतस्तु पूजयतेर्नित्यं ण्यन्तत्वा-ण्णिलोपस्य स्थानिवद्भावान्न कुत्वप्रसक्तिः।

मध्यमेषु रेफलकारौ क्वचिदेकस्यैव वर्णस्य वेषभेदाविव दृश्येते। यथा—रोहितम्—लोहितम् ; शुक्रम्—शुक्लम्; रोम—लोम; रोरंबः—लोलंबः। इत्यादि। अन्यत्र वैदिको रेफो लोके स्वसृभाषासु च लकारो दृश्यते। यथा—

| | | | |
|---|---|---|---|
| वेदः | संस्कृतं | लेतिना | ग्रीका। |
| रघु (=शीघ्रं) | लघु | लेविस् | (हे) लखु। |
| रम्बते | लम्बते। | | |

अपरत्र लोक एव 'कृपो रो लः' इति प्रकरणेन रस्य लत्वं पाणिनिर्विदधाति। इयमव्यवस्थैव 'रलयोरभेदः' इति प्रवादस्य बीजम्। अन्येऽप्येतादृशा अभेदाः प्रसिद्धाः। यथा—बवयोरभेदो वङ्गेषु। दडयोर्लळयोश्चाभेदो द्राविडेषु। डळयोरभेदो बाभ्रव्ये, लडयोरभेदः काव्यश्लेषेषु।

पदानामिव वर्णानामप्येवं रूढयौगिकभेदो दर्शितः। तत्र रूढाः सर्वासां ऐन्द्ययौरोपभाषाणां साधारणाः। यौगिकेषु तु केचित् कासुचित्, अन्ये अन्यासु च दृश्यन्ते। एङो ह्रस्वः संस्कृतगोथीकयोर्नास्ति। अकारबहुलानि संस्कृतपदानि। ग्रीकालेतिने अकारस्यास्य स्थाने प्रायेण एङं ह्रस्वं प्रयुञ्जाते। यथा—

| | | | |
|---|---|---|---|
| संस्कृतं— | अष्टौ | नवन् | नवः |
| ग्रीका— | होक्तो | हेणेअ | नेओस् |
| लेतिना— | ओक्तो | नोवेम् | नोवेस् |

दन्त्यमूर्धन्ययोः प्रकटो भेदः संस्कृत एवास्ति। तालव्यश्चवर्गः संस्कृते छन्दायामपि दृश्यते। महाप्राणाः संस्कृते दश; छन्दायां चत्वारः संस्कृतसदृशाः, द्वौ कठोरमहाप्राणौ चेति षट्; ग्रीकागोथिकयोराङ्ग्लीशर्मण्ययोश्च त्रयः; लेतिनायां द्वौ। ऊष्माणः छन्दायामाङ्ग्ल्यां च चत्वारः; संस्कृतशर्मण्ययोस्त्रयः; ग्रीकागोथिकयोर्द्वौ; लेतिनायामेकः। मध्यमानुनासिकौ प्रायः सर्वसाधारणौ। स्वराणां भेदप्रभेदैर्बहुधा विकारेऽपि मूलस्वरा अक्षता दृश्यन्ते।

---

(1) Gothic

उक्तविधया जाग्रत्यप्युच्चावचे भेदे सगोत्रा ऐन्द्ययौरोपभाषा वर्णविक्रियासु दर्शयन्त्येव कामपि व्यवस्थाम् । येयं यद्यप्यसार्वत्रिकी तथापि यावन्तमंशं व्याप्नोति तावति नियोगतः प्रवर्तत एव । वर्गाणां प्रथमतृतीयचतुर्थाः खरमृदुघोषा अस्या विषयः । तत्र तालव्यमूर्द्धन्यौ चटवर्गौ विरलासु भाषास्वेव वर्तेते इत्युक्तम् । अतः शेषेषु कण्ठ्यदन्त्योष्ठ्येष्वेवावकाशोऽस्याः । व्यवस्थास्वरूपं तावदिदम् । १. यत्र संस्कृतभाषायां मृदुर्दृश्यते तत्र गोथिकायां खरः, शर्मण्यायां घोषश्च; २. संस्कृते खरो गोथिकायां घोषः स्यात्; शर्मण्यायां मृदुश्च: ३. संस्कृते घोषो गोथिकायां मृदुः; शर्मण्यायां खरश्च इति । आर्ययापि संग्रहः—

मृदुखरघोषान् क्रमशः खरघोषमृदूंश्च दर्शयति ।
अथ घोषं मृदुखरकौ गैर्वाणी गोथिका च शर्मण्या ॥

अत्र संस्कृतस्योक्तो वर्णपरिवर्तननियमः छन्दा, ग्रीका, लेतिना इत्यादीनामनेकभाषान्तराणामपि साधारणः । तथा गोथिकाया उक्तो नियम आङ्गलसेक्साणी आङ्गली इत्यादीनां साधारणः । अतः संस्कृतगोथिके स्वस्ववर्गस्य प्रतिनिधित्वेन ग्राह्ये । शर्मण्या त्वेकैव । तत्रापि प्रकृष्टशर्माण्या निकृष्टशर्मण्येति द्विविधे भेदे प्रकृष्टैवात्र विवक्षिता । एवं प्रकृतवर्णव्यत्यासनियमापेक्षया ऐन्द्ययौरोपभाषाणां संस्कृतवर्गः, गोथिकावर्गः प्रकृष्टशर्मण्या इति त्रेधा विभागः कृतः । नियमोऽयं शर्मण्यदेशीयेन ग्रिम्मसंज्ञेन भाषाविज्ञानिना दृष्ट इति तदाख्यया ग्रिम्मसिद्धान्त इति प्रथामवाप। अथास्य कतिचिदुदाहरणानि दर्शयामः—

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| संस्कृतम्—युगम्, | भ्रातृ, | सप्तन्, | पितृ, | मातृ, | भू, | त्वम्, | (धु) दुहितृ | |
| आङ्गली—योक्, | ब्रोधर्, | सेव्हेन्, | भाधर्, | मोधर्, | बि, | धौ, | दाहृतर् | |
| प्र शर्मण्या-जोघ्, | प्रूओदर्, | सिएबेन्, | बेदर्, | मुओदर्, | पिम्, | दु, | तोक्तर् | |

शर्मण्यायां दन्त्यमात्रव्यवस्थितोऽयं नियमः; खरमृद्वोः क्वचिदुच्चारणदोषाल्लिपिवैकल्याच्च परिवर्तनं जातम्; संस्कृते भष्भावेन घोषविनिमयः संवृत्त इत्यादयो विशेषा अप्यत्र वक्तव्याः । सामान्यमेवात्रोपाक्षिप्तम् ।

---

(1) Grimm'sLaw

## दार्ढ्यशैथिल्ये ।

इहाक्षराणां गौरवलाघवे इव प्रकृतिप्रत्यययोर्दार्ढ्यशैथिल्ये गण्येते । सर्वलघु सर्वगुरु वा वृत्तं वृत्तशास्त्रकारा न बहुमन्यन्ते; गुरुषु लघुषु च यथायोगं व्यामिश्रितेष्वेव वृत्तं श्राव्यं भवति । तथा व्याकरणे दृढशिथिलयोः प्रकृतिप्रत्यययोर्यथावन्मेळन एव नाम्नामाख्यातानां च रूपावलिः प्रकाशेत; अन्यथा दुश्श्रवा स्यात् । गुरुलघुनियमो मात्रानिबन्धनः । किन्निबन्धनो दार्ढ्यशैथिल्यभेद इति विचारयामः—

इह किल भ–पद–सर्वनामस्थान–संज्ञाभिः प्रक्रियाविधानान्नाम्नां रूपावलिस्त्रिधा वर्तते । तत्र भपदसंज्ञे प्रकृतेः, सर्वनामस्थानसंज्ञा तु प्रत्ययस्येत्यस्ति तुच्छो भेदः । उभयेषां साजात्यसम्पादनाय सर्वनामस्थानप्रकृतिं सर्वनामस्थानिनीति, भपदयोः प्रत्ययं भप्रत्ययः पदप्रत्यय इति च व्यवहरिष्यामः । अथ तत्तत्संज्ञाप्रयुक्तैः कार्यैरनुष्ठितैः प्रकृतेः प्रत्ययस्य वा जायमानो विकारः कीदृश इति विमृश्यते । सर्वनामस्थानकार्याणि तावत् (१) नान्तस्य, नससंयोगान्तस्य, तृन्तृजन्तस्य चाङ्गस्योपधादीर्घः; (२) उगिदचां नुम्; (३) ऋदन्तस्य गुणः; (४) ओदन्तस्य वृद्धिरित्यादीनि । सर्वोऽप्ययं विकारो विकासरूपत्वात् सर्वनामस्थानिनीं प्रकृतिमुत्तम्भयन्तीव प्रतिभासते । प्रत्ययस्य तु विपरीतो विकारः । हल्ङ्यादिलोपेन सुर्भूयसा लुप्यते; संबुद्धिस्तु 'एङ् ह्रस्वात्........' इत्यादिभिर्लुप्यतेतराम् । अमिपूर्वेण प्रथमयोःपूर्वसवर्णेन च अमौङौ प्रकृतौ लीयेते । सर्वोऽयं विकारः सङ्कोचरूपत्वात् प्रत्ययं न्यक्करोति । एवञ्च सर्वनामस्थाने प्रकटा प्रकृतिः, प्रत्ययस्तत्र लीन इव सङ्कुचति ।

भपदसंज्ञयोर्दशा विपरीता । भसंज्ञायां हि अन्नन्तस्याञ्चतेश्चाल्लोपेन, वसोः सम्प्रसारणेन, पथिमथ्यृभुक्षां टिलोपेन, आतो धातोरन्तलोपेन, 'दिव उत्' इत्यादिभिश्च प्रकृतिर्ह्रसति । पदाद्यादेशैः पादादयश्च बहुधा

सङ्कुचन्ति । प्रत्ययः पुनः 'ह्रस्वनद्यापो नुट्' 'याडापः' 'आण्नद्याः' इत्याद्यागमैरासादितपरिवारो विजृम्भते । तथा पदसंज्ञायामपि प्रकृतिर्नलोपसंयोगान्तलोपाभ्यां, वसोर्दत्वेन, जश्त्वचर्त्वरूपेण महाप्राणानामल्पप्राणीकरणेन च श्लक्ष्णीभवति । प्रत्ययो विकाराभावादुदासीनोऽपि हलादित्वात् स्वत एव गाढशरीरबन्धो जागर्ति । अत्र विकासः, प्राकट्यं, विजृम्भणं इति पदैः प्रतिपादितो धर्म एव दार्ढ्यम्; ह्रासः सङ्कोचो, न्यग्भाव इति पदैः प्रतिपादितो धर्मः शैथिल्यम्। प्रकृतिप्रत्यययोः प्रधानं प्रकृतिरिति लौकिकव्यवहारादुभयसमुदायात्मनां रूपाणां दार्ढ्यशैथिल्यभेदः प्रकृत्यनुरोधेनोच्यते । अतः सर्वनामस्थानीनि रूपाणि दृढानि; पदानि शिथिलानि; भानि शिथिलतराणि। दीर्घो गुणवृद्धी, नुमागम इत्यादयो दार्ढ्यापादका धर्माः; ह्रस्वः, सम्प्रसारणं, अल्लोपादयो लोपाः इत्यादयः शैथिल्यापादकाः ।

आख्यातेष्वप्येवं सुकरो दृढशिथिलविभागः । तत्र विकरणभेदवत्सु लट्-लङ्-लोट्-लिङ्क्षु गुणवृद्धिमन्ति पिद्रूपाणि दृढानि; तद्रहितानि नलोपसम्प्रसारणाद्यर्हाणि ङिद्रूपाणि शिथिलानीति स्पष्टम् । अतस्तत्र 'लिङ्हीविनैकवचनानि........' (सू-९०८) इति श्लोकेन कृतं पिङ्ङिद्विभागमेवानुसरति दृढशिथिलविवेकोऽपि । शिथिलेष्वपि भपदसंज्ञोक्तन्यायेन प्रत्ययस्य अजादित्वझलादित्वाभ्यां शैथिल्यतारतम्यमूह्यम् । नामविभक्तीनां भपदसर्वनामस्थानसंज्ञाभिर्विभागः कृतः । आख्यातानां तु पकारङकाराभ्यामनुबन्धाभ्यामेव विभाग इति भेदः । पूर्वाचार्यास्तु आख्यातेष्वपि संज्ञया विभागमन्वतिष्ठन्निति निरुक्तादवगम्यते । यथाह यास्कः- "अथाप्यस्तेर्निवृत्तिस्थानेष्वादिलोपो भवति स्तः सन्तीति" इति । ङितामियं संज्ञा; पितां प्रवृत्तिस्थानमिति संज्ञा स्यादिति तर्क्यते । इह श्नाभ्यस्तयोरीत्वलोपौ दार्ढ्यशैथिल्यानुरोधेन क्रियेते । दृढेषु क्रीणातीति तादवस्थ्यं; शिथिलेषु क्रीणीत इति आत ईत्वम्; शिथिलतरेषु क्रीणन्तीति लोपः । एवं श्नसोरल्लोपादयोऽपि दार्ढ्यशैथिल्ये पुरस्कृत्यैव प्रवर्तन्ते ।

लिटि ङित्वस्थाने कित्त्वं प्रत्ययानां दार्ढ्यापादकं प्रकृतीनां वा शैथिल्यापादकम् । एत्वाभ्यासलोपा शिथिलाया एव प्रकृतेः । थलि इडा-

गमे प्रत्ययो दृढ इति सेट्त्वे परं एत्वाभ्यासलोपौ विहितौ । गमहनादीनामल्लोपः, अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपादयश्च झलि क्ङिति विधानात् प्रकृतिं शिथिलीकुर्वन्ति । संयोगान्तो धातुः पूर्वस्याचो गुरुत्वेन दृढैव वर्तेतेति असंयोगादेव लिट् कित्कृतः । अकारान्तेषु विकरणेषु विकरणान्तानामङ्गानां तिङां च दृढशिथिलविभागस्य नास्त्यवकाशः । विकरणस्य पित्त्वाङित्त्वादिभिस्तस्य तदङ्गस्य च दार्ढ्यशैथिल्ये तु संभवत एव । यथा शपि गुणः, शे व्रश्चादीनां सम्प्रसारणं च । कृत्सु तिङ्तुल्या दार्ढ्यशैथिल्यव्यवस्था, तद्धितेषु सुप्तुल्या चेत्यतिदेश एव पर्याप्नोति ।

अक्षरद्वित्वे द्विरुक्तस्य 'पूर्वोऽभ्यास इत्युक्तम्; व्यवहारसौकर्याय उत्तरोऽभ्यासीति व्यपदिश्यते । अभ्यस्तेऽङ्गे अभ्यासस्याभ्यासिनि न्य*ग्भावो न्याय्यः । अतस्तत्र हलादिः शेषो ह्रस्वो, जश्त्वचर्त्वाभ्यां महाप्राणबीजत्यागः सम्प्रसारणं च क्रियते । तैः सह चोः कुत्वस्य विपर्यासेन कुहोश्चुविधानात्, अत इत्त्वविधानाच्च कण्ठ्यापेक्षया तालव्यस्य शैथिल्यप्रयोजकत्वमनुमीयते । श्नाभ्यस्तयोरात ईत्वमपि शिथिलाया एव प्रकृतेर्विहितम् । पिपर्ति पिपूर्तः पिपुरति, करोति कुरुतः कुर्वन्ति इति शिथिलायां प्रकृतौ क्वचिदकारस्य उत्वमपि कृतं दृश्यते । इयमेवोपपत्तिः 'अकारस्तीव्रयत्नः, इकारो मृदुयत्नः, उकारो मध्ययत्नः, इति मूलस्वराणां यत्नतारतम्यकथनस्य ।

एवमन्यत्रापि दार्ढ्यशैथिल्यनयः संचार्यः । यथा झस्यातान्तादेशयोर्व्यवस्थायाम् । तत्र हि अभ्यस्तस्य धातोर्द्वित्वेन दृढायां प्रकृतौ प्रत्ययः शैथिल्यमर्हतीति 'अदभ्यस्तात्' इत्युक्तम् । 'आत्मनेपदेष्वनतः' इत्यात्मनेपदेष्वनभ्यस्तादपि धातोरतादेशविधानमपि झेरपेक्षया झे झ इत्यनयोस्तीव्रयत्नत्वेनदार्ढ्यतारतम्यनिबन्धनामिति सुलभा युक्तिः । आच्छीनद्योर्नुम्विधिः, अभ्य

---

* यङ्यङ्लुकोः पुनर्विपरीता दशा । तत्र हि क्रियासमभिहारद्योतनाय धातुर्द्विरुच्यते । अतोऽभ्यासाभ्यासिनोः समं प्राधान्यम् । ततश्च परिणिहेनाभ्याससाम्यं म्सपादयितुमभ्यासो गुणेन, दीर्घेण, रुग्रिग्रीगागमैश्च पौष्कल्यं नीयते ।

स्ताच्छतुः प्रतिषेधः, औङः श्यां विकल्पनञ्चानया रीत्या व्याख्येयम् । किं बहुना, उच्चावचविकारवैयाकुलीमहान्धकारसम्मीलितायां रूपनिष्पत्तिप्रक्रियापद्धतौ प्रचरतां बालानां दार्ढ्यशैथिल्यनयोऽयं, वेलागतो दीपस्तम्भ इव महार्णवमवतीर्णानां सांयात्रिकाणां, दिक्प्रदर्शनेनावश्यमुपकरिष्यति ।

स्वरनिर्णयेऽपि दार्ढ्यशैथिल्यव्यवस्थेयं सामान्यत उपयुज्यते । स्वरेषु ह्युदात्त उत्कृष्टः; अनुदात्तो निकृष्टः । अतः प्रकृतेः प्रत्ययस्य वा दृढस्य उदात्तो न्याय्यः, शिथिलस्यानुदात्तश्च । तथैव च प्रायशो दृश्यते— सर्वनामस्थाने प्रकृतिस्वरः; भपदयोः प्रत्ययस्वरश्च नामसु; निवृत्तिस्थाने प्रकृतिस्वरः, प्रवृत्तिस्थाने प्रत्ययस्वरश्चाख्यातेष्विति । 'अनुदात्तौ सुप्पितौ' 'सावेकाचस्तृतीयादिर्विभक्तिः' 'शतुरनुमो नद्यजादी' 'तास्यनुदात्तेन्ङिद्दुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः' इत्यादीनि सूत्राण्यत्रानुसन्धेयानि ।

---

## ३. विभक्तयः ।

कूटस्थायामैन्द्ययौरोपभाषायां सप्त (सम्बोधनया सहाष्ट वा) विभक्तय आसन्; ताः सर्वा अपि संस्कृते छन्दायां च दृश्यन्ते । ग्रीकायां पञ्चैव शिष्यन्ते; लेतिनायां षट्; आङ्गलसेक्सोण्यां गोथिकायां च पञ्च; आङ्गल्यां न कापि । अन्त्यायां सर्वनामसु परं काश्चन लुप्तशेषा दृश्यन्ते । छन्दाग्रीकासंस्कृतवर्ज्जमन्यासु एकवचनबहुवचने एव । तास्वपि विरला, द्विवचनप्रत्ययाः । यथा संस्कृते सप्तानां विभक्तीनां औ भ्यां ओस् इति त्रय एव प्रत्ययाः । विभक्तिगणनानुक्रमो द्विवचनप्रत्ययानुरोधेन कृतः प्रतिभाति— प्रथमयोर्मध्यमत्रयस्य, शेषद्वयस्य चैकरूपः प्रत्ययो यथा स्यादिति । तत्रार्थविशेषप्रतिपादकत्वाभावेन सामान्यविभक्तत्वात् प्रथमायाः प्राथम्यमित्यत्र । विभक्तिवाच्यानां कारकाणां सम्बन्धसान्निकर्षाव प्रकर्षाभ्यां विभागस्त्वन्यथैव स्यात् ।

पञ्चम्येकवचने युष्मदस्मदोरदन्ताना नैव व्यावर्तकः प्रत्यय उपलभ्यते। शेषेषु षष्ठ्यैकवचनमेव पञ्चम्येकवचनकृत्यमपि करोति। पञ्चम्या द्विवचनबहुवचने पुनश्चतुर्थ्या सह तुल्यं संविभक्ते। अतः पञ्चमीविभक्तिरासन्नाभ्यां षष्ठीचतुर्थीभ्यां रूपेण व्यावर्तयितुं प्रायो न शक्यते। यथास्मिन्नेव प्रतिज्ञावाक्ये। कवयस्तावत सङ्कटेऽत्र सर्वनामभ्यो विहितं तस्प्रत्ययं नामान्तरेभ्योऽपि "वन्यः सरित्तो जग उन्ममज्ज" इत्यादिवत् प्रयुञ्जते। अदन्तसर्वनाम्नां ङेङस्योः स्म इत्यागमो भवति। ङिम्तदा स्मिन् इति विकरोति च। छन्दागोथिकादिष्वपि किञ्चिद्विकृतो दृष्टोऽयं स्मकारः कस्यापि खिलीभूतस्य सर्वनामशब्दस्यावशेष इत्याहुः। स्त्रियां ङीपि लुप्तमकारोऽयं स्यै स्याः स्यां इति रूपमापद्यते।

'तस्माच्छसो नः पुंसि' इति नकारादेशविधिश्चरित्रपर्यालोचनायां नकारागमो भवितुमर्हति। 'तस्माच्छसो नुं पुंसि' इति सूत्रितेऽपि संयोगान्तलोपेनाभीष्टं रूपं सिध्यत्येव। अन्यच्च लभ्यते महत्प्रयोजनम्। तथाहि— इह 'अत्रानुनासिकः पूर्वस्य तु वा' 'आतोऽटि नित्यम्' 'अनुनासिकात् परोऽनुस्वारः' इति महान्तं परिकरं बद्ध्वा पाणिनिः 'समः सुटि' 'पुमः खय्यम्परे' 'नश्छव्यप्रशान्' 'उभयथर्क्षु' 'दीर्घादटि समानपादे' 'नॄन् पे' 'स्वतवान् पायौ' 'कानाम्रेडिते' इत्यष्टभिः सूत्रैः रुं (क्लीबत्वे रु वा) विदधाति। एषु प्रथमसूत्रेण 'संस्कर्ता' इति रूपं साध्यते। तद्धि रूपं मोऽनस्वारेणैव सिद्धम्। किमिति स्वयं सिद्ध्यदेव साधयितुं मकारस्य रुत्वविसर्गसादेशानुस्वारागमा इति प्रक्रियापरम्परामुपादिश्य शिरोवेष्टनेन प्राणायामः क्रियते? किञ्चात्र जिह्वामूलीयवारणाय 'संपुङ्कानां सः', सूत्रे सकारप्रश्लेषो वा कर्तव्य इत्यनर्थान्तरं च जागर्ति। अथ रुत्वे कृत एव द्विसकारं रूपं लभ्येतेति चेत्तदपि 'अनचि चे'ति द्वित्वेन सुकरम्। न च अचः परत्वरूपं निमित्तं नास्तीति वक्तुं शक्यते। अयोगवाहानामट्सूपदेशस्य सम्प्रतिपन्नत्वात्। अथवा 'समो वा लोपमेके' इत्युक्त्वा स्थितं सकारमेव निष्कासयितुं यतमाने भगवति भाष्यकारे कस्यायं दुराग्रहस्तमाम्रे-

डयितुम्? एवं सूत्रस्यैव प्रयोजनादर्शनाद्व्यामुह्यन्तं शिष्यं सिद्धान्तकौमुदीकारा दीक्षिता अकाण्डकोलाहलेन व्यामोहयन्तितराम् । ते हि सूत्रफलविचारे तूष्णीकाः सहस्रवार्षिकसत्रवदनुष्ठानाक्षमत्वेनोपेक्षितान् सान्यासिकत्वेन स्थित्वा ग्रन्थकोणे क्वचित् सुप्तान् द्वित्वादिविधीनुत्थाप्य 'संस्कर्ता' इत्यत्र रूपाणामष्टोत्तरं शतं सम्पाद्य तत्संख्याकानां रूप्याणामिव लाभेन धन्यमात्मानं मन्यमाना वल्गन्ते ।

रुविधावस्मिन् सर्वत्रापि मकारो नकारो वा रोः स्थानी; तौ च वक्ष्यमाणेन नयेनापदान्तत्वे जाते पृथग्यत्नं विनैव 'नश्चापदान्तस्य झलि' इति अनुस्वारत्वं प्राप्नुयाताम् । अनुनासिकोऽप्यपेक्षितश्चेत् कामं सोऽपि विकल्प्यताम् । ततः परं सकारश्रवणायैव नवो यत्न आस्थातव्यः । स चैवं संविधीयते— 'पुमः खय्यम्परे'प्रभृतिभिर्निमित्तैः संयोगान्तलोपः प्रतिषेद्धव्यः । तदा पुंस्कामा पुंश्चली पुंस्पुत्रोऽप्यनायासमुत्पद्यते । 'पुंस्' इति सकारान्तो हि शब्दः । रुत्वविसर्गसत्वान्यत्रापि प्रवर्तमानानि कामं प्रवर्तन्ताम् । जिह्वामूलीयोपध्मानीययोर्वारणन्तूभयत्रापि तुल्यम् ।

इह सप्तधा नान्तानि पदानि संभवन्ति— (१) अजन्तपुल्लिङ्गद्वितीयाबहुवचनानि । (२) वस्वीयसुन्नन्तपुल्लिङ्ग—प्रथमैकवचनानि । (३) अनिनन्तानां संबुद्धिः । (४) शतृवतुमतुक्तवत्वन्तपुल्लिङ्गानामपि प्रथमैकवचनानि । (५) लङ्लुङ्लृङ्परस्मैपदप्रथमपुरुषबहुवचनानि । (६) अदन्तसर्वनामसप्तम्येकवचनानि । (७) भवान्—पुमान्—प्रभृतीनि विशेषरूपाणि च । अतो नश्छवीति विधिर्विशालं विषयं व्याप्नोति । तत्र यथोपक्षिप्तं 'तस्माच्छसो नुं पुंसि' इति सूत्रयित्वा नात् सस्य च्छव्यम्परे संयोगान्तलोपप्रतिषेधेन प्रथमाद्वितीयवर्गयोरभीष्टसिद्धिः । तृतीयवर्गे निषेद्धव्यो हल्ङ्यादिलोप इत्येव भेदः । 'उभयथर्क्षु' इत्युत्तरसूत्रेणोक्ता रुविधेः क्वचिदप्रवृत्तिः शेषवर्गत्रयविषये प्रायो व्यवस्थिता दृश्यते इति च्छन्दसि न कापि क्षतिः । 'दीर्घादटि' इत्यपूर्वो विधिरपि भूयसा शसन्तान् वस्वीयस्वन्तांश्चैव विषयीकरोति । 'महाँ इन्द्रो य ओजसा' इत्यादिष्वतिविरलेषु

तूदाहरणेषु छन्दसि बाहुलकेन नस्यानुनासिक इति समाधेयम्; रुरन्तागमो वा विधीयताम् । शेषसूत्रत्रयस्य नससंयोगविषयकत्वादुक्तः संयोगान्तलोपनिषेध एव पर्याप्नोति ।

एवमस्मदुक्तनयेन शसो नुमागमं विधाय इष्टेषु निमित्तेषु संयोगान्तलोपस्य निषेध एव ऋजुर्लघुर्न्याय्य आगमानुसारी च पन्थाः । संयोगान्तलोपस्तावत् स्थलान्तरे विकल्प्यतां 'नात्तो वा मि' इति । पश्यन्त्समीते, कृतवान्त्सर्वं, अगमन्त्सैन्यानि इत्युदाहरणानि । संयोगान्तलोपप्रकरणे एवं सूत्रयित्वा 'नश्च (सिधुक्)' इति सूत्रं त्यज्यताम् । एवं कृते सप्तविधेषु नान्तवर्गेषु परिगणितेषु चतुर्थपञ्चमयोरेव तकारस्य सत्त्वादन्येषु विधिर्न प्रवर्ततेति चेत् काममिष्टापत्तिरेवास्माकम् । वैकल्पिकोऽयं धुगागमश्छन्दसि तादृशेष्वेव हि लक्ष्येषूपलभ्यते । लोके तु न कुत्राप्युपयुज्यते । अत एव च्छान्दसप्रकरणे इदं सूत्रमुपन्यस्तमस्माभिः । आचार्येणापि व्यवस्थितविभाषैवेयमुद्दिष्टा स्यात् । अनेन रुत्वधुडागमाभ्यां साधितस्य सन्धिविशेषस्योपपत्तिरासादिता । मूलस्वरान्तशब्दानां द्वितीयाबहुवचने गाथिकायां (वुल्फान्सु=वृकान्',) ('गास्तिन्स्=अतिथीन्') 'सुनुन्स्=(सूनून्') इति नससंयोगदर्शनात् स्थिरीकृतोऽस्मदभ्यूहः । गाथिका हि प्रायो जरत्तराणि रूपाण्यक्षतानि रक्षन्ती दृष्टा । कूटस्थार्यभाषायां स्थितः सकारः संस्कृते संयोगान्तलोपेन नश्यन्नपि 'तांस्तान्' 'परिधीँरति' नॄँः पाहि' इत्यादिषु विरळेषु लक्ष्येषु वेषभेदेनाद्यापि निलीय तिष्ठन्, चरित्रपर्यालोचकैः परं प्रत्यभिज्ञायते । अयं ह्यतिसूक्ष्मदर्शिनः पाणिनेरपि विशालदेशव्यापिन्यां दृष्टौ नापप्तदिति चित्रीयामहे ।

अथ 'तस्मिंस्तरौ' 'कृतवांश्चित्रं' 'महांष्टीकते' इत्यादिषु लौकिकेषु लक्ष्येषु का गतिरित्याक्षेपः समाधातव्यः शिष्यते । अनुमानप्रमाणे यथा हेत्वाभासस्तथा उपमानप्रमाणे साम्याभासः । तद्विलसितस्य फलान्येतानीति ब्रूमः । 'विद्वांश्चलति', 'दुर्गांस्तरति' इत्यादौ दृष्टं रूपं आगमविस्मरणात्तुल्यन्यायस्यातिप्रसारणेनातदर्हेष्वपि देशेषु प्रचारितमित्येव । न

चेयमपूर्वा शैली भाषासु । अद्यत्वेऽपि हि बालाः, अवैयाकरणाः प्रौढाश्च 'पुमान् स्त्रिया' इति सूत्रं 'पुमांस्त्रिया' इति पाठन्ति । शसो नादेशविधानेन, पदान्तनकारात् सस्य धुडागमकल्पनेन, 'पुमः खय्यम्परे' इत्यादि रुविधिना च वास्तवी सन्धिप्रक्रिया तिरोभवति; सा येन स्फुटा स्यात् स प्रकार उपन्यस्त इत्येव विमर्शस्यास्य सारः । 'ऊर्क्,' 'अमार्ट्' इत्यादिषु रेफपूर्वकसंयोगेष्विव न्स्, न्त् इति नकारपूर्वकसंयोगेष्वपि क्वाचिल्लोपो न स्यादित्येव रुप्रकरणस्य धुड्विधेश्च फलितोऽर्थ इति विषयसंग्रहः ।

---

## ४. सर्वनामानि ।

इह प्रत्ययोत्तरपदयोर्दृष्टं रूपमेव प्रातिपदिकानां सहजमिति नयमवलम्ब्य त्यत्तद्यदेतद्युष्मदस्मदो दान्तान्, इदंकिमौ मान्तौ, अदसं सान्तं च पठित्वा त्यदाद्यत्वेन, शेषे लोपेन, कादेशेन चैतान् विभक्तिषु अकारान्तान् करोत्याचार्यः । यदि पुनस्तद्धितापेक्षया विभक्तिरूपावलिरेव प्रधानमिति गृह्यते तदैतान् अदन्तान् पठित्वा प्रत्ययोत्तरपदयोर्दकारोऽन्तागमो वक्तव्यः स्यात् । करोति चैवमन्यशब्दविषये 'अषष्ठ्यतृतीयास्थस्यान्यस्य' इति सूत्रयन्नाचार्यः । क्लीबे च डतरादिपञ्चकस्य स्वमोरदादेशं विदधाति । अदन्तपाठपक्षे त्यत्तद्यदेतदोऽपि डतरादिषु निवेशनीयाः स्युः । एषु यच्छब्दस्य अदन्तसर्वनामान्तरसाधारणान्येव रूपाणि । त्यत्तदेतदां 'तदोः सः सौ..........' इत्युक्तः सादेश एको विशेषः । 'किमः कः' 'कुतिहोः' 'इदम् किमोरीश्की' इति विधिभिः किंशब्दस्य स्वादिषु अकारान्ता, प्राग्दिशीयतद्धितेषु उकारान्ता, उत्तरपदे क्वचित् इकारान्ता च प्रकृतिः । 'किमोऽत्यपि' कु इत्यादेशेनैव सिद्धे 'क्वाति' इत्यादेशान्तरविधानं 'ओर्गुण'-भयादेव कृतम् । तथा क्लीबे स्वमोरपि 'कि' इत्यादेशे अमि पूर्वेण रूपं सिध्यति । प्रक्रियासौकर्यापेक्षयैवाचार्येण तथा न कृतम् । एवम् इदंशब्दस्य अ अन इम इति प्रकृतित्रयादुत्पन्नानि रूपाणि । अदसस्तथा अमु इति भूयसा प्रकृतिः ।

इतोऽपि विचित्रा युष्मदस्मदोर्विभक्तिरूपावलिः । त्वमावेकवचने, युवावौ द्विवचने, युष्मास्मौ बहुवचने चानयोः प्रकृतिः । तत्र बहुवचने श्रूयमाणः स्मकारः स्मैस्मात्स्मिन्स्वपि दृष्टं सर्वनामान्तरं, धातुषु विकरणप्रत्ययवद्रूपनिष्पादकः प्रत्ययो वा स्यात् । पूर्वस्मिन् पक्षे स्म इत्यस्य सः इति अन्य इति वा अर्थश्चेत् बहुवचनरूपाणि प्रकृतिद्वयसमासादुत्पन्नानीति वक्तुं शक्यते । अर्थश्च सङ्गच्छते—यु=त्वम्; स्म=ते, अन्ये वा । त्वं चान्ये च युष्मे (छान्दसं प्रथमाबहुवचनम्) इति । अस्मच्छब्दो मस्म इति मकारादिरासीदिति तर्क्यते । एकवचनेषु हि मां मया मे मह्यं....इति सर्वत्र मकारः श्रूयते । स्वसृभाषासु चास्ति मकारः । तथा च, म=अहं; स्म=अन्ये; अहमन्ये च अस्मे इत्यर्थयोजना । त्व इत्येकवचनप्रकृतिरेव तकारलोपेन व इति संपद्यते । यस्य औटि वां इति, शसि वस् इति च रूपे एव षष्ठीचतुर्थीद्विवचनयोरपि निघातयुष्मदादेशौ विहितौ । तकारलोपेन जर्जरीभूतत्वादेव निघातत्वं, वाक्यपादयोरादौ प्रयोगनिषेधश्च । युवां युवाभ्यां इत्यादीनि द्विवचनरूपाणि यु इति व (=त्व-त) इति च प्रकृतिद्वयस्य समानार्थकस्य समासादुत्पन्नानि । एवञ्च त्वं+त्वं= युवां इति द्विवचनार्थः स्फुटः । अत्र पर्यायभूतयोः प्रकृत्योर्योगेन द्विवचनं निष्पादितम् । कासुचित् भाषासु प्रकृतेरेव द्वित्वेनापि द्विवचननिष्पत्तिर्दृष्टा । संस्कृते तावत् भाषान्तरेष्वदृष्टस्य 'सरूपाणामेकशेष एकविभक्तौ' इत्येकशेषसिद्धान्तस्य बीजमिदमेव स्यादिति तर्कयामि । उक्तनयेन आवां, आवाभ्यां इत्यादिषु अस्मच्छब्दद्विवचनरूपेषु अ+व=म+त्व=अहं+त्वं इति व्यक्तिद्वित्वम् । मकारलोपेन शिथिलीभूता अ इति प्रकृतिर्दार्ढ्याय दीर्घीक्रियते । अस्मिन् नये अहं च त्वं च आवां इति अस्मद्युष्मत्प्रयुक्ते द्वित्व एव द्विवचनप्रयोगोऽन्वर्थः स्यात् । अहं च स च आवां इति उत्तमप्रथमपुरुषप्रयुक्ते द्वित्वे प्रयोगस्तु प्रकृत्यर्थविस्मरणानन्तरं प्रवृत्तो वक्तव्यः ।

एकवचनस्य तेमयादेशौ त्व म इति प्रकृतिभ्यां षष्ठीचतुर्थीद्वितीयैकवचनप्रत्ययानां 'शे' आदेशेन व्याख्यातव्यौ । अत्र त्व इत्यस्य

वकारो लुप्तः; म इत्यस्य मकारस्तु न । द्विबहुवचनयोर्युष्मदो वां-व-सांदेशो व्याख्यातः । अस्मदो नौ-नसादेशयोरुपपादनाय नकाररूपा न-वा काचिदस्मत्प्रकृतिः कल्पनीया । अनयोरपि वांवसोरिव द्वितीयारूपमेव षष्ठीचतुर्थ्योरप्यतिदिष्टम् । 'ङेप्रथमयोरम्' इत्यादयः प्रत्ययविकाराः पाणिनिनैव दर्शिताः । तत्र पञ्चम्या अत् अदन्तशब्दसाधारण एव । किन्तु अकारो नापेक्षितः । प्रकृत्यन्तदीर्घस्त्वदन्तेष्वेवेति विशेषः । त्वया मया इत्यत्र इनादेशाभावः, भिस ऐसादेशाभावश्च च्छन्दसि सुलभ एव । उत्तरो लोकेऽपि इदमदसोर्दृश्यते । मह्यम् इति मकारस्य हकारो हृग्रहो-श्छन्दसि दृष्टत्वाद्व्यत्यस्तकोटिं न प्रविशति । चतुर्थ्येकवचनस्यापि भ्यस्तु व्यत्यस्तः । 'ङेप्रथमयोरम्' इत्यस्य स्थाने 'चतुर्थीसर्वनामस्थानयोरमङ्' इति सूत्रिते 'भ्यसो भ्य'मुपपद्यते, शसो नविधिश्च त्यक्तुं शक्यते । ङसः सलोपं कृत्वा प्रकृतिद्वित्वेन मम इति, मध्ये अकारागमेन तव इति च षष्ठ्येकवचने सिध्येताम् । युष्माकं अस्माकं इति षष्ठी बहुवचनं अण्तद्धि-तस्यैव आदिवृद्धिरहितं क्लीबप्रथमैकवचनरूपं स्यात् । तद्धितो वा वैपरी-त्येन षष्ठ्यन्तान्निष्पन्नः स्यात् । तावकमामकावपि तद्धितौ हि दृश्यते । तृतीयासप्तमीबहुवचनयो'र्बहुवचने झल्येत्' निषेद्धव्य इत्येव । लोके औङि, च्छन्दसि औट्-मात्रे उभयत्र अमि च अमि पूर्वो निवार्यः । जसि स्मकारयोगो न क्रियते । युष्मदि प्रकृतिदीर्घः, अस्मदि मतुप इव मस्य वादेशश्च क्रियते । 'योऽचि' इत्यादेशे शस्-टाङिषु इति परिगणनं कर्तव्यम् । अहम् इत्यत्र मलोपानन्तरं हकारागमो द्रष्टव्यः । स्वसृभाषा-स्वप्ययं हकारो घकारात्मना दृश्यते ।

---

## ८. आख्यातानि ।

आख्यातानां पदभेदः, कालप्रकारविवेकः, प्रयोगविभागः, पुरुष-व्यवस्था च तिङन्तप्रक्रियारंभ एव प्रतिपादिता । ततो वैदिकप्रकरणे लोट्प्रस्तावे लिङ्-लेट्-लोटां बहुत्रार्थसाम्यं क्वाचिद्रूपसाम्यं च दर्शितम् । अथ तदुपरि गाढतरो विचारः क्रियते—

पूर्वं दार्ढ्यशैथिल्यविभागप्रकरणे शप्श्यन्शभिन्नविकरणवतां संभवन् भेद एव दर्शितः। प्रत्ययसामान्यस्य दार्ढ्यशैथिल्यभेदस्त्वेवं– द्वयोरपि पदयोर्लकारभेदेन दृढाः शिथिलाश्च सन्ति प्रत्ययाः। तत्र तिप्तस्झिसूत्रे महर्षिः परस्मैपदेषु दृढान् प्रत्ययान् पठित्वा इलोप-सलोप-तान्त-न्तामादेशैर्ङिल्लकारेषु प्रत्ययानां शिथिलीकरणमुपदिशति। आत्मनेपदे पुनः प्रथमं शिथिलान् पठित्वा टित्सु टेरेदादेशेन दृढीकरणं चोदयति। एवमुभयोः पदयोष्टितां लकाराणां प्रत्यया दृढाः, ङितां शिथिलाः। ङित्सु प्रत्ययानां शैथिल्यादडागमेन प्रकृतेर्दार्ढ्यं क्रियते। लिङ एकस्याडागमो नास्ति चेत् तत्स्थाने यासुट्सीयुटावागमौ जागृतः। एतौ च प्रत्ययं प्रकृतिं वा दृढीकुरुतः। उभयथापि दृढशिथिलमिश्रणनयः सुरक्षितः। टित्सु लोट् टिङ्ङितोर्मध्य इव वर्तते। परस्मैपदे तस्य तान्तन्ताम्वमा ङितां प्रत्ययाः, 'एरुः' इत्यनेन तिप्झ्योर्मन्दं दार्ढ्यम्। आत्मनेपदे स्वध्वमौ शिथिलौ। लेटि महत्यस्ति वैयाकुलीत्युपरिष्टात् स्पष्टीभविष्यति।

इह किल वेदेषु लकाराणां, विशिष्य तत्रापि लङः, प्रकारवाचिनां लिङ्–लेट्–लोटां च विचित्राणि रूपाणि दृश्यन्ते। तथाहि—

| | | | | | | |
|---|---|---|---|---|---|---|
| (शप्) १ | जयासि, | गच्छाति, | जीवाथ, | यजाते | स्वजातै, |
| | क्रामत्, | भवन्, | रमन्त, | स्मयन्त, | |
| (लुक्) २ | ब्रवतः, | ब्रवत्, | ब्रवते, | | |
| | वेः, | स्तौत्, | ईळत, | वसत | |
| (श्लु) ३ | बिभरत्, | दधन्, | ददातै | | |
| | ददाः, | बिभेः, | जिहीत | | |
| (श्यन्) ४ | रिध्याति, | मन्याते | | | |
| | गायत्, | जायत, | मन्यत | | |
| (श्नु) ५ | शृणवः, | अश्नवन् | | | |
| | वन्वन्, | हिन्वन् | | | |
| (श) ६ | किरासि, | मुञ्चासि, | सञ्चामहै | | |
| | इच्छः, | खिशत्, | इच्छन्त, | सृजन्त | |

(श्नम्) ७ { भिनदः, युनजन्, युनजते
भिनत्, ऋणक्, युञ्जत

(उ) ८ { करवः, मनवते
तनुथाः, ऋणोः

(श्ना) ९ { वृणाति
गृभ्णाः, क्षिणाम् वृणीत.

एषु वेदेभ्य उपात्तेषूदाहरणराशिषु प्रथमपङ्क्तिगतानि रूपाणि प्रत्ययस्य अडाडागमादिभिस्तैस्तैः प्रक्रियाविशेषैर्लेट एवेति स्पष्टम् । तेषु च यथाक्रमं शबादयः श्नापर्यन्ता नवापि विकरणप्रत्यया दृश्यन्ते । एषामत्र स्थालीपुलाकन्यायेनोद्धृतत्वात् सन्ति चैकैकस्याप्यनेकान्युदाहरणान्तराणि । अतो विकरणभेदो लेट्यप्यस्तीत्यवश्यमङ्गीकर्तव्यमापतितम् । यस्य धातोर्यद्विकरणं लिङ्लोडादिषु दृष्टं तस्यैव तदेव लेट्यप्युपलभ्यते चेद्विकरणभेदवत्त्वस्य धर्मस्य लेटि व्याप्तिः कथं वार्यताम्? पाणिनिः पुनः 'सिब्बहुलं लेटि' इति सिपमेकमेव लेटि विकरणं विधाय सर्वमिदं बाहुलकात् सिद्धं मन्यते । अहो बत दुर्भरो भारो बाहुलकस्य शिरसि प्रक्षिप्तः! भूयस्यंशे प्रवृत्तिरल्पीयस्यप्रवृत्तिश्च हि बाहुलकेन क्रियते ।

अथोद्धृतेषूदाहरणराशिषु द्वितीयपङ्क्तिगतानि रूपाणि परीक्षामहे । एषु विकरणप्रत्यया यथायथमायोजिताः; इलोपतान्तन्तामादेशादीनि च ङिल्लकारकार्याणि दृश्यन्ते । किं बहुना? अडागमोऽप्यद्रक्ष्यत चेदेतानि निस्संशयं लङ्रूपाण्यभ्युपागमिष्याम । अत्रापि पाणिनीयप्रस्थाने 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडागमप्रतिषेधे कृतं बाहुलकमेव शरणीकृत्य लङो रूपाणि ग्राह्याण्येतानि । एवं कथाप्रसिद्धस्य उष्ट्रस्य पृष्ठं वणिगिव च्छान्दसप्रक्रियायामाचार्यो बहुलस्य शिरो निश्शेषमवसादयितुं प्रवृत्त इव प्रतिभाति । काममास्तां तावदेषां लङो विकृतरूपत्वमेव, यावत् गत्यन्तरं नोपलभामहे ।

अथ विधान्तरेण विचित्राण्युदाहरणान्युद्धरिष्यामः——

जुजोषत्—जुजोषन्,—जुजोषसि—जुजोषथः—जुजोषथ,—जुजोषते (एकवचनं) मुमोचति—मुमुचः (चित्) चिकेतन्—चिकेतः चिकेथः; (अस्) अनसामहै; ववृतत् ववर्तत्; सासहत्; रारणत्; वावृधते।

२—शशाः; दुधोत्; दधर्षीत्; (धृष ईट्); चकनन्त; ततनन्त; पप्रथन्त; मामहन्त; वावृधन्त; विव्यचन्त; रुरुचन्त।

३—(गम्) जगम्यात्—जगम्यु; जगम्यातम्—जगम्याम्। (अश्) अनश्यात्—आनश्याम्; चक्रियाः; बभूयात्—बभूयाः; तुतूर्यात्; दुधुवीत; ववृतीमहि; ववृत्यात्; ससद्यात्; पपीयात्।

४—(मुच्) मुमोक्तु—मुमुग्धि मुमुक्तम्; मुमोचतं मुमोचत। (दिश्) दिदेष्टु-दिदिड्ढि-दिदिष्टन; ववृत्तन; बभूतु; शशाधि; ववृत्तन; ववृत्स्व; ववृद्ध्वम्; दद्दश्राम्; मामहन्ताम्-मामहस्व।

५—(गमस्तिप्सिपोः) अजगन्, अजगन्त, अजगन्तन। (च्यु) अचुच्यवीन्, अचुच्यवुः; अचुच्यवीतन। (ग्रह) अजग्रभीत्; अजग्रभं; अशुश्रवि। (दिशआत्मने-तप्रत्यये) दिदिष्ट; अपस्पृधेताम्; अचाक्रिरन्; अपेचिरन्; अचचक्षम्।

अत्र पूर्ववत् प्रथमे उदाहरणराशौ प्रत्ययेष्वडागमदर्शनात् प्रस्फुटो लेट्; मुञ्चतिवर्तत्योर्गुणविकल्पो दृश्यते; वर्ततिः परस्मैपदे प्रयुक्त इत्यादयो विशेषास्त्वकिञ्चित्कराः। धातूनां लिटीव द्विर्वचनं परं सम्पादनीयम्। तत्र का गतिः? नैते धातवो जौहोत्यादिकाः। स्वीकृतेऽपि वा जुहोत्यादौ पाठे 'जुजोषत्' इत्यकारः शपः श्लौ कथं श्रूयेत? अथ पुनरेतेषु यङ्लुकं कल्पयिष्याम इति चेत्तदापि चर्करीतस्यादादिकत्त्वाच्छपो लुक् जागर्ति। एवं खड्गो वा कुठारो वा भवतूपकरणम्, शपः कण्ठच्छेदः सर्वथा दुरत्ययः संवृत्तः। किञ्च यङ्लुक्पक्षे गुणदीर्घादीनामभ्यासकार्याणां वारणाय नवो यत्न आस्थातव्यः स्यात्। पुनरप्येवं बहुलब्रह्मास्त्रं प्रयोक्तव्यमापतितम्। प्रकृते च तद्दूरान्मृग्यमास्ते। अदिप्रभृतिभ्यः शब्लुकश्छन्दसि बहुलवचनान्न केवलं लुगत्र स्वयं निवर्तते, अपि तु प्रवृत्त्युन्मुखान्यभ्यासकार्याण्यपि निवर्तयतीति वक्तव्यम्। 'छन्दसि दृष्टानुविधिः' इति वचनमवलंब्य याभिरिष्टरूपाणि सिद्ध्यन्ति ता एव प्रक्रियाः प्रवर्तन्ते इति वा समाधेयम्। उभयथापि शास्त्रगौरवं हीयते।

द्वितीये राशौ पूर्ववदेव अडागमविरहेण च्छिन्नपुच्छा लङो दृश्यन्ते। यद्यप्यत्र शपस्तत्स्थानभाजोऽन्यस्य वा अकारस्याभावात् 'दधर्षीत्' इत्यादावीडागमदर्शनाच्च यङ्लुक्-कल्पनं सुकरतरं, तथापि अभ्यासकार्याणामप्रवृत्तिस्तदवस्थैव । 'मामहन्त' 'वावृधन्त' इत्यादिषु द्वित्रेषूदाहरणेष्वभ्यासदीर्घो दृश्यत इति चेत् आत्मनेपदस्योपपत्तिर्नास्तीत्यादीन्यनर्थान्तराण्यपि जाग्रति ।

तृतीये याड्दर्शनाल्लिङं, चतुर्थे तु—हि—तनप्-थनादिभिर्लोटं च प्रत्यभिजानीमः । अनयोरपि विकरणं न दृश्यते, द्वित्वं च साधनीयं वर्तते । अन्त्ये पञ्चमे पूर्णानि सन्ति लुङो विकरणरहितस्य रूपाणि । द्वित्वमेकं विलक्षणमप्रामाणिकं च। किञ्चात्र 'अपेचिरन्' इत्यादौ एत्वाभ्यासलोपयोः, 'अचक्रिरन्' इत्यादौ इरे—प्रत्ययांशस्य च दर्शनात् लङ्प्रत्ययग्रहणमात्रेण विकृतानि लिड्रूपाणीव प्रतिभासन्ते । अभ्यासस्य लिट्साम्यं पञ्चस्वप्युदाहरणराशिषु स्पष्टम् । अपिनामैतानि यथाशङ्कितम्,

'अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम्',

वस्तुत एव लिटोऽङ्गे विन्यस्तेन लेट्—लङ्—लिङ्—लोटां प्रत्ययजालेन निष्पादितानि स्युः । तथाचेदेकपदे विनश्यति सर्वोऽपि प्रक्रियोपपादनक्लेशः । इह किल विकरणोपस्कृतं लटोऽङ्गमेव लङ्—लिङ्-लोट्स्वपि दृश्यते । तथा विकरणस्थानीयेन द्वित्वेनोपस्कृताल्लिटोऽप्यङ्गाल्लङादीनामुत्पत्तिस्तुल्यन्यायबलात् सङ्गच्छत एव । 'भव' इति लटोऽङ्गे अडागमं पुरोधाय इलोपादिभिर्विकृतानां ङिल्लकारप्रत्ययानां योगे लङुत्पद्यते; तुतामन्तुप्रभृतीनां योगे लोट्; याद्यातांयुस्प्रभृतीनां प्रकृते 'अतो येयः' इति विकृतानां योगे लिङ् च । एवमेव जगाम् इति लिटोऽङ्गं लङ्प्रत्ययानामायोजने तिप्सिपोर्हल्ङ्यादिलोपेन, 'मो नो धातोः' इति नादेशेन च 'जगन्' इति संपद्यते । अडागमे च कृते 'अजगन्' इति । जगम्यात् जगम्यातां जगम्युः इति लिङ् । मुमोक्तु मुमुक्तां मुमुचतु इति लोट् । लेटोऽडाटोर्भूयसा गुणप्रतिषेधादिकार्यनिमित्तकत्वदर्शनात्तयोर्व्यवस्थितविभाषया पित्त्व-

मङ्गीक्रियते चेत् जुजोषत् जुजोषतां जुजोषन् इत्यादीनि लड्रूपाणि च सिध्यन्ति । पूर्वोपात्त उदाहरणराशिरेकैकस्यापि विकरणप्रत्ययस्य लेटि प्रयोगं न्यदर्शयत् । लङ्लिङ्लोट्सु विकणभेदो निसर्गसिद्धः । अतो लडङ्गाल्लङादिचतुष्टयस्योत्पत्तिः स्थापिता । उत्तरोपात्तश्च रूपराशिर्लिटोऽङ्गेभ्यस्तेषामेव लङादीनामुत्पत्तिं निदर्शयति । एवं लडङ्गं लिडङ्गं च लङादीनां मूलप्रकृतिरिति पूर्वोल्लिखितोऽयं नयः सावकाशः कार्यसाधकश्च दृश्यत इति सन्तुष्येम ।

अथ यावत् सिद्धान्तकरणसाहसे पदं न कुर्मस्तावत् परिमितं छान्दसग्रन्थसमुच्चयं सकृदपि व्यालोड्य सिसिद्धान्तयिषितायाः कल्पनाया भूयोऽपि विषयव्याप्तिं सम्पादयितुं यतिष्यामहे । किं लङादिचतुष्टयमेव तरुरोहिणीवदन्यस्याङ्गमाविश्य जायते उतान्येऽपि लकाराः ? किं वा वैपरीत्येन लट्लिटाविवान्येऽपि लकाराः पराङ्गरोहिणां लङादीनां मूलप्रकृतीभूयोपकुर्वन्ति ? सन्देहस्यास्य विनिर्णयमधो दर्शितानि लक्ष्याणि संपादयिष्यन्ति—

## १. सिच् ।

(१) [अनिटः] नेषति, नेषत्, नेषथ, जेषः; स्तोषत्; स्तोषाणि । [सेटः] कारिषत्, जोषिषत्; साविषत्; याचिषामहे ।

(२) [अनिटः] जेषं; स्थेषं; (दह्) धाक्; (वह्) वाक्षीत् च्योष्ठाः; हास्महि; [सेटः] शंसिषं; (जॄ) जारिषुः; बाधिष्ठाः ।

(३) [अनिटः] मुक्षीय; (भज्) भक्षीत; मंसीष्ट; (दुह्) धुक्षीमहि; [सेटः] जनिषीय; एधिषीय; वन्दिषीमहि; सहिषीमहि ।

(३) [अनिटः] रासन्तां, रासाथां; [सेट] (अव्) आविष्टु अविष्टां अविड्ढि अविष्टं अविष्टन; गमिष्टं; चयिष्टम् ।

## २. सिज्लुक्

(१) करति करतः करन्ति करान्; करसि करथः।—कराणि—कराम। करते करसे करामहे । गमत् गमतः गमन्ति; गमन्; गमः गमथ—गमानि । गमाम । गमामहै। भुवत् भुवतः भुवन्; भुवः भूतः—भुवानि ।

(२) भूत्—भूवन्; भूः—भूवं—भूम; करं; गाम (गा) गान्. स्थाम, भिथाः; धीमहि (धा)

(३) भूयात्—भूयाः; गम्याः; सह्युः; शक्यां; आशीमहि; मुदीमहि; मुरीय; अरीत (ऋ)।

(४) गन्तु गन्तां गतां गमन्तु; गहि गन्तं गन्त। वोढां; भूतु, भूतन; धीष्व, दीष्व, कृष्व; कृध्वं; वोढ्वम्।

## ३. अङ्।

(१) विदाति विदन्, विदासि, विदाः विदाथः; मुचाति मुचाते; शिषातै; गमातः; रुहाव।

(२) ख्यात्—ख्यान्; ख्याः; ख्याम्। मुचत्, मुचन्, मुचः; शिषन्; सदत्; बुधन्त; विदन्त; गृहामहि; मृषन्त।

(३) विदेत् विदेयं, विदेय, विदेष्ठाः; गमेत्, गमेयं गमेम; गमेमहि। दृशेयं, दृशेम; आपेयं; अशेम।

(४) सदतु सदतां सदन्तु; सद सदतं सदत; सदन्तां; भुज; रुह; मुचध्वं, मुच; करतां (तस्)

## ४. चङ्।

(१) चीक्लृपाति; पिस्पृशाति; सीषधाति; चुक्रुधाम; वोचाति; वोचाम, वोचामहै।

(२) चुच्यवत्; मीमायत्; चिक्रदः; दिद्युतः; नीनशः; नेशत्; पप्तत्; वोचः, वोचे (इट्) वोचन्त; शूशुचन्।

(३) वोचेत्, वोचेयुः, वोचेः, वोचेयं, वोचेय, वोचेमहि; रिरिषेः; चुच्युवीमहि।

(४) वोचतु, वोचत्; वोचतं, वोचत; पप्तत; शिश्रथन्तु; पूपुरन्तु। सुषूदत।

चतुर्भिः खण्डैर्विभक्ताश्चत्वार एते रूपराशयः क्रमात् लेट्, पुच्छे-विकलो लङ्, लिङ्, लोट् इत्येतेषां लकाराणां प्रत्ययान् लुङोऽङ्गेष्वङ्कुरितान् दर्शयन्ति। तत्र सिच्, लुक्, अङ्, चङ्, क्सः इति लुङः पञ्चसु विकरणेष्वादितश्चत्वारि क्रमात्तत्संख्याकेषु खण्डेषु विन्य-

स्तानि । अन्तिमस्य क्स—विकरणस्य द्वित्राण्येवोदाहरणानीत्युपेक्षितं तत् । अत्र चङोपस्कृतेषु लुङोऽङ्गेषु द्वित्वप्राक्रियायाः क्वचिदस्ति वैलक्षण्यम् । पततेर्द्वित्वे अभ्यासिनोऽल्लोपेन 'पप्त्' इत्यभ्यस्तम् । वचधातोर्द्वित्वे अभ्यासिनः सम्प्रसारणेन 'वोच्' इत्यभ्यस्तम् । अभ्यासिनो विकारो नान्यत्र दृष्ट इति नूनं 'पतः पुम्' 'वच उम्' इत्यागमविधानेनाभीष्टं साधितवान् पाणिनिः । नशेरेत्वाभ्यासलोपाभ्यां 'नेश्' इत्यभ्यस्तम् ।

"नशिमन्योरलिट्येत्वं वेति वृत्तिकृतो मतम् ।
नशेरेदिति दुर्गोऽपि तेनानेशत्तथानशत् ॥

इति प्रक्रियासर्वस्वकारः ।

"स्थिरा त्वमश्मेव भवेति मन्त्रवा-
गनेशदाशास्य किमाशु तां ह्रिया"

इति प्रयुङ्क्ते च श्रीहर्षः । स्वार्थणिजन्ताच्चङि रूपमिदं भवितुमर्हति ।

लुङोऽप्यङ्गेभ्य एवं लङादिचतुष्टयस्य प्रत्यया उत्पद्यन्त इति सिद्धम् । किन्त्वियानत्र विशेषः । लङ्लुङोरुभयोरपि ङिल्लकारत्वेन प्रत्ययैक्यात् लुङोऽङ्गादुत्पन्नाः 'त् तां अन्' इत्यादयो ङिल्लकारप्रत्यया लङ्संबन्धिन इति कथं वदेम? वृषभस्य ललाटे माहिषशृङ्गोत्पत्तिमुपदिष्टां कः श्रद्दधीत? अतोऽत्र द्वितीयखण्डेषूद्धृतानि लक्ष्याणि शुद्धस्य लुङ एव रूपाणि दर्शयन्ति, न तु लङः, अडागमच्छेदकृतं वैरूप्यं परमस्त्येव इत्येव कल्पयितुमस्ति न्यायः । तथैव चास्तु कल्पना यावत् कल्पनान्तरस्य नावकाश आपतति । अथैवमडागमाभावेन पुच्छविकलानां लुङ्रूपाणां लङ्रूपाणां च रूपविकार इवार्थविकारोऽपि किमुपलभ्यत इति विमृशामः । तदर्थमेता ऋचो व्याख्यायन्ते ।—

**यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि ।**
**यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवे कः । १ । १६४ । ४९ ।**

हे सरस्वति ! यस्ते शशयः —शयानः स्तनः मयोभूः—सुखास्पदं भवति । येन स्तनेन विश्वा, विश्वानि, वार्याणि कामान् पुष्यसि । यः स्तनः रत्नधाः— रत्नानां धारयिता; यश्च वसुवित् ।—धनप्रापकः ; सुदत्रः—कल्याणदानश्च । तं इह धातवे पातुं कः—कुरु । कृञो लुङि सिपि च्लेर्लुक् ।

त्वया वयं मघवन्निन्द्र शत्रूनभिष्याम महतो मन्यमानान् ।
त्वं त्राता त्वमु नो वृधे भूर्विद्यामेषं वृजिनं जीरदानुम् । १ । १७९ । ५ ।

हे मघवन् इन्द्र! त्वया वयं महतो मन्यमानान् शत्रून् अभिष्याम—अभिभवितारो भवेम । त्वं त्राता । त्वमु—त्वमेव रक्षकः । नः अस्माकं वृधे-वर्द्धनाय भूः—भव । वयं इषमन्नं, वृजिनं बलं, जीरदानुं—चिरजीवित्वं च विद्याम लभेमहि ।

दानो अग्ने बृहतो दाः सहस्रिणो दुरो न वाजं श्रुत्या अपावृधि ।
प्राची द्यावापृथिवी ब्रह्मणा कृधि स्वर्ण शुक्रमुषसो विदिद्युतः । २ । २ । ७ ।

हे अग्ने त्वं नः बृहतो (धनविशेषान्) दाः—देहि । तथा सहस्रिणो सहस्रसंख्याकान् (पुत्रपौत्रादीन्) दाः -देहि । श्रुत्यै वाजमन्नं दुरो न तस्य द्वाराण्यपि अपावृधि—अपावृणु । (तदर्थं) द्यावापृथिवी ब्रह्मणा कर्मणा प्राची—अनुकूले, कृधि कुरु । स्वः न आदित्यमिव शुक्रं दीप्तं त्वां उषसः उषःकालाः विदिद्युतः—विद्योतयन्तु ।

ज्योतिर्वृणीत तमसो विजानन्नारे स्याम दुरिताद्भीके ।
इमा गिरः सोमपाः सोमवृद्ध जुषस्वेन्द्र पुरुतमस्य कारोः । ३ । ३९ । ७ ;

विजानन्निन्द्रः तमसः ज्योतिर्वृणीत । प्रकाशं सम्भजतु । वयं दुरितात् अभीके भयरहिते आरे स्थाने स्याम । सोमपाः सोमस्य पातः सोमवृद्ध, सोमेन वृद्ध इन्द्र त्वं अस्य पुरुतमस्य कारोः स्तोतुः इमा गिरो जुषस्व ।

प्रति त्वाद्य सुमनसो बुधन्तास्माकासो मघवानो वयं च ।
तिल्विलायध्वमुषसो विभातीर्यूयं पात स्वस्तिभिः सदा नः । ७ । ७८ । ५ ।

हे उषः त्वा प्रति अद्य सुमनसः बुधन्त बुध्यन्ताम् । आस्माकाः मघवानः वयं च बुध्येमहि । हे उषसः विभातीः विभान्त्यो यूयं तिल्विलायध्वं—स्निग्धं प्रकाशं कुरुध्वम् । यूयं स्वस्तिभिः सदा नः पात च ।

अभि प्रयांसि सुधितानि हि ख्यो नि त्वा दधीत रोदसी यजध्यै ।
अवा नो मघवन् वाजसातावग्ने विश्वानि दुरिता तरेम । ६ । १५ । १५ ।

हे अग्ने प्रयांसि—हव्यानि, सुधितानि—सुष्ठु निहितानि अभिख्यः—पश्य रोदसी यजध्यै यष्टुं त्वां निदधीत—अस्मभ्यं निधत्ताम् । हे मघवन्! वाजसातौ युद्धे नः अव । वयं विश्वानि दुरितानि तरेम ।

एतावता प्रपञ्चेन लङ्लुङावडागमवर्जितौ बहुत्र च्छन्दसि विधिनिमन्त्रणादीन् लिङर्थानभिधत्त इति ज्ञायते । माङ्योगे चैतयोस्तादृशोऽर्थो लोकवेदसाधारण्यात् निर्विवादः । एवं लङ्लुङोरडागमाभावो रूपमिवार्थ-

मपि किं विकारयतीति सन्देहे जातो विनिर्णयः । युक्तश्चार्थविकारो रूपविकारानुयायी । किञ्च 'त्वमेवं मा कार्षीः' इति निषेधवाक्ये यादृशो लुङर्थस्तादृश एव 'त्वमेवं कार्षीः' इति विधिवाक्येऽपि भवितुमर्हति । भावदशायामविद्यमानोऽर्थः कथमभावदशायां नव इव प्रादुर्भवेत्? न हि 'घटोऽस्ति' 'घटो नास्ति' इति वाक्ययोरस्तेरर्थभेदो न्याय्यः । अतो लङ्लुङोर्निषेधवाक्ये प्रत्यक्षः प्रवर्तनारूपोऽर्थो विधिवाक्येऽपि तस्य सत्तामनुमापयति । उदाहृताश्च तादृशाः प्रयोगा वेदेभ्यः । लोके तु प्रवर्तनार्थे लङ्लुङोः प्रयोग एव विरळीभूय निषेधमात्रे क्वचिदद्य दृश्यत इति स्थितिः । अथात्र पाणिनिः किं प्रतिपद्यत इति पश्यामः । आचार्यस्तावत् विधिनिमन्त्रणादौ सामान्येन लिङं विधाय तत्रैव लोटं चातिदिश्य तत्तत्पदसमभिव्याहारादिषु विशेषानप्युपदिश्योपसंहारे 'माङि लुङ्' 'स्मोत्तरे लङ् च' इति सूत्रयति । एतेन माङ्योगे विधिनिमन्त्रणादिषु लिङोऽपवादो लुङ्लङावुक्तौ भवतः । लोटः प्रयोगेऽपि महर्षिर्न कुप्येत् । व्याख्यातार एव सर्वापवादो लुङ्विधिरिति कलहायन्ते । अडागमश्च विनापि माङ्योगं छन्दसि बहुलं प्रतिषिद्धः । बहुलस्य च महती शक्तिः । अतः पुच्छविकलयोर्लङ्लुङोश्छन्दसि लिङर्थे प्रयोगः पाणिनेरनभिमतो नेति ज्ञायते । एवञ्च च्छन्दसि विधिनिमन्त्रणादिष्वर्थेषु लिङ्, लोट्, लेट्, (अडागमहीनौ) लङ्लुङौ इति पञ्च लकारा भवन्ति । एषु लुङेकस्त्यक्तुं शक्यते । तथाहि— इह लङ्-लिङ्-लोट्-लेट एव लकारान्तरस्याङ्गादुत्पन्ना दृष्टाः । न तु लुङ् कदापि । अतो लुङोऽङ्गेष्वपि पुच्छविकलानि दृष्टानि जेषं, भूत्, रुयत्, चुच्यवत् इत्यादीनि रूपाणि लङ एवेति कल्पयितुं दृष्टो न्यायः । लुङ्लङोः प्रत्ययैक्यात् लुङोऽङ्गे समुत्पन्नो लङ् व्यावर्तयितुं न शक्यते इत्येव । अस्यां कल्पनायां लङ एकस्यैव पुच्छच्छेद आवश्यकः स्यात् इत्यस्ति कश्चिल्लाभोऽपि । लुङ्रूपाणि यानि पुनः पुच्छहीनानि दृश्यन्ते तानि लुङोऽङ्गाल्लङ्रूपाणीति वदिष्यामः । इत्थं च सपुच्छो विपुच्छोऽपि प्रचरन् लकारो लङेक एवेति लघूकृतो भारः ।

लङ् तावदुक्तरीत्या लट्–लिट्–लुङामङ्गेभ्य उत्पद्यते; अडागमत्यागे च विधिनिमन्त्रणादीन् लिङर्थानाह । तथाचायं विपुच्छत्वे रूपेणार्थेन च नैसर्गिकाल्लङो भिद्येत इत्यायातम् । यद्येवं, तर्हि किमित्येनं लङ्शब्देन व्यपदिशामः? अर्थे रूपे च भिन्नोऽयमपूर्वः किल लकारो भवितुमर्हति । एकादशस्यास्य लकारस्य सुमुहूर्तेऽद्य लेङ् इति नाम करिष्यामः । अयं हि लिङ्वदडागमहीनो ङिल्लकारकार्याणि सर्वाणि लभते । लेडिव लेङपि छन्दोमात्रगोचरः । लेङः स्वीकारेणास्तमिता जुगुप्सिता पुच्छच्छेदकथेति निर्वृताः स्मः । कुतस्तर्हि पाणिनिरेनमुपेक्षितवान्? नूनमयं विकल्पजालजटिले नानारूपमालिनि बहुलमहाग्राहग्रासाविकृते लेटि निलीनो महर्षिणा पृथक्त्वेन न प्रत्यभिज्ञातः स्यात् । लेट्प्रक्रियोपसंहारो दृश्यताम् ।

अथ विमर्शेऽत्रानाघ्राताः सन्ति त्रयो लकाराः— लट् लङ् लुट् चेति । एषां दशा कीदृशीति विचारः प्राप्तकालः । तेषु लुट् वेदेष्वदृष्टत्वादर्वाचीनः, तृजन्तादस्तेरनुप्रयोगेण निष्पन्नत्वात् गौणश्चेति नात्र गणनामर्हति । शेषयोः पूर्ववद्दृश्यते साङ्ख्यदर्शनप्रसिद्धः प्रकृतिविकृतिभावः । लट्–लिट्–लुङ इव लट् प्रकृतिभूतो लकारः । तस्याङ्गादुत्पन्नानि लङ्रूपाणि लङ् संपद्यते । अन्ये तु (लेट्–लेङ्–लोट्–लिङः) लटोऽङ्गात् संभावितोत्पत्तयोऽपि अद्य यावदुपलब्धेषु प्रयोगेषु न दृश्यन्ते । 'करिष्याः' इत्येकं लेण्मध्यमैकवचनरूपं सकृद्द्विर्वा ऋग्वेदे दृष्टमित्येव । 'करिष्येत्' इति लिङि रूपं बालाः कदाचिदुद्भावयन्ति । वीरवैयाकरणानामुपहास्योऽप्ययमविदग्धानां प्रयोगो भाषाया नैसर्गिकीं प्रवणतामनक्षरमुच्चैरुद्घोषयति । तत्तदर्थभेदद्योतनाय हि शब्दे विकाराः क्रियन्ते । अत्र भाविकालद्योतकः स्य–प्रत्ययः, आशङ्काद्यर्थबोधको यासुट् इत्युभयोर्मेळनेन 'करिष्येत्' इति रूपसिद्धौ किं विप्रतिपत्तिबीजम्? इयमेव हि यथा प्रतिपादितं लकारेभ्यो लकारान्तराणामुत्पत्तेरुपपत्तिः ।

प्रतिपादित एवं लकाराणां प्रकृतिविकृतिभावः; किन्तु भेदोऽयं रूपमात्रनिबन्धनः । अथार्थनिबन्धनः कीदृक् प्रकृतिविकृतिभावेन दृष्टयोर्लका-

रेयोः संबन्ध इति विचार्यते । अर्थमुपाधिं कृत्वा विभागे क्रियमाणे कालवाचिनः प्रकारवाचिनश्चेति लकारा द्विधा भिद्यन्त इति पूर्वमेवोक्तम् । वर्तमानकालिको लट्; भूतकालिका लङ्-लुङ्-लिटः; भाविकालिकौ लृट्-लुटौ इति षट् कालवाचिनः । किन्तु लुटो गौणत्वेनोपेक्षितत्वात् लृडेक एवात्र गण्यते । शेषा लिङ्, लेट्, लेङ्, लोट्, लृङ् इत्येते प्रकारवाचिनः । अयमर्थः पङ्क्तिकयापि—

लकाराः
- कालवाचिनः —
  - लट् ... ... ... ... वर्त
  - लङ्-लुङ्.लिटः ... ... भूत
  - लृट् ... ... भावि
- प्रकारवाचिनः —
  - लोट्— अतिसर्जकः
  - लिङ्— विधायकः
  - लृङ्— अतिपातकः
  - लेट्— उपसंवादकः
  - लेङ्— नियोजकः

अत्र लृडेक उपेक्ष्यते चेत् कालवाचिन एव प्रकृतयः प्रकारवाचिन एव विकृतय इति पङ्क्तिकैषा स्फुटं प्रदर्शयति । उपपन्नश्चोभयेषामीदृशः संबन्धः एकैकस्मादपि कालवाचकात् सर्वे प्रकारवाचका उत्पद्यन्त इति । कालोपाधिं विना क्रियाया ग्रहो न भवति । अतः कालद्योतनाय कालबोधकप्रत्ययादिविशिष्टादङ्गात् प्रकारवाचिनां लकाराणामुत्पादनम् । यथा—'देवदत्त गच्छ ग्रामं' इति वर्तमानकालावच्छिन्नामाज्ञां बोधयितुं लटोऽङ्गाल्लोट्प्रयोगः । 'भुञ्जीत मया सह भवान्' इति भुञ्जानस्य वाक्ये वर्तमानकालिकनिमन्त्रणबोधनाय लटोऽङ्गाल्लिङ् । चापोत्सवं द्रष्टुं कृष्णौ मथुरां जगन्तु, किमिति मातुलं तत्र जघान इति भूतकालिकमतिसर्गं दर्शयितुं 'जगन्तु' इति लिटोऽङ्गाल्लोट् । सत्यसन्धाश्चेत् पाण्डवा बभूयुः सुखं च ते जगम्युः इति भूतकालावच्छिन्नं हेतुहेतुमद्भावमभिधातुमुभयत्र लिटोऽङ्गाल्लिङ् । एवमर्थान्तरेषु लकारान्तरेषु च योज्यमुदाहरणम् । अधुना पुनः प्रकारवाचिनो लकाराः कालभेदमविवक्षित्वैव प्रयुज्यन्ते । अथापि वर्तमानवाचिनो लटोऽङ्गादेव लिङ्लोटौ निष्पाद्येते । संख्यायामेकत्वमिव काले वर्तमानः सामान्यमिति, व्यावहारिको वर्तमानकाल आसन्नो भूतभा-

विनौ चान्तर्भावयतीति, त्रैकालिकानां भावानां निर्देशे अयमेवोपयुज्यत इति च वर्तमानकाल एव प्रकाराणामुचितत्वेनाङ्गीकृत इति युक्तिरत्रानुमीयते । छन्दस्यपि भूतवाचकादङ्गादुत्पन्नस्य प्रकारवाचिनो लिङादेरर्थसाङ्कर्यमस्तीति प्रतिज्ञातुं न केवलं नोत्सामहे, अपितु, प्रत्युतार्थसाङ्कर्यसम्भव एव विरल इत्यपि ब्रूमः । कालवाचिनामङ्गात् प्रकारवाचिनामुत्पत्तिर्युक्तिसहेत्येवास्माकमभिसन्धिः । ऋग्वेदात् प्राचीनतरं ग्रन्थं कञ्चिच्चेदलप्स्यामहि निर्णयमत्राकरिष्याम ।

कालस्यावान्तरविभागेऽपि प्रारम्भे स्थितताया व्यवस्थाया असकृत् परिवर्तनान्यासन्नित्यनुमीयते । कालः किल क्षणिकसन्ततौ, सन्निकृष्टविप्रकृष्टौ इत्यादीन् बहून् विभागानर्हति । ते च भूतस्यैव भूयसोपयुज्यन्ते । वर्तमानो ह्यवधिभूतत्वेन शून्यप्रायत्वाद्विभागाक्षमः । भावी चापरिज्ञेयत्वादनिश्चितगतिः । अतो भूतवाचिनस्त्रयो लकारा दृश्यन्ते । तत्र लिटः परोक्षेति पूर्वाचार्याणां संज्ञा तस्य विप्रकृष्टभूतबोधकत्वमाचष्टे । एवमद्यतनीति लुङः संज्ञा तस्यासन्नबोधकत्वं च । अनद्यतनभूते विधानात् 'नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः' इति निषेधाच्च लङ् क्षणिकविप्रकृष्टं कालं बोधयतीति वक्तव्यम् । वर्तमानेऽपि लङ्लुङ्लिटश्छन्दसि दृश्यन्ते । पाणिनिश्च 'छन्दसि लुङ्लङ्लिटः' इति सूत्रयति । किन्तु सूत्रस्यास्य भाष्यानारूढत्वादर्थो न निर्णीयते । काशिकाकारो धातुसंबन्धे विधिरयमिति वदन् 'अहं तेभ्योऽकरं नमः' इत्याद्युदाहरति । तद्व्याख्याता हरदत्तः पुनः 'उदाहरणेषु धातुसम्बन्धो मृग्यः' इति परमभ्युपगच्छन् जोषमास्ते । अतास्तिष्ठतु तावत् कालभेदनिर्णयचर्चा । यावता प्रकृतस्यात्यन्तमुपयोगस्तावात् कृतश्च विचारः ।

अत्र कालवाचिनः प्रकृतिलकाराः, प्रकारवाचिनो विकृतिलकारा इति विभागस्वीकारे लङेकोऽस्माभिरुपेक्षितस्तिष्ठति । स हि कालवाचकोऽपि सन् अन्येषामङ्गेभ्य उत्पन्नो दृश्यते । तत्र का गतिः ? प्रकृतिलकारेभ्यः प्रकारवाचका इव अडागमी कश्चिल्लकारश्चोत्पद्यत इति कल्प-

नीयम् । तत्र लटोऽडागमी लकारो लङ्; लृटस्तादृशो लृङ्; लिटस्तादृशः पाणिनिनोपेक्षितत्वादलब्धसंज्ञोऽपि छन्दसि 'अपस्पृधेतां' 'अचक्रिरन्' 'अजगन्त' इत्यादिषु पूर्वोद्धृतेषु लक्ष्येषु दृश्यते । लुङः स्वयमडागमित्वात्तस्मादडागमिलकारस्योत्पत्तिर्न घटते । अकृतनामधेयं लिटोऽडागमिनं लकारं व्यवहारसैकर्याय 'लोङ्' इति व्यपदिशेम । यद्ययं पाणिनिना पृथक्त्वेन प्रत्यभिज्ञातोऽभविष्यत्तर्हि महर्षिरेनं लिङं कृत्वा अद्य लिङाख्यया प्रसिद्धं लकारं लोङमकरिष्यत् । तथाकृते हि नामकरणमुचितं युक्तियुक्तं च भविष्यति । ह्रस्वैर्मूलस्वरैः प्रकृतिलकाराः; सन्ध्यक्षरैः प्रकारवाचकाः; कालातिपातचिह्नमडागमः; प्रत्ययानां दार्ढ्यशैथिल्यानुरोधेन टकारो ङकारो वा अनुबन्धः इति ।

इहाडागमिनो लकारास्सर्वे भूतकालवाचका दृश्यन्ते । लङ्लुङ्लोङः प्रकटमेव भूतकालमाहुः । लृङपि क्रियातिपत्तौ निलीनं भूतकालमाविष्करोति । अतो भूतकालस्य बोधनमडागमस्य प्रयोजनमिति तर्को निर्बाधमुत्तिष्ठति । अडागमो यस्मिन्नासज्यते तदङ्गं स्ववाच्यः कालोऽतीत इति बोधयेत् । अडागप्रयोगजनस्य एवं निर्णीतत्वात् अडाममिनो लकारान् व्यवहारसौकर्याय 'अतिवर्तिनः' इति सामान्यसंज्ञया व्यपदिशेम । एवञ्च भवन्तीति व्यपदिष्टस्य लटो अतिवर्ती लङ् नाम्ना अतिवर्तिभवन्ती, संक्षेपेण अतिभवन्ती वा स्यात् । अर्थेन च वर्तमानस्यातिक्रान्तताप्रदर्शनद्वारा भूतकालमुल्लिखेत् । अद्यतनीति संज्ञितो लुङ् निरुपाधिकमेव भूतकालमभिदध्यात् । परोक्षेतिप्रथितस्य लिटोऽतिवर्ती लोङ् नाम्ना अतिवर्तिपरोक्षा अतिपरोक्षा वा स्यात्; निर्दिष्टभूतापेक्षया भूततरं च कालं बोधयेत् । भविष्यन्तीति व्यवहृतस्य लृटोऽतिवर्ती लृङ् नाम्नातिवर्तिभविष्यन्ती, अतिभविष्यन्ती वा स्यात्; क्रियातिपत्तिरिति परिभाषितं कालातिवर्तनं च दर्शयेत् । प्रकारवाचिनां लिङ्–लोट्–लेङ्–लेटां विधायकभवन्ती, नियोजकपरोक्षा, उपसंवादकाद्यतनीत्यादि नामकरणं सुकरम् । एवं प्रकृतिभूतत्वेन मुख्यानां चतुर्णामाख्यातानां भवन्ती, परोक्षा, अद्यतनी, भवि-

ष्यन्तीति प्राचीनैर्विहितान्वर्थसंज्ञानां प्रत्येकं बहवो भेदाः— १. केवलभवन्ती, २. अतिभवन्ती, ३. नियोजकभवन्ती, ४. विधायकभवन्ती, ५. उपसंवादकभवन्ती, ६. अतिसर्जकभवन्तीति भवन्त्यः षट् । परोक्षाया अप्येवमेव षट् । अद्यतन्या अतिवर्तिभेदस्याभावात् पञ्च । भविष्यन्त्याः प्रकाराणामभावात् द्वौ । अनया कल्पनया वेदब्राह्मणयोर्दृष्टानि विलक्षणान्याख्यातरूपाणि सामरस्येनोपपद्यन्त इत्युपक्षिप्तोऽयमस्माभिः सिद्धान्तः । अत्र प्रकृतिभूतत्वेन प्रतिपादितानां लडादीनामेव प्राचीनैर्भवन्त्यादयः संज्ञाः कृता इत्ययमर्थः, ग्रीकादिष्वीदृश एवाख्यातविभागः प्रायो दृश्यत इति स्वसृभाषासम्प्रदायसंवादश्च कल्पनामिमां हस्तावलम्बप्रदानेन प्रबलीकुर्वाते । यदि पुनराख्यातरूपाणीव तद्वाच्याः कालभेदा न सम्यगुपपद्यन्ते, तत्र वयं नापराध्यामः । क्रियाफलात्मगामित्वपरगामित्वलक्षण आत्मनेपदपरस्मैपदविभागोपाधिरिव परोक्षप्रत्यक्षाद्यतनानद्यतनत्वादिनिबन्धनः कालोपाधिरपि कालातिपातान्मलिनीभूय नाममात्रव्यवस्थितोऽद्यसंवृत्त इति समाधेयम् ।

आख्यातानां कालः, प्रकारः, प्रयोगः, पुरुषः, वचनं इति पञ्च रूपभेदस्योपाधयः । तत्र विविध एकविधो वा विकरणप्रत्ययः, प्रकृतिद्वित्वं , अडागम इत्येतेषु कार्येषु यथायोगं यथापेक्षितञ्च एकं, द्वे, त्रीण्यपि वा कालं बोधयन्ति । यासुट्सीयुटौ अडाटौ इत्यागमाः 'एरुः' इत्यादय आदेशाः, पुरुषप्रत्ययशिथिलीकरणं वा प्रकारमुपाधिं विवेचयति । उपग्रहो विकरणविपर्यासश्च कर्तृकर्मभावभेदं प्रयोगस्य सूचयतः । तिप्तस्झिप्रभृतयः प्रत्ययाः पुरुषवचनभेदं प्रत्याययन्ति । केवलानामाख्यातानां साधारणा उपाधय एते । यदि पुनः सनादिवृत्तिभिर्यथायोगमायोजितैः प्रकृतावप्युपाधय आम्रेड्यन्ते तदा बहुभूमः प्रासाद इवाख्यातस्य रूपमुपर्युपरि विजृंभेत । यङ्सन्ण्यन्तान् सनि लिङि बोभूयिषयिषेत् , यङ्णिच्सन्नन्ताण्णिचि लुङि अबोभूययिषिष्यत् इत्यादि ।

आख्यातस्य चतुर्षु वर्गेषूक्तेषु भवन्तीवर्ग एव प्रधानं बहुलप्रयोगश्च । तस्य सर्वे भेदा लोके प्रयुज्यन्ते । यथा—

१. केवलभवन्ती........लट्
२. अतिभवन्ती........लङ्
३. अतिसर्जकभवन्ती........लोट्
४. विधायकभवन्ती........लिङ्
५. नियोजकभवन्ती........माङ्योगे लुङ्, स्मोत्तरे लङ् च
६. उपसंवादकभवन्ती........लोडुत्तमपुरुषः ।

परोक्षावर्गे केवलपरोक्षा (लिट्) एकैव लोके । अद्यतनीवर्गे केवलाद्यतनी (लुङ्,) आशीर्लिङाख्या विधायकाद्यतनी चेति द्वौ भेदौ । भविष्यन्तीवर्गे केवलभविष्यन्ती (लृट्), अतिभविष्यन्ती (लृङ्) चेति द्वौ । वेदेऽपि भविष्यन्तीवर्गे एतौ द्वावेव दृष्टौ । अनुप्रयोगिनी (लुट्) लोके एव । आशीर्लिङो विधायकाद्यतनीतो निष्पन्नत्वं तत्प्रक्रियापरिशोधनेन स्फुटीभविष्यति । आशीर्लिङ् तावद्वेदे विरलः, लोके तु विरलतरः । अतोऽस्य रूपाणि बहूनि लक्षणैकनिष्पाद्यानि । लुङः पञ्चसु विकरणेषु सिज्लुग्भ्यां निष्पन्नेभ्योऽङ्गेभ्य उत्पन्नानि लिङ्रूपाण्येव भाषायामिदानीमाशीर्लिङात्मना परिणतानि । तत्रापि सासिच्कमंगमात्मनेपदेष्वेव । लुप्तसिच्कं परस्मैपदेष्वेवेति च नियमः । ससकारो यासुट्, तथोः सुट् च यथोपदिष्टं पाणिनिना कश्चिदाशीर्लिङो विशेषः । सीयुटि श्रूयमाणस्तु सकारो वस्तुतः सिजेव । केवलधातोराशीर्लिङं व्युत्पादयन्नाचार्यः सिच्प्रत्ययमप्यागमशरीरेऽन्तर्भावितवान् । प्रक्रियाविशेषोपदेशेषु च 'लिङ्सिचावात्मनेपदेषु' इत्युभौ पृथग्गृहीतवान् । सिचो लुका प्रकृतिमात्रावशेषाद्धातोर्यासुड्डुपस्कृतैः पुरुषप्रत्ययैः भूयात् भूयास्तां भूयासुः इति रूपाणि । 'एधिष्' इतिससिच्कादङ्गात् 'ईष्ट' इत्यादिभिरागमसंस्कृतैः पुरुषप्रत्ययैः एधिषीष्ट एधिषीयास्तां एधिषीरन् इत्यात्मनेपदरूपाणि । अस्ति च विधायकाद्यतन्या आशीरर्थबोधने नैसर्गिकी स्वरूपयोग्यता । आशिषः प्रयोक्ता ह्याशासितमर्थं मनसा सन्निधाप्य ग्रहीतरि पूर्वमेव तत् सङ्कल्पशक्त्या समर्प्य व्यवहरति ।

'देवदत्त पुत्रस्ते भूयात्' इति वदन् देवदत्तस्य पुत्रे समुत्पन्ने यादृश आह्लादस्तं मनसोल्लिख्य तस्मिन् प्रथममारोपयति, अनन्तरमेवाशीर्वाक्यं प्रयुङ्क्ते इत्यस्ति भूतकालस्पर्श आशीःप्रयोगेषु। इयमेवोपपत्तिः 'आशंसायां भूतवच्च' इति भविष्यति लुङ्विधानस्य, 'अभिज्ञावचने लृट्' इति भूते लृड्विधानस्य च। 'आशंसे व्याकरणमधीयीय' इति यो वदति स व्याकरणाध्ययनजन्यं विज्ञानं मनोरथेनात्मन्यध्यस्यति। एवमेव 'अभिजानासि कृष्ण गोकुले वत्स्यामः' इत्युक्तौ पूर्वानुभूतस्य स्मृत्योपस्थापितस्य गोकुलवासस्य भूयोऽपि निर्वेशाभिलाषं पुरस्कृत्य भाविकालसम्बन्धः स्फुरति।

आख्यातानां स्वस्वमाख्यातकमप्यस्तीति पूर्वमेवोक्तम्। तत्र लट्–लिट्-लृटामाख्यातकानि तेषां लकाराणामादेशात्मकानि; अन्येषां तु तत्स्थानभाञ्जीत्येव। लङ्–लुट्-लृङां परं स्थानीयमपि नास्त्याख्यातकम्। व्यतिरेकस्यास्य कारणमिदानीं स्पष्टीभवति। प्रकृतिलकारेभ्य एवाख्यातकान्युत्पद्यन्ते। यथा अतिवर्तिन्यः प्रकाराश्च तथा आख्यातकमपि प्रकृतिलकारेभ्यो जायते। तत्र लट्–लिट्–लृटां दर्शितान्याख्यातकरूपाणि। लुङो निष्पन्नानीह वेदेभ्य उद्धृत्य दर्श्यन्ते—दह-धक्षत्; मदी–मन्दसान; वृध्–वृधसान इत्यादि सिचि। भिद्–भिदत्; स्था-स्थात्; कृ–क्राण; रुच–रुचान इत्यादि लुकि। शास्–शिषत्; सद सदत्; शुच–शुचमान; धृष–धृषमाण इत्याद्यङि। क्सचङोः परं नोपलभ्यन्ते। छन्दस्यपि लुङ आख्यातकानि लकारान्तरापेक्षया विरलानि। लोके तु लिटोऽपि परस्मैपदाख्यातकान्येव दृश्यन्त इति प्रागेवोक्तम्। आख्यातकप्रत्ययश्च सर्वत्रैक एवेति ज्ञायते–अत् आन (शतृशानच्) इति। परस्मैपदालिटि परं वस् (क्वसु) इति विशेषः। इत्थं च लिङ्–लोडादयः प्रकारा इवाख्यातकमपि आख्यातस्यैव रूपभेद इति सिद्धम्। विशेष्यमाख्यातं स्ववाच्यकारकानुरोधेन पुरुषवचने दर्शयति; विशेषणमाख्यातकं स्वविशेष्यभूतनामानुरोधेन लिङ्गविभक्तिवचनान्यादत्ते इत्येव हि विशेषः। सपरिवार आख्यातविभागः सुखार्थं पट्टिकया प्रदर्श्यते—

# आख्यातविभागपट्टिका ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| | लट् | लङ् | लिङ् | लोट् | (लेट्) | (लेङ्) | शतृशानचौ |
| १. भवन्तीवर्गः– | केवलभवन्ती. | अतिभवन्ती. | विधायकभवन्ती. | अतिसर्जकभवन्ती. | उपसंवादकभवन्ती. | नियोजकभवन्ती, | आख्यातकभवन्ती. |
| | लिट् | | | | | | |
| २. परोक्षावर्गः– | केवलपरोक्षा. | अतिपरोक्षा. | विधायकपरोक्षा. | अतिसर्जकपरोक्षा. | उपसंवादकपरोक्षा. | नियोजकपरोक्षा. | आख्यातकपरोक्षा. |
| | लुङ् | | आशीर्लिङ् | | | | |
| ३. अद्यतनीवर्गः– | केवलाद्यतनी. | — | विधायकाद्यतनी. | अतिसर्जकाद्यतनी. | उपसंवादकाद्यतनी. | नियोजकाद्यतनी. | आख्यातकाद्यतनी. |
| | लृट् | लृङ् | | | | | |
| ४. भविष्यन्तीवर्गः– | केवलभविष्यन्ती | अतिभविष्यन्ती | — | — | — | — | आख्यातकभविष्यन्ती |

अत्र भाषायामुपलभ्यमानान्याख्यातानि स्वस्वलकारनामभिरुपर्यङ्कितानि। तत्रापि लेट्–लेङौ च्छान्दसावेव। माङ्योगे लोकेऽपि लेङ् भवति। लुडेकश्चतुर्वर्गबहिर्भूतो लोके प्रतिनवोत्पन्नोऽत्र योज्यः। लोके द्वावेव प्रकारावुपयुज्येते।– विधायकः (लिङ्) अतिसर्जक–(लोट्)–श्चेति। तावपि भवन्तीवर्ग एव। अद्यतनीवर्गगतो विधायक आशीर्लिङात्मना दृश्यते। तिसृष्वतिवर्तनीषु परोक्षाया अतिवर्तन्यपि लोके नास्ति। लुडेकोऽतिरिच्यते च। इति लोकवेदयोर्भेदः।

रूपविभाग एवं प्रदर्शितः । अथ कालप्रकारयोर्विभागः— प्रयोक्तुर्जननात् पूर्वो भूतकालः परोक्षः, तत्र लिट् । प्रयोगदिने यावान् कालोऽतीतः सोऽद्यतनः, तत्र लुङ् । अनयोरवध्योर्मध्यगतोऽनद्यतनः, तत्र लङ् । इति भूतकालस्य त्रयो भेदाः । अस्य नियमस्य शास्त्रसम्मता उपेक्षाप्रयुक्ताश्च व्यत्ययाः सुलभाः । अद्यतनानद्यतनभेदो लोके भाविनोऽप्यस्ति । तत्रानद्यतनभाविन्येव लुट् । लट् तूभयत्रापीष्यते । शीलं, वस्तुस्थितिः, सार्वकालिकोऽर्थः इत्यादीनपि लट् बोधयति । यथा—

दाक्षिणात्याः शालीन् भुञ्जते, गोधूममौत्तराहाः— शीलम् ।
केरलेषु केरतरवो विजृम्भन्ते— वस्तुस्थितिः ।
जलं तैलात् गुरुतरं भवति— सार्वकालिकोऽर्थः ।

चमत्कारातिशायायातीतमप्यर्थं पुरावृत्तवर्णनेषु कवयः प्रयोगकाले साक्षात् कुर्वाणा इव लटा कथयन्ति । यथा—

प्रहसन्ति च तां केचिदभ्यसूयन्ति चापरे ।
अकुर्वत दयां कचित्........ (महाभारतम्)

छन्दसि पुनर्यथाप्रदर्शितमेतद्विपर्यासेन वर्तमाने भूतलकाराः प्रयुक्ता दृश्यन्ते । अत्रोपपत्तिश्चिन्त्यते वृत्तस्यापि साक्षात्क्रियमाणत्वप्रतीतिजननाय लोके यथा वर्तमानप्रयोगस्तथा वेदे वर्तमानस्यापि 'पूर्वं कदाचिदेतदेवं वृत्तं, पूर्वमेतदेवं कश्चिदकरोत्' इति दृष्टान्तप्रदर्शनेन प्रत्ययदार्ढ्याय भूतप्रयोगः स्यात । क्वचित् आशंसायां भूतवद्भावेन भूतलकारप्रयोगो भवेत् । अन्यत्र फलानुबन्धेन वर्तमानप्रयोगे न्याय्येऽपि वस्तुतः क्रियाया निर्वृत्तत्वमाश्रित्य भूतलकारेण निर्देशः कृत इति स्यात् । अयमन्त्योऽर्थो लोके निष्ठाया विषयः । क्तक्तवतू हि परिसमापितां फलानुबन्धिनीं च क्रियां बोधयतः । अत एव तयोर्निष्ठासंज्ञाया अर्थयोजना । व्याकरणमध्यगीषि इत्युक्तावध्ययनफलानुबन्धोऽपि बोध्यते ।

अथात्र कांश्चिदृच उदाहरिष्यामः– इह किल भूयिष्ठं देवतास्तुतिपरो मन्त्रकाण्डः । स्तुतयश्चोच्चावचैर्भेदैः प्रवर्तन्ते । परोक्षकृताः प्रत्यक्षकृता आध्यात्मिक्यश्चेति तासां प्राधान्येन त्रीन् भेदानाह यास्कः । एकैकस्य भेदस्य नानाविधाः प्रभेदाः । आकृत्या प्रकृत्या चेत्थंभूतोऽयं देवः; इत्थ-

मयमाविर्भवति; एतान्येतान्यपदानानि करोति; अयमित्थमाराध्यः; पूर्वे ऋषय एनमित्थमुपचेरुः, तद्वद्यूयमपि कुरुत; अयमस्मभ्यं श्रियं ददातु; एनमहं प्रसादयितुमिच्छामि; अयं नः क्रतावागच्छतु; अयं भक्तेभ्य एतदेतत् प्रयच्छति इत्यादिः सूक्तानां गतिः । यथा तृतीये मण्डले एकोनषष्टितमं सूक्तम्—

**मित्रो जनान् यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् ।**
**मित्रः कृष्टीरनिमिषाभिचष्टे मित्राय हव्यं घृतवज्जुहोत ॥ १ ॥**

मित्रः सूर्यः ब्रुवाणः कालं बोधयन् जनान् यातयति–स्वस्वकृत्ये प्रेरयति । मित्रः पृथिवीं द्यां च दाधार–धारितवान् । अद्यापि धारयति च । लिट्प्रयोगस्तु मित्रस्यापदानानां परिगणनाभिप्रायेण । मित्रः कृष्टीः—जनान् अनिमिषा निमेषं विना अभिचष्टे अभितः पश्यति–पर्यवेक्षत इत्यर्थः । मित्राय यूयं घृतसहितं हव्यं जुहुत । थप्रत्ययस्य तबादेशः ।

**प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन ।**
**न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात् ॥ २ ॥**

हे आदित्य । यस्ते व्रतेन शिक्षति त्वामुद्दिश्य अनुष्ठानानि शीलयाति । स मर्तः मर्त्यः प्रयस्वान्–अन्नवान् अस्तु प्रभवतु । त्वोतः त्वया रक्षितः । अत्र युष्मदेकवचनप्रकृतिः त्व इति, न तु त्वदिति । सर्वनामप्रकरणं दृश्यताम् । त्वा इति तृतीयैकवचनं वा । त्वद्रक्षितः पुरुषो नान्येन हन्यते, न च जीयते । एनं अंहः समीपे दूरेऽपि नाश्नोति ।

**अनमीवास इळया मदन्तो मितज्ञवो वरिमन्ना पृथिव्याः ।**
**आदित्यस्य व्रतमुपक्षियन्तो वयं मित्रस्य सुमतौ स्याम ॥ ३ ॥**

अनमीवासो रोगवर्जिताः । इळया अन्नेन मदन्तो माद्यन्तः पृथिव्या वरिमन् विस्तीर्णे प्रदेशे मितज्ञवो मितजानुकाः । आ आगच्छन्तः । उपसर्गश्रवणात् योग्यक्रियाध्याहारः । आदित्यस्य व्रतमुपक्षियन्तः कुर्वाणाः । वयं मित्रस्य सुमतौ स्याम मित्रेणानुग्राह्या भवेम । वरिमन्निति उरुशब्दादिमनिचि प्रियस्थिरेत्यादिना वरादेशः । ङेर्लुक् ।

**अयं मित्रो नमस्यः सुशेवो राजा सुक्षत्रो अजनिष्ट वेधाः ॥ ४ ॥**
**तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ।**

नमस्यः नमस्करणीयः । सुशेवः सुखेन सेव्यः । राजा जगत्पतिः । सुक्षत्रो बलवान् । वेधा जगत्स्रष्टा । अयं मित्रः अजनिष्ट उदितवान् । एतावति स्तोत्रे पठिते उदितवन्तं सूर्यं पश्यत ऋषेर्वचनम् । यज्ञियस्य यज्ञार्हस्य तस्य मित्रस्य सुमतौ भद्रे सौमनसेऽपि वयं स्याम ।

**महाँ आदित्यो नमसोपसद्यो यातयज्जनो गृणते सुशेवः ।**
**तस्मा पन्यतमाय जुष्टमग्ना मित्राय हविराजुहोत ॥ ५ ॥**

नमसा नमस्कारेण उपसद्यः अभिगम्यः । यातयज्जनः प्रेर्यमाणजनः जनान् प्रेरयन्नित्यर्थः । महान् आदित्यः सुशेवः सुखसेव्यो भवति । गृणते स्तोत्रं कुर्वते जनाय । पन्यतमाय स्तुत्यतमाय तस्मै मित्राय जुष्टं प्रीतिविषयं एतद्धविः आजुहोत ।

**मित्रस्य चर्षणीधृतोऽवो देवस्य सानसि ।**
**द्युम्नंचित्रश्रवस्तमम् ॥ ६ ॥**

चर्षणीधृतो मनुष्याणां धर्तुर्देवस्य मित्रस्य संबन्धि अवः अन्नं सानसि सर्वैः सम्भजनीयम् । सानसिपर्णसीत्यादिना उणादिसूत्रेण निपातितोऽयं शब्दः । तस्य मित्रस्यैव द्युम्नं धनं चित्रश्रवस्तमं चित्रकीर्तियुक्तम् ।

**अभि यो महिना दिवं मित्रो बभूव सप्रथाः ।**
**अभि श्रवोभिः पृथिवीम् ॥ ७ ॥**

सप्रथाः कीर्तिमान् यो मित्रः महिना माहात्म्येन दिवं अभिबभूव । स श्रवोभिः पृथिवीमभि अभिभवति । सूर्यकिरणाः प्रथमं दिवि व्याप्य पश्चात् भूमावपि व्याप्नुवन्तीत्यर्थः ।

**मित्राय पञ्च येमिरे जना अभिष्टिशवसे ।**
**स देवान् विश्वान् बिभर्ति ॥ ८ ॥**

पञ्चजनाः मनुष्याः । अभिष्टि अभिगमनक्षमं—शत्रुप्रधर्षकमित्यर्थः । शवो बलं यस्य तस्मै मित्राय येमिरे हवींषि ददुः । अद्यपर्यन्तं सर्वे जनाः हविरर्पितवन्त आसन् । स मित्रो विश्वान् देवान् बिभर्ति ।

**मित्रो देवेष्वायुषु जनाय वृक्तबर्हिषे ।**
**इष इष्टव्रता अकः ॥ ९ ॥**

आयुषु मनुष्येषु देवेषु च मध्ये वृक्तबर्हिषे—छिन्नबर्हिषे यज्ञार्थं इध्मच्छेदनं कृतवते । जनाय स्वभक्तायेत्यर्थः । मित्रः इष्टव्रताः इषः ईप्सितान् कामान् अकः कृतवान् दत्तवान् । कृञो लुङि च्लेर्लुक् । मित्रोऽयं देवः स्वभक्तेभ्यो बहुभ्य इष्टान् कामान् अर्पितवानिति श्रूयते । अतः सेव्य इति भावः ।

एवमन्येष्वपि सूक्तेषु भूतकालप्रयोगो व्याख्यातव्यः । 'को ददर्श प्रथमं जायमानं', 'को विद्वांसमुपगात् प्रष्टुमेतत्,' 'क उतच्चिकेत' इत्यादिषु प्रश्नेषु वर्तमानार्थप्रतीतिः सुलभतरा । न कोऽपि प्रथमं जायमानं दृष्टवान्, न कोऽपि एतद्विषयकं प्रश्नमद्यापि विद्वत्सविधे कृतवान् ज्ञायते, कस्तद्विदितवानस्ति इति ह्येषामर्थः । लोकेऽपि 'वेद' 'आह' इति द्वौ धातू एवं

लिङ्रूपे प्रयुज्येते । द्वित्वं परं नास्तीत्येव । 'अपश्यं गोपामनिपद्यमानं' (म. १—सू १६४—ऋक् ३१) इत्यादौ पश्येयमित्याशंसायां भूतवद्भावः । 'छन्दसि लङ्लुङ्लिटः' इति, सूत्रं, तस्य काशिकायां 'धातुसम्बन्धे' इत्यनुवृत्य, व्याख्यानञ्चैवं संगच्छते । यथा विशेष्यक्रियानुरोधेन लोके प्रत्ययानां कालनियमस्तथा वेदे प्रकरणानुरोधेन भूतलकारणां भूतवाचित्वमिति । लङ्लुङ्लिटः फलानुबन्धेन वर्तमानव्यपदेशक्षममपि भूतं बोधयेयुरिति-फलितम् ।

प्रकारबोधकानां चतुर्णामपि लकाराणां चोदनैवार्थः । तत्रैवं तारतम्यं—आज्ञाप्रैषातिसर्गादिपदवाच्या तीव्रतमा चोदना लोटः; आशंसाप्रार्थनाधीष्टादिपदवाच्या मन्दतमा लिङः; अनयोरवध्योर्मध्ये सम्भावनाशंकोपसंवादादिपदवाच्या लेटः; विध्युपदेशादिपदवाच्या लेङः; इति । तत्रान्तरालिकौ लेङ्लेटौ स्वं स्वमर्थमवधिभूतयोर्लिङ्लोटोर्यथायोगं संविभज्य गच्छता कालेन लुप्तौ । आज्ञातिसर्गादिरूपा तीव्रचोदना स्वात्मनि न सम्भवतीति समानाधिकरणेनास्मदाभिसम्बद्धुं प्रकृत्यानर्हस्य लोट उत्तमपुरुषः सर्वतो लुप्यमानरूपावलेर्लेटो रूपैः पूरितो बभूव । लेङश्च जीर्णावशेषाः क्वचित् क्वचिन्माङ्योगिषु निषेधवाक्येष्वालक्ष्यन्ते । अतिसर्गबोधने लोडाधिकं शोभत इति तस्य अतिसर्जकप्रकारसंज्ञा कृता; आम्नायकृतेषु विधिषु लिङ् भूयसा दृश्यत इति स विधायकप्रकारः कृतः । उपसंवादे लेट औचित्यमवलंब्य स उपसंवादक इति व्यपदिष्टः; प्राचीनैरनुपदिष्टस्य लेङः पुनस्तादृशोऽर्थविशेषो न विज्ञात इति सामान्येन नियोजकसंज्ञा कृता ।

## ६. शब्दव्युत्पत्तिः ।

धातुप्रकृतिकैः कृद्भिर्नामप्रकृतिकैस्तद्धितैश्च शब्दा व्युत्पादिताः । तत्र नामानि सर्वाणि धातुजानीति नैरुक्तसमयं कटाक्षयन्नाचार्यो नामनिष्पत्तिप्रक्रियाया दिक्प्रदर्शनमुणादिसूत्रैः करोति । तेषाञ्च धातुपाठसमानयोगक्षेमां दशां पश्यन् 'भूवादयो धातवः' इति संज्ञाप्रकरण इव 'उणादयो बहुलं' इति कृन्मध्ये सूत्रयति । तद्धितांस्तु परिपूर्णानेवाभिमन्यमानोऽर्थविषय एव शेषाधिकारेण बाहुलकं करोति । उभयेष्वप्येकमेव प्रत्ययं प्रक्रियाप्रयोजनकान् नानाप्रकारानन्नुबन्धानासज्य बहूकरोति । यथा—'अ' इत्येकः प्रत्ययः

| | | | | |
|---|---|---|---|---|
| अः | अङ् | अच् | अञ् | अण् |
| अप् | कः खच् | खश् | घः | घञ् |
| टः | टच् | डः | णः | शः |

इत्येवं बहुधा कल्पितः । अकाररूप एकस्मिन् प्रत्यये क्रियमाणे प्रकृतिभेदेनार्थभेदेन च तत्तदनुबन्धसूचिताः प्रक्रियाः कुर्यादित्येवाचार्यस्य विवक्षितमिति स्पष्टम् । एकस्य नानात्वप्रतीतिस्तत्तद्भूमिकापरिग्रहेण तत्तत्कथापात्रभूयं प्राप्तस्य नटस्येवेत्येव ।

अथ क्वचित् क्विप्, क्विन्, च्वि, विच् इत्यदृश्यान् प्रत्ययानुल्लिखत्याचार्यः । केचिद्धातवो विनैव प्रत्यययोगं कारकार्थबोधनक्षमा इत्येव क्विब्विधेस्तात्पर्यम् । एतदर्थं 'व्' इत्यपृक्तप्रत्ययकल्पनं तु 'प्रधानप्रत्ययार्थवचन'सिद्धान्तस्य प्रचारणायैव । अनुबन्धैः प्रक्रियोपदेशनीतिरत्राप्यस्ति।

क्रियाप्रकृतिभूता धातव इव प्रत्यया अपि प्रायेणैकाच एव । कल्पब्देश्यदेशीयरः, जातीयर्, मात्रच् इत्यादीनां स्वतन्त्रशब्दत्वाङ्गीकारेऽप्यर्थयोजना सुगमा । कृत्येषु तव्यत्तव्यानीयर्-तवैप्रभृतीनामन्यथासिद्धिः प्रागेव प्रतिपादिता । तरप्तमपोः स्वतन्त्रत्वे तारतम्यशब्दः साक्षी। पञ्चषास्त्वनेकाच एव ग्राह्याः स्युः ।

धातुप्रकृतिकाः कृतः, नामप्रकृतिकास्तद्धिता इति हि व्यवस्था । तत्रोभयसम्मिश्राश्च सन्ति केचित् प्रत्ययाः । यथा– 'कर्मव्यतिहारे णच् स्त्रियां' इति कृत्प्रत्ययो णच् 'णचस्त्रियामञ्' इत्यञ्-तद्धितान्त एव प्रयोज्यः । तथैव 'अभिविधौ भाव इनुण्' कृत्प्रत्ययः 'अणि नुण' इत्यण् तद्धितसहकृत एव प्रवर्तते । एवं 'ड्वितः क्त्रिः' 'क्त्रेर्मम्नित्यं' इति मप्प्रत्ययं नित्यमपेक्षते । 'पूर्वादिनिः' (५-२-८६), 'सपूर्वाच्च' (५-२-८७)

'इष्टादिभ्यश्च' (५-२-८८) इति विहित इनिप्रत्ययस्तद्धितः कृत्प्रत्ययसमानयोगक्षेमो दृश्यते । अनया नीत्या क्तवतुप्रत्ययोऽपि क्तप्रत्ययान्मतुपा व्युत्पादनमर्हति । कृतपूर्वी कटं इतिवदेवहि कृतवान् कटं इत्यत्रापि कारकसम्बन्धः ।

प्रस्तावेऽस्मिन्नतिशायनतद्धिता विमर्शमपेक्षन्ते । इष्ठनीयसुनौ तरप्तमपौ चेति द्विविधेषु तेषु प्रथमौ 'अजादी गुणवचनादेव, (१९१७) इति गुणवाचिभ्यो भेदकेभ्य एव भवतः; 'तुरिष्ठेमेयस्सु' (१३४७) इति तृप्रत्ययलोपः, 'टेः' (१३४८) इति टिलोपः, 'विन्मतोर्लुक्' (१९१२), प्रियस्थिरादीनां प्रस्थस्फाद्यादेशाः इत्यादयो बहवः प्रक्रियाविशेषाश्च तयोः सन्ति । तरप्तमपौ तु सार्वत्रिकौ । इष्ठनीयसुनोः प्रक्रियागतिवैचित्र्ये विचार्यमाणे तौ धातुभ्य उत्पद्येते इति वक्तव्यमापतति । तथाहि— (१) भर्तृशब्दादिष्ठनीयसुनोः कृतयोस्तृलोपेन भरिष्ठः भरीयान् इति रूपम् । इदं भृधातोरञ्जसैव प्रत्ययकरणेऽपि समानम् । अतिशयेन यो बिभर्ति स भरिष्ठ इति कृत्प्रत्ययनिर्विशेषमर्थश्च घटते । (२) कोपवच्छब्दादिष्ठनि मतुब्लोपे कोपिष्ठ इति शब्दव्युत्पत्तिः कुपधातोरेवेष्ठनि कृतेऽपि रूपेऽर्थे च युज्यते । (३) प्रियशब्दस्य प्रादेशेन निष्पादितः प्रेष्ठ इतीष्ठन् प्रीधातोरेव किञ्चित् प्रक्रियाविशेषेण सुशको निष्पादयितुम् । (४) ज्येष्ठशब्दव्युत्पादनाय वृद्धस्य ज्यादेशकल्पनतो 'ज्या वयोहानौ' इति धातोरेव साक्षादिष्ठना तत्साधनं वरमिति सर्वोऽपि सम्मन्येत । (५) किञ्च गुणवचनेभ्योऽपि धातुस्पर्शहीनेभ्यः सुन्दरादिशब्देभ्यः सुन्दरिष्ठः सुन्दरीयान् इतीष्ठनीयसुनौ न कोऽपि प्रयुङ्क्ते । 'बल जीवने' 'कृश तनूकरणे' इत्यादीनामाख्यातेष्वनुपलब्धानामपि धातूनां धातुपाठे दर्शनात् बलिष्ठः बलीयान्, क्रशिष्ठः क्रशीयान् इत्यादीनामपि सुवचा धातुभ्यो निष्पत्तिः । किं बहुना कोलाहलेन; इष्ठनीयसुनावुत्सर्गतो धातुभ्य एवोत्पद्येते; एवं कृत्प्रत्ययाभ्यामप्याभ्यां, समानार्थयोस्तरप्तमपोरनुरोधेन, पाणिनिस्तद्धितेषु पदं दत्वा विचित्राभिः प्रक्रियाभिस्तदुपष्टंभयतीत्येव । इष्ठनीयसुनौ लोके विरलौ । वेद एवानयोर्बहुलः प्रचारः । तत्र च

तप्ततमः इत्यर्थे तपिष्ठः आगच्छत्तम इत्यर्थे आगमिष्ठः
यज्वतमः ,, यजिष्ठः तरत्तरः ,, तरीयान्
इत्यादयो विचित्राः प्रयोगाः सुलभाः ।

अतिशायनतद्धिता एव संख्यासु पूरणप्रत्ययात्मना दृश्यन्ते । पुरस्कारद्योतकात् 'प्र' इति निपातात् तमप्रत्ययेन प्रथमशब्दो निष्पद्यते । तकारस्य महाप्राणीकरणं प्रक्रियाकार्यम् । तुडागमोपस्कृतेनान्तलोपिना च ईयसुना द्वितीयतृतीयौ सिध्यतः । चतुर्थषष्ठयोः थकारमात्रावशेष इष्ठन् स्फुटं प्रत्यभिज्ञायते । पञ्चमादिदशमान्तेषु तमप्रत्यय एवाद्यक्षरविकलः । दशान्तानामकारमात्रं प्रत्ययः । विंशत्यादिषु तमप्रत्ययः स्फुट एव । डट्प्रत्ययं कृत्वा तमडाद्यागमैः कार्यं निर्वहन्नाचार्योऽत्राभ्यूहिकमेव मार्गमनुरुन्धे । एवं बहुतिथादिशब्दसिद्धये तिथुगागमकल्पनमतीव कृत्रिमम् । बहवस्तिथयो यस्मिन् स बहुतिथ इति समासाङ्गीकारो हि ऋजुर्मार्गः । पङ्कजाक्षः, पद्मनाभ इत्यादौ अक्षिनाभ्यादीनामिव अकारः समासान्त एव विधेयः । पञ्चमसप्तमादौ दृष्ट आद्यक्षरविकलस्तमप्रत्ययस्तरप्रत्ययश्च तादृशः केषाञ्चित् सर्वनामादीनां शब्दानां व्युत्पादक इव प्रतिभाति । यथा—

| | | | | | |
|---|---|---|---|---|---|
| अधर— | अधश्शब्दात् | तरप्. | उपर— | 'उप' ,, ,, | तरप्. |
| अधम— | ,, | तमप्. | उपम— | ,, ,, ,, | तमप्. |
| अपर— | 'अप' इतिनिपातात् | तरप्. | अन्तर— | अन्यशब्दात् (?) | तरप्. |
| अपम— | ,, ,, | तमप्. | अन्तम— | ,, | तमप्. |
| अवर— | अव ,, ,, | तरप्. | परम— | परशब्दात् | तरप्. |
| अवम— | ,, ,, ,, | तमप्. | मध्यम— | मध्यशब्दात् | तमप्. |
| उत्तर— | 'उत्' ,, ,, | तरप्. | आदिम— | आदि ,, | ,, |
| उत्तम— | ,, ,, ,, | तमप्. | चरम— | चर ,, | ,, |

दार्ढ्यशैथिल्यभेदेन नामसु धातुषु च यत्राङ्गस्य द्वैविध्यं तत्र प्रकृतिः कतरेति सन्देहो जायते । पश्यन्त्, अनड्वाह्, युवन् इति सर्वनामस्थाने दृढमङ्गं; पश्यत्, अनडुह् यून् इति शिथिलं भसंज्ञायाम् । एवमेव अस्ति, वेत्ति, स्तौति इति दृढमङ्गं प्रवृत्तिस्थानेषु (पित्सु); स्, विद्, स्तु इति शिथिलं निवृत्तिस्थानेषु (ङित्सु) । उभयेष्वपि बाहुल्येन दृष्टं रूपमौत्सर्गिकमिति न्याय्यं पश्यन् पाणिनिः शिथिलमेवाङ्गं प्रकृतित्वेन गृह्णाति । किन्तु सर्वनामस्थानं, निवृत्तिस्थानमिति प्राचीनकृताना-

